# मालतीमाधवम्

प्रकरणम् ।

महाकवि भवभूति-प्रणीतम् ।

आर्य्यप्रभासम्पादकेन काव्यतीर्थतर्कतीर्थाद्युपनामकेन

श्रीकुञ्जविहारि-तर्कसिद्धान्तभट्टाचार्य्येण

स्वप्रणीतया तत्त्वबोधिनीसमाख्यटीकया वङ्गानुवादेन च

समलङ्कृत्य प्रकाशितम् ।

वङ्गाब्दाः १३२६ ।

मूल्यं २॥ सार्द्धरूप्यकद्वयम् ।

वस्त्रसम्बद्धस्य मूल्यं ३) रूप्यकत्रयम् ।

# भूमिका ।

परम कारुणिकपरमेश्वरस्यापारकरुणया सटीकानुवादमालती-
माधवस्य मुद्रणं सम्प्रति समाप्तिमगमत् । मालतीमाधवस्य टीका-
विरचनं समाप्य १८३५ पञ्चत्रिंशदधिकाष्टादशशततमशकाब्दीयवैशाख-
मासात् पञ्चमवर्षीयार्य्यप्रभायां पुस्तकमिदं प्रकाशयितुमारब्धमपि
नानाविधान्तरायाद्वर्षद्वयेनार्य्यप्रभायां पञ्चमाङ्कं यावत् प्रकाश्यैव पृथग्-
भावेन तन्मुद्रापणं सङ्कल्प्य सप्तमवर्षीयार्य्यप्रभायां सटीकानुवादं
सांख्यसूत्रं प्रकाशयितुं प्रारब्धम् । किन्तु हन्त !! सुबृहदाकारं तत्
सांख्यसूत्रं परिसमाप्तमपि न जानामि केन दैवप्रातिकूल्येन तन्मालती-
माधवावशिष्टांशस्य पृथग्भावेन मुद्रापणमारब्धुमपि नालमभुवम् ।
अतएवागत्या सांख्यसूत्रसमाप्त्यनन्तरं नवमवर्षीयार्य्यप्रभायामेव
क्रमशस्तन्मुद्रणं समाप्य सम्प्रति पृथक् पुस्तकाकारेण सम्पूर्णं
मालतीमाधवं प्रकाश्यत इति सर्व्वे विदाङ्कुर्व्वन्तु ।

एतत्टीकाप्रणयनकाले च विभिन्नदेशीयानि चत्वारि पुस्तकानि
संगृह्य तेभ्यः समीचीनतया विवेचितः पाठः एव मूले सन्निवेशितो
व्याख्यातश्च । पाठान्तराणि च दुरूहाणि टीकायामेव समुल्लिख्य
व्याख्यातानि । टीकायां तथा विषयसन्निवेशः कृतः, यथा परीक्षार्थिनां
किञ्चिदपि ज्ञातव्यं नावशिष्येत । टीकायामसन्निविष्टा अपि रस-
गुणनायकादिविचाराः समालोचनावसर एव प्रतिपादिताः । बङ्गानु-
वादेन च दुरूहमपि पुस्तकांशं विशदयितुं प्रयत्नः कृतः । तथाच
यद्यनया टीकया वङ्गानुवादेन च मालतीमाधवपाठार्थिनां कथञ्चि-
दप्युपकारः स्यात्तदैव प्रचुरतरार्थव्ययः परिश्रमश्च मम सफलो भवेत् ।

स्थाने स्थाने स्थितान्यप्यशुद्धानि वाचकमहोदयैरेव संशोध्य पठितुं शक्यानीति शुद्धिपत्रं न प्रकाशितम्।

परिशेषे च वक्तव्यं, कलिकाताप्रवासिना परमस्नेहास्पदेन श्रीमता नगेन्द्रनाथसिद्धान्तरत्नेनास्य मुद्रापणादिविधौ परमं साहाय्यं कृतमिति स सर्वान्तःकरणेनाशीर्वादार्हं इति शम्॥ -

श्रीकुञ्जविहारिदेवशर्म्मणः।

## नाट्योल्लिखितपात्राणाम् ।

पुरुषगण: ।

सूत्रधार: ··· प्रस्तावसूचयिता मुख्यतमो नट: ।

नट: ··· पारिपार्श्विकापरपर्य्याय: कश्चिद्गुणज्ञानभिनेता ।

माधव: ··· विदर्भराजमन्त्रिदेवरातस्य नन्दन: ( नायक: )

मकरन्द: ··· माधवस्य प्रियवयस्य: ।

कलहंस: ··· माधवस्य कार्य्यदक्षो भृत्य: ।

अघोरघण्ट:··· तान्त्रिकानुष्ठानलब्धमाहात्म्य: कश्चिद्घोरतापसो ।

पुरुष: ··· नन्दनस्य कश्चिदनुचर: ।

स्त्रीगण: ।

मालती ··· पद्मावतीश्वरमन्त्रिभूरिवसो: कन्यका (नायिका) ।

मदयन्तिका ··· पद्मावतीश्वरनर्मसुहृन्नन्दनस्य भगिनी ।

कामन्दकी ··· काचिद्बौद्धपरिव्राजिका ।

सौदामिनी ··· मन्त्रसिद्धिलब्धमाहात्म्या कामन्दक्या: प्रथमशिष्या ।

अवलोकिता ... कामन्दक्या: अपरा शिष्या ।

बुद्धरक्षिता ... कामन्दक्या: शिष्या सखी च ।

कपालकुण्डला... तान्त्रिकानुष्ठानलब्धमाहात्म्या अघोरघण्टशिष्या ।

लवङ्गिका ··· मालत्या: प्रियसखी ।

मन्दारिका ··· अवैधभावेन कलहंसानुरक्ता काचिद्बौद्धमठ-
परिचारिका ।

चेटीद्वयम् ··· भूरिवसो: परिचारिकाद्वयम् ।

प्रतीहारी ... भूरिवसोरन्त:पुरद्वारपालिका ।

---

# मालतीमाधवस्य संक्षिप्तसमालोचनम् ।

इदञ्च मालतीमाधवं नाम दृश्यकाव्यं कविकल्पितेतिवृत्तत्वादिभिः "प्रकरणम्"। तत्तुटीकायामेव प्रतिपादितं, प्रकरणादिलक्षणमपि तत्रैव प्रदर्शितमनुसन्धेयम् ।

अस्य "नायको" माधवः । स च "ब्राह्मणकुमारः" 'अमात्यः" मालतीमात्रनिरतत्वा"दनुकूलः," त्यागादिसामान्यगुणपूर्णत्वात् "धीरप्रशान्तश्च"। नायकादिलक्षणानि यथा दर्पणे—

"त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही ।
दक्षोऽनुरक्तलोकस्तेजोविदग्धशीलवान्नेता ॥"
"धीरोदात्तो धीरोद्धतस्तथा धीरललितश्च ।
धीरप्रशान्त इत्ययमुक्तः प्रथमश्चतुर्भेदः ॥"
"अनुकूल एकनिरतः",
"सामान्यगुणैर्भूयान् द्विजादिको धीरप्रशान्तः स्यात् ।"

अस्य ब्राह्मणत्वन्तु—पञ्चमाङ्के "रे रे ब्राह्मणडिम्भ !" इत्यघोरघण्टकृतमाधवसम्बोधनात्, अमात्यत्वं पुनरमात्यपुत्रत्वेन "भाविनि भूतवदुपचारा"दवगन्तव्यम् । अत एव "अमात्यनायकं मालतीमाधव" मिति दर्पणोक्तिरपि सङ्गच्छते। एवञ्च भूरिवसोरपि ब्राह्मणत्वमनुमातुं शक्यते, अन्यथा ब्राह्मणमाधवपितृत्वेन ब्राह्मणस्य देवरातस्य भूरिवसोरपत्येन सह निजापत्यस्य सम्बन्धकरणप्रतिज्ञाया विरोधापत्तेः । न चासवर्णविवाहस्य प्रचलितत्वे नायं विरोध इति शङ्कनीयं, तथात्वेऽपि प्रतिलोमविवाहस्य सर्व्वदैव निषिद्धत्वेन "कस्य किमपत्यं भवे"दित्यनिश्चितावस्थायां तत्प्रतिज्ञाया असम्भवस्य दुष्परिहरत्वात् । अनया च युक्त्या ब्राह्मणकन्यया 'मालत्या सह

विवाहे समुद्यतस्य नन्दनस्य, तद्भगिन्या मदयन्तिकायाः पाणिं गृहीत वतो मकरन्दस्य च ब्राह्मणत्वं निर्बाधमवधारयितुं शक्यत इति विभावनीयम्।

अस्य "नायिका" मालती। सापि "ब्राह्मणवंशजा" "परकीया" "कन्यका" चेति। नायिकादिलक्षणानि यथा दर्पणे—

"अथ नायिका स्वाऽन्या साधारणस्त्रीति।
नायकसामान्यगुणैर्भवति यथासम्भवैर्युक्ता॥"
"परकीया द्विधाप्रोक्ता परोढ़ा कन्यका तथा।
"कन्यात्वजातोपयमा सलज्जा नवयौवना।"

मदनोद्याने साक्षादेव परस्परसन्दर्शनेन मालतीमाधवयोः परस्परानुरागोत्पत्तेः तदप्राप्तेय दशाविशेषोत्पादादत्र पूर्व्वरागलक्षणो विप्रलम्भशृङ्गार एव प्रधानतमो रसः। तल्लक्षणं यथा दर्पणे—

"श्रवणाद्दर्शनाद्वापि मिथः संरूढ़रागयोः।
दशाविशेषो योऽप्राप्तौ पूर्व्वरागः स उच्यते॥"

एवमन्तान्येऽपि वीरादयः सर्व्वे एव रसा हास्यरसविवर्जितास्तदङ्गरूपेण सन्तीति यथास्थानमूहनीयम्।

प्रधानतोऽत्र माधुर्य्याख्यो गुणः। तल्लक्षणं यथा तत्रैव—

"चित्तद्रवी भावमयो ह्लादो माधुर्य्यमुच्यते।"
एवमाजःप्रसादगुणावप्यत्र स्थाने स्थाने स्त इत्यवगन्तव्यम्।
प्राधान्येनात्र वैदर्भी नाम रीतिः। तल्लक्षणमपि तत्रैव -
"माधुर्य्यव्यञ्जकैर्व्वर्णैः रचना ललितात्मिका।
अवृत्तिरल्पवृत्तिर्व्वा वैदर्भी रीतिरिष्यते॥

*अन्या अपि रीतयोऽन्तरान्तरा सन्तीत्यनुसन्धेयम्।*

अस्य प्रकरणस्य रचयिता महाकविर्भवभूतिः कं देशं कं वा वंशं जन्मनालमकार्षीदिति पर्य्यनुयोगं कविः स्वयमेव "अस्ति दक्षिणापथे पद्मपुरं नाम नगरं। तत्र केचित्तैत्तिरीयिणः पंक्तिपावनाः पञ्चाग्नयो

धृतव्रताः सोमपीथिनो ब्रह्मवादिनः प्रतिवसन्ति। तदामुष्यायनस्य तत्रभवतो वाजपेययाजिनो महाकवेः पञ्चमः, सुगृहीतनाम्नो भट्टगोपालस्य पौत्रः पवित्रकीर्त्तेर्नीलकण्ठस्यात्मसम्भवः, श्रीकण्ठपदलाञ्छनः, भवभूतिर्नाम जातुकर्णीपुत्रः"। इति वीरचरितसन्दर्भेण निवारयामास ! उत्तररामचरितेऽपि प्रस्तावनायामेतदनुकूलसन्दर्भो वर्त्तते। तथाच दाक्षिणात्यदेशे "पद्मपुरं" नाम नगरं भवभूतेर्जन्मस्थानम्, तत्रत्यः श्रौतकर्म्मादिनिरतः सुगृहीतनामा "भट्टगोपाल"स्तस्य पितामहः,। पवित्रकीर्त्ति "नीलकण्ठः" पिता, जातुकर्णी च मातेति सुस्पष्टमवगम्यते।

"श्रीकण्ठपदलाञ्छनो भवभूतिर्नामे"त्यनेन च दर्शनादिनानाशास्त्रपारावारपारदर्शिनस्तस्य "श्रीकण्ठ" इति सान्वर्यी गुरुदत्तोपाधिः "भवभूति" रिति च पितृकृतं नामेत्यवधारणीयम्। यत्तु—अनन्तपण्डितेनार्य्यासप्तसतीटीकायां वीरराघवेण च महावीरचरितटीकायामभिहितं "श्रीकण्ठ" इति भवभूतेः पितृकृतं नाम, परन्तु—

"तपस्वी कां गतोऽवस्थामिति स्मेराननाविव।
गिरिजायाः स्तनौ वन्दे भवभूतिसिताननौ॥"
"साम्बा पुनातु भवभूतिपवित्रमूर्त्तिः।"

इत्यादि श्लोकविरचनाद्"भवभूति"रिति नाम समुत्पन्नमिति, तन्न समीचिनं विवेचयामः "श्रीकण्ठपदलाञ्छनो भवभूतिर्नामे"ति वाक्यात् "श्रीकण्ठ" इत्यस्योपाधित्वेन "भवभूति" रित्यस्याभिधानत्वेन च प्रतीतेरेव सर्व्वजनसिद्धत्वात्।

"गुणैः सतां न मम को गुणः प्रख्यापितो भवेत्।
यथार्थनामा भगवान् यस्य ज्ञाननिधिर्गुरुः॥"

इत्येतत्प्रकरणश्लोकेन—

"श्रेष्ठः परमहंसानां महर्षीणामिवाङ्गिराः।
यथार्थनामा भगवान् यस्य ज्ञाननिधिर्गुरुः॥"

इति महावीरचरितश्लोकेन च परमज्ञानशाली ज्ञाननिधिनामा सर्व्वश्रेष्ठः परमहंसो भवभूतेर्गुरुरिति सुस्पष्टमवगम्यते। एवमयं महाकविर्व्वेदवेदान्तादीनि बहून्येव शास्त्राण्यधीतवानिति "यद्वेदाध्ययनं तथोपनिषदां सांख्यस्य योगस्य च"त्यादि श्लोकेन स्वयमेव स्पष्टमाचष्ट। परन्तु तद्विरचितप्रकरणादावपि प्रसङ्गतोऽन्तरान्तरा वेदवेदान्तशास्त्रज्ञानविकाशनदर्शनात्तदनुमानमपि कर्त्तुं शक्यते।

असामान्यपाण्डित्यादिगुणसम्पन्नोऽयं महाकविः कान्यकुब्जेश्वरस्य यशोवर्म्मणः सभापण्डित आसीत्। तत्र च—

"कविवाक्पतिराजश्रीभवभूत्यादिसेवितः।
जितो ययौ यशोवर्म्मा तद्गुणस्तुतिवन्दिताम्॥"

इति राजतरङ्गिणीश्लोकः प्रमाणम्।

यशोवर्म्मणो राजत्वकालश्च सप्तमखृष्टाब्दस्य शेषभागादष्टमखृष्टाब्दस्य प्रथमभाग इति प्रत्नतत्त्वविदः। तथाच तत्सभापण्डितस्यास्य महाकवेरपि समयः प्रायस्तथैवेति निर्द्धारणं नायुक्तमिति सन्तो विवेचयन्तु।

महावीरचरितोत्तररामचरितमालतीमाधवाख्यानि त्रीणि दृश्यकाव्यानि ऋते महाकवेरस्य नान्यः कोऽपि ग्रन्थोऽस्तीति श्रूयते। तत्रेदं मालतीमाधवं नाम प्रकरणमेव कवेः शेषकाव्यमिति प्रसिद्धिः। परन्त्वस्य प्रस्तावनायां "ये नाम केचिदिह नः प्रथयन्त्यवज्ञां जानन्ति ते किमपि तान् प्रति नैष यत्नः" इत्यादि श्लोकप्रदर्शनेनैतत्पूर्व्वप्रणीतनतत्काव्यं प्रति जनानामनादरप्रतीतेरपि प्रकरणस्यास्य तत्प्रणीतकाव्यान्तरापेक्षया पराचीनत्वमनुमातुं शक्यत इत्यवधेयम्।

इदञ्च मालतीमाधवं नामप्रकरणं वृत्तान्तकल्पनाकौशलेन पदलालित्येन, छन्दःसन्निवेशनैपुण्येन, अलङ्कारवैभवेन, कवित्वमहिम्ना च सहृदयहृदयानामतिमहतीं चमत्कृतिमातनोति। किं बहुना यदि चान्तरान्तरा दुरूहपदसंयोजनदीर्घसमास-सन्धि-

वैशद्यादिदोषोऽत्र नास्यास्यत्तदा प्रकरणेषु सर्व्वोत्कृष्टस्थानमिदमधि-कर्त्तुमलमभविष्यत्।

अस्य महाकवेरसामान्यकवित्वं प्रति नास्ति कस्यापि वैमत्यम्। तच्चोल्लिखितदृश्यकाव्यत्रयमेव समर्थयितुं पर्य्याप्तम्। विशेषतस्तु—

"निरवद्यानि पद्यानि यदि नाट्यस्य का क्षतिः।
भिक्षुकक्षाविनिक्षिप्तः किमिक्षुर्नीरसो भवेत्॥"

"अलिपटलैरनुयातां सहृदयहृदयज्वरं विलुम्पन्तीं।
मृगमदपरिमललहरीं समीर किं पामरेषु रे किरसि?॥"

"किं चन्द्रमाः प्रत्युपकारलिप्सया करोति गोभिः कुमुदावबोधनम्।
स्वभाव एवोन्नतचेतसां सतां परोपकारव्यसनं हि जीवितम्॥"

इत्यादीनि सुभाषितान्यपि एतन्महाकविविरचितत्वेन प्रसिद्धानि समतीव महतीं कवित्वशक्तिमस्य प्रथयन्तीत्यलमनल्पजल्पितेन॥



# मालतीमाधवं

नाम

प्रकरणम् । *

---

सानन्दं नन्दिहस्ताहतमुरजरवाहूतकौमारबर्हि-
त्रासान्नासाग्ररन्ध्रं विशति फणिपतौ भोगसङ्कोचभाजि ।
गण्डोड्डीनालिमालामुखरितककुभस्ताण्डवे शूलपाणे-
र्वैनायक्यश्चिरं वो वदनविधुतयः पान्तु चीत्कारवत्यः ॥ (१)

---

माधवं माधवे भासि प्रणम्याभीष्टसाधकं ।
मालतीमाधवव्याख्या क्रियते तत्त्वबोधिनी ॥

व्याख्या यस्य च पूर्वसूरिरचिताः प्राचीनरीतिस्थिताः
याः सन्तीह न ता नवीननियमात् शिक्षापरीक्षाविधौ ।
श्रेयस्कामकुतर्कजालजटिलत्वाच्चास्य विद्यार्थिना
साहाय्यन्तु यथोचितं वितरितुं शक्ता अतोऽयं श्रमः ॥

भवभूतेर्निगूढार्थवचसोऽर्थविकासने ।
किञ्चित् साहाय्यमनया यदि स्यात् सफलः श्रमः ॥

---

* । दृश्यश्रव्यत्वभेदेन काव्यं द्विविधं, तत्राभिनेयरूपं दृश्यं, "रूपक"मिति दृश्यकाव्यानामेव नामान्तरं ।

तदुक्तं दर्पणे—"दृश्यश्रव्यत्वभेदेन पुनः काव्यं द्विधा मतम् ।

दृश्यं तत्राभिनेयं स्यात् रूपारोपात्तु रूपकम् ॥"

तद्भेदा अपि उक्ताः तत्रैव—

"नाटकमथ प्रकरणं भाणव्यायोगसमवकारडिमाः ।

ईहामृगाङ्कवीथ्यः प्रहसनमिति रूपकाणि दश ॥"

इदञ्च दृश्यकाव्यं लौकिकवृत्तत्वात् कविकल्पितत्वात् अमात्यनायकत्वाच्च प्रकरणं। प्रकरणलक्षणमुक्तं दर्पणे—

भवेत् प्रकरणे वृत्तं लौकिकं कविकल्पितं

शृङ्गारोऽङ्गी नायकस्तु विप्रोऽमात्योऽथवा वणिक् ।

सापायधर्मकामार्थपरो धीरप्रशान्तकः ॥

भरतकृतनाट्यशास्त्रेऽपि—यत्र कविरात्मबुद्ध्या वस्तुशरीरञ्च नायकञ्चैव ।

औत्पत्तिकं प्रकुरुते तज्ज्ञेयं प्रकरणं नाम ॥

दशरूपकेऽपि—अथ प्रकरणे वृत्तमुत्पाद्यं लोकसंश्रयम् ।

अमात्यविप्रवणिजामेकं कुर्याच्च नायकम् ॥

धीरप्रशान्तं सापायधर्मकामार्थतत्परं ।

शेषं नाटकवत् सन्धिप्रवेशकरसादिकम् ॥

कुलजादिनायिकाभेदात् प्रकरणस्य त्रैविध्यमुक्तं दर्पणे—

नायिका कुलजा क्वापि वेश्या क्वापि द्वयं क्वचित् ।

तेन भेदास्त्रयस्तस्य तत्र भेदस्तृतीयकः ।

कितवद्यूतकारादिविटचेटकसङ्कुलः ॥ "१)

(१) अथ तत्रभवानशेषवाग्विभूतिर्भवभूतिर्नाम महाकविः सत्काव्यनिर्माणस्य यश-आद्यनेकश्रेयःसाधनफलकलमाकलयन् मालतीमाधवं नाम रूपकं प्रचिकीर्षुः "तत् पूर्वं

पूर्वरङ्गः सभापूजा ततः परं। कथनं कविसञ्ज्ञादेर्नाटकस्याप्यथामुख"मिति शास्त्रक्रमानुसारेण "यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये। कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स उच्यते" इत्युक्तलक्षणपूर्वरङ्गस्य प्रथमकर्त्तव्यतया, तत्र च "प्रत्याहारादिकान्यङ्गान्यस्य भूयांसि यद्यपि। तथाप्यवश्यं कर्त्तव्या नान्दी विघ्नोपशान्तये॥" इत्यनेनावश्यकर्त्तव्यतयोपदिष्टा पूर्वरङ्गाङ्गभूतां नान्दीं प्रथमं निर्दिशति—सानन्दमित्यादि। शूलपाणेः महादेवस्य ताण्डवे नृत्ये नन्दिनः मङ्गलकिङ्करस्य छलेन आहतस्य वाद्यमानस्य मुरजस्य ( मुराद् इवनाज्जातो मुरजः, मुर + जन + ड ) मृदङ्गस्य रवेण ध्वनिना आहृतात् कौमारबर्हिणः कार्त्तिकेयवाहनमयूरात् यस्मात् भयं तस्मादिति प्रवेशहेतूक्तिः। भोगस्य फणायाः कायस्य वा ( "भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययो"रिति विश्वः ) सङ्कोचं अपसारणं भजत इति भोगसङ्कोचभाक् तस्मिन्। (विलप्रवेशकाले फणादिसङ्कोचः सर्पाणां नैसर्गिको नियमः, अन्यथा महाकायस्य सूक्ष्मरन्ध्रे प्रवेशासम्भवात्) फणिपतौ सर्पराजे नासारन्ध्रं नासिकाविवरं ( अर्थाद्विनायकस्य ) सानन्दं यथा तथा विशति सति ( अत्र रन्ध्रप्रवेशे भयप्रवेशस्यार्थसिद्धत्वादपदं उक्तिदोषालङ्कारसूचनाय, यथोक्तं दण्डिना—"उक्तिदोषः क्वचिदाक्षेपलभ्यस्य साक्षात् शब्देन कीर्त्तना"दिति।) ( झटिति प्रवेशस्य भयनिवारकतया सानन्दमिति विशेषणं तत्र युक्तं। सानन्दमित्यस्य धातुक्रियाविशेषणत्वमपि केचिदाचक्षते।) गण्डयोः कपोलयोः उड्डीनाभिः ( उत्+डी+क्त ) ऊर्द्ध्वं गताभिः अलिमालाभिः मधुकरपङ्क्तिभिः मुखरिताः शब्दीकृताः ककुभो दिशो याभिस्तास्तथोक्ताः। चीत्कारः अत्युत्कटः शब्दः तद्वत्यस्तत्सहिताः विधुनने चीत्कारविरहात् साहित्यमात्रमत्र मतुबर्थो वाच्यः, तथाच भयेन वदने युगपदेव विधुननचीत्कारौ

---

১। অনুবাদ। মহাদেবের নৃত্যকালে নন্দীকর্তৃক বাদ্যমান মৃদঙ্গশব্দে সমাকৃষ্ট কার্ত্তিকেয়বাহন ময়ূরের ভয়ে সর্পরাজ বাসুকি ফণা সঙ্কোচ করিয়া ( গণেশের ) নাসারন্ধ্রে সানন্দে প্রবিষ্ট হইলে গণেশ চীৎকার করিয়া যে বদন কম্প করিয়াছিলেন, যে কম্পনফলে অলিকুল গণেশের কপোলদেশ হইতে উড়িয়া দশদিক্ মুখরিত করিয়াছিল, গণেশের সেই বদনকম্প চিরকাল তোমাদিগকে রক্ষা করুক।

अपि च—पश्चालोपिङ्गलिम्नः कण इव तड़ितां यस्य कृत्स्नः समूहो
यस्मिन् ब्रह्माण्डमीषद्विघटितमुकुले कालयज्वा जुहाव ।
अर्चिर्निष्टप्तचूड़ाशशिगलितसुधाघोरझङ्कारिकोषम्
तार्त्तीयीकं पुरारेस्तदवतु मदनप्लोषणं लोचनं वः ॥ (२)

---

यल्ललाटलोचनपुटं भावस्याविसम्पुटं तस्य ज्योतिषा तेजसा विमिश्रा साजात्यादिविशेषेण मिलिता त्विट् प्रभा यासां ताः (पुटमध्यस्थस्य समस्तनेत्रभागस्य तेजोमयत्वद्योतनार्थमत्र पुटपदं) अकठोरया कोमलया केतकशिखया केतकीकुसुमाग्रेण सह सन्दिग्ध. संशयितः "किमियं केतकशिखा चन्द्रलेखा वा" इत्येवं संशयविषय इति यावत्। मुग्धो मनोरम इन्दुश्चन्द्रो यासु ताः। तथा भुजङ्गाः सर्पा एव वल्ल्यो लताभा एव बन्धा मण्डलाकारेण स्थिताः स्रजः ताभिर्नद्धो बद्धः जूटः समूहो यासां तास्तथोक्ताः भूतेशस्य शिवस्य जटाः त्वां पान्तु रक्षन्तु। अचेतनानां जटानां रक्षकत्वमपि पूर्ववद् वतासम्बन्धित्वात्।

अत्र केतकशिखेत्यादिना उपमानोपमेययोः संशयप्रदर्शनात् "सन्देहः" भुजङ्गादौ वल्ली-लतायारोपात् "रूपक" दुरुहार्यादिवर्णनात् "स्वभावोक्ति" रलङ्काराः, तेषां लक्षणानि च दर्पणोक्तानि यथा—"सन्देहः प्रकृतेऽन्यस्य संशयः प्रतिभोत्थितः।" "रूपकं रूपितारोपाद्विषये

---

২। সেই জটাতে মস্তকস্থিত বক্রিমমাণার স্বপানব্যাপ্ত মন্দাকিনীর জল বিগলিত হইতেছে, যেই জটার দীপ্তি বিদ্যুৎসদৃশ ললাটলোচনের জ্যোতিঃদ্বারা বিমিশ্রিত, যেই জটাতে কোমল কেতকীশিখাগ্রের সহিত সন্দিগ্ধ মনোহর চন্দ্র বিরাজমান, যেই জটার সমূহ সর্পরূপ যে লতা সেই লতারূপ মণ্ডলাকারাবস্থিত মালাদ্বারা বদ্ধ, মহাদেবের সেই জটা তোমাদিগকে রক্ষা করুক।

निरपत्रपे"। "स्वभावोक्तिर्दुरूहार्थस्वक्रियारूपवर्णनम्"। शार्दूलविक्रीडितं वृत्तम्, "सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडित"मिति लक्षणात्।

अत्र च ईश्वरस्य जटाजूटावष्टम्भप्रणामाभावप्रतीतेर्धीरशान्तः कथानायकः सूचितः, जटा इति कर्णवत्त्वेन नायकनायिकासङ्गत्वं, भूतिशब्दस्योपसर्जनत्वेन जटा इति स्वातन्त्र्येण च नायकस्य स्वकार्यनिर्वाहे पारतन्त्र्यं, कामन्दक्यादिसचिवनीजनस्य स्वकार्यनिर्वाहोद्योगित्वञ्च सूचितमिति केचिदाचचक्षिरे। केचित्तु "धारासिक्तवसुन्धरासुरभय"इति निबद्धपद्यस्य वक्ष्यमाणत्वादेताभ्यां श्लोकाभ्यां जलधरसमयप्रारम्भः सूचित इत्यूचिरे। यथाहि—भुजग-ध्वानेन गर्जितशब्दः, कौमारबर्हिध्वनेन मयूरस्वनः, भुजङ्गमवृतया तिरोहितचन्द्रत्वात् कपि-शस्यापि जटाजूटस्य श्यामत्वप्रतिपादनेन मेघोदयः, एवं सर्पविस्फारः, गङ्गाजलगलनेन वर्षणं, कपालमालया बलाकावलिः, ललाटनेत्रत्विषा विद्युद्द्योतनं, केतकदिखेल्वनेन केतकोद्गम इति। एवं मदनोद्दीपनघनसमयसूचनेन शृङ्गाररसशालितास्य प्रकरणस्य कटाक्षितेत्यपि केचिदाचक्षते। तेषामेतादृशमूलागमकल्पनं जल्पनामात्रत्वेन सहृदयहृदयानन्दासम्पादकतया कीदृगनर्थसाधकमिति त एव जानन्ति।

(२) यद्यपि प्राचीनव्याख्यातृभिर्व्याख्यातत्वात् "पान्त्वाली"त्यादि श्लोकं प्रक्षिप्त इति प्रतिभाति, तथापि बहुपुस्तकेषु दृष्टत्वात्तदुपेक्षा व्याख्यायते। यस्य लोचनस्य पक्ष्मालीपिङ्गलिमः लोमराजिपिङ्गलतायाः समूहो तडिता विद्युता छटः सकलः फण इव सकलविद्युत्स्फुलिङ्ग-प्राय इति यावत्। तथा कालः मृत्युरेव यज्वा याजकः कालरूपो याजक इत्यर्थः, यस्मिन् लोचने (आहवनीयस्थानीये) ईषद्विघटितमुकुले किञ्चिदुन्मीलिते सति ब्रह्माण्डं जगत् जुहाव हुतवान्। अर्चिभिः स्फुलिङ्गैः। निघ्नः सातिशयं सन्ततं। य. चूडाग्रमौ भालकलानिधि.

---

৩। যেই লোচনের লোমরাজির পিঙ্গলতাসমূহ সমস্ত বিদ্যুৎস্ফুলিঙ্গ-প্রায়, যেই লোচন কিঞ্চিদুন্মীলিত হইলে কালরূপ যাজক তাহাতে ব্রহ্মাণ্ড আহুতি দিয়াছিলেন, যেই লোচনের অপাঙ্গদেশ স্ফুলিঙ্গনষ্ট কপালস্থিত চন্দ্র হইতে ক্ষরিত অমৃতপ্রবাহদ্বারা শাম্যমান, স্মরভস্মকারক মহাদেবের সেই তৃতীয় লোচন তোমাদিগকে রক্ষা করুক।

[ नान्द्यन्ते सूत्रधारः। (४) ]

अलमतिविस्तरेण (५)। [ पुरतोऽवलोक्य ]

---

सम्वादमालगलितेन चरितेन सुधासारेण अमृतप्रवाहेण भङ्गारी मन्दायमानः कोपः अपाङ्गदेशो यस्य तथयोक्तं, मदनप्लोषणं अरदाहकं पुरारेर्महादेवस्य तार्तीयीकं (तृतीय-शब्दात् स्वार्थे टकन्) तृतीयं लोचनं कपालस्थितनेत्रमिति यावत्, वो युष्मान् अवतु रक्षतु। अत्र लोकातिशयसम्पत्तिवर्णनेनोदात्तालङ्कारः "लोकातिशयसम्पत्तिवर्णनोदात्तमुच्यते। यद्वापि प्रस्तुतस्याङ्गं महतां चरितं भवेत्" इति दर्पणलक्षणात्। स्रग्धराछन्दः, तल्लक्षणमुक्तमेव।

क्वचित् पुस्तके प्रथमपद्योऽपि नान्दीश्लोको दृश्यते—

"दन्ताग्रेषु संगलत्कलकलव्यावर्तनव्याकुला
नासालोचनकर्णकुम्भकुहरेषूद्गद्गदध्वानिनः।
गण्डस्थल्यभिघातशीर्णकणिकाश्चूडास्रवन्तूर्मयः
शम्भोर्ब्रह्मकपालकन्दरपरिस्पन्दोल्वणाः पान्तु वः॥"

अस्यार्थः—ब्रह्मणः विधेः यः कपालकन्दरः करोटिः शिरोऽस्थिमयः ब्रह्मणः पात्रविशेष इति यावत्, तत्परिस्पन्दोल्वणास्तत्परिभ्रमणव्यक्ताः, दन्ताग्रेषु तत्करोटिस्थितदन्तपङ्क्तिष्वित्यर्थः, संगलन्त्यः चरन्त्य अत एव कलकलसहितेन व्यावर्तनेन परिभ्रमणेन व्याकुलाः नासालोचनकुम्भकुहरेषु नासादिसुषिरप्रदेशेषु उद्गद्गदध्वानिनः बुदबुदाकारशब्दवन्तः गण्डस्थलाभिघाताद्विशीर्णाः विदीर्णाः कणिका यासां ताः, शम्भोः शिवस्य चूडास्रवन्तूर्मयः शिरोगङ्गातरङ्गाः वो युष्मान् पान्तु रक्षन्तु। स्रग्धरावृत्तम्।

(४) आशीर्वादादिसूचकं नाटकाद्यं पद्यं नान्दी, तल्लक्षणमुक्तं दर्पणे—

"आशीर्वचनसंयुक्ता स्तुतिर्यस्मात् प्रयुज्यते।
देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता॥

मङ्गल्यशङ्खचन्द्राब्जकोककैरवशंसिनी।
पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैरुत ॥" इति।

अत्र पदशब्देन केचिद्विभक्त्यन्तमाचचक्षिरे, केचिच्च पद्यस्य चतुर्थांशैकभागमूचिरे। तदिह द्वितीयपक्षनिर्देशेन पद्यद्वयेनाष्टपदा नान्दी, तृतीयश्लोकस्य समूलत्वे तु श्लोकत्रयेण द्वादशपदा नान्दी। इत्थं त्रिविधश्यादिश्लोकस्यापि समूलत्वे पदनियमानभ्युपगम एव कवेरभिप्रेत:। पदानियमोऽपि—"आशीर्नमस्क्रियारूपः श्लोकः काव्यार्थसूचकः। नान्दीति कथ्यते तस्याः पदादिनियमोऽपि वे"-ति ग्रन्थान्तरे "अपि वा" इत्यनेन सूचितः। अत एव "या सृष्टिः स्रष्टुराद्या" इत्यादि शाकुन्तलादिनान्दीषु पदानियमो दृश्यते। "स्निग्धमुग्धेन्दव" इत्यनेन च नान्दीयं चन्द्रनामाङ्किता, चन्द्रनामाङ्कितनान्द्याः प्रयसापि प्रोक्तं—"चन्द्रनामाङ्किता कार्या रसानां च यतो निधिः। प्रीते चन्द्रमसि स्फीता रसश्रीरिति वासुकिः" ॥ नन्दयतीति नन्द, पचाद्यच्, नन्द एव नान्द प्रज्ञादित्वादण्, ततः स्त्रियामीपत्यये नान्दीति पदं निष्पन्नम्। नान्द्यन्ते—नान्दीपाठान्ते इत्यर्थः, सूत्रधारः "नाट्यस्य यदनुष्ठानं तत्पूर्वं स्यात् प्रयोजकम्। रङ्गदैवतपूजाकृत् सूत्रधार उदीरित" इति भरतोक्तलक्षणो नटविशेषः। आहेत्यादि क्रियाध्याहारेणान्वयः। ननु नान्द्यन्ते सूत्रधार इत्ययुक्तं "नान्दीं प्रयुज्य निष्क्रामेत् सूत्रधारः सहानुगः। स्थापकः प्रविशेत् पश्चात् सूत्रधारगुणाकृतिः ॥ पूर्वरङ्गं विधायादौ सूत्रधारे विनिर्गते। प्रविश्य तद्वदपरः काव्यमास्थापयेन्नटः ॥" इति भरतानुशासनेन सूत्रधारगुणाकृतिनटान्तरेणैव काव्यार्थस्य स्थापनीयत्वादिति चेदत्र केचित् सूत्रधार इति सूत्रधारसादृश्यात् स्थापके प्रयोग इत्याहुः। केचिच्च नान्द्यन्ते स्थापक इत्येव पठन्ति। वस्तुतस्तु "प्रत्याहारादिसर्वाङ्गकृतपूर्वरङ्गप्रयोगस्थलाभिप्रायकमेव नान्दीं प्रयुज्ये"-त्यादि प्रागुक्तभरतानुशासनमिति युक्तमुत्पश्यामः। अत एव दर्पणकृतापि "पूर्वरङ्गं विधायैव सूत्रधारो निवर्तते। प्रविश्य स्थापकस्तद्वत् काव्यमास्थापयेत्ततः" ॥ इत्यस्य व्याख्यानावसरे इदानीं पूर्वरङ्गस्य सम्यक्प्रयोगाभावादेक एव सूत्रधारः सर्वं प्रयोजयतीति व्यवहार: इत्यभिहितम्। ४

(५) अतिविस्तरेण नान्दीश्लोकपाठादेर्विघ्नो न भवत्वर्थम्, अन्यथा नवनाटकविलोकनोत्सुकायाः परिषदो रसविच्छेदो भवेदित्याशयः।

अये! उदितभूयिष्ठ एष भगवानशेषभुवनद्वीपदीपकस्तपन-स्तमुपतिष्ठे (६)। [ प्रणम्य ]।

कल्याणानां त्वमसि महसां भाजनं विश्वमूर्त्ते !
धुर्य्यां लक्ष्मीमथ मयि भृशं धेहि देव ! प्रसीद ।
यद्यत्पापं प्रतिजहि जगन्नाथ ! नम्रस्य तन्मे
भद्रं भद्रं वितर भगवन् ! भूयसे मङ्गलाय ॥ (७)

---

(६) "ततः श्लोकं पठेदेकं गम्भीरस्वरसंयुतम् । देवस्तोत्र पुरस्कृत्य यस्य पूजा प्रवर्त्तते ॥" इति भरतानुशासनानुसारेण माङ्गलिकतया रङ्गद्वारपाख्यस्य श्लोकस्यावतरणिकामुत्थापयति— अये इत्यादिना। "अये" इति मध्यमसूचको निपातः। उदित भूयिष्ठ बहुत्वं यस्य स, किञ्चिदूनपूर्णोदय इत्यर्थः। "नेष्ठेदादियमुद्यन्त"मिति निषेधादुदितभूयिष्ठम् इत्युक्तम्। अशेषाणां भुवनद्वीपानां दीपकः प्रकाशकः, भगवान् षडैश्वर्य्यशाली, तपनः सूर्य्यः, स सूर्य्यं उपतिष्ठे आराधयामि, प्रणामपद्येनेति शेषः। "पद्याराधनयोर्य"ऽात्मनेपदम्।

(७) आराधनश्लोकमाह—कल्याणानामिति। हे विश्वमूर्त्ते! सर्वात्मक! "सूर्य्य आत्मा जगतस्तस्थुषश्चे"ति श्रुतेः। त्वं कल्याणानां माङ्गलिकानां महसां तेजसां भाजनं पात्रमसि। हे देव। (दीव्यतीति देवः पचाद्यच्) अमित्यमुच्छ मान्वय। "एकवाक्यिमनदार्थस्यान्यशाव्दमार्ग-मनुसंरणमनुषङ्गः।" मयि मद्विषये धुर्य्यां मुख्यधुरन्धरां लक्ष्मीं सम्पत्तिञ्च, अथादशब्द-समुच्चयार्थं, भृशं अतिशयेन धेहि प्रतिपादय। प्रसीद प्रसन्नो भव। हे जगन्नाथ! भुवनस्वामिन्! नम्रस्य मे यद्यत् पापं (अस्तीति शेषः) तत् प्रतिजहि निवर्त्तय। अत्र यद्यदिति वीप्सया कायिकवाचनिकादिप्रकारकात्वं अभिप्रेतम्, अत एव तच्छब्दे वीप्सा न कृता, वीप्सितस्यैव प्रकृतपरामर्शिना तच्छब्देन परामर्शाद्द्वितीयतच्छब्दापेक्षाविरहात्। हे भगवन्! भूयसे प्रभूताय मङ्गलाय शुभाय (तादर्थ्ये चतुर्थी) भद्रं भद्रं अभीष्टं वितर देहि। अत्र हरिहरादीनपास्य सूर्य्यस्याराधनेन प्रकरणनायकस्य शाम्बत्वं सूचितम्। यद्यदिति वीप्सया घोरघटनाद् सनन्दनादिकृतोपद्रव-सूचना भावनायानन्तर भद्रं भद्रमित्यनेन

---

৮। সূত্র। নান্দীপাঠাদির বাহুল্যে প্রয়োজন নাই। আহা! সমস্ত ভুবন-দীপের প্রকাশক ভগবান্ সূর্যদেব প্রায় সম্পূর্ণরূপেই উদিত হইয়াছেন, তাঁহার আরাধনা করি (প্রণাম করিয়া।)

৭। হে বিশ্বমূর্ত্তে! তুমিই মঙ্গলজনক তেজের আধার। হে দেব! তুমি

[ नेपथ्या-(८) भिमुखमवलोक्य ] मारिष ! (९) सुविहितानि रङ्गमङ्गलानि, (१०) सन्निपतितश्च भगवतः कालप्रियनाथस्य, यात्रा-प्रसङ्गेन नानादिगन्तवास्तव्यो महाजनसमाजः (११)। आदिष्टोऽस्मि विद्वज्जनपरिषदा, यथा, केनचिदपूर्वप्रकरणेन वयं विनोदयितव्या इति। तत्किमित्युदासते (१२) भरताः।

---

मालतीमदयन्तिकाभ्यामभरक्ष्य मङ्गलस्य, मुख्ये मङ्गलादिलम्भने च कपालकुण्डलापहृतमालती विपत्रिस्तारादिकं सूचितम्। मन्दाक्रान्तावृत्तं,—"मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ गयुग्म"मिति लक्षणात्।

(८) *नेपथ्यो नाम रङ्गस्थलस्य पश्चाद्यवनिकान्तरितो वेशरचनादिस्थानविशेषः,* "कुशीलव-कुटुम्बस्य स्थली नेपथ्य मिष्यते" इत्युक्तेः।

(९) मारिष इति नटस्य सम्बोधनम्। "सूत्री नटेन भावेति मन्तव्यो मारिषेति च" इति वचनात्। "मान्यो भावेति वक्तव्य किञ्चिदूनस्तु मारिष" इत्यमरः।

(१०) सुविहितानि साधुसम्पादितानि, रङ्गे नृत्य तत्मङ्गलानि तन्मङ्गलनिर्वाहकाणि लोकपालपूजादीनि। ("रङ्गो नृत्ये रणक्षिता"विति विश्व)।

(११) कालप्रियनाथस्य तद्देशस्थदेवभेदस्य, यात्रा उत्सवस्तस्य प्रसङ्गेन (अनेन नृत्यकालसूचनम्) नानादिगन्तवास्तव्यः नानादेशनिवासी, अनेन च सर्वकलाभिज्ञत्व परिषदो दर्शयति, विदग्धपरिषत्सन्निधावेव प्रयोगकौशल्यप्रदर्शनोत्साहस्य स्वभावसिद्धत्वात्। (वास्तव्य इति वसेः कर्त्तरि तव्यो दीर्घश्च इतित्वात्) महाजनसमाजो विदग्धगोष्ठी, सन्निपतितः उपस्थितः।

(१२) उदासते उदासीनास्तिष्ठन्ति। भरताः तन्नाम्नाख्याता नटाः।

---

আমাকে বিশেষরূপে শুভসম্পাদক লক্ষ্মী ও সম্পত্তি দান কর, তুমি প্রসন্ন হও। হে জগন্নাথ! মৎ্ভাবাপন্ন আমার যে যে পাপ থাকে, তুমি সেই সেই পাপ বিনাশ কর। হে ভগবন্! প্রকৃত মঙ্গলের জন্য তুমি নির্দোষ অভীষ্ট বিতরণ কর।

৮-১২। ( নেপথ্যের দিকে অবলোকন করিয়া ) মারিষ! রঙ্গের মঙ্গলজনক কার্যসকল সম্পাদিত হইয়াছে। ভগবান কালপ্রিয়নাথের যাত্রাপ্রসঙ্গে নানাদেশবাসী মহাজনগণ উপস্থিত হইয়াছেন, আমিও বিদ্বৎসভা কর্তৃক আদিষ্ট হইয়াছি,

[ प्रविश्य पारिपार्श्विकः (१३) ] भाव ! (१४) परिषन्निर्दिष्ट-गुणं प्रबन्धं नाधिगच्छामः ।

सूत्र । मारिष ! कतमे ते गुणास्तत्र यानुदाहरन्त्यार्या विदग्धा मिश्रा भगवन्तो भूमिदेवाः (१५) ।

नटः ।—

भूम्ना रसानां गहनाः प्रयोगाः सौहार्दहृद्यानि विचेष्टितानि ।
औद्धत्यमायोजितकामसूत्रं चित्रा कथा वाचि विदग्धता च ॥ (१६)

---

(१३) पारिपार्श्विकलक्षणं यथा भरते—"सूत्रधारस्य पार्श्वे यः प्रचरेत् कुशलैर्बुधः । काव्यार्थसूचनाभाषी, स भवेत् पारिपार्श्विकः ॥"

(१४) भाव इति सूत्रधारस्य सम्बोधनम्, यतः पूर्वोक्तप्रमाणानुसारेण सूत्रधारो नटेन भावेत्येव वाच्य । परिषदा प्रेक्षकैः निर्दिष्टा गुणा यत्र तं, प्रबन्धं प्रकरणम् ।

(१५) "गोत्र नाम च बध्नीयात् पूज्यावाक्यं सर्वतः" इति भरतानुशासनात् पूज्यवाक्य-गर्भं प्रश्नमाह—कतम इति । कतमे कियन्तः, आराद्याताः दूरं गताः पापादिदोषेभ्य इत्यार्याः, "कृतं शीलं दया दानं धर्मः सत्यं कृतज्ञता । अद्रोह इति येष्वेतत्तानार्यान् सम्प्रचक्षते ॥" इत्येवं लक्षणाः । विदग्धाः चतुःषष्टिकलाविदिनः पण्डिताः, मिश्राः पूज्याः, भगवन्तः षडैश्वर्यशालिनः, भूमिदेवा ब्राह्मणाः । सभायामन्येषां सत्त्वेऽपि भूमिदेवा इति कथनं तत्प्रधानत्वात् गुणदोषविचारस्य तदधीनत्वात् दैवतात्मकत्वेन तेषामाराधनीयत्वाच्चेति मन्तव्यम् ।

(१६) प्रबन्धे गुणान् दर्शयति—भूम्नेति । रसानां अङ्गाङ्गिभावेन स्थितानां शृङ्गारादीनां भूम्ना प्राचुर्येण गहनाः गम्भीराः सूक्ष्मदर्शिमात्रग्राह्या इति यावत् । प्रयोगाः अभिनयाः, अनेन रसैकप्रबलत्वं प्रबन्धस्य दर्शितम् । तथा सौहार्देन निरुपाधिकप्रेम्णा हृद्यानि मनोज्ञानि विचेष्टितानि नायकनायिकयोर्व्यापारविशेषाः, अनेन धीरप्रशान्तनायकोपेतत्वं दर्शितम् ।

---

যে "কোনও অপূর্ব্ব প্রকরণের অভিনয়দ্বারা আমাদের আনন্দ-সম্পাদন কর।" সুতরাং নটগণ উদাসীন কেন ?

১৩-১৪। পারিপার্শ্বিক। (প্রবেশ করিয়া) ভাব! পরিষৎকর্তৃক যে সমস্ত গুণ নির্দ্দিষ্ট হইয়াছে, তাদৃশ গুণসম্পন্ন প্রকরণ দেখিতেছি না।

১৫। সূত্র। মারিষ! কুলশীলাদিসম্পন্ন সমস্ত শাস্ত্রাভিজ্ঞ পূজ্য ষড়ৈশ্বর্য্য-শালী ব্রাহ্মণগণ কি কি গুণের নির্দ্দেশ করিয়াছেন ?

सूत्र। स्मृतं तर्हि। (१७)

नटः। भाव! किमिव? (१८)

सूत्र। अस्ति दक्षिणापथे विदर्भेषु पद्मपुरं नाम नगरम्। तत्र केचित्तैत्तिरीयिणः काश्यपाश्चरणगुरवः पङ्क्तिपावनाः पञ्चाग्नयो धृतव्रताः सोमपीथिन उदुम्बरनामानो ब्राह्मणा ब्रह्मवादिनः प्रतिवसन्ति स्म। (१९)

---

यथा आरोपितं प्रवर्तितं कामस्य अनुरागस्य सूत्रं (अन्योन्यमालतीमाधवयोः) येन तादृशं शौर्यं नायकनायिकामन्त्रिभृत्यादीनां गुणमाहात्म्यं, तथा विस्मयं आश्चर्यजनिका कथा, तथा वाचि वचने विदग्धता नैपुण्यम्। एतानि यत्र प्रबन्धे सन्ति, तादृशं नाट्यं प्रदर्शयितुमादिशन्ति सूरिदेशा इति शेषः। "स्मरसि यदि तौ भूमी न" इति पूर्वपादेन सम्बन्धः।

(१८) किं स्मृतमित्यर्थः।

(१९) "इत्थं वीरश्रीदास धाराम् कीर्त्तिरम्बरी। तावत् किमाधकथान्ते सुतरां वै पुर्व पद" इति नामादिकथनम् सकलन्यादिविशेषत. परिनियमावर्त्ते—अस्तीत्यादिना। दक्षिणदेशस्य अनुसारमपरत्वमप्रसिद्धं दक्षिणापथ इत्यनेन अनुसारस्वर्यनशक्तिबद्धनिता। विदर्भेष्विषयेन वैदर्भी रीति. मन्यादिता। पद्मपुरं नाम पद्मपुरमिति प्रसिद्धं नाम्ना पद्मपुरमिति वा, अभेदार्थकतसीयाया लोपात्। तैत्तिरीयनामकशाखाविशेषाध्यायिनः, काश्यपाः काश्यपगोत्राः, चरणशब्दः शाखाविशेषार्थे वृष्टयसमूहे वर्त्तते, तद्गुरवः तदध्यापयितारः,

---

১৬। নট। যে প্রকরণে শৃঙ্গারাদিরসের চাতুর্য্যদ্বারা অভিনয় অতি ভাবগম্ভীর হয়, অকপট স্নেহদ্বারা নায়কনায়িকার ব্যবহার অতি মনোরম হয়, যাহাতে নায়কনায়িকা-সখী-ভৃত্যাদির গুণমাহাত্ম্য অনুরাগবর্দ্ধক হয় এবং হর্ষজনক কথা ও বাক্যে পাণ্ডিত্য থাকে, এরূপ প্রকরণ অভিনয় করিবার জন্য ব্রাহ্মণগণ আদেশ করিয়াছেন।

১৭। সূত্র। তবে আমার স্মরণ হইয়াছে।

১৮। নট। ভাব! কি স্মরণ হইয়াছে।

১৯। সূত্র। দক্ষিণাপথে বিদর্ভদেশে পদ্মপুরনামে এক নগর আছে, সেই নগরে তৈত্তিরীয়শাখাধ্যায়ী কাশ্যপগোত্র বেদাধ্যায়ীদিগের গুরু অগ্নিহোত্রী

ते श्रोत्रियास्तत्त्वविनिश्चयाय भूरि श्रुतं शाश्वतमाद्रियन्ते
इष्टाय पूर्त्ताय च कर्म्मणेऽर्थान् दारानपत्याय तपोऽर्थमायुः॥(२०)

तदामुष्यायणस्य तत्रभवतः सुगृहीतनाम्नो भट्टगोपालस्य पौत्रः पवित्रकीर्त्तेर्नीलकण्ठस्यात्मसम्भवो भट्टश्रीकण्ठपदलाञ्छनो, भवभूति-

---

पंक्तिपावनाः पङ्क्तौ भोजनादिसभायां पावनाः पवित्राः अग्रभोजिन इति यावत्। पङ्क्तिपावनलक्षणमप्युक्तं, यथा—"यजुषां पारगो यस्तु साम्नां यश्चापि पारगः। अथर्वशिरसोऽध्येता ब्राह्मणः पङ्क्तिपावनः॥" इति। पञ्चाग्नयः दक्षिणगार्हपत्याहवनीयसभ्यावसथ्यरूपाग्निपञ्चक-परिचरणशीलाः आहिताग्नय इति यावत्। धृतव्रताः चान्द्रायणादिव्रतपरायणाः. उदुम्बर-नामानः उदुम्बरं प्रसिद्धं ("प्रसिद्धौ उदुम्बर विट्"इति विश्वः) नाम येषां ते तथोक्ताः, ब्रह्मवादिनः वेदविदः।

(२०) तेषां सर्वगुणयोगित्वं वर्णयति—त इत्यादिना। ("श्रोत्रियश्छन्दोऽधीते" इति निपातनात् साधुः) 'जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते। विद्यया याति विप्रत्वं त्रिभिः श्रोत्रिय उच्यते॥" इति लक्षणलक्षिताः ते पूर्वोक्ता ब्राह्मणाः, तत्त्वस्य पारमार्थिक-ब्रह्मस्वरूपस्य विनिश्चयाय विशेषतो निर्धारणाय न तु प्रतिवादिगर्वादिनिराकरणेन यशो-लाभाय, भूरि प्रचुरं शाश्वतं सार्वकालिकं श्रुतं अध्ययनं आद्रियन्ते अनुतिष्ठन्ति। तथा इष्टाय-कर्म्मणे यागादिक्रियार्थं पूर्त्ताय कर्म्मणे खातादिकार्य्यार्थं न तु भोगाय अर्थान् धनानि आद्रियन्ते यागादीनामर्थसाध्यत्वादिति भावः। एवं अपत्याय सन्तत्यर्थं न तु मन्मथं तर्पयितुम्, दारान् भार्य्याः आद्रियन्ते, तथा तपोऽर्थं तपस्यार्थं न तु व्यसनार्थं आयुः जीवनं आद्रियन्ते। सर्वत्र तादर्थ्ये चतुर्थी। अत्र यशोलाभादीनामर्थतो निराकरणात् "परिसंख्या"-अलङ्कारः "प्रश्नादप्रश्नतो वापि कथितादवस्तुनो भवेत्। तादृगन्यव्यपोहश्चेत् शाब्द-आर्थोऽथवा तदा॥ परिसंख्ये"ति दर्पणलक्षणात्। इन्द्रवज्रावृत्तम्॥

---

সাগ্নিক/ চান্দ্রায়ণাদিব্রতাচারী সোমপায়ী প্রসিদ্ধনামা বেদপারগ ব্রাহ্মণগণ বাস করিতেন।

২০। সেই শ্রোত্রিয় ব্রাহ্মণগণ কেবল তত্ত্বনিশ্চয়ের জন্যই সার্ব্বকালিক প্রচুর বেদাধ্যয়ন করিতেন (যশোলাভাদির জন্য নহে), যজ্ঞ ও দীর্ঘিকা খননাদির জন্যই অর্থ সংগ্রহ করিতেন (ভোগের জন্য নহে) কেবল সন্তানের জন্যই দার-পরিগ্রহ করিতেন (ইন্দ্রিয়তৃপ্তিচরিতার্থতার জন্য নহে), এবং তপস্যার জন্যই দীর্ঘজীবন প্রার্থনা করিতেন। (ব্যসনের জন্য নহে)।

नामा जातूकर्णीपुत्रः, कविर्निसर्गसौहृदेन भरतेषु स्वकृतिमेवंप्राय-गुणभूयसीमस्माकमर्पितवान्, यत्र खल्वियं वाचो युक्तिः । (२१)

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि तान् प्रति नैष यत्नः ।

---

(२१) तदामुष्यायणस्य अमुष्यशब्दादायणण् विभक्त्यलुक्, सुगृहीतनाम्नः सुगृहीतं सुप्रसन्नकीर्त्याख्यं नाम यस्य तथाभूतस्य नलादिवत् पुण्यश्लोकस्येति यावत्, भट्टस्य गण्डाभिन्न. गोपालो नाम्ना, तस्य पौत्र, पवित्रा कीर्तिर्यस्य तस्य पवित्रकीर्तेः नीलकण्ठस्य तन्नामकस्य आत्मसम्भव पुत्र, श्री सरस्वती "श्रीर्विरचना शोभा भारती सरलद्रुम" इति मेदिनी। कण्ठे यस्य स श्रीकण्ठ तद्वाचक पदं लाञ्छनं चिह्न यस्य स श्रीकण्ठोपाधिक इत्यर्थ, यद्वा श्रीकण्ठ इत्यपि तस्य नामान्तर, भवभूतिनामा भवभूतिरिति प्रसिद्ध, जातूकर्णगोत्र-सम्भूता जातूकर्णी, तस्याः पुत्र, भरतेषु नटेषु निसर्गसौहृदेन स्वाभाविकसौहार्देन। (उक्ता पूर्वको विधिरनित्य इति वचनात् सौहृदेनेत्यत्र नोभयपदवृद्धि) एवम्प्रायगुणभूयसीं "भूक्ता रसाना"मित्याद्युक्तगुणैरुपचितां स्वकृतिं स्वप्रबन्धं अस्माकं अर्पितवान् सभासु प्रयोगेण प्रख्यापयन्त्विति अस्माकं स्थाने समर्पितवानित्यर्थः। यत्र प्रबन्धे, खलु प्रसिद्धे वाक्यालङ्कारे वा, इयं अनन्तरश्लोकप्रतिपाद्या वाचो युक्तिर्वचनभङ्गि.।

(२२) निजवचनरचनचातुर्यं च तत्त्वज्ञान् प्रति साहङ्कारपरिहारं अज्ञान् प्रति च व्यवस्थमाह—ये नामेति। नाम प्रसिद्धौ, ये केचित् प्रसिद्धा पारमार्थिकतत्त्वबुभुत्सवः नोऽस्माकं इह प्रबन्धे अवज्ञा अवधीरणां प्रथयन्ति उद्घोषयन्ति, ते किमपि अनिर्वचनीयं ब्रह्म जानन्ति, तान् प्रति तान् उद्दिश्य एष ग्रन्थकरणोद्यमरूप यत्नो न, विवेकसलिलक्षालितान्तःकरणसार-

---

২১। প্রসিদ্ধ সেই কুলোৎপন্ন পূজ্য গোপালনামা ভট্ট গোপালের পৌত্র, পবিত্রকীর্ত্তি নীলকণ্ঠ ও জাতূকর্ণীর পুত্র, শ্রীকণ্ঠোপাধিক (অথবা শ্রীকণ্ঠনামা) প্রসিদ্ধ কবি ভবভূতি ভরতদিগের প্রতি সৌহার্দ্দবশতঃ পূর্ব্বোক্তগুণসম্পন্ন স্বকৃত প্রকরণ ( সভায় অভিনয় করিবার জন্য ) আমাদিগকে অর্পণ করিয়াছেন। সেই প্রকরণে এবম্বিধ বাক্যের যুক্তি আছে।

২২। যে সমস্ত মহাত্মগণ আমার এই প্রকরণে অবজ্ঞা-প্রদর্শন করিবেন, তাঁহারা অনির্ব্বচনীয় ব্রহ্ম বুঝেন, সুতরাং তাঁহাদের জন্য আমার এই উদ্যম নহে, অথবা যে সমস্ত অজ্ঞ লোক আমার এই প্রকরণে অবজ্ঞাপ্রদর্শন করিবেন,

उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा,
कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥ (२२) *

---

वासनापहीना काव्यरसास्वादनपराङ्मुखमानसा तेषां कल्पनैकमूले प्रकरणे पुनैवार-धीरयेति विनयोक्तिः। ये नाम सुभावनाया, केचिदस्मा अवज्ञां ख्यापयन्ति, ते किमपि अन्यत् जानन्ति, यदा किमपीति, अविद्यन्तो भिन्नक्रमे, तथाहि ते किं जानन्ति ? न किञ्चिदपि, अत: तान् प्रत्यपि एष यत्नो नेत्यर्थ:। न हि बधिरार्थं केनचिद्गीयत इति भाव:। पामराणां तेषां मदीयप्रकरणार्थावधारणाधिकार एव नास्तीति कुतस्तान् प्रति यत्न इत्युक्तम्। तर्हि कथं क्रियते यत्न इत्याह—उत्पत्स्यत इति। मम समानधर्मा मत्सदृश कोऽपि यदि उत्पत्स्यते जनिष्यते, अथवा अस्ति विद्यते, तदा तं प्रति एष यत्न इति शेषः। (महामानामस्मनीता नामनेन प्रकरणेन प्रयोजनविरहात्तदकीर्तनम्, इदानीमनुत्पादेऽपि मद्दृशस्योत्पाद सम्भावना दर्शयति—काल इति। हि यस्मादयं काल निरवधि निरवसान, तथाच इदानी-मनुत्पादेऽपि कालान्तरे तदुत्पादसम्भव इति भाव:। मद्दृशस्य विद्यमानत्वेऽप्यनुपलम्भि-सम्भावना दर्शयति—विपुलेति। पृथ्वी पृथिवी विपुला महती, तथाच एतद्देशे मदनुपलम्भेऽपि देशान्तरे तदस्तित्वसम्भव इति भाव:। इह प्रथमार्द्धे "न:" इति बहुत्वेन प्रयोगेऽपि द्वितीयार्द्धे "मम" इत्येकत्वेन प्रयोगो न दोषावह, एकवाक्यार्थत्व एव तादृशप्रयोगस्यायोग्यतया दुष्टत्वात्, , इह तु भिन्नवाक्यार्थत्वात्। वसन्ततिलकं वृत्तं "ज्ञेयं वसन्ततिलकं तभजाजगौ गः" इति लक्षणात्।

---

তাঁহারা অতি অল্পাভিজ্ঞ, তাঁহাদের জন্যও আমার এ উদ্যম নহে। তবে মৎ-সদৃশ কেহ যদি উৎপন্ন হয়, অথবা কোথাও থাকে, তাহাদের জন্যই আমার এই যত্ন। যেহেতু এই কালের অবধি নাই, পৃথিবীও অতি বিপুল, (সুতরাং কোন্ কালে আমার সদৃশব্যক্তির উৎপত্তি বা কোনও দেশে বিদ্যমানতা অসম্ভব নহে)।

---

* । तदुक्तवा तत्पद्यापनाय सर्वे कुशीलवाः यथा—स्वसमीतकप्रयोगे कर्णिकापरिग्रहं च लयेतामिति। कविवर्णनां प्रति तेनैवोक्तं।

"गुणैः सता न मम को गुणः प्रख्यापितो भवेत्।
यथार्थनामा भगवान् यस्य ज्ञाननिधिर्गुरुः॥" इत्यधिकपाठः क्वचित्।

अपिच,—यद्वेदाध्ययनं, तथोपनिषदां सांख्यस्य, योगस्य च
ज्ञानं तत्कथनेन किं ? न हि ततः कश्चिद्गुणो नाटके।
यत्प्रौढत्वमुदारता च वचसां यच्चार्थतो गौरवम्,
तच्चेदस्ति ततस्तदेव गमकं पाण्डित्यवैदग्ध्ययोः॥ (२१)

ततो यदस्माकमर्पितं प्रियसुहृदाऽऽभवता भवभूतिनाम्ना प्रकरणं स्वकृतं मालतीमाधवं नाम, तदेव तत्रभवतः कालप्रियनाथस्य

---

(२१) पण्डितविरचितस्य एव पण्डितानां समादर इति निजपाण्डित्यं प्रकटयति—यद्वेत्यादिना। अत्रापि यत् स्वनिष्ठं वाच्यं युक्तिरित्यनुवक्ष्यते। यद्वेदानां ऋगादीनाम् अध्ययनं तथा उपनिषदां ब्रह्मार्थप्रतिपादकवेदांशविशेषाणां, सांख्यस्य कपिलप्रणीतस्य, योगस्य पातञ्जलस्य च यज्ज्ञानं तत् कथनेन तयोरध्ययनज्ञानयोरभिधानेन किं ? न किमपीत्यर्थः। हि यस्मात् ततः वेदाध्ययनादेः नाटके कश्चिद्गुणः उपकारित्वं न भवतीति शेषः। नाटके वेदाध्ययनादीनामनुपयोगादिति भावः। यच्च यस्य नाटकोपयोगित्वं तदाह—यत्प्रौढत्वमिति। वचसां यत् प्रौढत्वं गभीरार्थत्वं, यथा "पदार्थे वाक्यरचनं वाक्यार्थे च पदाभिधा। प्रौढिर्व्याससमासौ च साभिप्रायत्वमस्य च॥" इत्युक्तलक्षणलक्षितं उदारता गुणविशेषः। यथोक्तं दण्डिना,—"उत्कर्षवान् गुणः कश्चिद् यस्मिन्नुक्ते प्रतीयते। तदुदाराह्वयं तेन सनाथा काव्यपद्धतिः॥" इति। अर्थतो गौरवं अनेकार्थप्रतिपादनसामर्थ्यं नाटके यद्यस्ति तत्तर्हि तदेव पाण्डित्यं शास्त्रव्युत्पत्तिः, वैदग्ध्यं कवित्वशक्तिः तयोर्गमकं बोधकम्। तथाच मदीयप्रकरणस्य प्रौढत्वादिकं दृष्ट्वैव पाण्डित्यं कवित्वञ्च मे ज्ञास्यन्ति विद्वांसः, अतस्तत्कीर्तनेनालमिति भावः। ननु नाटक इति कथमुक्तं नाटकप्रकरणयोर्भेदादिति चेत्, नटकर्मत्वादिति नटधातोर्घञि स्वार्थे ण्वु कप्रत्यये नाटकमिति पदं निष्पन्नं, तथाच नाटके नाट्ये इत्यर्थे दोषाभावात्। शार्दूलविक्रीडितं वृत्तं, उपमालङ्कारश्च।

---

२०। বেদাধ্যয়ন, উপনিষৎ, সাংখ্য ও যোগশাস্ত্রের যে জ্ঞান তদ্বর্ণনের কীর্তনদ্বারা কোনও ফল নাই, যে হেতু নাটকে তাহার কোনই উপযোগিতা নাই। বাক্যের যে গাম্ভীর্য্য, উদারতা, ও গুর্বার্থতা তাহা যদি থাকে, তবে তাহাই পাণ্ডিত্য ও কবিত্বশক্তির বিজ্ঞাপক হইবে।

पुरतः प्रयोगेण प्रख्यापयितुमुद्यताः तत् सर्व्वे कुशीलवाः सङ्गीत-प्रयोगेण मत्समीहितसम्पादनाय प्रवर्त्तन्ताम्। (२४)

नटः। [ श्रुत्वा ] एवं क्रियते युष्मदादेशः, किन्तु या यस्य युज्यते भूमिका, तां खलु तथैव भावेन सर्वे वर्ण्याः पाठिताः, सौगत-जरत्परिव्राजिकायास्तु, कामन्दक्याः प्रथमभूमिकां भाव एवाधीते, तदन्तेवासिन्यास्त्वहमवलोकितायाः। (२५)

सूत्र। ततः किम्। २६

---

(२५) भूमिका व्यापारवेशः, यदोक्तं भरतेन—"अन्यरूपैर्यदन्यस्य प्रवेशः स तु भूमिके"ति। भूमिका, वर्णे भवा वर्ण्याः स्वपरिजनान्तर्गता नटा इत्यर्थः, पाठिता शिक्षिता, सौगतजरत्परि-व्राजिकाया बौद्धवृद्धसन्न्यासिन्याः, एतादृश्याश्च दौत्ये प्रशस्तोक्ता भरतेन। यथा—"विश्वस्तशिल्पिका दासी भिक्षुकी शिल्पकारिका। प्रविश्य चाशु विश्वासं दूतीकार्यञ्च विन्दति॥" "लिङ्गिनि नार्यवक्त रूपिणि वा तदनुगम्। दूतं साम्येयता दूतीं न तु कुर्यात् कथञ्चन॥" इति भरतनिषेधात्। वृद्धत्वकथनं रूपादिसत्त्वज्ञापनार्थं। तदन्तेवासिन्या कामन्दकीशिष्यायाः, भूमिकामहमधीये इत्यन्वयः।

(२६) एतावदुक्ता किं विरतोऽसीति शेषः।

---

২৪। অতএব প্রিয় সুহৃৎ পূজ্য ভবভূতিনামক কবি স্বকৃত মালতীমাধবনামক যে প্রকরণ আমাদিগকে অর্পণ করিয়াছেন, পূজ্য কালপ্রিয়নাথের সম্মুখে অভিনয়দ্বারা তাহারই প্রখ্যাপনে আমরা উদ্যত হইলাম, অতএব নটগণ সঙ্গীত-প্রয়োগদ্বারা আমার অভীষ্ট-সম্পাদনে প্রবর্ত্তিত হউক ( এরূপ আদেশ-কর )।

২৫। নট। ( শ্রবণ করিয়া ) আপনার আদেশ প্রতিপালন করিতেছি, কিন্তু যাহার যে বেশধারণ উপযুক্ত, সেরূপ ভাবেই আপনি পরিজনবর্গকে শিক্ষা দিয়াছেন। বৌদ্ধ বৃদ্ধ সন্ন্যাসিনী কামন্দকীর বেশেই প্রথম প্রবেশ করিতে হইবে, তাহা আপনি নিজেই শিক্ষা করিয়াছেন এবং কামন্দকীর শিষ্যা অবলোকিতার বেশধারণাদি আমি অভ্যাস করিয়াছি।

২৬। সূত্র। ইহা বলিয়াই বিরত হইলে কেন?

नटः। ततः प्रकरणनायकस्य मालतीवल्लभस्य माधवस्य वर्णिकापरिग्रहः कथम्? (२७)

---

(२७) तत इति। प्रकरणं रूपकभेदः, तन्नायकस्य तदालम्बनीभूतप्रधानपुरुषस्य। नायकलक्षणं यथा दर्पणे—

"त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही।
दक्षोऽनुरक्तलोकस्तेजोवैदग्ध्यशीलवान्नेता॥"

नायकभेदा अपि उक्तास्तत्रैव—

"धीरोदात्तो धीरोद्धतस्तथा धीरललितश्च।
धीरप्रशान्त इत्ययमुक्तः प्रथमश्चतुर्भेदः॥"

अयञ्च नायको माधवः धीरप्रशान्तः, दर्पणोक्तं तल्लक्षणं यथा—

"सामान्यगुणैर्भूयान् द्विजादिको धीरप्रशान्तः स्यात्"।

अमात्यत्वादयं धीरोदात्त इति भरतमतानुवर्तिनः, तथाचोक्तं भरतेन—"सेनापतिरमात्यश्च धीरोदात्तौ प्रकीर्तितौ" इति। मालती तन्नायिका प्रकरणनायिका। नायिका च नायकसामान्यगुणैस्त्यागादिभिर्यथासम्भवैर्युक्ता प्रधानतो रसालम्बनीभूता स्त्री। यथोक्तं, दर्पणे—

"अथ नायिका त्रिविधा स्वान्यासाधारणस्त्रीति।
नायकसामान्यगुणैर्यथासम्भवैर्युक्ता"॥

मालती च नायिका स्वस्त्री कुलस्त्रीत्वाच्च उदात्तनिभृता, यथाह भरतः—"उदात्तनिभृता चैव भवेत्तु कुलजाङ्गना" इति। कुलस्त्रीघटितत्वात् प्रकरणमिदं शुद्धं, तदुक्तं भरतेन—

"द्विधा प्रकरणं तत्तु शुद्धं सङ्कीर्णमेव च।
कुलस्त्रीरचितं शुद्धं सङ्कीर्णं वेश्यया कृतं॥"

अथ मालतीवल्लभत्वं माधवस्योक्तं, माधवेन वसन्तेन समं वर्षाकालीनाया मालत्या जातेः सम्बन्धाभावादिति चेन्न, योगिनीप्रभावादसम्भवसम्भवं सम्पादयता कविना सहृदयहृदयचमत्कारकारिण्या विदग्धतया एवैतदभिहितत्वात्। माधव इति नाम्ना च शृङ्गाररसाश्रयनीतौ वसन्तस्य शृङ्गाररसमयत्वात्। शृङ्गाररसमयत्वेन च विष्णुदेवत्वमनुप्रेक्षणीयं, "शृङ्गारो विष्णुदैवतः" इति भरतोक्तत्वात्। वर्णिकापरिग्रहः भूमिकाग्रहणं माधवस्याभिनयादिकार्यमिति यावत्। कथं भावाभ्यां कामन्दक्या अवलोकितायाश्च भूमिकाद्वयस्य प्रथममेव स्वीकृतत्वात् प्रधाननायकभूमिकापरिग्रहस्तु केन सम्पाद्य इति प्रश्नार्थः। २७

सूत्र । मकरन्दकलहंसप्रवेशावसरे तत्सुविहितम् । (२८)

नटः । तेन हि तत्प्रसिद्धप्रयोगादेवात्रभवतः सामाजिका-नुपास्महे । (२९)

सूत्र । बाढ़ं, एषोऽस्मि कामन्दकी संवृत्तः । (३०)

नटः । अहमप्यवलोकिता । (३१) [इति परिक्रम्य निष्क्रान्तौ](३२)

---

(२८) सूत्रेति । उत्तरमाह—कलहंसेति । कलहंसो माधवस्य चेटः, मकरन्दो मित्रं, तयोः प्रवेशावसरे तत् माधवभूमिकापरिग्रहणं सुविहितं निर्द्धारितं कविनेति शेषः । तथाच एकदा सर्वेषामप्रवेशाभावान्निदानीं तच्चिन्तनीयमिति भावः ।

(२९) नट इति । तेन सामाजिकनिर्द्दिष्टगुणशालित्वेन कुशीलवैरधीतत्वेन च, तत्-प्रसिद्धप्रयोगात् तस्य प्रसिद्धस्य प्रकरणस्याभिनयात् । अत्रभवतः पूज्यान् सामाजिकान् सभायां समवेतान्, उपास्महे आराधयामः ।

(३०) सूत्रेति । बाढं तथा कुर्म्म इत्यर्थः । एषोऽस्मीति—सूत्रधाररूपपरित्यागेन कामन्दकी-भूतोऽस्मीत्यर्थः । कामन्दकी नीतिग्रन्थभेदः, तं वेत्तीति कामन्दकी । (तद्वेत्त्यधीते, तत ईप्रत्ययः) अनया च नामव्युत्पत्त्या नीतिवेदित्वख्यापनेन प्रकृतसिद्धिहेतुता सूचिता ।

(३१) संवृत्तेत्यनुषङ्गेणान्वयः । अवलोकिता दृष्टिः, अनेन च नाम्ना कार्य्यसिद्धि-दृष्टेरपि कार्य्यसिद्धिहेतुता सूचिता । एतैश्च वाक्यैः कामन्दक्यवलोकितयोः प्रथमप्रवेशरूपं सूत्रं सूचितम् ।

---

(২৭) নট। তবে প্রকরণনায়ক মালতীবল্লভ মাধবের বেশপরিগ্রহ কি প্রকারে হইবে ?

(২৮) সূত্র। মকরন্দ ও কলহংসের প্রবেশাবসরে মাধবের বেশধারণ বিহিত হইয়াছে। ( সুতরাং এখন সেই চিন্তার প্রয়োজন নাই )

(২৯) নট। তবে সেই প্রসিদ্ধ মালতীমাধবের অভিনয়দ্বারাই পূজ্য সামা-জিকবর্গের সংবর্দ্ধনা করি।

(৩০) সূত্র। তাহাই হউক, এই আমি কামন্দকীর বেশ ধারণ করিতেছি।

(৩১) নট। আমিও অবলোকিতার বেশ ধারণ করিতেছি।

[ प्रस्तावना । (३३) ]

[ ततः परिक्रम्य रक्तपट्टिकानेपथ्ये कामन्दक्यवलोकिते प्रविशतः ] (३४)

कामन्दकी । वत्से ! अवलोकिते ! (३५)

अवलोकिता । आज्ञापयतु भगवती । (३६)

---

(३६) आज्ञापयतु भगवती इति शम् ।

---

(३२) इतीति । परिक्रम्य पादविक्षेपं नाटयित्वा । निष्क्रान्तौ रङ्गभूमेरपगतौ, सूत्रधारनटाविति शेषः ।

(३३) प्रस्तावना प्रस्तुतोद्घाटनं, वर्त्तत इति शेषः । प्रस्तावनालक्षणं यथा दर्पणे—

"नटी विदूषको वापि पारिपार्श्विक एव वा ।
सूत्रधारेण सहिताः संलापं यत्र कुर्वते ॥
चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः ।
आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा ॥" इति ।

सा चात्र "एषोऽयमित्युपक्षेपात् सूत्रधारप्रयोगतः । पात्रप्रवेशो यत्रायं प्रयोगातिशयो मतः ॥" इति लक्षणे अयं पदसौपलक्षकत्वात् प्रयोगातिशयाख्या । दर्पणोक्तं प्रयोगातिशयलक्षणं यथा—

"यदि प्रयोग एकस्मिन् प्रयोगोऽन्यः प्रयुज्यते ।
तेन पात्रप्रवेशश्चेत् प्रयोगातिशयस्तदा ॥" इति

(३४) तत इति । परिहृत्य पुनरागत्य रक्तपट्टिका नेपथ्यं ययोस्ते रक्तपट्टिकानेपथ्ये कामन्दक्यवलोकितयोर्वेशे इत्यर्थः । कामन्दक्यवलोकिते तद्वेशधारिणौ सूत्रधारनटौ, प्रविशतः रङ्गभूमाविति शेषः ।

(३५) कामन्दकीति । आहेति शेषः । एवमुत्तरत्रापि सर्वत्र वक्तृपदसमभ्याहृतसंख्यया आहेत्यादिक्रियया योजनीयम् । एवं प्रस्तावनां परिसमाप्य कथांशसूचनार्थं विष्कम्भकमारभते— वत्से ! इत्यादिना ।

---

(৩২) (নট ও সূত্রধার) পরিক্রমণ করিয়া (হাঁটিয়া) নিষ্ক্রান্ত হইল।

(৩৩) (রক্তবস্ত্রপরিধানে কামন্দকী ও অবলোকিতাবেশে নট ও সূত্রধারের পুনঃ প্রবেশ)

(৩৫) কামন্দকী। বৎসে অবলোকিতে!

काम। अपि नाम तयोः कल्याणिनोर्भूरिवसुदेवराताप्रत्ययो-र्मालतीमाधवयोरभिमतः पाणिग्रहः स्यात् ?। (३७) [ वामाक्षिस्पन्दनं सूचयित्वा सहर्षम्। ] (३८)

विद्गुण्वतेव कल्याणमान्तरज्ञेन चक्षुषा।
स्फुरता वामकेनापि दाक्षिण्यमव लम्ब्यते॥ (३९)

---

(३७) सम्प्रति कविः कामन्दकीमुखेन प्रकरणार्थं कथयति—अपि नामेत्यादिना। इह हि मालतीमाधवयोर्विवाहनिर्वाह एव समग्रप्रकरणार्थः। नाम सम्भावनायां निश्चये वा। कल्याणं शुभमस्ति ययोस्तौ कल्याणिनौ तयोः कल्याणिनोः, सन्निहितानुरूपविवाहरूपकल्याण-सूचकमेतद्विशेषणम्। भूरीणि प्रचुराणि वसूनि धनानि यस्य स भूरिवसुः मालतीपिता। अनेन सार्थकनाम्ना महाधनिककन्यायाः मालत्याः वराकाङ्क्षाया अवश्यम्भावित्वं सूचितम्। देववत् राति ददातीति (रा + कर्तरि क.) देवरातो माधवपिता, अनेन च सार्थकनाम्ना दातृवंशसम्भूतया माधवस्याप्यनुरूपवरत्वं सूचितं। पाणिग्रहो विवाहः निश्चितमेव अभिमतं सम्मतः स्यात् भवेत् सर्वेषामिति शेषः। विधेरपि सारसिक प्रयास. परस्परं योग्यसमागमार्थेति भावः।

(३८) सहर्षमित्याहर्तव्याया आहक्रियाया विशेषणं। स्त्रीणां वामाङ्गस्फुरणस्य शुभ-सूचकत्वात् हर्षो युक्तः।

(३९) विद्गुण्वतेति। आन्तरज्ञेनेव अयमर्थः सिध्यति नवेति सन्देहदोलायितं ममान्तः-र्वर्त्तिभावं जानतेवेत्युत्प्रेक्षा "मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः। उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः॥" इत्यनेनैवशब्दस्याप्युत्प्रेक्षावाचकत्वस्य दण्डिनाभिहितत्वात्। स्फुरता स्पन्दता अत एव कल्याणं भावि मङ्गलं विद्गुण्वता सूचयता नैमित्तिकैः स्त्रीणां वामाक्षिस्पन्दनस्य शुभफलत्वकथनात्. वामकेन सव्येन चक्षुषा दाक्षिण्यं आनुकूल्यं अवलम्ब्यते अङ्गीक्रियते।

---

(৩৬) অবলোকিতা। আপনি আজ্ঞা করুন।

(৩৭) কাম। কল্যাণভাজন ভূরিবসুর কন্যা মালতী ও দেবরাতের পুত্র মাধবের অভিলষিত বিবাহ হইবে ত ?

(৩৮-৩৯) (বামাক্ষিস্পন্দন সূচনা করিয়া সহর্ষে) সন্দেহ দোলায়িত আমার অন্তরের ভাব বুঝিয়াই যেন (তাহা নিরাকরণের জন্য) বাম চক্ষু স্পন্দিত হইয়া সূচনা করতঃ আনুকূল্য দেখাইতেছে।

अव। महन्तो क्खु भअवदीए एसो चित्तविक्खेवो। अच्चरीयं, जं दाणिं चीरचीवरमेत्तपरिच्छदं पिण्डपादमेत्तपाणवुत्तिं भअवदीं ईदिसे आआसे अमच्चभूरिवसू णिओएदि। तहिं उक्खलिदसंसारावग्गहो अप्पा तुह्मेहिंवि णिउज्जिअदि (क)।

---

(क) महान् खलु भगवत्या एष चित्तविक्षेपः। आश्चर्य्यमाश्चर्य्यं, यदिदानीं चीरचीवरमात्रपरिच्छदां पिण्डपातमात्रप्राणवृत्तिं भगवतीं ईदृशे आयासे अमात्यभूरिवसुर्नियोजयति। तस्मिन् *खण्डितसंसारावग्रह आत्मा युष्माभिरपि नियुज्यते।*

---

अपिरत्र विरोधे, यथापि वामकेन सव्येनापि सता दाक्षिण्यं सव्येतरत्वं अवलम्ब्यत इति, एवं वामकेन प्रतिकूलेनापि सता दाक्षिण्यमानुकूल्यं अवलम्ब्यते इति च विरोधः, इत्थं व्याख्यया च तत्परिहार इति विरोधालङ्कारः। तल्लक्षणं यथा दर्पणे—"जातिश्चतुर्भिर्जात्याद्यैर्गुणो गुणादिभिस्त्रिभिः। क्रिया क्रियाद्रव्याभ्यां यद्द्रव्यं द्रव्येण वा मिथः। विरुद्धमिव भासेत विरोधोऽसौ दशाकृति"रिति॥ अनुष्टुप्छन्दः, तल्लक्षणं यथा—"पञ्चमं लघु सर्व्वत्र सप्तमं द्विचतुर्थयोः। गुरु षष्ठञ्च पादानां शेषेष्वनियमो मतः॥" इति

(क) महानिति। अव खलु निश्चये। चित्तविक्षेपः अनुचितविषयाभिनिवेशः। चीरैः वल्कभेदैः वस्त्रखण्डैरिति यावत्, निर्म्मितं मध्यपदलोपी समासः। यत् चीवरं मुनिवासः आद्यां भिक्षुप्रावरणमिति सुभूतिः, तन्मात्रपरिच्छदो इदगात्रिकावरणो यस्यास्ताम्। पिण्डपातो नाम बौद्धानां भिक्षाभक्षणेन भोजनं, अथवा पिण्डस्य ग्रासधारणोचितभक्ष्यकवलस्य पातः उदरकुहरे निक्षेपः, तन्मात्रेण प्राणवृत्तिर्जीवनधारणं यस्याः तां भगवतीं ईदृशे आयासे दुःखसम्पादनविवाहसम्पादकदूत्यादिकार्य्ये। इदन्तु राजिजनोचितकार्य्यं पुरन्ध्रीणामेव शोभते, न तु भवादृशीनां विरक्तविरक्तानामित्याशयः। तत्र तस्मिन्नाप्यात्मजनके कर्म्मणि, उत्खण्डितः उन्मूलितः संसार एव अवग्रहः मोक्षाभ्युदयप्रतिबन्धो यस्य, स एवम्भूत आत्मा युष्माभिरपि नियुज्यते निक्षिप्यत इति आश्चर्य्यमिति योजना। अमात्यभूरिवसुर्विषयासक्तमानसः अन्येनास्य दुष्करत्वादनुचितेऽपि कार्य्ये भगवतीं नियोजयतु नाम, भगवत्यापि तदङ्गीकृतमिति महदाश्चर्य्यमिति तात्पर्य्यम्।

---

(ক) অব। ইহা আপনার চিত্তের নিতান্তই অসদভিনিবেশ। অমাত্য ভূরিবসু যে বস্ত্রখণ্ডবিনির্ম্মিত ভিক্ষুজনোচিত বস্ত্রমাত্র পরিধারিণী ভিক্ষালব্ধমাত্রোপজীবিনী আপনাকে এরূপ আয়াসজনক কার্য্যে নিযুক্ত করিয়াছেন,

काम । वत्से ! मा मैवं ब्रूहि ।

यन्मां विधेयविषये स भवान्नियुङ्क्ते,
स्नेहस्य तत् फलमसौ प्रणयस्य सारः ।
प्राणैस्तपोभिरथवाभिमतं मदीयैः,
कृत्यं घटेत सुहृदो, यदि तत् कृतं स्यात् ॥ (४०)

अयि, किं न वेत्सि यदेकत्र नो विद्यापरिग्रहाय नानादिगन्त-
वासिनां साहचर्य्यमासीत्, तदैव चास्मत्सौदामिनीसमक्षमनयोर्भूरि-
वसुदेवरातयोर्वृत्तेयं प्रतिज्ञा, अवश्यमावाभ्यामपत्यसम्बन्धः कर्त्तव्य

---

(४०) कामेति । मा मेति वीप्सा अत्यन्तनिषेधसूचनाय । यन्मामिति । स भवान् पूज्यः भूरिवसुः विधेयविषये नियोज्यगोचरे कर्म्मणि यन्मां नियुङ्क्ते प्रेरयति, तत् स्नेहस्य प्रीतेः फलं । असौ नियोगः प्रणयस्य प्रश्रयस्य प्रणय. प्रेम्णि विश्वासे याच्ञाप्रश्रययोरपी"ति विश्वः । सार उत्कर्षः स्थिरांशो वा । स्नेहाधिक्यादेवेदृशे कर्म्मणि तस्य नियोजनं ममाप्य-ङ्गीकरणं नायुक्तमिति भावः । यदि मदीयैः प्राणैः अथवा तपोभिः प्राणेभ्योऽपि श्लाघ्यै-रित्याशयः । सुहृदो मित्रस्य अभिमतं अभिलषितं कृत्यं कार्य्यं घटेत निष्पद्येत, तदा तत् कृत्यं कृतं स्यात् प्राणादिभिरपि तदवश्यं कर्त्तव्यमित्यर्थः । यद्वा तत् तदा मदीयैः प्राणैः तपोभिश्च कृत्यं करणीयं कृतं सम्पन्नं स्यादित्यावृत्त्या योजनीयं । प्राणैस्तपोभिरपि सुहृत्कार्य्यसम्पादनाद-धिकं करणीयं नास्तीत्याशयः । वसन्ततिलकं वृत्तम् ॥

(४१) माधवाय मालतीदानार्थं भूरिवसोः तत्सम्पादनार्थं भवत्याश्च कथमेवमाग्रह इत्यत आह—किं न वेत्सीति । विद्यापरिग्रहाय विद्याभ्यासार्थं नानादिगन्तवासिनां बहुदेश-प्रवासिनां नः अस्माकं भूरिवसुदेवरातयोर्मम च इत्यर्थः । एकत्र साहचर्य्यं सहचरभावः

---

আপনিও আবার সাংসারিক ভাবোচ্ছেদে অগ্রসর আমাকে সেই কার্য্যে নিযুক্ত করিতেছেন, ইহা নিতান্তই আশ্চর্য্যজনক ।

(৪০) কাম । বৎসে ! একরূপ বলিও না; পূজ্য ভূরিবসু যে আমাকে দূতী-জনোচিত কার্য্যে নিযুক্ত করিতেছেন, ইহা স্নেহের ফল, এবং এই নিয়োগ প্রণ-য়ের স্থিরাংশস্বরূপ । অতএব যদি আমার প্রাণ অথবা ( প্রাণাপেক্ষাও প্রিয় ) তপস্যাদ্বারাও সুহৃদের এই কার্য্য সম্পন্ন হইতে পারে, তবে অবশ্য কর্ত্তব্য ।

इति। तदिदानीं विदर्भराजमन्त्रिणा सता देवरातेन माधवं पुत्र-मान्वीक्षिकीश्रवणाय, कुण्डिनपुरादिमां पद्मावतीं प्रहिण्वता सुविहितम्। (४१)

अपत्यसम्बन्धविधिप्रतिज्ञा प्रियस्य नीता सुहृदः स्मृतिञ्च।
अलोकसामान्यगुणस्तनूजः प्ररोचनार्थं प्रकटीकृतश्च ॥ (४२)

---

यदाधीमहि किं न वेत्सि ? नानादिगन्तवासिनीनामस्माकमेव जानासीत्यर्थः। तदा एकत्रा-ध्ययननिबन्धनपरमपरिचयकाले, अस्मात् सौदामिनीसमक्षं भवाकं सौदामिन्याश्च प्रत्यक्षं ( सौदा-मिनी कामन्दक्या सधर्मिण्या ) सौदामिनीसमक्षमित्यनेन च तस्या अप्येतत् प्रतीतमस्या दनान्त पतित्वप्रतीत्या देवरातसूनुतया भवसाक्षि माधवस्यापाथेयमस्या प्रवेशो युक्त इति सूचितं "नासूचितं विशेत् पात्र" मिति भरतानुसारेणासूचितपात्रप्रवेशस्यायुक्तत्वात्। अपत्य-सम्बन्ध अपत्ययोर्विवाहबन्धनं कर्त्तव्य इति प्रतिज्ञा बभूवेति योजना, तथाच पूर्वप्रतिज्ञातत्वात् भूरिवसोः प्रतिज्ञाया सत्पुरोहितत्वान्मम च तत्सम्पादनाय निर्बन्धातिशयो युक्त इति भावः। आन्वीक्षिकी न्यायशास्त्रं, तच्छ्रवणाय तत्पाठायेत्यर्थः, एतेन च न्यायशास्त्रे तर्कच्छलादि-प्रदर्शनात् तत्पाठेन माधवस्य चौरिकाविवाहे कौशलसम्भवः सूचितः। कुण्डिनपुरं विदर्भ-राजधानी, तस्मात् प्रहिण्वता प्रस्थापयता सुविहितं शोभनं कृतम्।

(४२) प्रहुत्य माधवं प्रहिण्वता सुविहितमिति तदेव समर्थयति—अपत्येत्यादिना। अपत्ययोः कन्यायाश्च सम्बन्धविधेर्विवाहविधेः प्रतिज्ञा प्रियस्य सुहृदः मीति. मित्रस्य ( भूरिवसोः ) स्मृतिं

---

( ৪১ ) অয়ি! তুমি কি জান না যে, বিদ্যাধ্যয়নের জন্য নানাদিগন্তপ্রবাসী আমাদের একত্র সম্মিলন হইয়াছিল, তখন আমার ও সৌদামিনীর সমক্ষে এই ভূরিবসু ও দেবরাতের এইরূপ প্রতিজ্ঞা হইয়াছিল যে, "অবশ্যই আমরা সন্তানের ( পরস্পর ) সম্বন্ধ করিব"। সেই হেতু সম্প্রতি বিদর্ভরাজমন্ত্রী দেবরাত নিজ পুত্র মাধবকে ন্যায়শাস্ত্র শ্রবণের জন্য কুণ্ডিনপুর হইতে এই পদ্মাবতীনগরে পাঠাইয়া ভালই করিয়াছেন।

( ৪২ ) ( যেহেতু এই পুত্র-প্রেরণদ্বারা ) অপত্য-বিবাহ-বিষয়ের প্রতিজ্ঞা প্রিয় সুহৃৎকে স্মরণ করাইয়া দেওয়া হইল, এবং ( সম্বন্ধবিষয়ে ) প্ররোচনার্থ পুত্র যে অনন্যসাধারণ গুণসম্পন্ন তাহাও খ্যাপিত হইল।

अव। तदो, किंति मालदीं अमच्चो अप्पणा माहवस्स ण पडि-वादेदि, जेण चोरिअविवाहे भअवदीं तुवरावेदि ? (ख)

काम। तां याचति नरपतेर्नर्म्मसुहृन्नन्दनो नृपमुखेन।
तस्मात्साक्षात्प्रतिषेधः कोपाय शिवस्त्वयमुपायः॥ (४२)

---

(ख) तत किमिति मालतीममात्यो माधवस्य आत्मना न प्रतिपादयति। येन चौर्य्यविवाहे भगवतीं त्वरयति।

---

स्मरणञ्च नीता प्रापिता, माधव प्रदिष्यता दैवराजेनेति शब्दान्वयेन सम्बन्ध'। पुत्रार्थ इत्थं स्मारकाभावात कालातिपाताच्च प्रतिज्ञा विस्मर्त्तुमपि शक्यतेत्याशय'। अलोकसामान्यगुण' अनितरसाधारणगुणः भूतलदुर्लभगुण इति यावत, तनुज एव प्ररोचनार्थं सम्बन्धेच्छोत्पाद-नार्थं प्रकटीकृतः प्रकाशित' लोकविलक्षणगुणतया स्फुटीकृत इत्यर्थं, अन्यथा कृतप्रतिज्ञेनापि निर्गुणाय वराय नासामान्यरूपलावण्यसम्पन्ना कन्या दातु यदि शक्यतेत्याशय'। "उपेन्द्रवज्रा" वृत्तम्। लक्षणन्तु—"उपेन्द्रवज्रा प्रथमे लघौ सा" इति॥

(ख) तत इति। अमात्यो भूरिवसुः, आत्मना स्वः माधवस्येति चतुर्थ्यर्थे षष्ठी, अथवा कृत इति शेष.। प्रतिपादयति ददाति।

(४२) स्वयमप्रदाने हेतुं दर्शयति—तामिति। नन्दन' नन्दननामा, नन्दयतीति व्युत्पत्त्या आनन्दजनकत्वादन्तःपुरसचिवता तस्य युक्तेति सूचितम्। नरपतेः राज्ञ नर्म्मसुहृदन्तःपुर-क्रीडासचिव', "स्यान्नर्म्मसचिवः सोऽयं कुपित. स्त्रीप्रसादकः" इत्युक्तलक्षणक इति यावत्, नृपमुखेन नृपद्वारा तां मालतीं याचते "नन्दनाय मालतीं देहीति" नृपेण याचयतीत्यर्थं। तस्मा राजप्रार्थनाया साक्षात् प्रतिषेध "न प्रदास्यामीति" मुखत' कथन कोपाय राज्ञो भविष्यतीति शेषः। अयन्तु मद्वारा गुप्तमयोजनरूप उपाय: शिव. परिणामशुभजनक.। आर्य्याच्छन्दः।

---

( খ ) অব। তবে অমাত্য নিজেই কেন মাধবকে মালতী সমর্পণ করেন না ? আপনাকে যে চৌর্য্য বিবাহ-সম্পাদনের জন্য ত্বরান্বিত করিতেছেন ?

( ৪২ ) কাম। নন্দননামক নৃপতির অন্তঃপুর-সচিব নৃপতিদ্বারা মালতীকে প্রার্থনা করিয়াছেন, তাহার সাক্ষাৎ প্রতিষেধ ( রাজার ও নন্দনের ) কোপের কারণ হইবে, সুতরাং এই চৌর্য্য বিবাহ-সম্পাদনই মঙ্গলজনক উপায়।

अव। अच्चरीयं! अच्चरीयं! ण क्खु अमच्चो माहवस्स णामम्पि जाणादित्ति णिरवेक्खदा लक्खीअदि (ग)।

काम। संवरणं हि तत्। (४४)

विशेषतस्तु बालत्वात्तयोर्विवृतभावयोः।
तेन माधवमालत्योः कार्य्यः स्वमतिनिह्नवः॥ (४५)

---

(ग) आश्चर्य्यमाश्चर्य्यम्। न खल्वमात्यो माधवस्य नामापि जानातीति निरपेक्षता लक्ष्यते।

---

(ग) आश्चर्य्यमित्यादि। निरपेक्षता अपक्षपातिता औदासीन्यमिति यावत्, लक्ष्यते प्रतीयते। अमात्यः खलु माधवाय सुतां दातुमभिलषति, अथच तस्य नामाप्यजानन्निव व्यवहरतीत्याश्चर्य्यमित्यर्थः।

(४४) कामेति। संवरणं आकारगोपनं राजभयेन तदौदासीन्यस्याप्रदर्शनमित्यर्थः।

(४५) तेन भूरिवसुना बालत्वात् बाल्यमत्र प्रथमयौवनं बोद्धव्यं, अन्यथाऽन्योऽन्यानुरागासम्भवात्। शिशुत्वात् प्रथमयौवने वर्त्तमानत्वादित्यर्थः। विवृतभावयोः प्रकाशिताभिप्राययोः, आकारगोपनानभिज्ञयोरिति यावत्, माधवमालत्योः, स्वमतेः तयोरन्योऽन्यानुरागविषयिण्या स्वबुद्धेः निह्नवः गोपनं। विशेषतः कार्य्यः करणीयः। मदनाभ्यकवत्तथा तयोरभिप्राये सर्व्वानुभवगम्येऽपि गुरुजनपरिज्ञानं यथा तौ न जानीतस्तथावश्यं कर्त्तव्यमित्यर्थः। अन्यथा गुरुजनेनावयोश्चापल्यं विदितमिति लज्जया तयोरुभयमभङ्गे वाञ्छितपौर्व्यविवाहो न निष्पद्येत इति भावः। अत्र नायकयोरन्योऽन्यानुरागस्य बीजस्योपन्यासादुपक्षेपो नाम मुखसन्धेरङ्गमुक्तं। यथोक्तं—"बीजन्यास उपक्षेप" इति। "अनुष्टुप्" वृत्तम्॥

---

(গ) অব। কি আশ্চর্য্য! অমাত্য যেন মাধবের নামও জানেন না, এইরূপ ঔদাসীন্য দেখা যাইতেছে।

(৪৪) কাম। তাহা গোপন করা মাত্র।

(৪৫) বালত্বনিবন্ধন সেই মালতী ও মাধবের অভিপ্রায় ব্যক্ত হইলেও অমাত্য যে বুঝিতে পারিয়াছেন, তাহা মালতী ও মাধবের নিকট গোপন করা অমাত্যের একান্ত কর্ত্তব্য।

अपिच,—अनुरागप्रवादस्तु वत्सयोः सार्व्वलौकिकः।
श्रेयोऽप्यस्माकमेवं हि प्रतार्य्यौ राजनन्दनौ॥ (४६)

अन्यच्च,—बहिः सर्वाकारप्रगुणरमणीयं व्यवहरन्,
पराभ्यूहस्थानान्यपि तनुतराणि स्थगयति।
जनं विद्वानेकः सकलमभिसन्धाय कपटै-
स्तटस्थः स्वानर्थान् घटयति च, मौनञ्च भजते॥ (४७)

---

(४६) अनुरागेति। वत्सयो मालतीमाधवयोः, उभयोरेव प्रियसुहृदपत्यतया वत्सयोरिति निर्द्देशः कामन्दक्या मायुक्तः। अनुरागप्रवादः गुणाख्यातिः किं वदन्ती, सार्व्वलौकिकः सर्व्वलोकविदितः "लोकसर्व्वलोकाट्ठञ्"िति ठञ् (इकण्) अनुशतिकादित्वा-दुभयपदवृद्धिः। बीजस्य बहुलीकरणादनेन "परिकरो"नाम सन्ध्यङ्गं प्रदर्शितं। यथा—"तद्बाहुल्यं परिकर" इति। एवं अनुरागप्रवादस्य सार्व्वलौकिकत्वे अस्माकमपि श्रेयो मङ्गलं भवतीति शेषः। हि यस्मात् राजा नृपतिः नन्दनः तन्नामा तस्य नर्म्मसुहृच्च तौ प्रतार्य्यौ वञ्चनीयौ। यदि राजा नन्दनो वा तयोर्विवाहे वृत्ते प्रार्थनावधारणावमानितः कुप्येत् तदा "तयोरन्योऽन्यानुरागेणैव परिणयो वृत्तो न मया कारित" इत्युक्त्वैव क्रोधो मर्षयितव्यः, अयञ्च प्रवादः सार्व्वलौकिकत्वेन वचसः सत्यताप्रतिपादकतया तत्रानुकूलो भवेदिति भावः। "अनुष्टुप्" वृत्तम्॥

(४७) विदग्धस्वभावसिद्धतया दर्शितकपटव्यवहारस्यादोषत्वं प्रकटयति—बहिरिति। एकः अद्वितीयः श्रेष्ठो वा। "केवलैकश्रेष्ठयोरेक" इति धरणिः। विद्वान् सांसारिकज्ञानवान् चतुर इति यावत्। पारमार्थिकज्ञानस्य लिप्सोरपि एतादृशाचरणस्य गर्हितत्वात्। बहिर्बाह्ये सर्वाकारैरिङ्गितादिना प्रगुणेन प्रकृष्टगुणेन च। "सर्वाकारप्रवणरमणीय"मिति पाठे तु प्रवणेति भावप्रधानो निर्द्देशः, सर्वाकारप्रावण्येनेत्यर्थः। रमणीयं यथा तथा व्यवहरन् वास्तवमनोगतभाव-माच्छाद्य गुणैरिङ्गितादिभिर्बहिरतिमधुरं भावं प्रदर्शयन्नित्यर्थः। अणुतराणि अतिसूक्ष्माणि अपि परेषां रन्ध्रान्वेषिणा प्रज्ञया वा अभ्यूहस्य तर्कस्य स्थानानि स्थलानि स्थगयति पिधत्ते। एवं सकलं जनं कपटैश्छलैः अभिसन्धाय वञ्चयित्वा "अभिसन्धिर्वञ्चनार्थे"इति धातुदर्पणः।

---

(৪৬) আর দেখ—মালতী ও মাধবের অনুরাগবৃত্তান্তও প্রায় সকলেই জানিয়াছে। ইহাতেও আমাদের মঙ্গলই হইবে, যেহেতু (ইহাদ্বারাই) রাজা ও নন্দনকে প্রতারিত করিতে হইবে।

अव। भएवि गुरुवअणादो, तेण तेण वअणोवण्णासेण भूरि-वसुमन्दिरासण्णराअमग्गेण माहवो मए सञ्चारीअदि। (घ)

काम। कथितमेव नो मालतीधात्रेय्या लवङ्गिकया। (४८)

---

(घ) भगवति गुरुवचनात्तेन तेन वचनोपन्यासेन भूरिवसुमन्दिरासन्नराजमार्गेण माधवः मया सञ्चार्यते।

---

तटस्थ उदासीन इव स्यात् भवान् घटयति सम्पादयति, मौन अभावञ्च भजते। अभिमत-विषये वाङ्मात्रमपि न वदतीत्यर्थः। अत्र चतुराणां स्वभाववर्णनात् "स्वभावोक्ति"रलङ्कारः। सा च तटस्थ इवेत्युत्प्रेक्षया सङ्कीर्यते। स्वभावोक्तिलक्षणं यथा दर्पणे—"स्वभावोक्तिर्दुरूहार्थ-स्वक्रियारूपवर्णन"मिति। शिखरिणीवृत्तम्, तल्लक्षणं यथा—"रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणी"ति॥

(घ) भगवतीति। मयापि माधवः गुरुवचनात् गुरोराज्ञादेशात् तेन तेन गुरुवाद्देशानु-वर्तिना वचनोपन्यासेन वाग्व्यापारानुवादकसव्याजवाक्यप्रयोगेण, भूरिवसुमन्दिरस्य अमात्यभवनस्य आसन्नः अतिसन्निहितः यो राजमार्गः राजपथः तेन, सञ्चार्यते सञ्चार्यते। मद्वचन-चातुर्यान्माधवः अमात्यभवनसन्निहितराजपथेनैव सर्वदा गमनागमनं करोतीत्यर्थः। राजमार्गेण पुनः पुनः मन्दर्शनेनाभ्योऽनुरागवर्द्धनाय, राजमार्गपदस्य पुनः पुनर्गमनेऽप्यनाशङ्क-नीयत्वसूचनाय, सन्निहितत्वाभिधानञ्च सर्वाङ्गीणदर्शनसौलभ्यसूचनाय। "माधवो यथा मालतीभवनसन्निहितमार्गेण सर्वदा गच्छति, तथा कर्त्तव्यमवलोकिता कामन्दकानुज्ञाता अवलोकितया च तथाकृत"मित्यवलोकितया वाक्येनानेन सूचितः। अत एव "कामन्द-कावलोकितयोरिदमनुक्तत्वात् गुरुवचनादिति कथं सङ्गच्छत"इति कस्यचित् प्रलापकल्पोऽपि निरस्त इति मन्तव्यम्।

(४८) कामेति। अवलोकितानुष्ठितकार्य्यस्य फलसिद्धिं दर्शयितुमुपन्यस्यति—कथितमेवेति।

---

(৪৭) অদ্বিতীয় বিদ্বান্ ব্যক্তি আকার, ইঙ্গিত ও উৎকৃষ্ট গুণদ্বারা বাহিরে অতিমধুর ব্যবহার করিয়া ছিদ্রান্বেষী ব্যক্তিদিগের অতিসূক্ষ্ম তর্কস্থানগুলি আচ্ছাদিত করেন এবং ছলনাদ্বারা সকলকে বঞ্চিত করিয়া উদাসীনভাবে নিজের প্রয়োজন সাধন করেন ও ( অভিমত কার্য্যবিষয়ে ) মৌনাবলম্বন করিয়া থাকেন।

(ঘ) অব। আমিও আপনার আদেশ অনুসারে নানাবিধ সব্যাজ বাক্য বলিয়া ভূরিবসু-ভবনের সন্নিহিত রাজপথে মাধবকে সঞ্চারিত করিতেছি।

भूयोभूयः सविधनगरीरथ्यया पर्य्यटन्तं
दृष्ट्वा, दृष्ट्वा, भवनवलभीतुङ्गवातायनस्था ।
साक्षात्कामं नवमिव रतिर्मालतीमाधवं यत्
गाढ़ोत्कण्ठाललितलुलितैरङ्गकैस्ताम्यतीति ॥ (४८)

धात्र्याः उपमातुः सुता धात्रेयी ( धात्री ढक् ( एयन् ) ई ) तया धात्रेय्या, एतेन विशेषणेन लवङ्गिकाया मालतीसखीत्वमुक्तं । यदाह भरत—"कारुदासी च धात्रेयी प्रतिवेश्या च शिल्पिका। बाला प्रव्रजिता चेति नायिकानां सखीजनः" इति । सखीत्वेन च विस्रम्भस्थानतया मालत्याः सकलमनोभाववेदित्वसूचनात् लवङ्गिका मालतीगतं यत् कथयति तत् सर्व्वथा विश्वसनीयमिति सूचितम् ।

(४८) भूयोभूय इति । भवनस्य या वलभी प्रासादोर्द्ध्ववेश्म, तत्र तुङ्गं उन्नतं यद्वातायनं वातस्य अयनं गमनं येन तत्, तुङ्गत्वविशेषणाद्यथाकाङ्क्षदर्शनं सूचितम् । गवाक्ष, तत्र तिष्ठतीति तथोक्ता । यद्वा भवनरूपा मालतीवासस्थानत्वेन निर्द्दिष्टा या वलभी तदूर्द्ध्व अन्यत समानं । एवञ्च —"कूटागारे वलभी चन्द्रशालेऽपि प्रोक्ता प्रासादे"ति रभसानुसारिण्या वलभीपदेनैव गतार्थतया भवनपदं व्यर्थमित्याशङ्कापि निरस्ता, भवनपदेन वलभ्याः तद्वासस्थानत्वप्रतिपादनात् तत्प्रतिपादनेन च "सम्प्रहारात् कथं पुनः पुनर्वलभी गच्छती"त्यन्यदीयाशङ्काया निरासात् । मालती सविधनगरीरथ्यया सन्निहितराजपथेन, अत्र नगरीपदेन रथ्याया अनेककौतूहलोद्दीपकविषयसमावेश उक्तः, एवञ्च माधवस्य तत्र पुनः पुनर्गमनं न दोषावहं, मालत्याश्च पुनः पुनस्तदालोकनेऽपि नान्यदीयशङ्काकलङ्कोदय इति सूचितम् । भूयो भूयः पुनः पुनः, वीप्सया दर्शनं प्रति दृढता दर्शिता । पर्य्यटन्तं गतागतानि कुर्व्वन्तं माधवं साक्षात्प्रत्यक्षं नवं नूतनं दाहानन्तरोत्पन्नमिति यावत्, कामं कन्दर्पं रतिः कामकान्तेव दृष्ट्वा दृष्ट्वा, वीप्सया उत्कण्ठातिशयः सूचितः । पुनः पुनरवलोकन गाढोत्कण्ठया दृढाकाङ्क्षया उत्कण्ठापदार्थस्तदनुभावाश्च उक्ता भावप्रकाशिकायां यथा—"सर्व्वेन्द्रियसुखास्वादो यत्रास्तीति मनः स्थितः । तत्प्राप्तीच्छा सु-सङ्कल्पानुत्कण्ठां कवयो विदुः ॥ अत्र सम्भोगसङ्कल्पकृततदाप्यावलोकनं । सङ्कल्पानिर्व्वृतिरन्ति-

(४८-४९) কাম। মালতীর ধাত্রীসুতা লবঙ্গিকা আমার নিকট বলিয়াছে যে, নিজ ভবনস্থিত সর্ব্বোচ্চ প্রাসাদের উন্নত গবাক্ষে বসিয়া মালতী সন্নিহিত রাজপথে বারবার পর্য্যটনকারী মাধবকে পুনঃ পুনঃ অবলোকন করতঃ দাহানন্তরোৎপন্ন কন্দর্পদর্শনে রতির ন্যায় কামজ সন্তাপ-কলুষিতাঙ্গে অত্যন্ত গ্লানি অনুভব করিতেছে।

अव। वाढं, तदो ताए वि उक्कण्ठाविणोदणणिमित्तं माहव-पडिच्छन्दअं आलिहिदं, तं लवङ्गिआए अज्ज मन्दारिआए हत्थे णिहिदं दाव (ङ)।

काम। [ विचिन्त्य। ] सुविहितं लवङ्गिकया, यतो माधवानुचरः कलहंसकस्तां विहारदासीं मन्दारिकां कामयते, तदनेन तीर्थेन तत्प्रतिच्छन्दकं उपोद्घातेन माधवान्तिकमुपेयादित्यभिप्रायः। (५०)

(ङ) बाढ़, मालत्याऽप्युत्कण्ठाविनोदनिमित्तं माधवप्रतिच्छन्दकमालिखितं तत्प्रतिच्छन्दकञ्च मन्दारिकाया हस्ते निहितं तावत्।

---

मनोरथविचिन्तनं ॥ अधिज्ञानुभुजालम्बि कपोलतलमासनं। प्रसन्नमुखरागस्य खेदोऽथ गद्गदा च वाक्॥ उत्कण्ठानुभवा भावा कथ्यन्ते भावकोविदैः।" इति। लुलितलुलितै इति म्लानिमापन्नैः मनोभवसन्तापेनात्यन्तकलुषितैरिति यावत्। ललितलुलितैरिति पाठे पूर्वं ललितैः रम्यैः इदानीं लुलितैः म्लानिमापन्नैरित्यर्थः। अङ्गकैः अङ्गैः (स्वार्थे कः) तान्यति अतितरां तायतीत्यस्य कथितं लवङ्गिकयेति गद्यार्थेनान्वयः। यथा रतिः दाहात्मकरोगतृष्णं कामं ताप्यात् समीक्ष्याहं रतास्यत्तथा मालतीमाधवमवलोक्याङ्गैस्ताम्यतीति साम्यस्यैकेन वाक्येन प्रतिपादनादत्रोपमालङ्कारः स्फुट एव। यदि च कामस्यानङ्गतया शाखाबाहुप्रभृतिकं विरुद्धमिति सूक्ष्मौत्यते तदोत्प्रेक्षायामिवशब्दः। अनेन श्लोकेन मालत्याः अभिलाषाख्या प्रथमा कामदशा दर्शिता, दशाश्च यथा दर्पणे—"अभिलाषश्चिन्ता स्मृतिगुणकथनोद्वेगसम्प्रलापाश्च। उन्मादोऽथ व्याधिर्जडता मृतिरिति दशमात्र कामदशा॥ अभिलाषः स्पृहे"ति। मन्दाक्रान्ता वृत्तम्—"मन्दाक्रान्ताऽम्बुधिरसनगैर्मोभनौ गौ ययुग्म"मिति तल्लक्षणम्।

(ङ) अवेति। बाढम् लवङ्गिकया यत् कथितं तत् सत्यं अतितरामनुरक्ता मालतीत्यर्थः। अत्र युक्त्यन्तरमाह—यत इति। तयापि मालत्यापि उत्कण्ठाविनोदनार्थं उत्कण्ठाप्रशमनाय, माधवप्रतिच्छन्दकं माधवस्य प्रतिकृतिम्। तत्प्रतिच्छन्दकं निहितं निहितं। क्रमशो माधवहस्तगतं भविष्यतीति कार्यापक्रमस्तावच्छब्देनात्र सूचितः।

---

(ङ) অব। ইহা ঠিক, যেহেতু মালতী উৎকণ্ঠা-প্রশমনের নিমিত্ত মাধবের প্রতিকৃতি অঙ্কিত করিয়াছে এবং সেই প্রতিকৃতি আবার লবঙ্গিকা মন্দারিকার হস্তে সমর্পণ করিয়াছে।

अव। अज्ज, माहवोवि कोदूहलमुप्पादिय, मए अउत्तम-अणमहूसवं मअरंदुज्जाणं पभादे अणुप्पेसिदो, तहिं किल मालदी गमिस्सदि, तदो अण्णोण्णदंसणं भोदुत्ति (च)।

काम। साधु वत्से, साधु! अनेन मत्प्रियाभियोगेन स्मारयसि मे पूर्वशिष्यां सौदामिनीम्। (५१)

---

(च) अद्य माधवोऽपि कौतूहलमुत्पाद्य मया प्रवृत्तमदनमहोत्सवं मदनोद्यानं प्रभातेऽनुप्रेषितः, तत्र किल मालती गमिष्यति, ततोऽन्योऽन्यदर्शनं भवत्विति।

---

(५०) कामेति। (विचिन्त्य मन्दारिकाहस्ते चित्रफलकनिधानस्य तात्पर्यं विभाव्य, विहस्येति शेषः) सुविहितं साधु अनुष्ठितम्। विहारः सौगतप्रव्राजिकानामालयः, तत्र व्यापृता दासी परिचारिका विहारदासी तां मन्दारिकां कामयते अभिलषति। एतेन मन्दारिका-कलहंसकयोः सन्दर्शनप्रश्रयः सूचितः, तथाच कलहंसकहस्तेनैव प्रतिच्छन्दकं मन्दारिका माधवं प्रापयिष्यतीत्याशयः। तत् तस्मात्, अनेन निधानरूपेण तीर्थेन उपायेन, "तीर्थं शास्त्राध्वर-क्षेत्रोपायनारीरजःसु च। अवतारर्षिजुष्टाम्बुपात्रोपाध्यायमन्त्रिषु" इति मेदिनी। उपोद्घातेन हेन अथवा उपोद्घातेन प्रकृतोपपादकेनेति तीर्थविशेषणम्। उपोद्घातायेति पाठे तु प्रकृतोपपादकार्यसिद्ध्यर्थमित्यर्थः, इति अभिप्रायः। एतदेव मन्दारिकाहस्ते चित्रफलकार्पणस्य तात्पर्यमित्यर्थः।

(च) अद्येति। स्वानुष्ठितकार्यान्तरं कथयति—अद्येत्यादि। प्रवृत्तो मदनमहोत्सवो यस्मिन् तत् प्रवृत्तमदनमहोत्सवं, अनेन विशेषणेन विवाहप्रसाधकवसन्तकालः सूचितः। अनुप्रेषणे हेतुमाह—तत्र किलेति।

(५१) कामेति। मत्प्रिये मम प्रीतिविषये, अभियोगेन अत्यन्ताभिनिवेशेन। मे इति सम्बन्धे षष्ठी।

---

(৫০) কাম। (চিন্তা করিয়া) লবঙ্গিকা ভালই করিয়াছে, যেহেতু মাধবের অনুচর কলহংস বৌদ্ধ পরিব্রাজিকালয়ে ব্যাপৃত পরিচারিকা সেই মন্দারিকাকে কামনা করিতেছে, সুতরাং এই উপায়ে প্রসঙ্গতঃ সেই প্রতিকৃতি মাধবের নিকট পহুঁছিবে।

(চ) অব। অদ্য প্রাতঃকালে নানাবিধ কৌতূহল উৎপাদন করিয়া

अव। भअवदि! सा सौदामिणी अहुणा समासादिदअच्चरिअमन्तसिद्धिप्पहावा, सिरिपव्वदे कावालिअव्वदं धारेदि। (छ)

काम। कुतः पुनरियं वार्त्ता? (५२)

अव। अत्थि, एत्थ णअरे, महामसाणप्पदेसे करालां णाम चामुण्डा। (ज)

काम। अस्ति, या किल विविधजीवोपहारप्रियेति साहसिकानां प्रवादः। (५३)

---

(छ) भगवति। सा सौदामिनी अधुना समासादिताश्चर्यमन्त्रसिद्धिप्रभावा श्रीपर्वते कापालिकव्रतं धारयति।

(ज) अस्त्यत्र नगरे महाश्मशानप्रदेशे कराला नाम चामुण्डा।

---

(छ) अवेति। समासादितः प्राप्तः आश्चर्यमन्त्रसिद्धेः प्रभावो यया सा। सर्वदा परिगृहीतनरकपाल नैवेद्यधारिविशेष कापालिकः, तदनुष्ठेयं व्रत कापालिकव्रतं।

(५२) कामेति। लब्धेति शेषः।

(५३) कामेति। अस्तीति चामुण्डेति शेषः। या चामुण्डा, किल प्रसिद्धौ, विविधा नानाकारा जीवा मनुष्यादय एव उपहारा बलयः प्रिया यस्या सा। अनेन प्रथमाङ्के मालत्युपहार सूचितः। साहसिकानां साहसशीलानां प्रवाद प्रसिद्धिः।

---

মাধবকেও আমি মদনমহোৎসব উপলক্ষে মদনোদ্যানে প্রেরণ করিয়াছি, মালতীও তথায় যাইবে, সুতরাং পরস্পরের সন্দর্শন ঘটিবে।

(৫১) কাম। বৎসে! তুমি ভাল অনুষ্ঠান করিয়াছ, আমার প্রিয়বিষয়ে তোমার এই অভিনিবেশ আমার পূর্ব্ব শিষ্যা সৌদামিনীকে স্মরণ করাইতেছে।

(ছ) অব। সেই সৌদামিনী সম্প্রতি আশ্চর্য্য মন্ত্রসিদ্ধির প্রভাব লাভ করিয়া শ্রীপর্ব্বতে কাপালিকব্রত ধারণ করিয়াছে।

(৫২) এই বৃত্তান্ত কাহার নিকট হইতে শুনিলেন?

(জ) অব। এই নগরে মহাশ্মশানপ্রদেশে করালা নামে এক চামুণ্ডা আছে।

(৫৩) কাম। আছে, যেই চামুণ্ডা নানাবিধ নরপশু প্রভৃতি বলিপ্রিয়া বলিয়া সাহসিকদিগের প্রবাদ আছে।

अव। तहिं क्खु, सिरिपव्वदादो आअदस्स, रत्तिविहारिणो णादिदूरारण्णवासिणो साधअस्स, मुण्डधारिणोऽघोरघण्टणामधेअस्स, अन्तेवासिणी महाप्पभावा कवालकुण्डला णाम, अणुसञ्झं समागच्छदि, तदो इअं पउत्ती (झ)

काम। सर्वं सौदामिन्यां सम्भाव्यते। (५४)

अव। अलं दाव एदिणा। भअवदि! एसोवि सहअरो माहवस्स, बालमित्तो मअरंदो णाम, णंदणस्स बहिणिं मदअंतिअं जइ समुव्वहदि, तंपि णाम माहवस्स दुदीअं पिअं किदं भोदि। (ञ)

---

(झ) अत्र खलु श्रीपर्वतादागतस्य रात्रिविहारिणो नातिदूरारण्यवासिनः साधकस्य मुण्डधारिणोऽघोरघण्टनामधेयस्य, अन्तेवासिनी महाप्रभावा कपालकुण्डला नाम, अनुसन्ध्यं समागच्छति, ततः इयं प्रवृत्तिः।

(ञ) अलं तावदेतेन। भगवति। एषोऽपि सहचरो माधवस्य बालमित्रं मकरन्दो नाम, नन्दनस्य भगिनीं मदयन्तिकां यदि समुद्वहति, तदपि नाम माधवस्य द्वितीय प्रियं कृतं भवति।

---

(झ) अत्रेति। नातिदूर अर्थात् कपालकुण्डलायाः सन्निहितं यदरण्यं तत्र वस्तुं शीलं यस्य तस्य, साधकस्य मन्त्रसाधनोद्यतस्य, मुण्डधारिणः नरशिरः कपालधारिणः कापालिकस्येति यावत्। अनुसन्ध्यं सन्ध्यायां। प्रवृत्तिर्वार्त्ता, मया श्रुतेति शेषः। "कापालिकास्तु घण्टान्तनामानः समुदाहृता" इति भरतानुसारेण कविनास्य अघोरघण्टेति घण्टान्तनाम विहितम्।

(५४) कामेति। एतेन सौदामिन्या असाध्यं साधनीयमिति सूचितम्।

---

(ঝ) অব। অঘোরঘণ্টনামক রাত্রিবিহারী এক কাপালিক সন্ন্যাসী শ্রীপর্ব্বত হইতে আসিয়া চামুণ্ডার সন্নিহিত অরণ্যে বাস করিতেছেন, তাঁহার শিষ্যা মহাপ্রভাবা কপালকুণ্ডলা সন্ধ্যাকালে সেই চামুণ্ডামন্দিরে আসিয়া থাকেন, তাঁহার নিকট হইতে সৌদামিনীর বৃত্তান্ত শুনিয়াছি।

(৫৪) কাম। সৌদামিনীর পক্ষে সমস্তই সম্ভবপর।

काम। नियुक्तैव मया मत्प्रियसखी तत्र बुद्धरक्षिता। (५५)

अव। सुविहितं भगवत्या। (ञ २)।

काम। [ विचिन्त्य। ] तदुत्तिष्ठ, माधवप्रवृत्तिमुपलभ्य, मालतीमेव पश्यावः। (५६) [ इत्युभे उत्तिष्ठतः। ]

काम। [ विचिन्त्य। ] अत्युदारप्रकृतिर्मालती, तन्निपुणं निसृष्टार्थदूतीकल्पमन्वयितव्यः। (५७) सर्वथा—

---

(ञ २) सुविहितं भगवत्या।

---

(ञ) अवेति। एतेन अधुनानुपयुक्तेन कापालिकवृत्तान्तकथनेन, अलं व्यर्थमित्यर्थः। भगवतीति भावप्रधानो निर्देशः, तेन भगवत्त्वमित्यर्थः, मित्रशब्दस्याजहल्लिङ्गत्वान्न पुंस्त्वं। यदा मालतीविवाहो माधवस्य प्रियसखा नन्दनभगिन्या मदयन्तिकया सह मकरन्दस्य विवाहोऽपि प्रियः, तदाभवतापि घटितव्यमित्याशयः। अनेनोपनायकस्य मकरन्दस्य गर्भकथा पताकास्थानं सूच्यते।

(५५) कामेति। नियुक्तैवेत्यनेन मयापि तत्पूर्वमेव चिन्तितमित्यर्थः सूचितः। बुद्धरक्षितेत्यनेन सिद्धत्वं सूचितं, तत्र तस्या दौत्ये नियोगो युक्त इत्याशयः।

(५६) कामेति। माधवप्रवृत्तिं मदनोद्याने तयोरन्योऽन्यावलोकनं ज्ञातं, अवेति वार्त्तां उपलभ्य ज्ञात्वा।

(५७) कामेति। विचिन्त्य "निसृष्टार्थो मितार्थश्च तथा सन्देशहारकः। कार्य्यप्रेष्यस्त्रिधा दूतो दूत्यश्चापि तथा विधा" इति दर्पणादौ दूतीनां त्रैविध्यदर्शनात् कीदृशी दौत्यमावयोर्योग्येति विभाव्य, निश्चाययतीति शेषः। अत्युदारा अति गाम्भीर्य्ययुक्ता प्रकृतिर्यस्याः सा। गाम्भीर्य्यञ्च— "यस्य प्रभावादाकारा क्रोधहर्षभयादिषु। भावेषु नोपलक्ष्यन्ते तद्गाम्भीर्य्यं प्रकीर्त्तितं"।

---

( ঞ ) অব। এই কাপালিকবৃত্তান্ত-কথনে এখন প্রয়োজন নাই। ভগবতি! মাধবের সহচর বালামিত্র এই মকরন্দ যদি নন্দনের ভগিনী মদয়ন্তিকাকে বিবাহ করিতে পারে ( তবে ) তাহাও মাধবের দ্বিতীয় প্রিয়কার্য্য করা হইবে।

( ৫৫ ) কাম। আমার প্রিয়সখী বুদ্ধরক্ষিতাকে পূর্ব্বেই আমি সে বিষয়ে নিযুক্ত করিয়াছি।

( ঞ ২ ) অব। আপনি ভালই ব্যবস্থা করিয়াছেন।

( ৫৬ ) কাম। ( চিন্তা করিয়া ) তবে উঠ মাধবের বৃত্তান্ত জানিয়া মালতীকেই ( যাইয়া ) দেখি। ( উভয়ের উত্থান )।

शरज्ज्योत्स्ना कान्तं कुमुदमिव तं नन्दयतु सा,
सुजातं कल्याणीभवतु कृतकृत्यः स च युवा ।
वरीयानन्योऽन्यप्रगुणगुणनिर्माणनिपुणो,
विधातुर्व्यापारः फलतु च मनोज्ञश्च भवतु ॥ (५८) ॥

---

निपुणलक्षणं । तत् तस्मात् अतिगभीरप्रकृतित्वात् अतिगाम्भीर्यशालिनी मालती प्राणान्तेऽपि स्वाभिप्रायं न स्वयं निवेदयतीत्यस्मादिति यावत्, निसृष्टः समर्पितः अर्थः कार्यभारो यस्यामिति निसृष्टार्था या दूती तस्याः कल्पः व्यापारपद्धतिः निपुणं यथा स्यात्तथा तस्याभितव्यः अवलम्बितव्यः प्राधान्येनाङ्गीकर्त्तव्य इत्यर्थः । "उभयोर्भावमुन्नीय स्वयं वदति चोत्तरम् । सुश्लिष्टं कुरुते कार्यं निसृष्टार्थस्तु स स्मृतः ॥" इति निसृष्टार्थदूतलक्षणोक्तधर्म्माणां दूत्यामपि दर्पण-कृतातिदिष्टत्वात् "नायिकाया नायकस्य वा मनोरथं ज्ञात्वा तदननुमतेव या कार्यं साधयति, सा निसृष्टार्था दूती" उच्यते ।

(५८) आशास्ते शरदिति । कल्याणी मनोहराकारगुणयोगशालिनी सा मालती शरज्ज्योत्स्ना शारदीया चन्द्रिका कान्तं रम्यं कुमुदमिव सुजातं शोभनजन्मानं कान्तं रम्य "अत्यन्तशोभमसम्भूतं चिह्नं यस्य न विद्यते । देहे वाप्यधरे वापि स कान्त इति कीर्त्तितः ॥" इति भरतोक्तलक्षण-सम्पन्नं वा तं माधवं नन्दयतु सन्तोषयतु । स च युवा कल्याणी विवाहकल्याणयोगी सन् कृतकृत्यः कृतार्थो भवतु । (उभयोस्तुल्यानुरागित्वेन स तां नन्दयतु, सा च कृतकृत्या भवतु इत्यर्थोऽपि चकारेण द्योत्यते । युवेत्यनेन माधवस्यानुरागाधिक्यसम्भवः सूचितः) एवं सति अन्योऽन्यस्य परस्परस्य प्रगुणाः अनुरूपा ये गुणास्तेषां निर्म्माणे निपुणः कुशलः अत एव वरीयान् श्रेष्ठः विधातुर्व्यापारः प्रयत्नः फलतु सफलो भवतु, मनोज्ञः सर्वजनश्लाघ्यश्च भवतु । अन्योऽन्यानुरूपनिर्म्माणस्य तादृगन्योऽन्यसंघटनमेव फलं, तदभावे तद्विफलमेव भवेदिति भावः । यथा शरच्चन्द्रिका कुमुदं नन्दयति, तथा मालती तं नन्दयतु इति साम्यस्याविष्कारेण वाक्येन प्रतिपादनादत्रोपमालङ्कारः । तल्लक्षणं यथा दर्पणे—"साम्यं वाच्यमवैधर्म्यं वाक्यैक्य उपमा द्वयो"रिति शिखरिणीवृत्तम् ।

---

(৫৭) তাত। (চিন্তা করিয়া) মালতীর স্বভাব অতীব উদার, (অর্থাৎ কিছুতেই সে তাহার মনের ভাব ব্যক্ত করিবে না) সুতরাং নিপুণভাবে নিসৃষ্টার্থ-দূতীর পদ্ধতি অনুসারেই (অর্থাৎ নিজের বিবেচনানুসারেই) কার্য্য করিতে হইবে।

[ इति निष्क्रान्ते (५८) विष्कम्भकः ] (६०)

[ ततः प्रविशति गृहीतचित्रोपकरणः कलहंसः । ] (६१)

कल। कहिं दाणिं तुलिदमअरद्धअरूवावलेवविब्भमावखि-च्छमालदीहिअअमाहप्पं णाहमाहवं पेक्खिस्सं। [ परिक्रम्य।]

---

(५८) कामन्दक्यवलोकिते इति शेषः।

(६०) विष्कम्भकः तदाख्यः अंश विशेष, तल्लक्षणं यथा दर्पणे—"वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः। संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः॥ मध्येन मध्यमाभ्यां वा पात्राभ्यां सम्प्रयोजितः। शुद्धः स्यात् स तु सङ्कीर्णो नीचमध्यमकल्पितः॥" इति। अयञ्च विष्कम्भकः नीचमध्यमपात्रप्रयोजितत्वात् "सङ्कीर्णः"। अनेन विष्कम्भकेन राजसुहृदो नन्दनेन साकम्, माधवस्य तत्प्रतिविधानार्थं भूरिवसुना मालतीमाधवयोर्गुप्तविवाहसम्पादनाय कामन्दक्या नियोजनाय कामन्दक्या च तत्साहाय्यकरणायावलोकितायाः नियोजनम् कामन्दकी-भूरिवसुदेवराताना विद्यार्जनकालसाहचर्यस्य तत्र भूरिवसुदेवरातयोः परस्परापत्यसम्बन्ध-बन्धनप्रणयस्य सौदामिन्या देवरातानुरूपस्य पद्मावतो माधवागमनस्य, परस्परसन्दर्शनेन मालतीमाधवानुरागोत्पादस्य कलहंसमन्दारिकानुरागादियातीतस्य, माविनय मालतीमाधवयो-र्मदनोद्यानसन्दर्शनस्य सौदामिन्या अमात्यसाधनीयत्वस्य चित्रफलकदर्शनेन कलहंसप्रवेशादेः सूचनमित्यनुसन्धेयम्॥

(६१) तत इति। गृहीतं चित्रं चित्रफलकमेव उपकरणं उपढौकनं येन स तथोक्तः, कलहंसकः तन्नामा माधवानुचरः, (कलहंसो राजहंसः तस्य शरत्कालीनत्वात् प्रसिद्धत्वेऽपि योगिनीप्रभावात् वसन्ते मिलित इति नामाभिप्रायो मन्तव्यः) अस्य चेदृशः प्रवेशः "माधवानु-चरः कलहंसक" इत्यादि कामन्दकीवाक्येन सूचितः।

---

(৫৮) শরৎকালের জ্যোৎস্না যেমন মনোজ্ঞ কুমুদকে প্রফুল্লিত করে, কল্যাণ-ভাজন মালতীও সেইরূপ সৎকুলজাত সেই মাধবকে আনন্দিত করুক, যুবক মাধবও (তাহাতে) কৃতার্থ হউক, এবং পরস্পরের তুল্যগুণগরিমা নির্ম্মাণ-শীল বিধাতার উৎকৃষ্ট চেষ্টা ও (তুল্যসমাগমদ্বারা) মনোজ্ঞ ও সফল হউক। (মালবিকা ও অবলোকিতার প্রস্থান।)

(৬১) (চিত্রফলকরূপ উপঢৌকনহস্তে কলহংসের প্রবেশ)

परिस्सन्तोम्हि. जाव इमस्सिं उज्जाणे मुहुत्तं विस्समिअ, मअरंदसह-अरं णाहमाहवं पेक्खिस्सं (ट) [ इति प्रविश्योपविशति । ]

[ ततः प्रविशति मकरन्दः ]

मक । कथितमवलोकितया मदनोद्यानं गतो माधव इति, भवतु, तत्रैव गच्छामि । [ परिक्रम्य दृष्ट्वा च । ] दिष्ट्या अयं वयस्य इत एवाभिवर्त्तते । [ निरूप्य । ] अस्य तु (६२)

गमनमलसं, शून्या दृष्टिः, शरीरमसौष्ठवम्,
श्वसितमधिकं, किं न्वेतत् स्यात्किमन्यदितोऽथवा ।

---

(ट) क्वेदानीं तुलितमकरध्वजरूपावलेपविभ्रमावचिरकान्तीहृदयमाहात्म्यं नाथमाधवं प्रेक्षिष्ये । परिश्रान्तोऽस्मि यावदिहोद्याने मुहूर्तं विश्रम्य मकरन्दसहचरं नाथमाधवं प्रेक्षिष्ये ।

---

(ट) क्वेति । तुलित । तुलितः खर्व्वीकृतः मकरध्वजस्य कन्दर्पस्य रूपावलेपः सौन्दर्य्यगर्व्वो "अवलेपः स्मृतो गर्व्वे" इति शाश्वतः । येन तादृशेन रूपविभ्रमेण सौन्दर्य्यविलासेन अवचिरं तिरस्कृतं मालतीहृदयस्य माहात्म्यं गाम्भीर्य्यं येन तं, मालतीहस्तलिखितमाधवप्रतिकृति-सन्दर्शनेनावधारिता माधवप्रेमोद्दर्शननिबन्धना मालतीधैर्य्यच्युतिरनेन विशेषणेन सूचिता । मकरन्दः सहचरो यस्य तं, अनेन मकरन्दप्रवेशः सूचितः । क्वचित् पुस्तके मकरन्दनन्दनमिति पाठः, मकरन्दस्य नन्दनं आनन्दजनकमिति तदर्थः । मकरन्दः पुष्परसः, तस्य माधवस्य वसन्तस्य सहचरत्वं युक्तमेवेति अत्र माधवसहचरस्य मकरन्देति नाम युक्तम् । नाथं प्रभुं माधवं प्रेक्षिष्ये द्रक्ष्यामीत्यर्थः ।

(६२) कथितमित्यादि । कन्दर्पनिकेतनोपलक्षितमुद्यानं मदनोद्यानं । एतेन शृङ्गारो-द्दीपनविभावत्वं दर्शितं । दिष्ट्या भाग्येन, तृतीयान्तप्रतिरूपकमव्ययमेतत् । वयस्यः, वयसा तुल्यः समवयस्क इत्यर्थः (वयस् शब्दात् तुल्यार्थे य.), इतः अस्मिन् अभिवर्त्तते आगच्छति । (निरूप्य निर्वर्ण्य) अस्येत्यस्य श्लोकस्थितेन गमनमित्यादिना अन्वयः ।

---

( ট ) কস। যিনি কন্দর্পের রূপগর্ব্ব-খর্ব্বকারী স্বীয় সৌন্দর্য্যচ্ছটায় মালতীর ধৈর্য্য বিলোপ করিয়াছেন, সেই প্রভু মাধবকে কোথায় দেখিতে পাইব? (নিরূপণ করিয়া) বড়ই পরিশ্রান্ত হইয়াছি, এই উদ্যানে মুহূর্ত্তকাল বিশ্রাম করিয়া মকরন্দসহচর প্রভু মাধবকে দেখিব ( প্রবেশানন্তর উপবেশন )।

( মকরন্দের প্রবেশ )।

भ्रमति भुवने कन्दर्पाज्ञा, विकारि च यौवनम्,
ललितमधुरास्ते ते भावाः क्षिपन्ति च धीरताम् ॥ (३२)

---

(३२) भ्रमतीति। अत्र भ्रमणं चलनं मन्दं कथयित्वा भ्रमणमिति यावत्। एतेनालस्यो व्यभिचारी सूचितः। तल्लक्षणं यथा दर्पणे—"आलस्यं श्रमगर्भाद्यैर्जाड्यं जृम्भासितादिकृत्" इति। शून्या बाह्यार्थग्रहणासमर्था। तदाचोक्तं—"निश्चला समतारा च व्यासोपाध्यमयादृशी। तथा समपुटोन्मेषा शून्या दृष्टिरुदाहृता॥ शून्या दृष्टिः स्मृता चिन्ता सम्मोहयन्त्रिषु" इति च। एतेन चिन्ताख्यो व्यभिचारी सूचितः, तल्लक्षणं यथा दर्पणे—"ध्यानं चिन्ता हितानाप्तेः शून्यता श्वासतापकृत्" इति, तथा शरीरं कस्मादेवं विकलं ग्लानियुक्तमिति यावत्। एतेन ग्लानाख्यो व्यभिचारी सूचितः, तल्लक्षणं यथा दर्पणे—"रत्यायासमनस्तापक्षुत्पिपासादिसम्भवा। ग्लानिर्निष्प्राणताकम्पकार्श्यानुत्साहतादिकृत्" इति। एवं कथितं स्वभावविरुद्धं श्वसितं निश्वासः, एतेन श्रमविषादमोहादयो व्यञ्जिताः निश्वासस्य तद्व्यञ्जकत्वात्। एभिश्चि-ह्नैर्भावस्यानुभावत्वात् तृतीया कामदशा सूचिता। तदाचोक्तं—"हृदुद्वेगैर्निश्वसितैर्मोहश्च विविधात्मकैः। मदे चादन्यकार्याद्यो कथितासु च विंशता" इति। अत्र वितर्कपूर्वकमिदमाह—किं न्वेतदित्यादिना। नु वितर्के एतत् चरणश्रमणत्वादिकं किं किं निमित्तं स्यात्, दैवादि निमित्तं कामनिमित्तं वेति वितर्कार्थः। अथवा पक्षान्तरे इतः कामादन्यत् किं नाम स्यात् निमित्तमित्यर्थः। किं शब्दो निषेधे। एतादृशनिश्चये हेतुं दर्शयति—भ्रमतीति। भुवने जगति कन्दर्पाज्ञा मदनानुशासनं कामभाव इति यावत्, भ्रमति अप्रतिहता विचरति। यौवनं—"रतिव्यायामसहनो मनोभवस्य मत्तता। विग्रहे कुसुमाभो मत्तद्यौवनमुदाहृतम्" इति लक्षणलक्षितं विकारि विकारजनकमेव। ललिताः सुन्दराः मधुरा मनोज्ञाश्च (मधुरमधुरा इति पाठे मधुरा स्वभावेन मधुरा इत्यर्थः) ते ते भावाः कामिनीजनस्य मनोज्ञानविभ्रमादयः धीरतां धैर्यं क्षिपन्ति अपसारयन्ति। धैर्यलक्षणं यथा—"चापलेनानुपहता सर्वार्थेष्वविकत्थना। स्वाभाविकी चित्तवृत्तिर्धैर्यमित्यभिधीयते।" अत्र भ्रमतीत्यनेनाप्रतिहतत्वं, भुवनपदेन सर्वदेशव्यापित्वं, आज्ञापदेनापरिहार्यत्वं, यौवनपदेन माधवाधिकारश्च ध्वनितः।

---

(৩২-৩৩) মক। অবলোকিতা বলিয়াছেন, মাধব মদনোদ্যানে গমন করিয়াছেন, তবে আমিও সেইখানেই যাই। (বিচরণ ও অবলোকন করিয়া) ভাগ্যক্রমে বয়স্য এ দিকেই আসিতেছেন। (বিশেষরূপে নিরীক্ষণ করিয়া) ইঁহার গমন অলসতাপূর্ণ, দৃষ্টি বাহ্যার্থগ্রহণে অসমর্থ,—অত্যধিক দীর্ঘ নিশ্বাস বহিতেছে, ইহার কারণ কি? অথবা কামদেব ভিন্ন আর কি কারণ হইতে পারে?

[ ततः प्रविशति यथानिर्दिष्टो माधवः। ] (६४)

माधवः। [ स्वगतं ]। (६५)

तामिन्दुसुन्दरमुखीं सुचिरं विभाव्य
चेतः कथं कथमपि व्यपवर्त्तते मे।
लज्जां विजित्य, विनयं विनिवार्य्य, धैर्य्य-
मुन्मथ्य, मन्थरविवेकमकाण्ड एव॥ (६६)

---

तथाच कामकृतमेवैतद्गमनादिकमिति स्थितम। अत्र प्रतिभोत्थितस्य कामरोगादि-निमित्तसन्देहस्य निश्चयान्ततया निश्चयान्तः सन्देह कामावस्था द्योतनं प्रति अलसगमनादीनां बहूनां हेतुत्वेनोपन्यासात् समुच्चयश्चालङ्कारः। तल्लक्षणं यथा दर्पणे—"सन्देहः प्रकृतेऽन्यस्य संशयः प्रतिभोत्थितः। शुद्धो निश्चयगर्भोऽसौ निश्चयान्त इति त्रिधा"॥ "समुच्चयोऽयमेकस्मिन् सति कार्य्यस्य साधके। खले कपोतिकान्यायात्तत्करः स्यात् परोऽपि चेत"॥ इति। हरिणी-छन्दः। तल्लक्षणं यथा छन्दोमञ्जर्य्यां—"न स म र स लाग षड्वेदैर्हयैर्हरिणी मता"ति॥

६४। यथानिर्द्दिष्टः—गमनमित्यादिनावर्णितमदनविकारलक्षणः।

६५। स्वगतलक्षणं यथा भरतशास्त्रे—"यत् श्राव्यं न सर्व्वस्य स्वगतं तदिहोच्यते"॥

६६। अनुध्यात्यादिकं दर्शयति—तामिति। इन्दुवत् इन्दोरधिकं वा सुन्दरं मुखं यस्याः तथाभूतां तां अचिरदृष्टां मालतीं सुचिरं बहुकालं विभाव्य विषयान्तरपरिहारेण चिन्तयित्वा कथं अकाण्ड एव असमय एव (रभसकाल एव लज्जावर्जनमौचित्यादित्याशयः;) मन्थरः मन्दीभूतः विवेकः कर्त्तव्याकर्त्तव्यज्ञानं यस्य तादृशं (मन्थरविवेकं यथास्यात्तथेति क्रियाविशेषणं) मे मम चेतः (कर्त्तृ) लज्जां त्रपां "मनः सङ्कोचनं लज्जा ह्यनौचित्यप्रवर्त्तना"दित्युक्तलक्षणामिति यावत्। विजित्य निरस्य विनयं प्रश्रयं विनिवार्य्य परित्यज्य धैर्य्यं सहजधीरत्वं उन्मथ्य उन्मूल्य कथमपि अतिकष्टेन व्यपवर्त्तते निवर्त्तते तदेकाग्रियातिशयतया केवलं तामेवानुध्यातुमीहत इत्यर्थः। इह तामित्यनेनानुध्यातिः, इन्दुसुन्दरेत्यनेन गुणकीर्त्तनं विभाव्येत्यनेन चक्षुः प्रीतिः, कथमपीत्यनेनोद्वेगः,

---

কামদেবের আজ্ঞা জগতের সর্ব্বত্র (অপ্রতিহত ভাবে) বিচরণ করিতেছে। যৌবনও স্বভাবতঃই বিকার জন্মাইয়া থাকে, রমণীগণের রমণীয় সৌন্দর্য্যাদি মধুরভাবেও ধৈর্য্যচ্যুতি জন্মায় (সুতরাং ইহার এইরূপ অবস্থা যে কামপীড়ন-জন্য তাহাতে সন্দেহ নাই)।

(৬৪) (মদনবিকারভাবাপন্ন মাধবের প্রবেশ।)

माधवः—यद्विस्मयस्तिमितमस्तमितान्यभाव-
मानन्दमन्दममृतप्लवनादिवाभूत्।
तत्सन्निधौ तदधुना हृदयं मदीय
मङ्गारचुम्बितमिव व्यथमानमास्ते ॥ (६७)

मक। सखे! माधव! इत इतः। (६८)

---

लज्जां विजित्येत्यनेनोन्माद', मन्मथविवेकमित्यनेन जड़तेत्यनेकविधा अवस्था दर्शिता, तत्र लज्जात्यागोन्मादयो. मदमात्मावस्थायोरादावेवोत्कीर्तनमनुरागस्यातिदृढताप्रतिपादनार्थमिति मन्तव्यम्। वसन्ततिलकं वृत्तम्।

६७। यदिति। यन्मदीयं मम हृदयं मन, तस्याः सन्निधौ विस्मयेन तदीयाप्रमाणलावण्य-सन्दर्शनजनितेनाद्भुतरसेन स्तिमितं निष्पन्दं, एतेन जाड्योक्तिः। अनएवास्तमितं तिरोहितः अन्य विस्मयातिरिक्तः भावो धर्मो यस्य तत्, अनेन जड़तोक्तिः। तथा अमृतप्लवनादिव सुधानिषेकादिव आनन्देन अनिर्वचनीयसुखेन मन्दं मन्थरं अभूत्, अनेनापूर्वनायिकासन्दर्शनजनितसात्त्विकभाव-मन्थरता दर्शिता। तदेव हृदयं अधुना तदसन्निधौ अङ्गारैः प्रज्वलत्काष्ठैः चुम्बितं संस्पृष्टमिव व्यथमानं दूयमानं आस्ते इत्याश्चर्यं, अयमाशयेनैव तत्सन्निधानासन्निधाननिबन्धनमेवं वैलक्षण्य-मिति महदाश्चर्यमित्यर्थः। न च प्रियायाः सन्दर्शनासन्दर्शनाभ्यां सुखदुःखे स्वभावसिद्धे एवेति कथमाश्चर्यभाव. सङ्गमस्य इति वक्तव्यं समागमस्वित्वे अननुभूतताहृशसुखदुःखानुभवस्य माधवस्य "कथमिदमकस्मादापतित"मित्याश्चर्यभावस्याविरुद्धत्वादिति मन्तव्यम्। अत्रापि वसन्ततिलकमिव वृत्तम्।

६८। आगम्यतामिति शेषः। अनेनाह्वानेन मालतीगतचित्ततया बाह्यार्थस्फुरणाभावेन माधवो मकरन्दं न सन्दर्शेति सूचितम्।

---

(৬৫-৬৬) মাধব। (স্বগত) সেই চন্দ্রমুখীকে বহু সময় চিন্তা করিয়া কিংকর্তব্যবিমূঢ় আমার চিত্ত কেন অকস্মাৎই লজ্জায় জলাঞ্জলি দিয়া ও বিনয় পরিত্যাগ করিয়া ধৈর্য্য উন্মূলিত করত অতি কষ্টে নিবর্ত্তিত হইতেছে?

(৬৭) কি আশ্চর্য্য!! আমার যেই চিত্ত তাহার সন্নিধানে বিস্ময়াভিভূত হইয়া অন্য সমস্ত ভাব পরিত্যাগ করিয়াছিল এবং অমৃতসেকের ন্যায় (অমৃতসেকে আনন্দাভিভূতের ন্যায়) আনন্দাভিভূত হইয়াছিল, আমার সেই চিত্ত সম্প্রতি (তাহার অসন্নিধানে) জ্বলৎকাষ্ঠ সংযুক্তের ন্যায় ব্যথিত আছে।

(৬৮) মক। সখে। মাধব। এদিকে এদিকে।

माध। [परिक्रम्य]। कथं, प्रियवयस्यो मम मकरन्दः। (६८)

मक। [उपसृत्य।] सखे! ललाटन्तपस्तपति घर्मांशुस्तदस्मिन् उद्याने मुहूर्त्तमुपविशावः। (७०)

माध। यथा प्रियवयस्याय रोचते (७१)। [इत्युभावुपविशतः]।

कल। [दृष्ट्वा।] कधं, मअरंदसहअरो इदं ज्जेव बालअउलुज्जाणं अलङ्करेदि माहवो, ता दंसेमि, मअणवेअणाखिज्जमाणमालदीलोअणसुहावहं अत्तणो से पडिच्छंदअं। अहवा मुहुत्तं बिस्सामसोक्खं दाव अणुभोदु। (ठ)

---

(ठ) कथं मकरन्दसहचर इदमेव बालवकुलोद्यानमलङ्करोति माधवस्तद्दर्शयामि मदनवेदनाखिद्यमानमालतीलोचनसुखावहम् आत्मनोऽस्य प्रतिच्छन्दकम्। अथवा मुहूर्त्तं विश्रामसौख्यं तावदनुभवतु।

---

७०। ललाटं तपतीति ललाटन्तपः (ललाट+तप+खश्, "असूर्य्यललाटयोर्दृशितपो"रिति सूत्रम्) भाण्डसन्तापकः नभोमध्यवर्त्तीति यावत्। घर्म्मांशुः सूर्य्यः तपति सन्तापयति।

७१। प्रियवयस्यायेति "रुच्यर्थानां प्रीयमाणः" इति सम्प्रदाने चतुर्थी।

(ठ) कथमित्यादि। मकरन्दः सहचरः सहगामी यस्य तादृशो माधवः बालवकुलानां अपरिणतकेसराणां उद्यानं उपवनं अलङ्करोति भूषयति। तत् तस्मात् मदनवेदनया स्मरसन्तापेन खिद्यमानायाः खेदमनुभवन्त्याः मालत्याः लोचनसुखावहं नेत्रप्रीतिकरं अस्य माधवस्य आत्मनः स्वस्य प्रतिच्छन्दकं प्रतिकृतिं, मन्दारिकया दत्तमित्यर्थः, दर्शयामि माधवमिति शेषः। अत्र मकरन्देन पुष्परसेन सहचरो माधवो वसन्तः बालवकुलमलङ्करोतीति अर्थोऽप्यनुसन्धेयः। अनुभवतु इति पश्चाद्दर्शयिष्यामीति शेषः, चित्ते सुस्थित एव दर्शनं युक्तमित्याशयः।

---

(৬৯) মাধ। (পরিভ্রমণ করিয়া) এ কি আমার প্রিয় বয়স্য মকরন্দ?

(৭০) মক। (সমীপে যাইয়া) সখে! সূর্য্যদেব নভোমধ্যবর্ত্তী হইয়া সন্তাপ দিতেছে, এই উদ্যানে কিছুকাল উপবেশন করি।

(৭১) মাধ। প্রিয় বয়স্যের যেরূপ অভিরুচি। (উভয়ের উপবেশন)

मक। तदस्यैव तावत् उच्छ्‌सितकुसुमकेशरकषायशीतलामोदवासितोद्यानस्य काञ्चनपादपस्याधस्तादुपविशावः। (৩২)

[ तथा कुरुतः। ] (৩৩)

मक। वयस्य! माधव! अद्यैव तावत्सकलनगराङ्गनाजनप्रवर्त्तितमहोत्सवाभिराममदनोद्यानयात्राप्रतिनिवृत्तमन्याद्दशं भवन्तमवधारयामि, अपि नाम मनागवतीर्णोऽसि रतिरमणवाणगोचरम्? (৩৪)

---

৩২। उच्छ्वसितानां विकसितानां कुसुमानां पुष्पाणां केशरैः किञ्जल्कैः कषायः लोहितः (कषायः सुरभौ लोहितेऽप्यवदिति मेदिनी) शीतलः शैत्यगुणसम्पन्नश्च यः आमोदः गन्धः तेन वासितं सुरभीकृतं उद्यानं येन तस्य। यद्यपि गन्धे चाक्षुषत्वाभावेन लोहित्यादिकं न वर्त्तते गुणे गुणविरहात्तथापि सद्गुणकर्षसूचनाय सामानाधिकरण्यादिसम्बन्धेन तथात्वं विवक्षितमिति सुधीभिर्बोधनीयम्। यद्वा किञ्जल्कानां यः कषायो निर्यासः (निर्यासेऽपि कषायोऽस्त्रीत्यमरः) तस्य शीतलः अनुत्कटः यः आमोदः तेन वासितं उद्यानं येन तस्येत्यर्थः। काञ्चनपादपस्य चम्पकतरोः।

৩৩। तथाकुरुतः—तादृशतरोरधस्तादुपविशत इत्यर्थः।

৩৪। वयस्येति। "समानुरागव्यसनोऽहम्याद्यैकभाजन"। विपत्प्रतिक्रियादक्षो वयस्यः परिकीर्त्तित" इति वयस्यलक्षणम्। सकलेन नगराङ्गनाजनेन प्रवर्त्तितः कृतः यो महोत्सवः

---

ঠ। কল। (দেখিয়া) এ কি মকরন্দসহচর মাধব এই বাল-বকুলোপবনই অলঙ্কৃত করিতেছেন। তবে মদনবেদনাব্যথিত মালতীর নেত্রপ্রীতিকর ইহার নিজ প্রতিকৃতি দর্শন করাই। অথবা ক্ষণকাল বিশ্রামসুখ অনুভব করুন। (পরে দেখাইব।)

(৩২), মক।, ভবে, বিকসিত কুসুমকিঞ্জল্কনির্যাসের অনুৎকট গন্ধ দ্বারা যে উদ্যান আমোদিত করিতেছে, তাদৃশ এই চম্পকতরুর অধোদেশে উপবেশন করি।

(৩৩) (সেই তরুর অধোদেশে উপবেশন করিল।)

[ माधवो लज्जया अधोमुखस्तिष्ठति। ] (७५)

मक। [ विहस्य। ] तत्किमवनतमुग्धमुखपुण्डरीकस्तिष्ठसि? (७६)

पश्य—

अन्येषु जन्तुषु रजस्तमसावृतेषु,
विश्वस्य धातरि समः परमेश्वरे च।
सोऽयं प्रसिद्धविभवः खलु चित्तजन्मा
मा लज्जया तव कथञ्चिदपह्नुतिर्भूत्॥ (७७)

---

तेन अभिरामा मनोज्ञा या मदनोद्यानयात्रा ततः प्रतिनिवृत्तं प्रत्यागतं भवन्तं अन्याहं विलक्षणावस्थं अवधारयामि। अपिः प्रश्ने नामसम्भावनायां, रतिरमणस्य कामदेवस्य बाणगोचरं वाणलक्ष्यतां, गोचर इति भावप्रधानो निर्देशः, मनागल्पं अवतीर्णोऽसि प्राप्तोऽसि

७६। अवनतं विदितभावोऽस्मीति लज्जयाऽधोमुखं अतएव मुग्धं किं कर्त्तव्यताविमूढं मुखपुण्डरीकं यस्य तादृशः, अत्र विरहपाण्डुतयापि मुखस्य पुण्डरीकसाम्यं बोध्यम्।

७७। लज्जायाः शिथिलीकरणाय स्मरपरवशतायाः सार्वत्रिकत्वं दर्शयति—अन्येष्विति। यः रजस्तमोभ्यां आवृतेषु रजस्तमोबहुलेष्वित्यर्थः, अन्येषु जन्तुषु, तथा विश्वस्य संसारस्य धातरि स्रष्टरि ब्रह्मणि परमेश्वरे महादेवे च समस्तुल्यव्यापारः सर्वेष्वप्येषामप्रतिहतप्रभाव इति यावत्, सोऽयं चित्तजन्मा चित्तात् जन्म यस्य स मनोभवः खलु निश्चितमेव प्रसिद्धविभवः, अत्र विधेयस्य प्रसिद्धविभवस्य समासे गुणीभूतत्वादविमृष्टविधेयांशाख्यो दोषः। विख्यातविक्रमः, स ब्रह्मादीनामप्यजेयः का कथा अन्येषामित्याशयः। तस्मात् लज्जया कथञ्चिदपि तव अपह्नुति-

---

(१४) मक। वयस्य माधव! অত্যই নগরবাসী সমস্ত স্ত্রীজনপ্রবর্ত্তিত মহোৎসব দ্বারা অতি মনোহর মদনোদ্যানযাত্রা হইতে প্রতিনিবৃত্ত (হইয়াছ পর) তোমাকে অন্যরূপ দেখিতেছি, তবে কি তুমি অল্প পরিমাণে মদনবাণের লক্ষ্য হইয়াছ?

(১৫) (মাধব লজ্জায় অধোমুখ হইয়া রহিলেন।)

(১৬) মক। (হাস্য করিয়া) তবে মুখপদ্ম অবনত করিয়া রহিলে কেন?

माध। वयस्य! किं न कथयामि श्रूयतां। गतोऽस्मि अवलोकिताजनितकौतुकः कामदेवायतनं, तत्र च इतस्ततः परिक्रम्यावलोक्य च परिश्रमादुन्मिषितमदिरामोदमधुरपरिमलाकृष्टषट्पदमिलदलिपटलसङ्कुलाकुलितवकुलमुकुलावलीमनोहराभरणरमणीयस्याङ्गनभुवो बालवकुलस्य आलवालपरिसरे स्थितः। तत्र च यदृच्छया निरन्तरनिपतितानि कुसुमानि आदाय विदग्धरचनामनोहरां स्रजमभिनिर्मातुमारब्धवानस्मि। अनन्तरञ्च सञ्चारिणीव देवस्य मकरकेतोर्जगद्विजयवैजयन्तिका, निर्गत्य गर्भभवनादुज्ज्वलविदग्ध-मुग्धनेपथ्यविरचनाविभावितकुमारीभावा महानुभावप्रकृतिः सत्कुदारपरिजना कापि तत्र एव आगतवती। (৩৮)

---

दपकम: यौपनमिति यावत्, साम्प्रत् नैव भवतु अन्यदा मतोका रावश्यव इति भावः। दुर्दैवेन भवतु सम्मा न कार्य्येति स्पष्टा परित्यज्य सर्वं कदयैन्यभिप्रायः।

৩৮। वयस्येत्यादि। किं न कथयामि? एवंविश्वासभाजने त्वयि मास्याकथ्यमित्यभिप्रायः। अवलोकितया जनित कौतुकं मनोनमसाङ्गो यस्य तादृशः अह कामदेवायतनं मदनोद्यानं गतः, अभूवमिति शेषः। परिश्रमात् परिक्रमणजनितादित्यर्थः, स्थित इत्यनेनान्वयः, हेतौ पञ्चमी, परिश्रमादेव स्थितः, नतारकाङ्गानव्याद्रित्याशयः। उन्मिषितः स्फुरन् यः मदिरामोदवत् तेन वा मधुरः मनोज्ञः (तादृशगन्धयोकौ विकसति वकुल योषितामास्यगण्डूषसिक्ता वकुलोद्गम इति मदिरामोदस्य हेतुत्वात्तद्गन्धमनोज्ञत्वहेतुतापि दुर्दैवेनसम्बन्धेन) यः परिमलः सौरभम् (सुगन्धः परिमल इति हेम.) तेन आकृष्टं यत् षट्पदानां मिलता अलीनां पटलं समूहं तेन सङ्कुला व्याप्ता अतएव आकुलिता या वकुलमुकुलावली विकासोन्मुख-वकुलकलिकावेणी सैव मनोहराभरणं तेन रमणीयस्य मनोहरस्य अङ्गनभुवः कामदेवायतनप्राङ्गणस्य, एतेनोत्सवसमयलोकनयोग्यदेशत्वं सूचितं। अङ्गनशब्दस्य मूर्द्धन्यान्तत्वं क्वचिद्दृश्यते तच्च भ्रान्तिविजृम्भितमित्यवधेयं। बालवकुलस्येति बालत्वविशेषणं कुसुमानामुद्ग्रहे

---

(১১) ব্রজ-স্ত্রীবন্দুন সাধারণ প্রাণী বিশেষ সৃষ্টিকর্তা ব্রহ্মা এবং মহেশ্বরের যিনি সমভাবে বিচরণ করেন, সেই কামদেবের প্রভাব অতি সুপ্রসিদ্ধ। (অতএব) লজ্জাবশতঃ (সেই কামচারের) গোপন তোমার সঙ্গত নহে।

सा रामणीयकनिधेरधिदेवता वा
सौन्दर्य्यसारसमुदायनिकेतनं वा।

---

मूलमार्थं। आलवालं मूलगतपरिखा तत्परिसरे तत्सन्निहितभूमौ। "स्यादालवालमावाल-मम्भसां यत्र धारणं" "पर्य्यन्तभूः परिसर" इति चामरः। तत्र उपवेशनस्थाने निरन्तरपतितानि अजस्रविस्रस्तानि कुसुमानि यदृच्छया स्वच्छन्दतः आदाय गृहीत्वा विदग्धा निपुणा या रचना तथा मनोहरां रचनानैपुण्येन मनोमोहनकारीमित्यर्थः। स्रजं मालां अभिनिर्म्मातुं ग्रथितुं आरब्धवान् अस्मि। मालानिर्म्माणं कामशास्त्रज्ञानख्यापनार्थेत्यनुसन्धेयम्। देवस्य मकर-केतोः मकरध्वजस्य कामदेवस्येति यावत्। सञ्चारिणी गमनशीला जगद्विजयवैजयन्तिका त्रिभुवन विजयपताका उज्ज्वलं प्रकाशमानं विदग्धं अग्राम्यं मुग्धं मनोरमं यन्नेपथ्यं वेशः तस्य रचनया विभावित. प्रमापितः कुमारीभाव कुमारीत्वं यस्याः, यौवनसम्भो वर्त्तमानत्वा-दयस्या कुमारीत्वं न ज्ञायते परन्त्ववगुण्ठनाद्यभाववैयन्तदित्याशयः। महानुभावप्रकृतिः अति-धीरस्वभावा, अत्युदारो महान् दक्षिणो वा परिजन यस्याः सा, उदारो महति दक्षिणे इति शाश्वतः। कापि अज्ञातनामधेया गर्भभवनात् मध्यावासान्निर्गत्य तत्र यत्राहं स्थित इत्यर्थः। तत इति पाठेऽपि सन्निध्यन्तात्तम् इति स एव वार्थः। आगतवती उपस्थिता।

---

१৮। মাধব। বয়স্য! তোমার নিকট কি অবক্তব্য আছে? শ্রবণ কর। অবলোকিতা কর্ত্তৃক উৎসাহিত হইয়া কামদেবায়তনে গমন করিয়াছিলাম। সেই স্থানে ইতস্ততঃ পরিভ্রমণ ও অবলোকন করিয়া পরিশ্রমবশতঃ উল্লসিত মদিরামোদে মনোজ্ঞ যে শুভগন্ধ তদ্দ্বারা সমাকৃষ্ট সম্মিলিত সকল অলিকুল কর্ত্তৃক ব্যাপ্ত ও আকুলিত বকুলকলিকাশ্রেণীরূপ মনোহর আভরণ দ্বারা রমণীয় প্রাঙ্গণ-ভূমিস্থিত বকুল বৃক্ষের আলবালসন্নিহিত ভূমিতে অবস্থান করিয়াছিলাম। সেই স্থানে অজস্র নিপতিত কুসুমসকল যদৃচ্ছাক্রমে গ্রহণ করিয়া অতি নিপুণভাবে মনোহর মালা গাঁথিতে আরম্ভ করিয়াছিলাম। অনন্তর সঞ্চরণশীল কামদেবের ত্রিভুবন-বিজয়পতাকাস্বরূপ অতি ধীরস্বভাবা অজ্ঞাতনাম্নী একটী স্ত্রী অতি দাক্ষিণ্যসম্পন্ন পরিজনবর্গসহকারে মধ্যাবাস হইতে নির্গত হইয়া সেই স্থানেই উপস্থিত হইল। অতি উজ্জ্বল অগ্রাম্য ও মনোহর (অবগুণ্ঠনাদিশূন্য) বেশ রচনা তাহার কুমারী ভাবের পরিচয় দিতেছিল।

तस्याः, सखे ! नियतमिन्दुसुधामृणाल-

ज्योत्स्नादि कारणमभून्मदनश्च वेधाः ॥ (७८)

अथ सा प्रणयिनीभिः अनुचरीभिः अविरलकुसुमस्तवकावचय-लीलादोहदिनीभिः अभ्यर्थ्यमाना, तमेव बालबकुलपादपोद्देशमागतवती, तस्याश्च कस्मिंश्चिदपि महाभागधेयजन्मनि बहुदिवसोपचीयमानमिव मन्मथव्यथाविकारमुपलब्धवानस्मि। (८०)

---

७८। तस्याः गुणान् वर्णयति सैति। सा कुमारी रामणीयकस्य रमणीयताया निधिराश्रयः यद्वा रामणीयकमेव निधिर्निधिः तस्य अधिदैवता अधिष्ठात्री देवता वा ? सौन्दर्यस्य सौष्ठवस्य यः सारसमुदायः, श्रियो निकरः तस्य निकेतनं गृहं वा ? (निकेतनशब्दस्यानेकलिङ्गत्वात् स्त्रीसामानाधिकरण्येऽपि न स्त्रीलिङ्गत्वं) इति संशयः। अथवा वाशब्दोऽत्र इवार्थे, तथाच रामणीयकनिधेरधिदेवतेवेत्यादिरर्थः। वास्याद्विकल्पोपमयोरेवार्थेऽपि समुच्चये इति विश्वः। अनेन नायिकागुणवर्णनेन विलोभनं नाम मुखसन्धेरङ्गमुक्तं यदाह—"तद्गुणाख्या विलोभन"-मिति। गुणस्वरूपनिरूपणादनुरक्तिरूपा अनुर्थावस्थापि माधवस्य व्यञ्जिता। अथ मा-विलक्षणतां तस्याः समीक्ष्योत्प्रेक्षते तस्या इत्यादि। हे सखे ! नियतं नूनं इन्दुसुधा-मृणालज्योत्स्नादि तस्याः कारणं समवायिकारणं अभूत्, तथाहि—इन्दुस्तस्याः मुखस्य, सुधा अधरस्य, मृणालं भुजयोः, ज्योत्स्ना लावण्यादीनां उपादानकारणं। आदिपदेन पद्मौ पादयोः किसलयौ करयोरित्यनुसन्धेयम्। चकार एवार्थे, मदनश्च मदन एव अस्या वेधाः सृष्टिकारकः, चन्द्रादिसकलोपमाद्रव्योपादानकत्वं मदनकर्तृकत्वञ्च विना भूतपञ्चकेन अनन्यसाधारणरूप-सम्पत्तिः च शैत्यविरलत्वं सम्भवतीत्याशयः। अत्र संशयोत्प्रेक्षयोरलङ्कारयोः संसृष्टिः। वसन्ततिलकं वृत्तम्॥

---

৭৮। সেই রমণী কি রমণীয়তাস্রয়ের অধিষ্ঠাত্রী দেবতাস্বরূপ? অথবা সৌন্দর্য্যের সারাংশসকলের নিকেতনস্বরূপ? হে সখে! আমার মনে হয় চন্দ্র, সুধা, (পদ্মের) মৃণাল ও জ্যোৎস্নাই তাহার উপাদানকারণ এবং মদনই তাহার সৃষ্টিকর্তা। (নচেৎ সেই প্রাচীন ব্রহ্মা কর্তৃক কেবল পঞ্চভূতদ্বারা এরূপ রূপ কখনও সম্ভবপর হইত না।)

यतः तस्याः—

परिम्लदितमृणालीम्लानमङ्गं, प्रवृत्तिः,
कथमपि परिवारप्रार्थनाभिः क्रियासु ।
कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मी-
मभिनवकरिदन्तच्छेदपाण्डुः कपोलः ॥ (८१)

---

८०। अथेति। प्रणयिनीभिः प्रेमास्पदाभिः अविरलं यथा स्यात्तथा यः कुसुमसञ्चयस्य पुष्पसमूहस्य अवचयः चयनं स एव लीला तस्यां दोहदिनीभिः अभिलाषशालिनीभिः अनुचरीभिः अभ्यर्थमाना आहूयमानेति यावत् सा बाला तमेव यथाऽहमुपविष्ट इत्यर्थः, तस्याश्च बालायाः महता भागधेयेन सुभाग्येन लभ्य यस्य तादृशी, अतुलनीय-सुललितमालितविटपिवि तादृयस्त्रिया अभिलाषासम्भवात्। कस्मिंश्चित् अप्रातननामान्वये पुरुषे बहुदिवसोपचीयमानं बहुदिनात् प्रवर्त्तमानं मन्मथव्यथया कामवेदनया जनितं विकारं उपलब्धवान् अनुमितवान् अस्मि।

८१। कामविकारानुमाने हेतून् दर्शयति—यत इति। परिम्लदितेति। यतस्तस्या अङ्गं परिम्लदिता मर्दनविमर्दयोः ग्लाना या मृणाली बिसतन्तुः तद्वत् म्लानं म्लानिमापन्नं, एतेन कृशतानाम कामदशा सूचिता। तथा क्रियासु स्नानपानादिषु परिजनानां सखीपरिचारिकादिजनानां प्रार्थनाभिः आग्रहातिशयैः कथमपि अनिच्छयापि प्रवृत्तिः, एतेन विषयविरागः सूचितः। रोगादि-वशादपि कृशत्वादि सम्भवादव्यभिचारि हेतुं दर्शयति—कलयतीत्यादिना। अभिनवः नूतनः यः करिदन्तच्छेदः दन्तिदन्तखण्डः तद्वत्पाण्डुः गौरः कपोलः निष्कलङ्कस्य कलङ्करहितस्य हिमांशोश्चन्द्रस्य लक्ष्मीं शोभां कलयति। अनेन पाण्डुता प्रदर्शिता, एतादृशी पाण्डुता च

---

৮০। অনন্তর সেই কুমারী অবিরল কুসুমচয়নে অভিলাষবতী ও অতি-প্রণয়িনী অনুচরী কর্ত্তৃক আহূত হইয়া, যে স্থানে আমি অবস্থান করিতেছিলাম সেই বকুলপাদপের সন্নিকট ভূমিতেই আসিয়া উপস্থিত হইল। কোনও সৌভাগ্য-বান্ পুরুষে বহুদিবসাবধি বর্দ্ধমান তাহার মদনবেদনাবিকার উপলব্ধি করিয়াছি।

ग्नली

सा पुनः मम प्रथमदर्शनक्षणात्प्रभृति अमृतवर्त्तिरिव चक्षुषो-रतिशयानन्दमुत्पादयन्ती, अयस्कान्तमणिशलाकेव लोहधातुमन्तः-करणममाकृष्टवती, किं बहुना—(८२)

सन्तापसन्ततिमहाव्यसनाय तस्या-

मासक्तमेतदनपेक्षितहेतु चेतः।

---

विपलम्भ एव सम्भवतीत्यत्रभिप्रायितो हेतुः। स तथाच कामदशामधिकृत्योक्तं "आक्रान्तीदं ताप. पाण्डुता कृशतारति"रिति। मालिनीवृत्तम्, तल्लक्षणं यथा—"न मम यय युतेयं मालिनी भोगिलोकैः।"

(८२) सा पुनरिति। अमृतवर्त्तिः, अमृतमयनेत्राञ्जनशिखा, सा इव सा कुमारी प्रथम-दर्शनात् प्रभृति दर्शनमारभ्येवेत्यर्थः। चक्षुषोः नेत्रयोः अतिशयानन्दं परमानन्दं उत्पादयन्ती जनयन्ती अयस्कान्तमणिशलाका लौहाकर्षकमणिखण्डं लोहधातुमिव लोहरूप द्रव्यमिव मम अन्तःकरणं चित्तं आकृष्टवती तद्दर्शनात्प्रभृति तामेव मे चित्तमनुसरतीत्यर्थः। किं बहुना कथनेनेति शेषः, कथंचित्तत्ते कथित कथयामीत्यर्थः।

---

৮১। যে হেতু তাহার অঙ্গ মর্দ্দিত-বিসতন্তুর ন্যায় গ্লানিযুক্ত, পরিজনবর্গের অনুরোধে অতিকষ্টে তাহার ক্রিয়ার প্রবৃত্তি, নূতন হস্তিদন্তখণ্ডের ন্যায় পাণ্ডুবর্ণ তাহার কপোল নিষ্কলঙ্ক শশাঙ্কের শোভা ধারণ করিয়াছে। (কামভাবেই এই সকল লক্ষণ পরিলক্ষিত হয়।)

৮২। সেই বালিকা প্রথম দর্শনাবধিই অমৃতময় অঞ্জনরেখার ন্যায় আমার নেত্রের অতিশয় আনন্দ উৎপাদন করত অয়স্কান্তমণি (চুম্বক লোহা) যেমন লোহা আকর্ষণ করে, সেইরূপ আমার চিত্তকে আকর্ষণ করিয়াছে। অধিক আর কি বলিব।

प्रायः शुभञ्च विदधात्यशुभञ्च जन्तोः
सर्वङ्कषा भगवती भवितव्यतैव ॥ (८३)

मक। वयस्य माधव! स्नेहस्य निमित्तसव्यपेक्ष इति विप्रतिषिद्धमेतत्। (८४) पश्य—

---

८३। फलितं कथयति—सन्तापेति। एतत् मदीयं चेतः सन्तापसन्ततिपरिपाकपरम्परा सैव महाव्यसनं परमा विपत्तिः तस्यै, तदर्थमेव तादर्थ्ये चतुर्थी। न कस्यचित् हेतुः निमित्तं बाह्यसाधनमिति यावत्, येन तादृशं सत् निमित्तनिरपेक्षवैलक्षण्यं, तथा आसक्तं लग्नं। तन्मालतीदर्शनं आवश्यकमदृष्टेन जीवनं सन्तापदायकमेव सदासक्तिरिति भावः। नन्वेव ज्ञानवदपि तत्र तदासक्तिं न निवारयसीत्याशङ्क्याह—प्राय इति। प्रायो बाहुल्येन भगवती माहात्म्यवती, सर्वङ्कषा (सर्व+कष्+खच्) निमित्ततया सर्वाभिव्यापिनी, भवितव्यता एव प्राक्तनकर्मजन्यादृष्टमेव जन्तोः जीवस्य, शुभं अशुभञ्च विदधाति सम्पादयति, विधातापि जीवादृष्टसापेक्ष एव सर्वं प्रवर्त्तयतीति नास्ति मे तत्र स्वातन्त्र्यमिति भावः। अत्र सामान्येन विशेषसमर्थनरूपार्थान्तरन्यासोऽलङ्कारः। लक्षणं च यथा दर्पणे—"सामान्यं वा विशेषेण विशेषस्तेन वा यदि। कार्यञ्च कारणेनेदं कार्येण च समर्थ्यते, साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः॥" वसन्ततिलकं वृत्तम्।

८४। व्यपेक्षया सह वर्त्तत इति सव्यपेक्षः निमित्तस्य बाह्यसाधनस्य सव्यपेक्षः निमित्तसव्यपेक्षः, स्नेहश्च बाह्योपाधिविहीन इति विप्रतिषिद्धं विरुद्धं अप्रामाणिकमिति यावत्। स्नेहत्वबाह्योपाधिकत्वयोर्विरुद्धत्वादय. बाह्यनिमित्तानपेक्षः स स्नेह एव नेतरः। यत्तु "द्विधा भवेत् स च स्नेहः कृत्रिमाकृत्रिमात्मकः। सोपाधि कृत्रिमः स्नेहो निरुपाधिरकृत्रिमः" इति सोपाधिकेऽपि स्नेहव्यवहार इति तत् सोपाधिकेऽपि स्नेहत्वोपचारेण भाक्तमिति मन्तव्यम्।

---

(৮৩) সন্তাপসন্ততিরূপ মহাবিপদ্‌লাভের জন্যই আমার চিত্ত কোনরূপ নিমিত্তের অপেক্ষা না করিয়া তাহাতে সমাসক্ত হইয়াছে। সর্ব্বাতিশায়িনী ভগবতী ভবিতব্যতাই প্রায় প্রাণীদিগের শুভাশুভ বিধান করিয়া থাকে (অতএব এবিষয়ে আমার কোন স্বাধীনতা নাই)।

(৮৪) মক। বয়স্য মাধব। স্নেহ যে বাহ্য নিমিত্তকে অপেক্ষা করে, ইহা সম্পূর্ণ বিরুদ্ধ কথা। দেখ—

व्यतिषजति पदार्थानान्तरः कोऽपि हेतुर्
न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते।
विकसति हि पतङ्गस्योदये पुण्डरीकम्
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः॥ (८५)

ततस्ततः ? (८६)

माध। ततश्च तत्र, (८७)

---

८५। स्नेहं द्रढयति—व्यतिषजतीति। आन्तरः आन्तरः (अन्तर्+अण्) अन्तर्वर्ती कोऽपि अनिर्वचनीयो हेतुः पदार्थान् वस्तूनि व्यतिषजति स्नेहसूत्रेण परस्परं सम्बध्नाति। प्रीतयः स्नेहाः न खलु नैव बहिरुपाधीन् बाह्यहेतून् संश्रयन्ते अपेक्षन्ते, बाह्यकारणापेक्षा न भवन्ति इत्यर्थः। हि यस्मात् पुण्डरीकं पद्मं पतङ्गस्य (पत्+अङ्गच्) "पतङ्गौ पक्षिसूर्यौ च" इत्यमरः। सूर्यस्य उदये आविर्भावे सति विकसति प्रस्फुटति, तथा चन्द्रकान्तः तन्नामा मणिविशेषः हिमरश्मौ चन्द्रे उद्गते उदयमासेदुषि सति द्रवति स्यन्दते। अत्र तीक्ष्णतरदिनकरकरनिकरसम्पर्के सति कोमलतरकमलदलविकासित्वं, शीतलतरनिशाकरकिरणनिकरसंस्पर्शे सति कठिनचन्द्रकान्तमणिद्रवीभावे च बाह्यहेतुर्न कोऽपि परिलक्ष्यते इत्यान्तर एवानिर्वचनीयहेतुः कश्चित् कल्पनीय इत्याशयः। अत्र विशेषेण सामान्यसमर्थनरूपः "अर्थान्तरन्यासोऽलङ्कारः। मालिनीवृत्तम्।

८६। यद् वृत्तं तत् कथयेति शेषः।

८७। ततस्तदनन्तरं, तत्र—तस्मिन्नवसरे।

---

(৮৫) অন্তর্বর্তী কোন অনির্বচনীয় কারণই পদার্থকে পরস্পর স্নেহসূত্রে আবদ্ধ করে। স্নেহ কখনও বাহ্য হেতুর অপেক্ষা করে না। যেহেতু সূর্য্যের উদয় হইলেই পদ্ম প্রকাশিত হয় এবং চন্দ্র উদিত হইলেই চন্দ্রকান্তমণি বিগলিত হয় (এস্থলে কোনই বাহ্য হেতু পরিলক্ষিত হয় না।)

(৮৬) তারপর (যাহা হইয়াছিল, তাহা বল)।

(৮৭) মাধ। তারপর, সেই অবসরে।

सभ्रूविलासमथ सोऽयमितीरयित्वा,
सप्रत्यभिज्ञमिव मामवलोक्य तस्याः ।
अन्योऽन्यभावचतुरेण सखीजनेन,
मुक्तास्तदा स्मितसुधामधुराः कटाक्षाः ( ८८ )

मक । [ स्वगतम् । ] कथं प्रत्यभिज्ञापि नाम ? ( ८९ )

माध । अथ ताः सलीलमुक्ताशकरकमललसितमालिकासर लवलयावलोकम् उपस्तमसकलहंसविभ्रमाभिरामचरणसञ्चरण-झणझणाय-मानमञ्जीरमञ्जुशिञ्जितानुबिद्धमेखलाकलापकिङ्किणी-

८८। सभ्रूविलासमिति। अन्योऽन्यभावचतुरेण परस्पराभिप्रायाभिज्ञेन तस्याः मालत्याः सखीजनेन "अयं सः" यः प्रियसखीहृदयवल्लभ इत्यर्थः। इति वचनं सभ्रूविलासं सभ्रूभङ्गं यथा स्यात्तथा ईरयित्वा कथयित्वा, अथ कथनानन्तरं ज्ञातप्रत्यर्थिनामलक्ष्यलाभेऽपि पुनरप्यदीपादानमतिसान्निध्यद्योतनार्थं यथा स्यात्तथा ईरयित्वा कथयित्वा सप्रत्यभिज्ञमिव "पूर्वानुभूतस्य सन्निहितेन सहैक्यावगाहिनी बुद्धिः प्रत्यभिज्ञा" तया सहितं यथा स्यात्तथैव मामालोक्य तदा तत्काले स्मितं ईषद्धसितमिव सुधा अमृतं तया मधुराः मनोहराः कटाक्षाः अभिप्रायव्यञ्जका दृष्टिविशेषाः मुक्ताः त्यक्ताः। मामालोक्य हास्यपूर्वकं ता, परस्परावलोकनं कृतवत्य इत्यर्थः। अत्रालीनामनङ्गकटाक्षाणां प्रत्याय्यमानत्वाद्भाविकालङ्कारः। लक्षणं यथा दर्पणे—"अद्भुतस्य पदार्थस्य भूतस्याथ भविष्यतः। यत् प्रत्यक्षायमाणत्वं तद्भाविकमुदाहृतम्॥" वसन्ततिलकं वृत्तम्।

८९। नाम सम्भावनायां। पूर्वानुभूत एव प्रत्यभिज्ञासम्भवात् "मालत्यादिभिर्माधवो दृष्ट" इत्यस्यापि मकरन्दाविदितत्वात् कथं प्रत्यभिज्ञेति वितर्को युक्तः।

९०। अथेति। अथ मद्दर्शनानन्तरं ताः मन्मविहितास्तस्याः सख्यः, प्रतिनिवृत्येति क्रिया विशिनष्टि—सलीलमित्यादिविशेषणमयेन। लीलया आङ्गचेष्टितादिभिरभीष्टार्थानुकरणेन सह वर्तमानं यथा स्यात्तथा "मनोमधुरवागङ्गचेष्टितैः प्रीतियोजितैः। प्रियानुकरणं लीला सा स्यात् स्त्रीपुंसयोरपि॥" उत्ताना उन्नताः या करकमलयोः ललिताः मनोज्ञाः मालिकाः

(৮৮) পরস্পরের আশয়বোধে সমর্থ তাহার সখীসকল ভ্রূবিলাসের সহিত "এই সে" এই কথা বলিয়া পূর্ব্ব পরিচিতের ন্যায় আমাকে অবলোকন-করতঃ হাস্যামৃতমনোহর কটাক্ষ নিক্ষেপ করিল।

(৮৯) মক। ( স্বগত ) প্রত্যভিজ্ঞা কিরূপে সম্ভব হইল ?

कल । [ आकर्ण्य ]। कथं सरसरमणीयानुबन्धिनी स्त्रीजनकथा ? (ङ)।

मक। ततस्ततः—(८२)

माध। अवान्तरे किमपि वाग्विभवातिवृत्त-
वैचित्र्यमुल्लसितविभ्रममुत्पलाक्ष्याः।
तद्भूरिसात्त्विकविकारमपास्तधैर्य-
माचार्यकं विजयि मान्मथमाविरासीत्॥ (८३)

---

(ङ) कथं सरसरमणीयानुबन्धिनी स्त्रीजनकथा ?

---

ङ। सरसरमणीयं अनुबध्नाति व्याप्नोतीति सरसरमणीयानुबन्धिनी। स्त्रीजनस्य कथा, कथं अविच्छेदेन प्रवर्त्तत इति शेषः।

८३। अवान्तर इति। अवान्तरे एतस्मिन्नवसरे उत्पलाक्ष्याः पङ्कजलोचनायाः तस्याः इति शेषः। किमपि अनिर्वचनीयं अत एव वाग्विभवातिवृत्तवैचित्र्यं वाक्यप्रपञ्चातीतविचित्रभावं उल्लसितं उत्थितः विभ्रमः "वागङ्गसत्त्वाभिनयभूषास्थानविपर्ययः त्वरया कल्पितोऽभीष्टदर्शने यः स विभ्रमः" इत्येवंलक्षणः शृङ्गारचेष्टाविशेषो यत्र तादृशं, तत्प्रसिद्धं भूरि प्रचुरतरः 'सात्त्विकविकारः स्तम्भादिसात्त्विकभावो यस्मिन् तत्। सात्त्विकभावलक्षणं यथा—"सत्त्वोद्रेके मनसि ये प्रभवन्ति भावास्ते सात्त्विका निगदिताः कविभिः पुराणैः"रिति। तद्भेदाश्च "स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभेदश्च वेपथुः। वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्त्विका मताः॥" तथा अपास्तं निराकृतं धैर्यं धीरत्वं येन, तत् विजयि जयशीलं सर्वत्राप्रतिहतमिति यावत्। मान्मथं मन्मथसम्बन्धि आचार्यकं आचार्यस्य भावः योपधाद्गुरूपोत्तमाद्वुञ्। शृङ्गारचेष्टा शिक्षापारीणत्वमित्यर्थः; आविरासीत् प्रादुरभूत्। अत्र उत्पलाक्ष्याः इत्यनेन नानाप्रकारनेत्रविकारप्रीतियोगो भाव उक्तः। यथोक्तं—"भ्रूनेत्रादिविकारादयः शृङ्गाराकारसूचकः। स्थायिभावः स्थितो ह्यत्र दृश्यते: प्रीतियोगोऽपि वा॥" वाग्विभवातिवृत्तधैर्यत्यादिसाभिप्राय-विशेषणैर्निबन्धनात् परिकरालङ्कारः। तल्लक्षणं यथा दर्पणे—"उक्तैर्विशेषणैः साभिप्रायैः परिकरो मत" इति। वसन्ततिलकं वृत्तम्॥

---

(ঙ) কল। (শ্রবণ করিয়া) এ কি, সরস রমণীয় রমণীজনকীয় কথা (অবিচ্ছেদে চলিতেছে কেন ?)

(৮২) মক। তারপর ?

(৮৩) মাধব। এই অবসরে সেই উৎপলাক্ষীর অনির্ব্বচনীয় বাক্যাতীত

एवमहन्तु तस्याः सर्व्वाकारहृदयङ्गमायाः सम्भाव्यमानस्नेहरसेनाभिसन्धिना विधेयीकृतोऽपि पारिप्लवमात्मनोऽपनिह्नोतुकामः, प्राक्प्रस्तुतस्य वकुलदाम्नो यथा कथञ्चिदवशेषं ग्रथितवानेव, ततो मिलितवेत्रशस्त्रपाणिवर्षवरप्रायपुरुषपरिवारा, गजवधूमारूढा, नगरगामिनं मार्गम् इन्दुवदना अलङ्कृतवती। (८६) तदा च—

---

ख्यातिस्मादिचित्तविचित्रतया पूर्व्वश्लोकेनास्य न पौनरुक्त्यं। एवं मनसि अपविद्धत्वादिसम्बन्धेऽपि तत्सम्बन्धाभिधानादसम्बन्धे सम्बन्धरूपातिशयोक्तिरलङ्कारः। तल्लक्षणं भेदाश्च यथा दर्पणे— "सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते"। "भेदेऽप्यभेदः सम्बन्धेऽसम्बन्धस्तद्विपर्य्ययौ। पौर्व्वापौर्य्यात्ययः कार्य्यहेत्वोः सा पञ्चधा ततः" इति। मालिनीवृत्तम्॥

८६। एवमहमित्यादि। सर्व्वैराकारैः हर्षविकाराङ्गभङ्ग्यादिभिः हृदयङ्गमायाः मनोहरायाः, सम्भाव्यमानः पूर्व्वोक्तकटाक्षादिभिरनुमीयमानः, स्नेहरसो यत्र, तादृशेन अभिसन्धिना अभिप्रायेण, विधेयीकृतः वशीकृतः, आत्मनः स्वस्य पारिप्लवं चाञ्चल्यं निह्नोतुं परतो गोपयितुं कर्त्तुं कामो यस्य सः। तुम् काममनसोरिति मलोपः। प्राक्प्रस्तुतस्य पूर्व्वारब्धस्य, वकुलपुष्पदाम्नः केसरकुसुमस्रजः शेषं अवशिष्टं, कथञ्चित् तन्मनस्कतादतिकष्टेन। वेत्रशस्त्राणि पाणिषु येषां तादृशाः, वर्षवराः अन्तःपुरचारिणः क्लीवाः "विनीताः सर्व्वकार्य्येषु क्लीवाश्चैव स्वभावतः। जात्या न दोषिणश्चैव ते वै वर्षवरा मताः॥" इति परिभाषाविषयाः इति यावत्। तत्प्रायाः तत्प्रधानाः, मिलिताः, तत्प्रायाः, पुरुषाः परिवारा यस्याः सेति विग्रहः। अत्र गजवधूसमारोहणादिना महावंशजातत्वेन मालत्या उत्तमस्त्रीत्वं अत्युच्चयानतया दूरदर्शित्वञ्च सूचितं। तथापि च वधूग्रहणमतिमन्थरगतिसूचनाय गजेष्वपि स्त्रिया एव मन्थरगतिप्रसिद्धेरित्यनुसन्धेयम्।

---

রসভাবপ্রকাশক অন্তর্গত বিস্ময়ে উৎফুল্ল হইতে ছিল, অলসবলিত মুগ্ধ, স্নিগ্ধ, নিষ্পন্দ ও মন্দ লক্ষণাক্রান্ত সেই সকল কটাক্ষকর্ত্তৃক বন্ধকবিহীন আমার হৃদয় অপহৃত, মথিত, পীত ও উন্মূলিত হইল।

(৮৬) এবং আমি সর্ব্বাকারে মনোহরা সেই মালতীর সম্ভাব্যমান স্নেহরসপ্রবণ অভিপ্রায়দ্বারা বশীভূত হইলেও নিজের ধৈর্য্যভ্রংশ অন্যের নিকট গোপন করিবার জন্য অতিকষ্টে পূর্ব্বারব্ধ সেই বকুলপুষ্পমালার শেষাংশ গাঁথিতে লাগিলাম। তৎপরে সেই চন্দ্রমুখী গজবধূ আরোহণ করিয়া নগরে যাওয়ার পথ অলঙ্কৃত করিল। তাহার পুরুষপরিবার শস্ত্র ও বেত্রপাণি ক্লীবপ্রধান ছিল।

यान्त्या मुहुर्वलितकन्धरमाननं तद्
आवृत्तवृन्तशतपत्रनिभं वहन्त्या ।
दिग्धोऽमृतेन च, विषेण च, पक्ष्मलाक्ष्या,
गाढं निखात इव मे हृदये कटाक्षः ॥ (२७)

ततः प्रभृति—

परिच्छेदातीतः सकलवचनानामविषयः,
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान् ।
विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोऽप्यन्तर्जडयति च तापञ्च कुरुते ॥ (२८)

---

२७। आत्मानिबन्धनं तस्या अनुरागचिह्नं दर्शयति—यान्त्येति। मुहुर्वारं वारं वलितकन्धरं पश्चाद्वर्तिनं मां द्रष्टुं वक्रीकृतग्रीवं यथा स्यात्तथा यान्त्या गच्छन्त्या, अतएव वलितकन्धरमित्याननविशेषणं। आवृत्तमावर्जितवन्धनं वृन्तात् च्युतमिति यावत्। यत् शतपत्रं पद्मं तन्निभं तत्सदृशं तत् आननं वहन्त्या तया पक्ष्मलाक्ष्या अमृतेन विषेण च दिग्ध उपचितः दर्शनकाले आनन्दजनकत्वादमृततुल्यः पश्चाद्दर्शनाभावे वियोगे दुःखदत्वाद्विषेण च सहेत्यर्थः। कटाक्षः दृष्टिविशेषः, मे मम हृदये गाढं दृढं यथा स्यात्तथा निखातः विदार्यान्तःप्रवेशित इव। गाढमित्यनेन पुनरुद्धरणासामर्थ्यं सूचितम्। अत्र तीक्ष्णतया कटाक्षस्य नाराचवदन्तःप्रवेशसम्भावनोत्प्रेक्षाद्भुतप्रेक्षालङ्कारः। "भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना" इति तल्लक्षणम्। वसन्ततिलकं वृत्तम् ॥

२८। परिच्छेदेति। ततः प्रभृति कटाक्षक्षेपणारम्भ। परिच्छेदं इयत्तां अतीतः अतिक्रान्तः, अथवा इदमेतावदित्याकारकनिश्चयः परिच्छेदः तदतीतस्तदविषयः, तथा सकलवचनानां मातृभातृप्रभृतिवित्तवचसां अविषयः अगोचरः, तथा यो विकारः अस्मिन् जन्मनि अनुभवपथं

---

(২৭) তখন বৃন্তচ্যুত পদ্মতুল্যবদনা সেই পক্ষলাক্ষী (তোমাকে দেখিবার আশায়) বারবার স্কন্ধদেশ ফিরাইয়া যাইতে যাইতে অমৃত ও বিষ তুল্য কটাক্ষ যেন দৃঢ়ভাবে আমার হৃদয়ে সন্নিবেশিত করিল।

(২৮) তদবধি জ্ঞানের অতীত, সকল বাক্যের অবিষয় এবং ইহ জন্মে

कल। दिढ़ं क्खु एसो एक्कवि अवहरिदो, अवि णाम मालदी जेव्व सा भवे ? (ड)

मक। [ स्वगतम् ]। अहो ! अभिषङ्गः, तत्किं निषेधयामि सुहृदम्। (१००)

अथवा—मामूसुहृत् खलु भवन्तमनन्यजन्मा,
मा ते मलीमसविकारघना मतिर्भूत्।
इत्यादि मन्विह निरर्थकमेव यस्मात्
कामश्च जृम्भितगुणो, नवयौवनञ्च ॥ (१)

---

(ड) दृढं खल्वेष कयाऽप्यपहृतः, अपि नाम मालत्येव सा भवेत् ?।

---

(ढ) कलेति। दृढं अतिशयितं यथा स्यात्तथेति अपहरणक्रियाविशेषणम्। कयापि नैव-यपतितया अपहृतः वशीकृतः। अपि सम्भदे, नाम सम्भावनायां। सैति यया अपहृतः सा स्त्रियाकर्षिणीत्यर्थः।

(१००) मकेति। अभिषङ्गः आसक्तिरूपचित्ताभिभवविशेषः। 'आक्रोशनामभिमवेष्वभिषङ्ग-पदं विदु'रिति यादवः, एवमभिषङ्गे कान्तिमदशापि सर्व्वविदित्यात्मनि तर्कयति—तत् किमिति। निषेधयामि एतदभिषङ्गान्निवारयामि।

(१) तर्केण निवारणासामर्थ्यमवधारयति—अथवेति। न अन्यस्मात् चित्तातिरिक्तात् जन्म यस्य सः अनन्यजन्मा मनोजः काम इति यावत। भवन्तं मामूमुहत् मोहं न प्रापयतु तावत् (माङ्न्ययोगे आशिषि लुङ्) एवं ते तव मतिः मलीमसेन कामिनीजनाधीनत्वानिन्दितेन विकारेण कामाभिभवेन घना निविडा नितान्तमत्तेति यावत्। माभूत् न भवतु, इत्यादि निषेधवाक्यं इह अस्मिन् माधवे निरर्थकं निष्फलमेव। अवावधारणार्थकयोर्नन्वेवशब्दयोः प्रयोगः

---

(ড) কল। ইনি কাহারও কর্তৃক দৃঢ়ভাবেই বশীভূত হইয়াছেন। সম্ভবতঃ সে মালতীই হইবে।

(১০০) মক। (স্বগত) অহো আসক্তি! তবে কি প্রিয় সুহৃৎকে নিষেধ করিব ?

(১) অথবা "কামদেব যেন তোমাকে মোহিত করে না" "তোমার মতি

[ प्रकाशम् । ] अपि पर्यस्तेन विदितं तदन्वयनामनी ? (२)

माध । सखे ! श्रूयतां, अथ तस्याः करेणुकारोहणसमय एव प्रस्तुतः सखीकदम्बकादन्यतमा वारयोषित् विलम्ब्य, बालबकुल-कुसुमावचयक्रमेण नेदीयसी भूत्वा, प्रणम्य, कुसुमापीडव्याजेन मामेवमुक्तवती, महाभाग ! सुश्लिष्टकुसुमतया रमणीय एष वः सुमनसां

---

मन्मथव्यापारातिशयप्रतिबन्धनार्थः । अथवा ननु सखीजनार्थवं भवकल्पितमात्र पूर्वं योजनीयं । आलयस्थे चैतन्यमुदयाऽव्यति—यस्मादिति । यद्यपीति पाठे माधवे सम्बन्धः । कामः मदन क्षुभिता उपसिता गुणाः किं विजनप्रचारिणो व्यापारा दश तथामूनः, यौवनं तावत्तत्र कुत्सितरूपं विरुद्धविवेकनाशकमनर्थकमिति विरुद्धपदेनान्वयः । पञ्चशरव्यापारजनकत्वेनावसरोऽयं नोपदेशार्थं इति भावः । वसन्ततिलकं वृत्तम् ।

(१) प्रकाशमिति । "यत्तु सर्वजनश्राव्यं प्रकाशं तदिहोच्यते" इति भरतः । निगर्भश्च निषेधावसरं विरच्य तदानुकूल्यं सम्पिपादयिषुः पृच्छति—अपीति । तस्या अन्वयनामनी वंशनामधेये ।

(२) माधवेत्यादि । करेणुका हस्तिनी, सखीकदम्बकात् विच्छिद्येति शेषः । अन्यतमा एका वारयोषित् वेश्या । अत्र वारयोषित्पदं तस्याः साहाय्यजनोचितलज्जाविधुर्यत्वानुमोदि-पर्यालोचनात् प्रयुक्तं, विलम्ब्य विरम्बिला बालबकुलकुसुमानां अवचयक्रमेण सखीजनपर्यायेण पुष्पचयनव्याजेनेत्यर्थः । नेदीयसी अन्तिकशब्दादीयसुप्रत्यये "अन्तिकबाढयोर्नेदसाधौ" इति नेदादेशः । समीपवर्त्तिनी, कुसुमापीडव्याजेन पुष्पमालाच्छलेन एवं वक्ष्यमाणरूपं उक्तवती । निरा-लम्बालापात्मकवाक्यविरचनासामर्थ्यमधिलक्ष्यैव सा माम् कथितवतीत्यर्थः । कथम् आसौ भवद्

---

যেন নিন্দিত কামবিকারাসক্ত না হয়" ইত্যাদি নিষেধবাক্য (এখন) ইহার পক্ষে নিরর্থক, যেহেতু কামব্যাপার-বিজৃম্ভিত ও বিবেক-বিনাশক নব যৌবন বর্ত্তমান।

(২) (প্রকাশ্যে) বয়স্য ! তাহার বংশ ও নাম জানিতে পারিয়াছ কি ?

(৩) মাধ। সখে! শ্রবণ কর, তৎপরে তাহার হস্তিনী-আরোহণকালেই একজন বারযোষিৎ অসংখ্য সখীসমূহ হইতে বিচ্ছিন্ন হইয়া পুষ্পচয়নব্যাজে বিলম্ব করিতে লাগিল এবং পুষ্পচয়নব্যাজেই ক্রমে আমার নিকটবর্ত্তিনী হইয়া প্রণাম করতঃ পুষ্পমালা উপলক্ষ করিয়া আমাকে বলিল,—মহাভাগ সুশ্লেষ

सन्निवेश:, कुतूहलिनी च नो भर्त्तृदारिका वर्त्तते, तस्यामभिनवो विचित्र: कुसुमेषुव्यापारस्तन्नवतु कृतार्थता वैदग्ध्यस्य, फलतु निर्माणरमणीयता, आसादयतु सरस एष भर्त्तृदारिकायां कण्ठावलम्बनमहार्घ्यतामिति। (३)

मकरन्द:। अहो! वैदग्ध्यम्। (४)

---

यस्य स सकाशात: "माली माल्याईयोरपी"ति विश्व:। सुश्लिष्टगुणतया सुसम्बद्धतया, सुमनसां पुष्पाणां सन्निवेशो रचनाप्रकारविशेष:, कुतूहलिनी पुष्पदामनि कौतुकवती, भर्त्तृदारिका प्रभुकन्या, कन्यार्थकदारिकाशब्दप्रयोग: अनूढात्वेनानुरागवर्द्धनाय, तस्यां मम भर्त्तृदारिकायां अभिनवो लोकोत्तर:, विचित्रचमत्कारकारी, कुसुमेषुव्यापार: माल्यरचनाप्रकार: अस्तीति शेष:। एतेन माल्यरचनातिकौशलशालिन्या तवैव ते रचनाप्राबीण्यं परीक्षणीयमित्याशय: सूचित:। वैदग्ध्यस्य रचनापाटवस्य, कृतार्थता विदग्धजनप्रशंसया चरितार्थता, निर्माणरमणीयता रचनामनोज्ञता फलतु अभिव्यञ्जनार्थत्वेन सफला भवतु। सरस: सद्यान: एष सन्निवेश:, कण्ठालम्बनेन कण्ठाभरणतया धारणेन महार्घतां बहुमूल्यतां आसादयतु प्राप्नोतु। अन्य पक्षे "सुश्लिष्टगुणतया उदग्रगुणसम्पर्केण सुमनसां शोभनमानसानां च: पुंसां, युवयोरित्यर्थ: औरवादबहुवचनम्।! सन्निवेश: संयोगरमणीय: आनुरूप्येणादरणीय:। कुतूहलिनी बालाहम्, अभिनव: अनन्यगामित्वान्नूतन: विचित्र: साधु: कुसुमेषो: कामस्य व्यापार: प्रकार:, वैदग्ध्यस्य सकलकलादिपरिशीलनस्य "लौकिके वैदिके कार्ये तथा सामयिकेऽपि च। सम्यक् परिचयो धीर्वैदग्ध्यमिति गीयते॥" इति लक्षणचिततस्येति यावत्। चरितार्थता उभयोरपि तुल्यतया कृतार्थता, निर्माणस्य उभयघटितन्यविधानव्यापारस्य रमणीयता मनोज्ञता फलतु अनुरूपसङ्गमेन कृतार्था भवतु। सरस: सानुराग: एष भवान् कण्ठालम्बनेन कण्ठालिङ्गनेन महार्घतां प्राप्नोतु। इत्थंदर्शितार्थध्वनिना लवङ्गिकावचस्य व्यक्तीकरणाद्दूतीकृत्यं सम्यक् सम्पादितमिति मन्तव्यम्।

(४) श्लिष्टपदसंघटनयेति शेष:।

---

सुसंलग्नतानिবন্ধন আপনার কুসুম-সন্নিবেশ (মালাগাঁথা) (বড়ই) রমণীয়। আমার প্রভুকন্যা বিশেষ কুতূহলিনী আছেন। তাঁহাতেও লোকাতীত আশ্চর্য্যজনক মাল্যরচনাশক্তি আছে, সুতরাং (তদর্শনে) আপনার নৈপুণ্যচরিতার্থতা ও রচনা-মনোহারিত্ব সফল হউক, এবং এই মালা ভর্ত্তৃদারিকার কণ্ঠসম্বদ্ধ হইয়া অমূল্যতা লাভ করুক।

(৪) মক। অহো ( বাক্যরচনার) কৌশল !!

माध। तया च मदनुयुक्तया समाख्यातमियममात्यभूरिवसोः प्रसूतिर्मालती नाम, अहञ्च प्रसादभूमिर्भर्तृदारिकायाः धात्रेयिका लवङ्गिका नामेति (५)

कल। [ सहर्षम्। ] किं णाम मालदि त्ति? दिट्ठिआ विलसिदं क्खु भअवदा देवेण कुसुमाउहेण, ता जिदं अह्मेहिम्। (८)

मक। अमात्यभूरिवसोरात्मजेत्यपर्याप्तिर्बहुमानस्य। (६)

अपि च। मालती मालतीति मोदते भगवती कामन्दकी, तां च किल राजा नन्दनाय प्रार्थयते इति किम्वदन्ती श्रूयते। (७)

---

(८) किं नाम मालतीति? दिष्ट्या विलसितं खलु भगवता देवेन कुसुमायुधेन, तज्जितमस्माभिः।

---

(५) तयेत्यादि। मदनुयुक्तया मया पृष्टया, प्रसूतिरपत्यम्। प्रसूतिपदोपादानं द्वितीयादि-स्थावर्तनेनोत्कर्षसूचनाय। प्रसादभूमिं विश्वासस्थानं। एतेन मयि शङ्का न कार्येति सूचितम्। धात्रेयिकेत्युपादानमनुग्रहणीयत्वमत्र सूचनाय।

(८) दिष्ट्या भाग्येन, विलसितं विजृम्भितं यतोऽस्यानुरागपात्रीयमिति भावः। जितमिति अर्थं मालत्यामतोऽस्माभिः इत्यधुना चित्रदर्शनं कर्तव्यमेव नैव भवेदित्याशयः।

(६) बहुमानस्य गौरवस्य, अपर्याप्तिः अपरिसीमा, अमात्यस्यात्मजेति तस्याः अभिजनकृतं अमात्यात्मजत्वमात्रमस्यापर्याप्तमेव गौरवहेतुरित्याशयः।

(७) अपर्याप्तिमुपपादयितुमाह—अपि चेति। मालती मालतीति सर्वं द्विरुक्तिः, तत्स्वार्थेति शेषः। मोदते हर्षविह्वला भवति, कामन्दकी नाममात्रेणैव कामन्दकी मोदत इति सा बहुमानपात्रीत्याशयः। ताञ्चेत्यादिना नन्दननिर्बन्धेन राज्ञः प्रार्थनया तस्या गौरवातिशयं दुर्लभत्वञ्च प्रतिपादितम्।

---

(৫) মাধ। আমি জিজ্ঞাসা করিলে সে বলিল, ইনি অমাত্য ভূরিবসুর কন্যা,—নাম মালতী, আমি প্রভুকন্যার বিশ্বস্তা ধাত্রেয়ী, নাম লবঙ্গিকা।

(৮) কল। (হর্ষের সহিত) কি মালতী? ভাগ্যক্রমেই কামদেবকর্তৃক বিলসিত হইয়াছেন, তবে আমরাই জয়লাভ করিলাম।

(৬-৭) মক। অমাত্য ভূরিবসুর কন্যা,—ইহা তাহার গৌরবের সীমা নহে। আরও দেখ, মালতী মালতী উচ্চারণ করিয়াই ভগবতী কামন্দকী হর্ষলাভ

माध। तया चाहमभ्यर्थ्यमानस्तां बकुलमालामात्मनः कण्ठादवतार्य्य दत्तवान्, असौ पुनरभिनिविष्टया दृशा मालतीमुखावलोकनविह्वलतया विषमविरचितैकभागामिव बहु मन्यमाना महानयं प्रसाद इति व्याहृत्य गृहीतवती, अनन्तरञ्च यात्राभङ्गप्रचलितस्य महतः पौरजनस्य सङ्कुलेन विघटितायां तस्यामागतोऽस्मि। (८)

मक। वयस्य! मालत्या अपि स्नेहदर्शनात् सुश्लिष्टमेतत्, योऽपि हि कपोलपाण्डुतादिचिह्नसूचितः प्राक् प्रवृत्तस्तस्याः कामाभिष्वङ्गः,

---

(८) माधवेत्यादि। तया लवङ्गिकया अभ्यर्थ्यमानः प्रियवचनैर्याच्यमानः, "अनुबध्यमानः" इति क्वचित् पाठः। सोऽप्य तदर्थक एव। कण्ठादवतार्य्येत्यनेन प्रियोपभुक्तसुततया मालायां मालत्याः समधिकादरसम्भावना सूचिता। असौ लवङ्गिका अभिनिविष्टया सादरसन्निवेशितया दृशा मालतीमुखावलोकनविह्वलतया मालतीवदनदर्शनव्याकुलतया तद्दर्शनाऽऽकृष्टचित्तत्वेन विकलहस्ततया वा विषमं पूर्वभागविलक्षणं यथा तथा, विरचितः ग्रथितः एकभागो यस्यास्तां तथाभूतां तामिव मालां बहुमन्यमाना श्लाघमाना, महाप्रसाद इत्याहृय। प्रसादः अनुग्रहः। यात्राया उत्सवस्य भङ्गेन समाप्त्या प्रचलितस्य अहमहमिकया धावितस्य पौरजनस्य, पौरनैगमजनस्येति पाठे "चातुर्वर्ण्यसमेतं सर्वजनावाससङ्कीर्णं। बहुकर्म्मकारयुक्तं यत्तन्निगम"मिति लक्षणयुक्तजनस्येत्यर्थः। सङ्कुलेन समावेशेन विघटितायां भेदप्राप्तिपातितायां तस्यां लवङ्गिकायाम्।

(९) माधवोत्कण्ठाविनोदनाय मकरन्दस्तस्मिन् मालत्या अनुरागं ज्ञातमपि पुनरिदं वदति—

---

करেন। নন্দনের জন্য (স্বয়ং) রাজা তাহাকে প্রার্থনা করিতেছেন এরূপ কিংবদন্তী শুনা যায়।

(৮) মাধ। তৎকর্তৃক প্রার্থিত হইয়া আমি নিজের কণ্ঠ হইতে বকুলমালা খুলিয়া দিলাম। মালতী মুখাবলোকনব্যাকুলতানিবন্ধন মালার শেষ ভাগ পূর্ব্বভাগের ন্যায় সুন্দর না হইলেও তাহাকেই সে অভিনিবিষ্ট দৃষ্টিতে প্রশংসা করিতে করিতে "ইহা মহা-অনুগ্রহ" এইকথা বলিয়া গ্রহণ করিল। অনন্তর উৎসবসমাপ্তিনিবন্ধন (সবেগে) ধাবিত পৌরজনসন্নিবেশদ্বারা সে অদৃশ্য হইলে আমিও চলিয়া আসিলাম।

(৯) মক। বয়স্য! তোমাদের উভয়েরই পরস্পর স্নেহ দেখা যায়, বলিয়া

कल। [उपसृत्य।] एदं चित्तफलग्रं। (ण)

( इति चित्रफलकं दर्शयति। उभौ पश्यतः।)

मक। कलहंसक! केनैतन्माधवस्य प्रतिबिम्बमभिलिखितम्?(११)

कल। जेण जेव्व से हिअअं अवहरिदम् (त)।

मक। अपि मालत्या? (१२)

कल। अधइं। (थ)

माध। वयस्य मकरन्द! प्रसन्नप्रायस्ते वितर्कः। (१३)

---

(ण) एतच्चित्रफलकम्।

(त) येनैवास्य हृदयमपहृतम्।

(थ) अथ किम्।

---

(ण) "त्वयि प्रागनुरागवती"मिति मकरन्दोक्तसमर्थने लब्धावसरस्य कलहंसस्य तत्काले चित्रदर्शनं सर्वथा समुचितम्।

(११) पूर्वापरपर्यालोचनेन मालत्यैव लिखितमित्यवानुमितत्वेऽपि सर्वथा सन्देहनिराकरणाय सामान्यतः पृच्छति—केनेति।

(त) मकरन्दस्य हृद्गतं भावं श्रोतुं कलहंसः उत्तरयति—येनेति। यन्निमित्तकोऽस्य कामविकारः, तेनैव लिखितमित्यर्थः।

(१२) अपि प्रश्ने। मालत्येति लिखितमिति शेषः।

(थ) अथ किमित्यभ्युपगमे, बाढं मालत्यैव लिखितमित्यर्थः।

(१३) प्रसन्नप्रायः संशयलक्षणमालिन्यक्षालनेन निर्मलः, तर्कः "त्वय्येव सा पूर्वमनुरक्ते"ति तर्कोह।

---

(ণ) কল। (উপস্থিত হইয়া) এই চিত্রফলক।

( চিত্রফলক দেখাইল ও উভয়ে অবলোকন করিতে লাগিল )

(১১) মক। কলহংসক! মাধবের এই প্রতিবিম্ব কে অঙ্কিত করিয়াছে?

(ত) কল। যৎকর্তৃক ইহার হৃদয় অপহৃত হইয়াছে।

(১২) মক। তবে কি মালতীকর্তৃক অঙ্কিত হইয়াছে?

(থ) কল। তাহাই (মালতীই অঙ্কিত করিয়াছে)।

(১৩) মাধ। বয়স্য মকরন্দ! তোমার তর্ক একপ্রকার সন্দেহ-রহিত।

मक । कलहंसक ! कुतोऽस्याधिगमः ? (१४)

कल । मए दाव मन्दारिआए हत्थादो, तएवि लवङ्गिआहत्थादो (ढ) ।

मक । अथ किमाह मन्दारिका माधवालेख्यप्रयोजनं मालत्याः ? (१५)

कल । उक्कण्ठाविणोदोत्ति (ध)

मक । वयस्य माधव ! सर्वथा समाश्वसिहि ।

या कौमुदी नयनयोर्भवतः सुजन्मा,
तस्या भवानपि मनोरथबन्धबन्धुः ।
तत्सङ्गमं प्रति सखे ! न हि संशयोऽस्ति,
यस्मिन् विधिश्च मदनश्च कृताभियोगः ॥ (१६)

---

(ढ) मया तावत् मन्दारिकाया हस्तात् तयापि लवङ्गिकाहस्तात् ।

(ध) उत्कण्ठाविनोद इति ।

---

(१४) कुतः कस्माज्जनात्, अस्य चित्रफलकस्य, अधिगमः प्राप्तिः तवेति शेषः ।

(ढ) 'अस्याधिगम' इति पूर्वेण सम्बन्धः ।

(ध) उत्कण्ठाविनोद इति प्रयोजनमित्यनेन सम्बन्धः । माधवासक्ता मालती तद्दर्शना-सहिष्णुः साक्षात्समागमासम्भवात् लेख्यनिरीक्षणेनैवात्मानं कथञ्चिदङ्ग'व गमयतीत्यर्थः ।

(१६) धीति । हे सखे ! या मालती भवतः नयनयोर्द्वयोः, कौमुदी ज्योत्स्ना अतिशयाह्लाद-जननीत्यर्थः । सुजन्मा शोभनजन्मा भवानपि तस्याः मनोरथस्य अभिलाषस्य बन्धाय बन्धनाय बन्धुः प्रियः, सापि त्वय्येव मनोरथं बध्नातीत्यर्थः । तत् तस्मात् उभयोस्तुल्यानुरागात् सङ्गमं उभयोर्मिलनं प्रति संशयः सन्देहः न हि अस्ति । ननु परस्परानुरागसद्भावेऽपि दैवकन्दर्प-प्रातिकूल्यादलाभः स्यादाशङ्कायामाह—यस्मिन्निति । यस्मिन् सङ्गमे विधिः अदृष्टं मदनः कामश्च

---

(১৪) মক। কলহংসক। কাহার নিকট ইহা পাইলে ?

(ঢ) কল। আমি মন্দারিকার হস্ত হইতে (পাইয়াছি) ও মন্দারিকা লবঙ্গিকার হস্ত হইতে (পাইয়াছে)

(১৫) মক। মন্দারিকা মাধবালেখ্যে মালতীর কি প্রয়োজন বলিয়াছে ?

(ধ) কল। উৎকণ্ঠাবিনোদনই প্রয়োজন।

(১৬) মক। বয়স্য মাধব। সর্ব্বথা আশ্বস্ত হও। হে সখে। যেই

द्रष्टव्यस्वरूपा च भवतो विकारहेतुः तदत्रैव लिख्यतां मालती। (१७)

माध। यदभिरुचितं वयस्याय, तदुपनय चित्रफलकं चित्रवर्त्तिकाश्च (१८)। [मकरन्द उपनयति]।

माध। [लिखन्]। सखे मकरन्द!

वारंवारं तिरयति दृशोरुद्गमं वाष्पपूर-
स्तत्सङ्कल्पोपहितजड़िमा स्तम्भमभ्येति गात्रम्।
सद्यः स्विद्यन्नयमविरतोत्कम्पलोलाङ्गुलीकः,
पाणिर्लेखाविधिषु नितरां वर्त्तते. किङ्करोमि॥ (१९)

---

कृताभियोगं कृतयत्नः। एकस्य प्रयत्न उभयोरनुरूपनिर्म्माणैकदेशसम्पादनादिभिः अपरस्य च अद्वितीयगुणगणादिसम्पादनादिभिः सुव्यक्तः। वसन्ततिलकं वृत्तम्।

(१७) भवतो विकारस्य कामभावस्य हेतुं उत्पादयित्री मालती द्रष्टव्यं मयाप्यवलोकनीयं स्वरूपं आकृतिर्यस्याः तथाभूता, ममापि मालतीप्रतिकृतिदर्शनोत्कण्ठा वर्त्तते इत्यर्थः। तत् तस्मात् अत्रैव चित्रफलके।

(१८) वयस्यायेति रुच्यर्थधातुयोगे संप्रदाने चतुर्थी। तद्विधीयत इति शेषः। चित्रवर्त्तिकाः तूलिकादिचित्रोपकरणानि।

(१९) वारं वारमिति। वाष्पपूरः तदनुध्यानसमुत्पन्नाश्रुप्रवाहः वारं वारं पुनः पुनः

---

मालती তোমার নয়নের (আহ্লাদজনিকা) কৌমুদীস্বরূপ, শোভনজন্মা তুমিও তাহার মনোরথবন্ধনের জন্য প্রিয়, সুতরাং তোমাদের সম্মিলনে (কোনও) সন্দেহ নাই। যাহাতে বিধাতা এবং মদনও যত্নবান্ বলিয়া মনে হয়।

(১৭) আপনার বিকারহেতু মালতীর প্রতিকৃতি আমারও দ্রষ্টব্য, অতএব এই চিত্রফলকেই মালতীকে অঙ্কিত করুন।

(১৮) মাধ। বয়স্যের যেরূপ অভিরুচি, তবে চিত্রফলক ও তূলিকাদি চিত্রোপকরণ আনয়ন কর। (মকরন্দ আনয়ন করিল।)

(১৯) মাধ। ( [illegible] ) [illegible]

तथापि व्यवसितोऽस्मि (२०)। [ चिरादभिलिख्य प्रदर्शयति ]।

मक। [ विलोक्य ]। उपपन्नस्तावदत्र भवतोऽभिष्वङ्गः। [ सकौतुकम् ]। कथमचिरेणैव निर्माय लिखितः श्लोकः (२१)। [ वाचयति ]।

---

सज्यमानोऽपीत्यर्थः। दृशोः चक्षुषोः, उद्गमं प्रचारं निरयति (तिरस्करोतीत्यर्थः तिरस् + इन् + ति) आच्छादयति। "दृशावुद्गत" इति पाठे उद्गतो बाष्पपुरः दृशौ तिरयतीत्यर्थः। तस्याः, मदङ्गेन निरन्तरानुचिन्तनेन उपहित, प्रायः जाड्यमा क्रियास्वपाटव येन तादृशं गात्रं सर्व्वं कार्य्यांचमत्वं अभ्युपैति प्राप्नोति। अथ मम पाणिः करः मदा' तत्क्षणात् लेखनारम्भसमय एवेत्यर्थः, स्विद्यन् स्वेदजलेनार्द्रीभवन् शिक्षाविधिषु लिखनक्रियासु नितरां मातिमद यथा तथा अविरतोत्कम्पेन अविच्छिन्नवेपथुना लोलायमाना अङ्गुली यस्य तादृशी वर्त्तते, अङ्गुलीनामेव लिखनहेतुतया तत्साचल्यात् लिखितुं नार्हामीत्यर्थः। "नतरा"मिति पाठे मम तादृशः पाणिः नतरां नैव शिक्षाविधिषु वर्त्तते इत्यर्थः। अत्र किं करोमि ? यथायथं तदाकृतिप्रकाशनं सम्प्रति दुर्घटमित्याशयः। अनेनाश्रुजाड्यस्तम्भस्वेदकम्पाः सात्त्विकभावा उक्ता। तेषां लक्षणानि यथा— "अश्रुनेत्रोद्भवं वारि दुःखक्रोधप्रहर्षजम्।" "क्रियास्वपाटवं जाड्यं चिन्तोत्कण्ठाभयादिभिः। स्तम्भश्चेष्टाप्रतिघातो भयरागामयादिभिः॥" "वपुर्जलोद्गमः स्वेदः रतिघर्मश्रमादिभिः। रागरोगभयादिभ्यः कम्पो गात्रस्य वेपथुः"॥ मन्दाक्रान्ता वृत्तम्।

(२०) व्यवसितः आलेख्यलेखने उद्युक्त।

(२१) मालत्या नैवप्रथमवश्यमेष्यतीत्याशयेनेति भाव।

---

অশ্রুপ্রবাহ ( উদ্গত হইয়া ) বার বার আমার নেত্রবৃত্তি আচ্ছাদিত করিতেছে। নিরন্তর মালতীর অনুচিন্তনবশে জড়তাপ্রাপ্ত করিয়া শরীর কার্য্যে অক্ষম হইতেছে। ক্রিয়াপ্রারম্ভেই আমার হস্ত ঘর্ম্মাক্ত ও অতিশয় অবিচ্ছিন্ন কম্পনবশতঃ চঞ্চলাঙ্গুলি হইতেছে, আমি কি করিব ?

(২০) তথাপিও আমি আলেখ্যলেখনে উদ্যুক্ত আছি। ( বহুকালে অঙ্কিত করিয়া দেখাইলেন। )

(২১) মক। ( অবলোকন করিয়া ) এই মালতীতে তোমার আসক্তি যুক্তই হইয়াছে। ( কৌতুকের সহিত ) কি! অচির কালমধ্যে একটি শ্লোকও নির্ম্মাণ করিয়া লিখিয়াছ। (পড়িতে লাগিলেন)।

जगति जयिनस्ते ते भावा नवेन्दुकलादयः,
प्रकृतिमधुराः सन्त्येवान्ये मनो मदयन्ति ये ।
मम तु यदियं याता लोके विलोचनचन्द्रिका,
नयनविषयं जन्मन्येकः स एव महोत्सवः ॥ (२२)

---

(२१) जयन्तीति। जगति भुवने जयिनः पुष्पसायकसाहाय्यसम्पादनेन विरहिजनमथ-नशीलाः प्रकृतिमधुराः स्वभावसुन्दराः अन्ये मालतीव्यतिरिक्ताः ते प्रसिद्धाः ते नवेन्दुकलादयः शास्त्रप्रसिद्धाः सन्तु । नवेन्दुपदग्रहणात् प्रथमचन्द्रदर्शनस्यैवाधिकहर्षप्रदत्वप्रसिद्धेरुक्तं नवेति । आदिना कुमुदकह्लारादिपरिग्रहः । भावाः पदार्थाः अथवा भावयन्ति इति भावाः सुन्दरतया भाव-नार्हाः. सन्त्येव,ये मनः विवेकरहितानां मादृशानामपराधीनतया वा चित्तं मदयन्ति सक्षोभयन्ति । तु किन्तु लोके भुवने विलोचनचन्द्रिका समधिकाह्लादकत्वेन नेत्रज्योत्स्ना इयं मालती मम नयन-विषयं भावप्रधाननिर्देशात् नयनगोचरत्वं यद्याता प्राप्ता तस्या यद्दर्शनं यातमित्यर्थः । स एव जन्मनि जन्मन्येवेति शेषः । एकः अद्वितीयः महोत्सवः आनन्दहेतुः । मालतीव्यतिरिक्ता आह्लादप्रदत्वेन प्रसिद्धा ये चन्द्रादयः सन्ति तेषु मालतीवदनावलोकनात् भिन्नरुचित्वाद् अन्येषामाह्लादकत्व-मस्ति चेदस्तु मम तु तद्दर्शनमेव तदनुरागादधिकं भवतु मास्वाभूत् । यावज्जीवं महान् उत्सव इत्याशयः । एतेन मालत्यां माधवानुरागः प्रदर्शितः । अत्र प्रकृतसमानलिङ्गभागित्वात् "स" इति पुंस्त्वम् । अथ चन्द्रादौ स्वीयाह्लादजनकत्वं नास्तीति वचनानन्तरमाह्लादप्रदत्वेनोत्कर्षद्योतनार्थं मालत्यां विलोचनचन्द्रिकेति चन्द्रिकात्वारोपश्च माधवस्य स्ववचो व्याहतमिति चेन्न यथा चन्द्रिकालोकस्य लोचनानन्दविधायिनीति प्रसिद्धिः, तथा मम मालत्येवेति हृदि निधाय केवलं लोकप्रसिद्धा चन्द्रिकात्वारोपेणैव व्याहतत्वस्य परिहृतत्वात् । वाचिकोऽयं रसः । यथोक्तं—"रसानुरूपैरालापैः श्लोकैर्वाक्यैः पदैस्तथा । नानालङ्कारसंयुक्तैर्वाचिको रस इष्यते ॥" अत्र प्रकृति-मधुरत्वसाम्येऽपि मालत्या एव हर्षजनकत्वोत्कीर्तनाद्व्यतिरेकः, विलोचनचन्द्रिकेति रूपकं निरपेक्षणात् संसृष्ट्यलङ्कारः । हरिणीवृत्तम् । तल्लक्षणं यथा—"नसमरसलागः षड्वेदैर्हयैर्हरिणी मता ।"

---

(২২) জগতে বিজয়ী নূতন চন্দ্রকলা প্রভৃতি স্বভাবসুন্দর অন্য বহু পদার্থই প্রসিদ্ধ আছে, যাহারা (অন্যের) মনস্তুষ্টিবিধান করে। কিন্তু ভুবনে লোচন-চন্দ্রিকাস্বরূপ এই মালতী যে আমার নেত্রপথবর্তিনী হইয়াছে, তাহাই আমার ইহ জন্মে একমাত্র মহোৎসবস্বরূপ।

[ प्रविश्य (२३) सत्वरं मन्दारिका ]। कलहंसअ! पदाणुसारेण उवलद्धोसि। [ माधवमकरन्दौ दृष्ट्वा सलज्जम् ]। कधं, तेवि महाणुभावा इधज्जेव्व? (न)। [ उपसृत्य प्रणमति। ]

उभौ। मन्दारिके! इहास्यताम्। (२४)

मन्दा। [उपविश्य।] कलहंसअ! उवणेहि मे चित्तफलअं। (प)

कल। [ गृहीत्वा। ] गेह्ण एदम्। (फ)

मन्दा। [ विलोक्य ]। कलहंसअ! केण उण, किंणिमित्तं वा, एत्थ मालदी आलिहिदा? (ब)

---

(न) कलहंसक! पदानुसारेण उपलब्धोऽसि। कथं तेऽपि महानुभावा इहैव?

(प) कलहंसक! उपनय मे चित्रफलकम्।

(फ) गृहाणेदम्।

(ब) कलहंसक! केन पुनः किं निमित्तं वा अत्र मालती आलिखिता?

---

(२३) अत्र पटीक्षेपेण प्रविशत्वेव प्रविश्य व्याख्याने।

(न) क्वचित् कलहंसक इत्यनन्तरं "कलहंस! धीर धीर" इत्यधिकः पाठः। तत्र विहगि- सम्बुद्धिमनुसरनाम। धीर इति सम्बोधनस्य तथा धीरेण मदमेहादपहृत्य चित्रफलकमानीतमित्युप- हासवचनम्। पदानुसारेण पदन्यासचिह्नानुसारेणेत्यर्थः। उपलब्धमिति तत्सम्बन्धिनी तेन माधवेनानुरक्तामालतीचित्ररचना युक्ता। तेऽपीति ये चित्रफलके लिखिता इत्यर्थः। गौरवार्थकं बहुवचनम्। अथवा द्वित्वे बहुवचन—ने पूर्व्वमेव न इत्यर्थः।

(२४) इहास्यतामित्यादरोक्तिरनन्तरकार्य्यमाहात्म्यख्यापनाय।

---

(न) মন্দারিকা। (সত্বর প্রবিষ্ট হইয়া) কলহংসক! তোমার পদচিহ্নানুসারে আসিয়া তোমাকে প্রাপ্ত হইলাম। (মাধব ও মকরন্দকে দেখিয়া সলজ্জ ভাবে) একি সেই মহাপুরুষগণও (দেখি) এখানেই? (নিকটে আসিয়া প্রণাম)।

(২৪) উভয়ে। মন্দারিকে! এস্থানে উপবেশন কর।

(প) মন্দা। (উপবেশন করিয়া) কলহংসক! আমার চিত্রফলক আনয়ন কর।

(ফ) কল। (গ্রহণ করিয়া) এই গ্রহণ কর।

(ব) মন্দা। (বিলোকন করিয়া) কলহংসক! কে আবার কি নিমিত্ত ইহাতে মালতীর প্রতিকৃতি লিখিল?

कल। जो जेण णिमित्तेण मालदीए (भ)।

मन्दा। [ सहर्षं ]। दिट्ठिआ दंसिदफलं दाणिं विण्णाण पआवइणो (म)।

मक। मन्दारिके ! यदत्र वस्तुनि एष ते वल्लभः कथयति, अपि तथा तत् ? (२५)

मन्दा। महाभाअ ! अध इम्। (य)

मक। क्व पुनर्मालती माधवं प्राग् दृष्टवती ? (२६)

(भ) यः येन निमित्तेन मालत्या।

(म) दिष्ट्या दर्शितफलमिदानीं विज्ञानं प्रजापतेः।

(य) महाभाग ! अथ किम् ?

(भ) अभिलिखितः इति शेषः। यथाच मालत्या विनोदनिमित्त माधवो लिखितः, माधवेनापि विनोदनिमित्तं मालती लिखितेत्यर्थः।

(म) सहर्षमित्यादि, दूयत्यापारस्य फलोत्पन्नत्वं हर्षहेतुः। प्रजापतेः स्रष्टुः विज्ञानं शिल्पकौशलं इदानीं उपदर्शितफलं सञ्जातमिति शेषः। ईदृगनुरूपदम्पत्योरप्यादिसम्बन्धद्वय-विषयोऽस्य परस्परानुराग एव फलमिति तद्विघटनान्मफलं विधातुः शिल्पकौशलमिति भावः।

(२५) अत्र प्रतिकृतिरूपे वस्तुनि एष ते वल्लभः स्वामी कलहंसः यत् कथयति, उत्कण्ठा-विनोदनाय मालत्या लिखितमिति यद् ब्रवीति, अपि तथ, तत्तथा ? तत् किं सत्यम् ?

(य) अथ किमित्यभ्युपगमे तदवितथमेवेत्यर्थः।

(२६) पूर्वमनवलोकने मालत्या उत्कण्ठाविनोदनाय माधवस्याभिलेखनासम्भवादवलोकनस्य चापरिज्ञातत्वात् पृच्छति—क्वेति।

(भ) कल। मालती যে নিমিত্ত যাহাকে লিখিয়াছিল।

(ম) মন্দা। ( হর্ষের সহিত ) ভাগ্যক্রমে ইদানীং প্রজাপতির শিল্পকৌশল সফল হইল।

(২৫) মক। মন্দারিকে ? এ বিষয়ে তোমার ভর্ত্তা কলহংস যাহা বলিতেছে, তাহা কি ঠিক ?

(য) মন্দা। মহাভাগ ! অবশ্যই ঠিক।

(২৬) মক। ( তবে ) মালতী পূর্ব্বে কোথায় মাধবকে দেখিয়াছিল ?

मन्दा। लवङ्गिआ भणादि, वादाअणगदेत्ति। (र)

मक। वयस्य! ननु अमात्यभवनाध्वरथ्ययैव बहुशः सञ्चरावहे, तदुपपन्नमेतत्। (२७)

मन्दा। अणुमण्णन्तु मं महाणुभावा, जाव एदं भअवदो देवस्स मअणस्स सुचरिदं पिअसहीए लवङ्गिआए णिवेदेमि (ल)

मक। प्राप्तावसरमेतद्भवत्याः। (२८)

[ मन्दारिका चित्रफलकं गृहीत्वा निष्क्रान्ता ]।

---

(र) लवङ्गिका भणति वातायनगतेति।

(ल) अनुमन्येतां मां महानुभावौ, यावदिदं भगवतो देवस्य मदनस्य सुचरितं प्रियसख्या लवङ्गिकाया निवेदयामि।

---

(र) वातायनगता गवाक्षवर्त्तिनी (सती) दृष्टवतीत्यनेन सम्बन्धः।

(२७) तत् तस्मात् अमात्यालयसन्निहितवर्त्मनि बहुशो गमनात्, एतत्वातायनवर्त्तिन्या मालत्या माधवस्य सन्दर्शनं उपपन्नं युक्तिसिद्धं विश्वसनीयमित्यर्थः।

(ल) भगवतः अचीन्त्यमाहात्म्यस्य अघटनघटनपटीयस इति यावत्। देवस्य अन्योऽन्यानुरागसम्वर्द्धनादिक्रीडाशीलस्य मदनस्य कामस्य सुचरितं एतदनुरागवर्द्धनरूपं सुसमाचारम्। लवङ्गिकायाः इति सम्बन्धे षष्ठी। "लवङ्गिकायै" इति क्वचित् पाठः। लवङ्गिकयैवाहमत्र नियुक्तेति तस्यै अहं निवेदयामि पश्चात् सा यथोचितमाचरिष्यतीति भावः।

(२८) एतत् माधवानुरागनिवेदनादिकं प्राप्तावसरं लब्धावकाशम्।

---

(র) মন্দা। লবঙ্গিকা বলেন, জানালায় যাইয়া দেখিয়াছিল।

(২৭) অমাত্যভবনের সন্নিহিত পথ দিয়া আমরা বহু বার যাতায়াত করিয়াছি, সুতরাং ইহা ( গবাক্ষ হইতে দর্শন ) হইতে পারে।

(ল) মন্দা। তবে আপনারা অনুমতি করুণ যে, ভগবান্ কামদেবের ( অন্যোন্যের অনুরাগবর্দ্ধনরূপ ) এই সুসমাচার যাইয়া প্রিয়সখী লবঙ্গিকার নিকট নিবেদন করি।

(২৮) মক। মাধবের অনুরাগাদি নিবেদন করিবার তোমার এই অবকাশ বটে।

( মন্দারিকা চিত্রফলক গ্রহণ করিয়া নিষ্ক্রান্ত হইল )।

मक। वयस्य! खरतरकिरणोऽयं भगवान् सहस्रदीधितिः अलङ्करोति मध्यमह्नः, तदेहि संस्थायमेव गच्छावः। (२८)[इत्युत्थाय परिक्रामतः]।

माध। एवं हि मन्ये।

घर्माम्भोविसरविवर्त्तनैरिदानीम् मुग्धाक्ष्याः परिजनवारसुन्दरीणाम्।
तत्प्रातर्विहितविचित्रपत्रलेखावैदग्ध्यं जहति कपोलकुङ्कुमानि॥ ३०

---

(२८) सहस्रदीधिति सूर्य्यः। सहस्रार्थे सदनं "सहस्राय सन्निवेशे च सघातेऽपि च दृश्यते" इति मेदिनी।

(३०) घर्म्मेति। इदानीं मध्याह्ने मुग्धे अक्षिणी यस्या तस्या मालत्या परिजनवारसुन्दरीणां परिचारिकाणां वारविलासिनीनां कपोलयोर्गण्डस्थलयोरनुलिप्तानि कुङ्कुमानि (कर्त्तृणि), पत्रेणानुलेपनविशेषः कथितः। यथोक्तं—"वैदग्ध्ये गौणोपचारितं स्तनयोर्वा कपोलयोः। उन्मादने नयनयोर्यत्तत्स्यादनुलेपनम्॥" घर्म्माम्भसां स्वेदजलानां विसरस्य समूहस्य "समूहे निवह-व्यूहसन्दोहविसरव्रजा" इत्यमरः। विवर्त्तनैः प्रसरणैः करणैः तत् पूर्व्वाह्णे मया अवलोकितम्, प्रातर्विहितानां माङ्गलिकतया प्रभातसमये विरचितानां विचित्राणां चमत्कारकारिणीनां पत्रलेखानां पत्रावलीनां वैदग्ध्यं सौन्दर्य्यं (कर्म्म) जहति त्यजन्ति। पत्राकारविरचितविचित्रचित्र-भूषणानि स्वेदवशात् विनष्टसौन्दर्य्याणीदानीं जातानीति भावः। मालत्याः कन्यात्वेन पत्रा-वल्यभावात्तत्परिजनेत्युक्तं। अस्मादावस्थतया वर्णितत्तत्सम्बन्धकथायाश्च एव स्वभावसिद्धत्वेन तत्परिजनवर्णनमपि न विरुद्धं। यथोक्तं—"तत्सम्बद्धकथा युङ्क्ते सर्व्वावस्थागतामिह" इति। प्रहर्षिणीवृत्तम्। "त्र्याशाभिर्म्मनजरगा प्रहर्षिणीयम्" इति तल्लक्षणम्।

---

(২৯) মক। হে বয়স্য! প্রখরকিরণ ভগবান্ সূর্য্যদেব মধ্যাহ্নকাল অলঙ্কৃত করিতেছেন; সুতরাং এস, আমরা গৃহেই গমন করি। (উঠিয়া পরিক্রমণ)।

(৩০) মাধ। আমার এইরূপ মনে হয় যে, এই মধ্যাহ্ন কালে মুগ্ধাক্ষী মালতীর পরিচারিকা বারবিলাসিনীদিগের কপোলানুলিপ্ত কুঙ্কুমসকল স্বেদজলসমূহের সঞ্চারবশতঃ সেই প্রাতঃকালবিহিত বিচিত্র পত্রাবলীর সৌন্দর্য্য পরিত্যাগ করিয়াছে।

अपि च—उन्मीलन्मुकुलकरालकुन्दकोश-
प्रश्च्योतद्घनमकरन्दगन्धबन्धो ! ।
तामीषत्प्रचलविलोचनां नताङ्गी-
मालिङ्गन् पवन ! मम स्पृशाङ्गमङ्गम् ॥ ३१

मक । (स्वगतम्) अभिद्रवति, हन्त कथमेव माधवम्
सुकुमारकायमनवग्रहः स्मरः ।
अचिरेण वैकृतविवर्त्तदारुणः
कलभं कठोर इव कूटपाकलः ॥ ३२

---

(३१) उन्मादावस्थतया वायोरचेतनस्यैव प्रार्थनाप्रकारमत्वमपर्य्यालोचयन्नेव तं प्रार्थयते—उन्मीलदिति । उन्मीलितानि ईषद्विकाशितानि यानि मुकुलानि कुड्मलानि तैः करालस्य दन्तुरस्य "करालो दन्तुरे तुङ्गे" इत्यमरः । कुन्दस्य योषात् कुड्मलात् "कोषोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः" इत्यमरः । प्रश्च्योतन् गलन् घनः निविडो यो मकरन्दः पुष्परसः तद्गन्धस्य बन्धुः सहचरः, हे तादृश पवन । तां ईषत्प्रचले विलासवशात् किञ्चिच्चले लोचने नेत्रे यस्यास्ताम् अथवा निरङ्के पवनस्य दुःसहत्वादभयेन समन्ताच्चालितनेत्रां नताङ्गीं पीवरस्तनभरेण तु सर्वविग्रहदारैव वा अवनताङ्गीं तां मालतीं आलिङ्गन् स्पृशन् मम अङ्गं अङ्गं प्रत्यवयवं स्पृश । अत्र कुन्दकोषसम्पर्केण गतिप्रतिबन्धान्मान्द्यं मकरन्दसम्बन्धकथनात् शीतलत्वं, गन्धबन्धुतया सौगन्ध्यञ्च प्रतिपादितं, एवम्भूतोऽपि विरहिदाहकत्वस्य यदप्यसमर्थस्तदपि मत्प्रियाङ्गस्पर्शेन शीतलो भूत्वा स्पृशसि तदेव मे प्राणनिर्वापकः स्यात् । अत्रापि प्रहर्षिणीवृत्तम् । अस्यानुरूपः श्लोकः—वाहि वात ! यतः कान्ता तां स्पृष्ट्वा मामपि स्पृश । त्वयि मे गात्रसंस्पर्शश्चन्द्रे दृष्टिसमागमे ॥

३२ । अभिद्रवतीति । अनवग्रहः प्रतिबन्धरहितः अनिवार्य्य इति यावत् । एष स्मरः कामः सुकुमारकायं कोमलकलेवरं माधवं विकृतानां वैषम्यमापन्नानां (वातपित्तकफानामन्यथः) अयं वैकृतः स चासौ विवर्त्तः परिणामश्चेति वैकृतविवर्त्तः तेन दारुणो भयङ्करः

---

(৩১) যেই কুন্দলতা ঈষদ্বিকসিত মুকুলদ্বারা সন্নাহদন্ত বর্ণিয়া প্রতীয়মান, তাহার কুট্মলক্ষরিত নিবিড় পুষ্পরসের গন্ধসহচর হে পবন! তুমি কিঞ্চিৎ চলনেত্রা অবনতাঙ্গী সেই মালতীকে আলিঙ্গন করিয়া আমার প্রতি অঙ্গে অঙ্গে স্পর্শ কর।

(৩২) মক। (স্বগত) হায়! বায়ুপিত্তকফ-সন্নিপাত-নিবন্ধন ভীষণ ঔষধত্র

तदत्र भगवती कामन्दकी नः शरणम् ( ३३ )

माध। [ स्वगतम् ] आश्चर्य्यम् !

पश्यामि तामित इतः पुरतश्च पश्चात्
अन्तर्बहिः परित एव विवर्त्तमानाम् ।
उद्बुद्धमुग्धकनकाब्जनिभं वहन्ती-
मासक्तितिर्य्यगपवर्त्तितदृष्टि वक्त्रम् ॥ ( ३४ )

---

वातपित्तकफसन्निपातभीषणस्य इत्यर्थः, अत एव कठोरः अतितीव्रः दुश्चिकित्स्य इति यावत्। कूटेन कपटेनाकस्मादागत्य पातयतीति कूटपाकलः, पृषोदरादित्वात् साधुः, गजज्वरविशेषः। यथोक्तं वैद्यके—"यथाभिवध्यात् कूटेन मृगयुश्च वनेचरः। तथा पातात्मको नाग हन्ति वै कूटपाकलः॥" अपरञ्च—"गज वातज्वरो हन्ति तथा वै कूटपाकलः" इति। कलभं करिशावकमिव अचिरेण सहसैव तनूपतिश्चत्व एवेत्यर्थः। कथं अभिहन्ति अतीव प्रहरति पीडयतीति यावत्। अत्र अरोऽपि वैकृतविवर्त्तदारुणः स्वविकारपरिणामभीषणः, कठोरश्चोऽत्रार्थकः। हन्तेति विषादे—"हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयो"रिति कोषः। अत्र हन्ति हन्तेति छेकानुप्रासः। कूटपाकलः कलभमिव स्मरः माधवं हन्तीति पूर्णोपमा अप्रस्तुतस्य स्त्वनयोः संसृष्टिः। मञ्जुभाषिणीवृत्तम् तल्लक्षणं यथा—"सजसा जगौ च यदि मञ्जुभाषिणी"ति॥

३३। तदत्रेति। अत्र अस्यां माधवस्यावस्थायां, भगवती ज्ञानसम्पन्ना, शरणं रक्षिका, नान्यत आत्मागतिरस्तीत्यर्थः। द्वितीयाङ्कवर्णनीयस्य मकरन्देन कामन्दकीं मदनोद्यान-वृत्तान्तवर्णना निवेदनस्यात्र सूचनादङ्कावतारोऽयं। तदुक्तं—"अङ्कावसाने यत्रैव भाविनोऽङ्कस्य सूचने। वस्तुनोऽनुपोद्घाते सोऽङ्कावतार इष्यते॥" दर्पणोक्तलक्षणं यथा—"अङ्कान्ते सूचितः पात्रैस्तदङ्कस्याविभागतः। यत्राङ्कोऽवतरत्येषोऽङ्कावतार इति स्मृतः॥"

३४। उन्मादावस्थामुखकं तन्मयत्वमाह—पश्यामीति। उद्बुद्धं विकसितं मुग्धं मनोज्ञं यत् कनकाब्जं सुवर्णपद्मं तन्निभं तत्सदृशं तथा आसक्त्या मय्यनुरागेण तिर्य्यगपवर्त्तिता

---

গজজ্বর যেমন অচিরেই করিশাবককে পীড়া দেয়, সেইরূপ এই অনিবার্য্য কামদেব সুকোমলদেহের মাধবকে অচিরকালমধ্যেই পীড়া দিতেছে কেন ?

(৩৩) অতএব মাধবের এই অবস্থাতে ভগবতী কামন্দকীই আমাদের রক্ষয়িত্রী।

(৩৪) মাধ। (স্বগতঃ) কি আশ্চর্য্য ! ! অনুরাগবশতঃ ( আমাকে দেখিবার

[ प्रकाशं ] वयस्य ! मम हि सम्प्रति,—

प्रसरति परिमाथी कोऽप्ययं देहदाह-
स्तिरयति करणानां ग्राहकत्वं प्रमोहः ।
रणरणकविवृद्धिं बिभ्रदावर्त्तमानम्,
ज्वलति हृदयमन्तस्तन्मयत्वञ्च धत्ते ॥ ( ३५ )

---

पश्चात् स्थितस्य मम दयमानपेषदवक्रीकृता दृष्टिर्येन तादृशं वक्रं वदनं वहन्तीं धारयन्तीं सा मदनोद्यानमध्यालोकिता मालती इत. उभयपार्श्वे, पुरत. सम्मुखप्रदेशे, पश्चात् पृष्ठदेशे, अन्तर-भ्यन्तरे, बहि. बहिरङ्गेषु च किं वा विशेषनिर्देशेन परित सर्वत एव विवर्त्तमाना स्फुरन्ती विद्यमाना अथवा विवर्त्तमाना एकामपि बहुधा प्रतिभासमाना पश्यामि अवलोकयामि । यत्रैव नेत्रे नयामि, तत्रैव तामवलोकयामीति कथं तन्मयमेव भुवन जातमित्याश्चर्यमित्यर्थ. । "यो येन भावेनाविष्ट सुवर्दर्शनस्य वा । स तदाहितसंस्कार. सर्वं पश्यति तन्मय" मित्युक्तेर मालतीममाविशितचित्तस्य माधवस्य तदानीं तन्मयत्वदर्शन युक्तमेव । अत्रेद हेमाम्बुजकाञ्जि-मिभमिति समासगतोपमालङ्कार' । वसन्ततिलक वृत्तम् ।

३५ । आत्मनोऽनुभूतामवस्था वयस्याय निवेदयति—प्रसरतीति । परिमाथी परिमथन-शील: परिपीडनस्वभाव इति यावत् । कोऽपि अनिर्वचनीय: अविदितनिमित्त इत्यर्थ' । अय अनुभूयमान' देहदाह' शरीरतापः कामज्वर इति यावत, प्रसरति सर्व्वतो व्याप्नोति । प्रमोह. मालत्यलाभजनितवैचित्त्य करणानां इन्द्रियाणा "करण साधकतमं क्षेत्रगात्रे-न्द्रियेष्वपो"त्यमर । ग्राहकत्व रूपादिस्वस्वविषयग्राहकशक्ति तिरयति—आच्छादयति । आवर्त्त-मान कामाग्निना क्वाथ्यमानं "आवर्त्तन क्वाथन स्या"दिति हैम' । मम हृदय रणरणक उद्वेग "रणरणक उद्वेग" इति हैम' । तस्य विवृद्धि उपचय बिभ्रत दधानं सत् अन्तर्मध्ये ज्वलति सन्तापमनुभवति । तन्मयत्व' निरन्तरचिन्तया मालतीमयत्वञ्च धत्ते समाश्रयति । मालतीमथवमी ग्राहकनिषेधार्थं सम्प्रति सञ्जीवनौषधं वीचेदैव मनङ्कुदग्धमर्च्याहस्य जीवन-

---

স্তন ) পশ্চাদ্দিকে ঈষৎ বক্রীকৃতদৃষ্টি বিকাশিত মনোহর সুবর্ণসরোজবদনা সেই মালতীকে বামপার্শ্বে, দক্ষিণপার্শ্বে, সম্মুখে, পৃষ্ঠদেশে, অভ্যন্তরে ও বাহিরে (অথবা অধিক আর কি বলিব ) সর্ব্বত্রই বিশেষরূপে বর্ত্তমান দেখিতেছি ।

(৩৫) (প্রকাশ্যে) বয়স্য ! সম্প্রতি পরিপীড়নস্বভাব অনির্ব্বচনীয় কামজ্বর আমার সর্ব্বত্র ব্যাপ্ত হইতেছে। মোহ ইন্দ্রিয়গণের স্ব স্ব বিষয়গ্রহণশক্তি

इति निष्क्रान्ताः सर्वे । ( ३६ )

इति बकुलवीथी नाम प्रथमोऽङ्कः । ( ३७ )

धारणमेवाशक्यमभूदित्यर्थः । अत्रैकस्य हृदयस्य ज्वलति धत्ते इत्यनेकक्रियाकर्तृत्वाद्दीपकालङ्कारः । तल्लक्षणं यथा दर्पणे—"अप्रस्तुतप्रस्तुतयोर्दीपकन्तु निगद्यते । अथ कारकमेकं स्यादनेकासु क्रियासु चेत् ॥" इति । प्रसरति तिरयति ज्वलतीति त्रीणि परस्मैपदान्यभिधाय अत्र इत्यात्मनेपदस्याभिधानाद्भग्नप्रक्रमताख्यो दोष इति सुधियावधाय "ज्वलति हृदयमेवं तन्मयत्वं दधाति"त्येव पाठो युक्तः । मालिनीवृत्तम् ।

( क्वचित् पुस्तके "आवर्त्तमान"मित्यत्र "आवर्त्तिगाव"मिति पाठः, तदात्वे च रथस्य कामः ततः स्वार्थे कः, "आरो रथस्य कामः" इत्युत्पलिनी । तस्य विवर्त्ति भ्रान्तकण्ठं विभ्रत् आवर्त्तिं भाव्यत् गावं ज्वलतीत्यर्थः कार्यः ) आवर्त्तेत्यनेन व्याधिः, ज्वलतीत्यनेनोद्वेगः, तन्मयत्वमित्यनेनोन्मादः, दुःखदशासामपि जीवनाशा च प्रदर्शिता ।

३६ । इति एवमभिधाय सर्वे रङ्गवर्त्तिनः पुरुषाः निष्क्रान्ताः निर्गताः रङ्गभूमेरिति शेषः । ननु द्वयोरेवेदानीं निर्गमात् कथं बहुवचनमिति वाच्यं, पूर्वं निष्क्रान्तकलहंसादीनामपि सम्बन्धस्य विवक्षिततया बहुत्वस्याविरुद्धत्वात् । वस्तुतस्तु सर्वत्रैवाङ्कशेषे रङ्गभूमेरभिनेतृशून्यत्वद्योतनाय "इति निष्क्रान्ताः सर्वे" इति लेखनस्य कविसमयसिद्धतया नास्ति तत्रैकत्वद्वित्वादिविवेचनमपेक्ष्यम् ।

३७ । इति अङ्कपरिसमाप्तौ, बकुलवीथीनाम तदाख्या प्रसिद्धः प्रथम आद्यः अङ्कः परिच्छेदः समाप्त इति शेषः । द्वितीयाद्यङ्केष्वप्येवं व्याख्येयम् । वीथी श्रेणी बकुलानां वीथी बकुलमालेत्यर्थः । अत्राङ्के बकुलमालायाः एव प्रधानतः बहुलाभावसम्पादनादस्याङ्कस्य बकुलवीथीति नाम परिकल्पितम् । क्वचित् पुस्तके "बकुलवीथीनामे"त्यंशो नास्ति । अङ्कलक्षणन्तु—"प्रत्यक्षनेतृचरितो रसभावसमुज्ज्वलः" इत्यादि "अन्तनिष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्त्तितः" इत्यन्तं दर्पणषष्ठपरिच्छेदे द्रष्टव्यं ।

इति काव्यतर्कतीर्थोपनामक-श्रीकृष्णविहारि तर्कसिद्धान्तभट्टाचार्यकृतायां तत्त्वबोधिनीसमाख्यायां मालतीमाधवव्याख्यायां प्रथमाङ्कविवृतिः समाप्ता ।

---

আচ্ছাদিত করিতেছে। কামাগ্নিদ্বারা বিপচ্যমান আমার হৃদয় অতিশয় উদ্বেগ ধারণ করিয়া সন্তাপ অনুভব করিতেছে ও তন্ময় হইতেছে।

(৩৬) ( এইকথা বলিয়া সকলে নিষ্ক্রান্ত হইল )।

(৩৭) বকুলবীথীনামক প্রথম অঙ্ক সমাপ্ত।

# द्वितीयोऽङ्कः । ( १ )

ततः प्रविशतश्चेट्यौ । ( २ )

एका । हला ! सङ्गीदसालापरिसरे अवलोइदादुदीआ तुमं* किं मन्तअन्ती आसि ? (क)

द्वितीया । सहि ! तेण किल माहवप्पिअवअस्सेण मअरन्देण सअलो ज्जेव मअणुज्जाणवुत्तन्तो भअवदीए णिवेदिदो (ख)

---

( क ) हला ! सङ्गीतशालापरिसरे अवलोकिताद्वितीया त्वं किं मन्त्रयन्ती आसीः ।

( ख ) सखि ! तेन किल माधवप्रियवयस्येन मकरन्देन सकल एव मदनोद्यानवृत्तान्तो भगवत्यै निवेदितः ।

---

१ । नन्वत्राङ्के नायकप्रवेशाभावेन "प्रत्यक्षनेतृचरित" इत्यस्मिन् दर्पणलक्षणस्य "नाटक-प्रकरणयोरङ्का. कार्य्या. प्रत्यक्षनायका" इति भरतलक्षणस्य चासङ्गत्या कथमस्याङ्कत्वमिति चेन्न "गुरु. पुरोहितोऽमात्यो नायको नायिकापि च । सार्थवाह इति प्रोक्ताः षडेते नायका बुधै"रित्यनेन नायिकाया अपि पारिभाषिकनायकत्वसत्त्वेन मालतीप्रवेशसद्भावेनैवोक्तलक्षण-समन्वयसम्भवात् ।

२ । इदानीमङ्कान्तरमारभमाणः कविरन्तराङ्कवर्त्तिष्यमाणान् कांश्चिद्वृत्तान्तान् सङ्क्षेपेण सभ्यान् बोधयितुं प्रवेशकमारचयति—तत इत्यादिना । चेट्यौ दास्यौ ।

(क) एकेति, प्रथमा चेटीत्यर्थः । हलेति सख्याः सम्बोधनार्थकमव्ययं । हण्डे हञ्जे हलाह्वानं नीच चेटीं सखीं प्रतीति नाट्योक्तावमरः । सङ्गीतशालायाः नाट्यशालायाः नाट्यगृहस्य परिसरे पर्य्यन्तभूमौ अवलोकिताद्वितीया अवलोकितासहितेत्यर्थः । मन्त्रयन्ती भाषमाणा ।

ख । द्वितीयेति, चेटीत्यर्थः । मदनोद्यानवृत्तान्तः परस्परसन्दर्शनवकुलमालार्पणादिकः ।

---

## দ্বিতীয় অঙ্ক ।

দাসীদ্বয়ের প্রবেশ ।

(ক) একা । হলা ! সঙ্গীতশালার প্রান্তভাগে কেবল অবলোকিতার সহিত কি মন্ত্রণা করিতেছিলে ?

(খ) দ্বিতীয়া । সখী, মাধবের প্রিয় বয়স্য সেই মকরন্দ মদনোদ্যানবৃত্তান্ত

---

* "भअवदी कामन्दईं" इति पाठभेदः, तथात्वे भगवती कामन्दकी किं मन्त्रयन्ती आसीदित्यनुवादः करणीयः ।

प्रथमा। तदो किं ? (ग)

द्विती। तदो भट्टिदारिअं दट्ठुकामाए भअवदीए पउत्तिणिमित्तं अवलोइदा अणुप्पेसिदा। मए वि ताए कधिदं, जधा लवङ्गिआदुदीआ विवित्ते भट्टिदारिआ वट्टदि त्ति (घ)।

प्रथ। हला! लवङ्गिआ क्खु केसरकुसुमाइं अवचिणोमि त्ति, मअणुज्जाणादो जेव्व आगदा ता किं सम्पदं सम्पत्ता ? (ङ)

---

(ग) ततः किम् ?

(घ) ततो भर्तृदारिकां द्रष्टुकामया भगवत्या प्रवृत्तिनिमित्तं अवलोकिता अनुप्रेषिता, मयापि तस्यै कथितं, यथा लवङ्गिकाद्वितीया विविक्ते भर्तृदारिका वर्त्तते।

(ङ) हला! लवङ्गिका खलु केसरकुसुमान्यवचिनोमीति, मदनोद्यानादेव आगता, तत् किं साम्प्रतं समायाता।

---

भगवत्यै कामन्दक्यै निवेदितः प्रतीहारार्थं कथितः। इत्यवलोकितामुखात् श्रुतमिति शेषः।

(ग) अन्यतरार्थं एकैकस्य प्रयोगे द्वितीयापि प्रश्नं करोतीति एकैकवक्त्रोरुक्तौ—प्रथमेति।

(घ) द्वितीयेति। भर्तृदारिका मालती। प्रवृत्तिवार्त्तां तन्निमित्तं "मालती कुत्र किदृशी वर्त्तते" इत्येतत्परिज्ञानार्थमित्यर्थः। तस्यै अवलोकितायै। विविक्ते विजने "विविक्तौ पूतविजनौ" विश्वः।

(ङ) केसरकुसुमानि वकुलपुष्पाणि, अवचिनोमि त्रोटयामि, इति हेतौ, आगता मदनोद्यानादिति शेषः। समायाता आगता।

---

সমস্তই ভগবতী কামন্দকীর নিকট নিবেদন করিয়াছে (তাহা অবলোকিতার মুখে শুনিতেছিলাম)।

(গ) প্রথমা তারপরে? (ভগবতী কি করিয়াছেন?)

(ঘ) দ্বিতী। পরে ভর্তৃদারিকার দর্শনের নিমিত্ত সংবাদ জানিবার জন্য ভগবতী অবলোকিতাকে পাঠাইয়াছেন, আমিও তাহাকে বলিয়াছি "কেবল লবঙ্গিকাকে লইয়া ভর্ত্তৃদারিকা (মালতী) নির্জ্জন স্থানে আছেন।"

(ঙ) প্রথ। হলা! লবঙ্গিকাত বকুলফুল চয়ন করিবে বলিয়া মদনোদ্যান হইতে আসিয়াছিল না, তবে কি সে সম্প্রতি আসিয়াছে?

द्विती । अध इं, तं क्खु, पराहत्तीं जेव्व हत्थे गेह्निअ, पडिसिद्धपरिअणा, भट्टिदारिआ उवरिमालिन्दअं समारूढा । (च)

प्रथ । णूणं तस्स महाणुभावस्स संकधाए अत्ताणं विणोदेदि (छ) ।

द्विती । [ निश्वस्य ] कुदो से आसासो ! एदिणा अज्ज अविक्खेवदंसणेण अदिभूमिं गदु त्ताए अहिणिवेसो गमिस्सदि । अण्णञ्च णन्दणस्स कारणादो महाराओ भट्टिदारिअं पत्थअन्तो अमच्चेण विण्णत्तो ( ज ) ।

---

( च ) अथ किं, सा खलु पराङ्मुखीमिव हस्ते गृहीत्वा, प्रतिषिद्धपरिजना, भर्तृदारिका उपर्यलिन्दं समारूढा ।

( छ ) नूनं तस्य महानुभावस्य संकथया आत्मानं विनोदयति ।

( ज ) कुतोऽस्या आश्वासः । एतेनाद्य अविक्षेपदर्शनेनातिभूमिं खलु गतः अभिनिवेशो गमिष्यति । अन्यच्च, नन्दनस्य कारणान्महाराजो भर्तृदारिकां प्रार्थयमानोऽमात्येन विज्ञप्तः ।

---

(च) अथ किमिति बाढ स्वीकारेऽर्थे, पराङ्मुखीमिव मदनोद्यानादागच्छन्तीमिव एवकारेण विलम्बव्यवच्छेदः । प्रतिषिद्ध निवारित. परिजन परिचारिकाजनः यया सा । उपर्यलिन्दं उपरिस्थित बहिर्द्वारप्रकोष्ठं "प्रघाण प्रघणा लिन्दा बहिर्द्वारप्रकोष्ठके" इत्यमरः ।

(छ) नन निश्चिते "ननं निश्चिततर्कयो" रिति विश्वः । तस्य महानुभावस्य माधवस्य, संकथया सम्यक्कथनेन, मदनोद्यानागमनानन्तरं माधवेन सह सञ्जातया च आत्मानः स्वकालेनेत्यर्थः ।

(ज) निश्वसेति सार्वतीमनोरथालम्बभूतस्य नन्दनार्थं राज्ञा प्रार्थनस्याभिगम एवाय निश्वासहेतु तस्या आत्मना, आश्वास शान्ति. कुतः नास्तीत्यर्थः । अतैव हेतुमाह । एतेनेत्यादिना ।

---

(চ) দ্বিতী। আসিয়াছে বৈকি? আসিবামাত্রই তাহার হস্ত ধারণ করিয়া অন্ত পরিজনবর্গকে নিষেধ করতঃ ভর্তৃদারিকা উপরিস্থিত বহির্দ্বারপ্রকোষ্ঠে (বারেন্দায়) আরোহণ করিয়াছেন।

(ছ) প্রথমা। নিশ্চয় সেই মহাত্মা মাধবের কথোপকথনদ্বারাই আত্মবিনোদন করিতেছেন।

(জ) দ্বিতী। (নিশ্বাস ত্যাগ করিয়া) ভর্তৃদারিকার আর শান্তি কোথায়?

---

* "करे हस्ते" इत्यधिकः पाठः क्वचिद् दृश्यते। करयोः आतरेवेति तदर्थः !

प्रथ। किंत्ति? (झ)।

द्विती। पहवदि णिअस्स कस्सआजणस्स महाराओत्ति। ता जाद आमरणं क्खु हिअअसल्लं मालदीए माहवाणुराओत्ति तक्केमि (ञ)

प्रथ। अवि णाम, भअवदी किंपि एत्थ भअवदीत्तणं दंसइस्सदि (ट)

---

(झ) किमिति?

(ञ) "प्रभवति निजस्य कन्यकाजनस्य महाराज" इति। तज्जातमामरणं खलु हृदयशल्यं मालत्या माधवानुराग इति तर्कयामि।

(ट) अपि नाम भगवती किमप्यत्र भगवतीत्वं दर्शयिष्यति।

---

सविशेषदर्शनेन मदनोद्याने विशेषतः परस्परसाक्षात्कारेण, अस्या अभिनिवेशः माधवे अनुराग अतिभूमिं आधिक्यं उत्कर्षमिति यावत्, गमिष्यति प्राप्स्यति।

झ। किमिति विज्ञप्त इति शेषः।

ञ। प्रभवतीत्यादि। महाराज इत्यनेनामात्येन महाराजो विज्ञापित इत्यर्थः। तत् तस्मात् नन्दनाय मालतीदानस्याङ्गीकृतत्वेन तदप्रत्याशात् मालत्या माधवानुरागः आमरणं मरणपर्य्यन्तं हृदयशल्यं हृदयविदारकनाराचतुल्यं जातमित्यन्वयः। (विधेयप्राधान्यविवक्षया शल्यविशेषणत्वेन जातमिति क्लीवनिर्द्देशः।

ट। अपिनामेति सम्भावनायाम्। भगवती कामन्दकी, अत्र मालत्याधिनिवारण-विषये, किमपि अनिर्व्वचनीयं भगवतीत्वं माहात्म्यं (भगवतीत्यस्य संज्ञात्वविवक्षया "त्वतलोर्गुणवचनस्ये"ति न पुंवद्भावः)। मालत्यामतिवत्सलायाः कामन्दक्या माहात्म्येनैवास्य राजनन्दनयोरपि मतिः परिवर्त्तित इत्याशयः।

---

(এদিকে) অতএব এই মদনোদ্যানের বিশেষ সাক্ষাৎকারে (ভর্তৃদারিকার) মাধবানুরাগ অতিশয় বৃদ্ধি পাইবে। অন্য দিকে মহারাজ নন্দনের জন্য ভর্তৃদারিকাকে প্রার্থনা করিবেন, অমাত্য মহারাজকে জানাইয়াছেন?

(ঝ) প্রথ। কি জানাইয়াছেন?

(ঞ) দ্বিতী। "মহারাজই নিজ-কন্যাজনের প্রভু" ইহা (জানাইয়াছেন) সুতরাং মালতীর এই মাধবানুরাগ মরণকালপর্য্যন্ত হৃদয়শেলস্বরূপ হইল বলিয়া মনে হয়।

(ট) প্রথ। সম্ভব কি, মালতীর এই অশান্তিনিবারণ বিষয়ে ভগবতী কামন্দকী কোন অনির্ব্বচনীয় মাহাত্ম্য দেখাইবেন।

मालती। हुं सहि! तदो, तदो (ड)

लवङ्गिका। तदो तेन महाणुभावेण उवणीदा मे इयं बउलमाला (ढ)। [इति मालामर्पयति]।

माल। [गृहीत्वा, सहर्षं निर्वर्ण्य!] सहि! एक्क-पास-विसम-पडिबद्धा क्खु इयं विरअणा (ण)

---

(ड) हुं सखि! ततस्ततः।

(ढ) ततस्तेन महानुभावेनोपनीता मे एषा बकुलमाला।

(ण) सखि! एकपार्श्वविषमप्रतिबद्धा खल्वियं विरचना।

---

ड। मालतीति। हुं प्रश्ने। लवङ्गिकया कथितं बकुलमालाप्रार्थनान्तं वृत्तान्तमाकर्ण्य तदवान्तरवृत्तोत्कण्ठिता विलम्बमसहमाना पृच्छति—"ततस्तत इति"। वीप्सा आदरार्थे। यद्वृत्तं तत् सत्वरं कथयेत्यर्थः। मोट्टायितभावोऽयं यदाह—"श्रुत्वा कथां प्रियजनस्य सुखेऽस्य कर्णोदरस्थितचलमनुतर्जनीकम्! यत्साङ्गभङ्गमिह जृम्भितमङ्गनानां मोट्टायितं कविभिः पुराणैः॥"

ढ। लवङ्गिकेति। तेन माधवेन, मे मम हस्ते इति शेषः। उपनीता तुभ्यमुपहृतेत्यर्थः।

ण। मालतीति। (निर्वर्ण्य सादरं विलोक्य) एकपार्श्वे एकस्मिन् भागे विषमं विपरीतं यथा स्यात्तथा प्रतिबद्धा घटिता, विपरीतमुखैः कुसुमैरस्या एकांशो विरचित इत्यर्थः।

---

(ড) মালতী। সখি! তারপর তারপর?

(ঢ) লবঙ্গিকা। তৎপরে সেই মহানুভব আমার হস্তে এই বকুলমালা উপহার দিয়াছেন। (মালা অর্পণ)

(ণ) মালতী। (গ্রহণানন্তর হর্ষের সহিত দেখিয়া) সখি! এই মালার বিরচনা একাংশে বিপরীত ভাবে সংঘটিত হইয়াছে।

लव। एत्थ दाव अरमणीअत्तणे तुमं ज्जेव अवरज्झसि (त)

माल। कधं विअ? (थ)

लव। जेण सो मुद्धो दुव्वा-सामलङ्गो तधा विहलीकिदो। (द)

माल। पिअसहि लवङ्गिए! सव्वधा आसासणसीलासि।(ध)

---

(त) अत्र तावदरमणीयत्वे त्वमेवापराध्यसि।

(थ) कथमिव?

(द) येन स मुग्धदूर्वाश्यामलाङ्गस्तथा विह्वलीकृत।

(ध) प्रियसखि लवङ्गिके, सर्वथा आश्वासनशीलासि।

---

त। लवेति। तन्निमित्तैव विषमरचनेत्यर्थः।

थ। अभिप्रायपरिज्ञानोत्कण्ठिता पृच्छति—कथमिवेति। केन प्रकारेणास्मदीयमाल्यरचना-वैरस्ये ममापराधः सम्भवतीति प्रश्नार्थः।

द। लवेति। येन हेतुना मुग्धः त्वद्दर्शनेनाधीरः, दूर्वाश्यामलाङ्गः दूर्वादलवत् श्यामल-कलेवरः, ततः परस्य विशेष्यविवक्षया कर्मधारयसमासः। स माधवः तथा तादृक् विह्वलीकृतः कटाक्षनिक्षेपादिना व्याकुलीकृतः, अथवा विह्वलीकृत चयनक्रियायां निष्फलकृत इत्यर्थः। त्वदीयासामान्यरूपलावण्यसन्दर्शनेन विकलीकृतस्तदैव तस्य माल्यरचनायामेव वैगुण्यं जातमिति त्वमेव तत्र निमित्तमिति भावः।

ध। मालतीति। आश्वासनं शीलं स्वभावो यस्याः सा। मामाश्वासयितुमेव त्वमेवं कथयसि, न तु वस्तुगत्या माधवो मय्यनुरक्त इत्याशयः।

---

(ত) লব। এই অরমণীয়তায় তুমিই অপরাধিনী।

(থ) মাল। কিরূপে?

(দ) লব। যেহেতু মুগ্ধ সেই দূর্বাদলশ্যাম কলেবরকে (অসামান্য স্বীয় রূপলাবণ্য দেখাইয়া) ব্যাকুলিত করিয়াছ।

(ধ) মাল। প্রিয়সখি লবঙ্গিকে! সর্বপ্রকারে আমাকে আশ্বাস দেওয়া তোমার স্বভাব।

लव। सहि! का एत्थ आसासणसीलदा? णं भणामि, सोवि पिअसहीए मन्द-मारुदउव्वेल्लन्तप्फुल्ल पुण्डरीअविब्भमेहिं पढमावद्ध--बउलावली--विरअणावदेस -संजमिद--थलामोडि--विअत्तेहिं लोअणेहिं, विजिम्भमाण-विब्भम-त्थिमिद-दीह-पेरन्त-परिवत्तणा-विलास-तण्डविद-भ्रूलदा--विडम्बिदाणङ्ग-सारङ्ग--विब्भम-विअड्ढं अवलोअअन्तो पच्चक्खीकिदो ज्जेव (न)

---

(न) सखि! कात्र आश्वासनशीलता? ननु भणामि, सोऽपि प्रियसख्या मन्दमारुतोद्वेल्लत्प्रफुल्लपुण्डरीकविभ्रमाभ्यां प्रथमावद्धबकुलावलीविरचनापदेशसंयमितस्थलामोटितविवर्त्तिताभ्यां लोचनाभ्यां विजृम्भमाणविभ्रमस्तिमितदीर्घपर्यन्तपरिवर्त्तनाविलासताण्डवितभ्रूलताविडम्बितानङ्ग-सारङ्गविभ्रमविदग्धम् अवलोकयन् प्रत्यक्षीकृत एव।

---

न। लवेति। अथ तदनुरागविषये, का आश्वासनशीलता आश्वासनस्वभावः? भणामीति शेषः। मदुक्तं सर्व्वथा सत्यमेव, न केवलं त्वदाश्वासनपरमिति भावः। एतदेव समर्थयति— सोऽपीत्यादिना। अपिरवधारणे। मन्दमारुतेन धीरसञ्चारपवनेन उद्वेल्लत् ईषत्कम्पमानं प्रफुल्लं विकसितं यत् पुण्डरीकं पद्मं तस्य विभ्रम, सोऽयमित्याकारविशिष्टा भ्रान्तिर्याभ्यां, अथवा तस्य विभ्रमः सादृश्यं ययोस्ताभ्यां माधवस्य पुण्डरीकलोचनत्वादित्यर्थः। तथा प्रथमावद्धा प्रथमरचितुमारब्धा या बकुलावली बकुलमाला तस्या विरचनापदेशेन पुनर्निर्म्माणव्याजेन स्थगिताभ्यां संयमः अन्यादर्शनं तं प्रापिताभ्यां तथापि बलात्कारेण त्वद्दर्शनलोभावलीन विवृताभ्यां विवृत्तिं गच्छद्भ्यां लोचनाभ्यां विजृम्भमाणेन वर्द्धमानेन विभ्रमेण त्वद्दर्शनजनिताश्चर्य्येण स्तिमितौ निश्चलौ दीर्घौ आयतौ यौ पर्य्यन्तौ अपाङ्गदेशौ तयोः परिवर्त्तनाय समालोकन-रूपायत्नेन पुनः सञ्चालनं, सैव विलासः विभ्रमः तेन ताण्डविताभ्यां नर्त्तिताभ्यां भ्रूलताभ्यां, विडम्बितस्य अनुकृतस्य अनङ्गसारङ्गस्य कामशरासनस्य "सारङ्गं धनुषि स्मृत"मिति शाश्वतः। विभ्रम इव विभ्रमो विलासस्तेन विदग्धं निपुणं यथा स्यात्तथा अवलोकयन् त्वामेव पश्यन् स माधवः

---

(ন) লব। তাহার অনুরাগবিষয়ে আমি যে কেবল আশ্বাস দিতেছি, ইহা কিরূপে স্থির করিলে? আমি নিশ্চয় বলিতেছি, প্রিয়সখীও ত দেখিয়াছ যে, মন্দবায়ুসঞ্চালনচঞ্চল প্রফুল্ল পুণ্ডরীকসদৃশ প্রথমাবদ্ধ বকুলমালার পুনঃ নির্ম্মাণ-

लव। (विहस्य मासूयमिव)। तुमम्हि सहावेण ज्जेव तस्सिं अवसरे असङ्गीदअं णच्चिदासि (फ)

माल। [सलज्जं]। हुं, तदो, तदो (ब)

लव। तदो पडिणिअत्तमाण-जत्ताजण-सङ्कुलेन अन्तरिदे तस्सिं जणे, मन्दारिआए घरं उवगदह्मि, ताए क्खु चित्तफलअं पभादे हत्थीकिदं आसि (भ)

---

(फ) त्वमपि स्वभावेनैव तस्मिन्नवसरेऽसङ्गीतकं नर्त्तितासि।

(ब) हुं ततस्ततः।

(भ) ततः प्रतिनिवर्त्तमानयात्राजनसङ्कुलेन अन्तरिते तस्मिन् जने, मन्दारिकाया गृहमुपगतास्मि, तस्याः खलु चित्रफलकं प्रभाते हस्तीकृतमासीत्।

---

फ। विहस्य सासूयमिवेति।—अत्र निश्चितापि मालत्या सन्दिग्धतावेदनात् इति हास्यहेतुः, ममापि सकाशे? प्रकाशने प्रयास इति गोपहेतुरनुसन्धेयः। सोल्लुण्ठनोक्त्या माधवस्यानुरागं समर्थयति—त्वमपीति। तस्मिन्नवसरे मदनोद्याने माधवावलोकनसमये असङ्गीतकं सङ्गीतविहीनं यथा स्यात्तथा नर्त्तितासि नृत्यं कारितासि, नृत्यकाल इव चाञ्चल्ययुक्तासीत्यर्थः। यथा तव चाञ्चल्यं न स्वाभाविकं तथा माधवस्यापि चाञ्चल्यं न स्वाभाविकं परन्त्वन्योन्यानुरागवशादेवान्योन्यचाञ्चल्यं जातमिति भावः। अत्र परिभावना नाम मुखसन्ध्यङ्गं "कुतूहलोत्तरा वाचः प्रोक्ता तु परिभावने"ति दर्पणलक्षणात्।

ब। सलज्जमिति आश्चर्ये शेषः, चतुरा लवङ्गिका सर्व्वमेव चित्तगतमवगतेति विज्ञानं लज्जाहेतुः। हुमिति प्रश्ने। ततस्तत इति वक्तव्यशेषं कथयेति शेषः।

भ। तदेति। अन्तरिते आच्छादिते, तस्मिन् माधवे। तस्या मन्दारिकायाः, हस्तीकृतं स्वायत्तीकृतं मयेति शेषः।

---

(ফ) লব। (হাস্যবশতঃ প্রণয়কুপিতার ন্যায়) তুমিও ত মাধবাবলোকন-সময়ে স্বভাবতঃই সঙ্গীতবিহীন নৃত্য করিয়াছিলে। (অর্থাৎ তুমিও যেমন স্বভাবতঃ চাঞ্চল্য প্রদর্শন কর নাই, সেও তেমন স্বভাবতঃ চাঞ্চল্য প্রদর্শন করে নাই, পরন্তু পরস্পর অনুরাগ বশতঃই উভয়ের চাঞ্চল্য জন্মিয়াছিল)।

(ব) মাল। (লজ্জিতভাবে) তারপর? তারপর?

(ভ) লব। তারপর মদনমহোৎসবস্থান হইতে নিবর্ত্তমান জনসমূহদ্বারা

माल। किं णिमित्तं? (म)

लव। तं क्खु माहवाणुचरो कलहंसओ णाम कामेदि, सा तस्स दंसइस्सदि त्ति तदो पिअणिवेदिआ मे मन्दारिआ संवुत्ता(य)

माल। [स्वगतम्]। णूणं तेणावि कलहंसएण तं पडिच्छन्दअं भत्तणो साइस्स दंसिदं हुविस्सदि [प्रकाशं]। सहि! किंदाणिं दे पिअं (र)

---

(म) किं निमित्तम्?

(य) तां खलु माधवानुचरः कलहंसको नाम कामयते, सा तस्य दर्शयिष्यतीति ततो मे प्रियनिवेदिका मन्दारिका संवृत्ता।

(र) नूनं तेनापि कलहंसकेन तत्प्रतिच्छन्दकमात्मनो भर्त्तुः दर्शितं भविष्यति। सखि किमिदानीं मे प्रियम्।

---

म। किं निमित्तमिति। मन्दारिकाया हस्ते तच्चित्रफलकं त्वया दत्तमिति सम्बन्धः।

य। तामिति। तां मन्दारिकां, कामयते इच्छति, सा मन्दारिका, तस्य कलहंसस्य समीपे इत्यर्थः, दर्शयिष्यति प्रकाशयिष्यति, इति हेतोः मन्दारिकाया हस्ते तच्चित्रफलकं मया समर्पितमिति मयानुष्ठितमुपस्करणमेवम्। प्रकृतमभिधातुमुपक्रमते—तत इति। ततः मन्दारिका स्वहस्तगतानन्तरम्।

र। नूनमिति। नूनमित्यनुमानिकार्थविषये। भर्त्तुः स्वामिनो माधवस्य। दर्शितं भविष्यति इत्यनुमीयत इत्यर्थः। कथमन्यथा मन्दारिका प्रियनिवेदिका स्यादित्याशयः। प्रियनिवेदिका

---

সেই মাধব অনুগত হইলে আমি মন্দারিকার গৃহে গেলাম। প্রভাতেই আমি মন্দারিকার হস্তে চিত্রফলক দিয়াছিলাম।

(ম) মাল। কি নিমিত্ত (দিয়াছিলে?)

(য) লব। তাহাকে (মন্দারিকাকে) কলহংসনামক মাধবের অনুচর অভিলাষ করিতেছে, সুতরাং সে অবশ্যই তাহাকে (কলহংসকে) দেখাইবে, এই অভিপ্রায়েই আমি দিয়াছিলাম)। পরে মন্দারিকা আমাকে প্রিয় কথা কহিবে।

(র) মাল। (স্বগত) নিশ্চয় সেই কলহংসও নিজের প্রভুকে প্রতিমূর্ত্তি দেখাইয়াছে। (প্রকাশ্যে) সখি! তোমাকে কি প্রিয়কথা শুনাইয়াছে?

लव। एदं, क्खु, सन्दाविदस्स सन्दावआरिणो दुल्लह-मणोरहावेस-दूसहायास-दज्झन्त-चित्तस्स खणमेत्त-णिव्वावअं तुह पडिछन्दअं (ल)। [ इति चित्रं दर्शयति ]।

माल। [ सहर्षं सोत्कम्पं चित्रं निर्वर्ण्य ]। अम्मो! दाणिं वि मे हिअअस्स अणासङ्गो, जेण एदं वि आस्सासणं विप्पलम्भोत्ति संभावेमि। कधं अवरद्धम्हि? [ "जयति जयिमस्ते वै भावा नवेन्दुकलादयः" इत्यादि पूर्वोक्तं पठित्वा सानन्दं ]। महाभाअ। सरिसो क्खु दे णिम्माणस्स विरअणामधुरदा, दंसणं उण तक्काल-मणोहरं परिणामदोहसन्दावदारुणम्। धण्णाओ क्खु ताओ

(ल) एतत् खलु सन्तापितस्य सन्तापकारिणो दुर्लभमनोरथावेशदुःसहायासदह्यमान-चित्तस्य क्षणमात्रनिर्वापकं तव प्रतिच्छन्दकम्।

(व) अहो! इदानीमपि मे हृदयस्य अनासङ्गो, येनेदमपि आश्वासनं विप्रलम्भ इति सम्भावयामि। कथमपराद्धा अपि?। महाभाग! सदृशी खलु ते निर्माणस्य विरचनामधुरता,

मन्दारिका संहर्षेति वाक्यसूचितम् प्रियं शश्रूः पृच्छति—किमिदानीं ते प्रियमिति। मन्दारिकाया निवेदनमिति शेषः।

(ल) लवेति। सन्तापितस्य तदनुरागजन्मना कामानलेनोत्तापितस्य, सन्तापकारिणः आत्मानुरागजन्मना कामानलेन तव सन्तापदायिनः, माधवस्येत्यर्थः, दुर्लभे त्वयि यो मनोरथावेशः मन एव रथस्तस्य आवेशः प्रवेशः, अथवा दुर्लभो यो मनोरथः, त्वत्प्राप्त्यभिलाषः तस्य आवेश उपस्थितिः तेन यो दुःसहायासः असहनीयः क्लेशः तेन दह्यमानस्य चित्तस्य क्षणमात्रं न तु बहुकालं यथा स्यात्तथा निर्वापकं शैत्यतासम्पादकं, प्रतिच्छन्दकं प्रतिकृतिः। यथा स्वीयोत्कण्ठाविनोदनार्थं त्वया माधवस्य मूर्त्तिर्लिखिता, तथा माधवेनापि तव मूर्त्तिरालिखितेति तदनुरागसूचकप्रतिच्छन्दकार्पणरूपं प्रियं मन्दारिकया निवेदितमिति तात्पर्यार्थः।

(व) मालतीति। सहर्षोत्कम्पमिति स्वस्य अनानुरागायादनहेतुमूलतल्लिखिताकप्रतिकृति-

(ল) লব। কামানলদ্বারা সন্তপ্ত, সন্তাপকারী এবং দুর্লভ মনোরথ বশতঃ দহ্যমান চিত্ত মাধবের ক্ষণমাত্র সন্তাপহারিণী তোমার এই প্রতিকৃতি। (চিত্র-প্রদর্শন)

[ इति रोदिति। ] (श)

लव। सहि! किं एव्वं पि दे णत्थि आस्सासो? (ष)

माल। सहि! कधं? (स)

लव। जस्स कारणादो, उक्खुडिअबन्धणं कङ्केल्लिपल्लवं विअ हिअअं धारेन्दी, किलम्मन्त-णोमालिआ-कुसुम-णिच्छहा परिक्खिज्जसि, सोवि जाणाविदो भअवदा मम्महेण सन्दावस्स, दूसहत्तणं त्ति (ह)।

---

(ष) सखि! किमेवमपि ते नास्ति आश्वासः?

(स) सखि! कथम्?

(ह) यस्य कारणादुत्खण्डितबन्धनं कङ्केल्लिपल्लवमिव हृदयं धारयन्ती म्लायन्नवमालिका-कुसुमनिःसहा परिक्षीयसे, सोऽपि ज्ञापितो भगवता मन्मथेन सन्तापस्य दुःसहत्वमिति।

---

(श) क्वचित् पुस्तके नास्त्ययं पाठः।

(ष) लवेति। एवमपि—अनुरागवशादात्ममूर्त्तिपार्श्वे अस्य मां लिखितायामपि आश्वासः मय्यनुरक्तः स इति विश्वासः नास्ति न भवति किं किमर्थम्।

(स) मालेति। श्लोकपाठेन स्वाभवगतमप्याश्वासकारणान्तरं निःसन्देहार्थं, तथा ज्ञापयितुं पृच्छति—सखि कथमिति। विश्वासः स्यादिति शेषः।

(ह) लवेति। उत्खण्डितं बन्धनं वृन्ताग्रशाखासंयोगो यस्य तादृशं कङ्केल्लिपल्लवं अशोक-किसलयम्। म्लायत् म्लानिमापद्यमानं यत् नवमालिकाकुसुमं नवमल्लिकापुष्पं तद्वत् निःसहा कोमला त्वमिति शेषः। भगवता मन्मथेन सोऽपि माधवोऽपि सन्तापस्य दुःसहत्वं ज्ञापितः अनुभावितः, तल्लिखितश्लोकपाठेनैतदवगतं बोध्यत इति एतदेव निःसन्दिग्धमाश्वासकारण-मित्यवगम्य त्वया विश्वासः कर्त्तव्य इति भावः।

---

(ষ) লব। সখি! এ অবস্থায়ও কেন তোমার বিশ্বাস হইতেছে না?

(স) মাল। সখি! কেন হইবে?

(হ) লব। ম্লানিযুক্ত নবমল্লিকা-কুসুমসুকুমার তুমি যাহার জন্য ছিন্নবৃন্ত

মালা। সখি! কুসলং দাব তস্স মহাণুভাবস্স হোদু, মহ উণ দুল্লহো আস্সাসো। [ সাস্রং ]। বিসেসদো অজ্জ পিঅসহি! (খ)

[ সংস্কৃতমাশ্রিত্য। ] (৫)

মনোরোগস্তীব্রো বিষমিব বিসর্পত্যবিরতম্,
প্রমাথী নির্ধূমং জ্বলতি বিধুতঃ পাবক ইব।
হিনস্তি প্রত্যঙ্গং জ্বর ইব গরীয়ানিত ইতো
ন মাং ত্রাতুং তাতঃ প্রভবতি, ন চাম্বা, ন ভবতী ॥ (৬)

---

(খ) সখি। কুশলমিদানীং তস্য মহানুভাবস্য ভবতু, মম পুনর্দুর্লভ আশ্বাসঃ। বিশেষতোঽদ্য প্রিয়সখি।।

---

(খ) মালেতি। স্বীয়াবস্থানুভবেন মদনাভিভাবিতস্য মাধবস্যাপি হিতং মঙ্গলং প্রার্থয়তি— সখি কুশলমিতি। মদনাভিভাবিতোঽপি দৈবাদস্মদবস্থানুভাবস্থত্বং তস্য, মা ভবতু নিষ্ঠুরদুঃখমিত্যর্থঃ। পুনঃ কিন্তু মম আশ্বাসঃ তৎসমাগমপ্রত্যাশয়া মনসঃ সান্ত্বনা দুর্লভঃ অতীব দুষ্প্রাপঃ গৌরবাদিনা অস্বাতন্ত্র্যাৎ তদসমাগমসম্ভাবনাদিত্যাশয়ঃ। সাস্রমিতি অশ্রুবিসর্জনং কুর্বতী ইত্যর্থঃ।

৫। সংস্কৃতমাশ্রিত্যেতি। ঐদম্পর্য্যেণ বৈদগ্ধ্যার্থং সংস্কৃতভাষাশ্রয়ণং মালত্যা ন বিরুদ্ধম্। তথাচোক্তং দর্পণে—

"যোষিৎ সখী বালবেশ্যাকিতবাপ্সরসাং তথা।
বৈদগ্ধ্যার্থং প্রদাতব্যং সংস্কৃতঞ্চান্তরান্তরা" ॥ ইতি

৬। মন ইতি। তীব্রঃ অতিদুঃসহঃ অত এব প্রমাথী প্রমথনশীলঃ, মনোরোগঃ কামজো আধিবিশেষঃ বিষমিব অবিরতং অনবরতং বিসর্পতি ব্যাপ্নোতি। তথা বিধুতঃ অধূমিতঃ অত এব

---

অশোকপল্লবের ন্যায় ( কম্পিত ) হৃদয় ধারণ করতঃ সন্তাপ ভোগ করিতেছ, সেই মাধবকেও ভগবান্ কামদেব সন্তাপের দুঃসহত্ব জানাইয়াছেন।

(ক) মালা। সখি! সেই মহানুভব মাধবের কুশল হউক, কিন্তু তাঁহার সমাগমে মনের শান্তিলাভ আমার অতীব দুষ্প্রাপ্য। ( অশ্রু বিসর্জ্জন করিতে করিতে ) প্রিয়সখি! বিশেষতঃ এখন—

(৭) প্রমথনশীল অতি দুঃসহ কামজ ব্যাধি বিষের ন্যায় ( আমার সর্ব্বাঙ্গে ব্যাপ্ত ) হইতেছে ও ধূমরহিত সন্ধুক্ষিত বহ্নির ন্যায় প্রজ্বলিত হইতেছে, গুরুতর

लव । एवं ज्जेव्व, पच्चक्खसोक्खदाइणो परोक्ख-दुक्ख-दुक्खहाआस-कारिणो सज्जणसमागमा होन्ति । अवि अ, जस्स वादाअणन्तर-

---

(क) एवमेव प्रत्यक्षसौख्यदायिनः परोक्षदुःखदुःखायासकारिणः सज्जनसमागमा भवन्ति। अपिच यस्य वातायनान्तरमुद्रकर्म्मावदर्शनेन सविशेषसमिद्धकृतवज्ञायमीनपूर्विमाधश्चोदया

---

निर्धूमः धूमरहितः ( अनेन विशेषणेन प्रज्वलनातिशयः सूचितः, प्रज्वलनाधिक्ये एव धूमाभाव-स्वाभाव्यात् । "निर्धूम"मिति पाठे तु क्रियाविशेषणम्, पावकी वह्निरिव ज्वलन् ज्वालामाला-शाली भवति । एवं मरीयान् वेगातिशयी सान्निपातिक इत्यर्थः, ज्वर इव इतः इतः अनर्म्मविष प्रत्यङ्ग' अङ्ग' अङ्ग' प्रति सर्वावयवाञ्छेदिनेत्यर्थः, छिनत्ति पीडयति । अत एव तातः पिता मां त्रातु' अस्मादापदः रक्षितु' न प्रभवति न शक्नोति, सम्भावचेष्टयपत्तेऽपि नरपति-मनोरथानुरोधेन नन्दनभवाय माधवाय मदर्पणादित्याशयः । एवं अम्बा माता च न त्रातु' प्रभवतीत्यनेनान्वयः । तस्या अपि तातमतनिरपेक्षया किञ्चित् कर्त्तुमसमर्थात् । भवती त्वञ्च न त्रातु' प्रभवतीत्यर्थः । मद्विषये सर्वथा तवाप्यास्मवत्प्राधिन्यमित्याशयः । तस्मादरणमेवेदानीं मम शरणमिति भावः । अत्र सखङ्गिकाया अपि मालतीनोः समवयसा गमनं सह योग-क्रीडनादिभिः स्वमनोविविधैर्मनस्तया मातापितरोरपि दुःखसाधित्वेन रक्षायां तत्प्रयत्नाधिक्य-प्रतिसम्भावादविषयम् ।

अत्र विषमिवेत्यादुपमा, विसर्पति ज्वलति छिनत्तीत्यनेकक्रियासु मनोरोगः कर्त्तैक इति दीपकं, ततोऽस्या भवतीनां प्रभवतीत्येकक्रियाभिसम्बन्धात्तुल्ययोगिता, चतुर्थपादवाक्यार्थं प्रति पूर्वपादत्रयवाक्यार्थानां हेतुत्वात् काव्यलिङ्गमलङ्कारः, तेषाञ्चाङ्गाङ्गि-भावेन सङ्करः । दर्पणोक्ततुल्ययोगितालक्षणं यथा—"पदार्थानां प्रस्तुतानामन्येषां वा यदा भवेत् । एकधर्माभिसम्बन्धः स्यात्तदा तुल्ययोगिता" अन्येषां लक्षणान्यूह्यानि । शिखरिणीवृत्तं, तल्लक्षणमप्युक्तम् ॥

(ख) सर्वेति । एवमेव त्वया यदुक्तं तत् सत्यमेव । प्रत्यक्षे दर्शनकाले सौख्यदायिनः आनन्दसम्पादनशीलाः, परोक्षे अदर्शनकाले दुःखेन यो दुःखायासः तत्कारिणः तत्करण-

---

অতি বেগশালী জ্বরের ন্যায় সর্বাঙ্গে পীড়া জন্মাইতেছে। সুতরাং এই বিপদ্ হইতে পিতা, মাতা বা তুমিও আমাকে রক্ষা করিতে পারিবেন না।

(ক) লব। তুমি যাহা বলিলে তাহা ঠিক। দর্শনকালে সুখ ও বিরহকালে

माल। सहि! दइद-मालदी-जीविदे! साहसोवस्सासिणि! अवेहि। [सास्रं]। अहवा, अहं ज्जेव्व वारंवारं विलोअअन्ती दुक्खावत्थाविद-धीरत्तणा-वट्टम्भेण अत्तणो हिअएण दूर-विजिम्भमाण दुव्विणअ-लहुई, एत्थ अवरज्झामि, तधावि पिअसहि! (ख)

---

(ख) सखि! दयितमालतीजीविते! साहसोपन्यासिनि! अपेहि। अथवा, अहमेव वारंवारं लोकयन्ती, दुःखावस्थापितधीरत्वावष्टम्भेन आत्मनो हृदयेन दूरविजृम्भमाणदुर्विनयलघ्वी अत्र अपराध्यामि, तथापि प्रियसखि!।

---

समागमः तत् श्लाघनीय प्रशस्ततरं दुर्लभे प्रिये यो मनोरथस्तस्य फलं इत्येतावदहजानीम वयमिति शेषः। अनुरागानुरूपं वल्लभसमागमं विना दुर्लभमनोरथस्य परं प्रशस्ततरं फलं नास्ति, तस्मात् स्वयमेव त्वया साहसं विधाय येन केनापि प्रकारेण माधवेन समं युज्यतां, यदि त्वमनुमन्यसे, तदाहमपि तद्घटयितुमर्हामीत्याशयः। अत एव साहसोपन्यासिनीत्यादि मालतीवाक्यमपि सङ्गच्छते।

(ख) मालतीति। दयितं प्रियं मालत्या मम जीवितं जीवनं यस्यास्तत् सम्बोधनम्। एतेन मम जीवनमेव तव प्रियं न तु निष्कलङ्कं कुलं अमलिनतातगौरवरक्षादिकञ्चेति ध्वनितं। साहसोपन्यासिनि! साहसानुष्ठानोपदेशिनि। अपेहि दूरमपसर, नैवं महाकुलकलङ्ककरसदृशकार्योपदेशिनी त्वं मम सखीयोग्येत्याशयः। त्वदीय-साहसेऽपि ममैवापराध इत्याह—अथवेति। वारं वारं बहुकृत्वः विलोकयन्तीति माधवमिति शेषः। दुःखेन पुनः पुनरवलोकनाद्धैर्यलोपस्यातिसम्भवादतिक्लेशेन अवस्थापितं यत् धीरत्वं तस्य अवष्टम्भ आश्रयस्तेन तथाभूतेन आत्मनः स्वस्य हृदयेन दूरविजृम्भमाणः अतिवर्धमानः यो दुर्विनयः विनयविरोधि मामकं तेन लघ्वी निकृष्टा अहमेव अत्र तव साहसानुष्ठानोपदेशे अपराध्यामीत्यन्वयः। यदहं माधवं बहुकृत्वो नावालोकयिष्यम्, तदा

---

লাভ করিয়া এখন যে তুমি সন্তাপিত হইবে, তাহাতে আর বলিবার কি আছে? তবে আমি ইহাই জানি যে, জীবলোকের পক্ষে গুরুতর অনুরাগানুরূপ মহানুভব বল্লভসমাগমই দুর্লভমনোরথের প্রশস্ততর ফল।

(খ) মাল। সখি! একমাত্র মালতীর জীবনই তোমার প্রিয়, (শ্লাঘ্য পিতা বা নিষ্কলঙ্ক কুলের গৌরব প্রিয় নহে) সুতরাং তুমি অতি সাহসের কথা বলিতেছ,

लव। [ स्वगतम्। ] एत्थ दाणिं को उवाओ ? (ग)
[अथ नेपथ्यार्द्धप्रविष्टा प्रतीहारी।] एसा भअवदी कामन्दई। (घ)
उभे। किं भअवदी ? (ङ)

(ग) अत्रेदानीं क उपायः ?
(घ) एषा भगवती कामन्दकी।
(ङ) किं भगवती ?

दयितस्य माधवस्य स्वजीवितस्य च रक्षणाय दुष्परिहरं तेषु कन्दहारीयत्वमपि वरमङ्गीक्रियता-मित्याह—नवेति। तु किन्तु अय सर्वानर्थकारणीभूतो जनः माधवः न दयित एव मादृश-जनानुभयत्वात्, अस्मि केवलं दुःखदत्वात्त्याज्यः। तथा जीवितं मम जीवनञ्च न दयितं माधवं विनाशस्थानस्य नितान्तक्लतघ्नप्रकाशकत्वाद् स्वकरत्वाच्चेति भावः।

अत्र प्रीतिविरचकाकारत्वात ज्वलनदर्पविरुद्धक्रियया तत्पत्तेर्विषमालङ्कारः। तल्लक्षणं यथा दर्पणे—"गुणक्रिये वा यत् स्यातां विरुद्धे हेतुकार्ययोः। यद्वारब्धस्य वैफल्यमनर्थस्य च सम्भवः। विरूपयोः सङ्घटना या च तद्विषमं मत"मिति॥ हरिणीवृत्तम् लक्षणमुक्तम्॥

(ग) लवेति। अथ उपस्थितापत्प्रशमने क उपायः मयाऽवलम्बनीय इति शेषः। मया सूचितं साहसोपदेशमपि नेयमङ्गीकरोति, सन्निहिता चाग्निमदनेति किमिदानीं मया विधेयमित्यर्थः।

(घ) "क उपाय" इति लवङ्गिकावचनमाकर्ण्योपायं कथयितुमिव समागत्य प्रतिहारी कथयति—एषेति।

(ङ) किं भगवतीति। आदिशति आगतेति वा शेषः। भर्तृदारिकां द्रष्टुकामा आगतेति प्रतिहारीकथनमश्रुत्वाईमनुक्तवीतकथया मध्येऽयं प्रश्न उभाभ्यां कृत इति मन्तव्यम्।

মৃত্যুর অতিরিক্ত আর কি করিতে পারিবে ? সর্ব্বজনপ্রশংসিত পিতা, নির্ম্মল কুলসম্ভূতা মাতা ও নিষ্কলঙ্ক কুলই আমার অভীষ্ট, এই মাধব বা আমার জীবনই অভীষ্ট নহে।

(গ) লব। (স্বগত) এ বিষয়ে এখন কি উপায় ?

(ঘ) প্রতীহারী। (নেপথ্য হইতে অর্দ্ধ প্রবিষ্ট হইয়া) এই ভগবতী কামন্দকী—

(ঙ) উভয়ে। ভগবতী কি (আদেশ করিয়াছেন ?)।

अपिच—अद्य मम्मयोद्यानद्र्ष्टान्तेन भगवतो विधेः अनुकूलतामव-गच्छामि। वकुलावलोचित्रफलकव्यतिकरस्तु अद्भुतं प्रमोदमुल्ला-सयति। इतरेतरानुरागो हि दारकर्मणि पराद्‌र्ध्यं मङ्गलं, गीत-श्चायमर्थोऽङ्गिरसा, यस्यां मनश्चक्षुषोरनुबन्धः तस्यामृद्धिरिति। (१०)

---

त्वदायत्ताधीनेव, सुतरां निजस्य स्वकीयतुल्यस्य कन्यकाजनस्य महाराज, प्रभवति यथेष्टविनियोगे समर्थो भवति, तस्मात्तद्भिरुचिवशेन नन्दन एव मालतीं परिणेष्यतीत्यमायाऽनुसरणे राजानुरोध-प्रतिपालनाद्देनिष्टसम्भावनाया अभावेन इदन्तोकाविरुद्धत्वं प्रभवतीत्यादिवाक्यस्य। पक्षान्तरे तु महाराजः निजस्य स्वकीयस्य कन्यकाजनस्य प्रभवति यथेष्टविनियोगे समर्थो भवति, न तु मदीयकन्याया इच्छानुसरणे प्रकृतसभ्यानुवर्त्तनात् देवरातेन सह अपत्यसम्बन्धस्य-पूर्वप्रतिज्ञातार्थस्य समर्थकत्वाद् पापाभावेन परलोकाविरुद्धत्वम्। यद्वा उभयलोकयोः-नन्दनविवाहपक्षपातिलोकतद्विरुद्धलोकयोः अविरुद्धं दर्शितार्थद्वयानुसरणादप्रतिकूलमित्यर्थः। उपन्यस्तमिति "नन्दनाय मालतीं देहि"ति यदा राज्ञा प्रार्थितं, तत्काले इति शेषः। एव मोमालाम माल्यानयनम्। यथोक्तं दर्पणे—

"भिन्नैरर्थैः समं यत्र अभिधेयोऽर्थः प्रकाश्यते।

श्लिष्टसमयविज्ञानां सा शोभिन्यभिधीयते॥"

अनेन राजानुरोधेनापि नन्दनाय कन्यार्पणं भूरिवसोरसम्मतं सूचयित्वा दैवानुकूल्यतामपि दर्शयति—अपिचेति। वकुलावली माधवरचिता वकुलमाला, चित्रफलक मालतीलिखिता माधवस्य प्रतिकृतिः, तयोर्व्यतिकरः विनिमयः, मालत्या वकुलमालाप्राप्तिः माधवस्य च चित्र-फलकावाप्तिरित्येवं परिवृत्तिरित्यर्थः। प्रमोदं प्रकृष्टं हर्षं, उल्लासयति जनयति, हि यस्मात् इतरे तरानुरागः परस्परासक्तिः दारकर्मणि विवाहकर्मणि, पराद्‌र्ध्यं श्रेष्ठं मङ्गलं दम्पत्योः कुशल-सम्पादकमित्यर्थः। आयुर्घृतमित्यादिवत् मङ्गलपदस्यात्र मङ्गलजनके लाक्षणिकत्वात्। अयमर्थः— परस्परानुरागस्य मङ्गलसम्पादकत्वरूपार्थः, अङ्गिरसा तदाख्येन महर्षिणा, गीतः कथितः। तदुक्तिं दर्शयति—यस्यामिति। अनुबन्धः आसक्तिः, तस्यां परिणीतायामित्यर्थः। ऋद्धिः मङ्गलोद्गमः भवतीति शेषः। मालतीमाधवयोरात्यन्तिकाभिलाषितात् तयोर्विवाहिकमङ्गल

---

বলিয়াছেন, আরও দেখ, অদ্যকার মদনোদ্যানবৃত্তান্তদ্বারা ভগবান্ বিধির আনুকূল্য অবগত হইতেছি। বকুলমালা এবং চিত্রফলকের বিনিময়ও অত্য আমোদ উৎপাদন করিতেছে। পরস্পর অনুরাগই বিবাহকর্ম্মে প্রধ

अपिच—परिपाण्डुपांसुलकपोलमाननम्
दधती, मनोहरतरत्वमागता ।
रमणीयजन्मनि जने परिभ्रमन्
ललितो विधिर्विजयते हि मान्मथः ॥ १२ ॥

अथवा । नियतमनया सङ्कल्पनिर्मितः प्रियसमागमोऽनुभूयते । तथाहि अस्याः । (१३)

---

अत्र शशिनी भूर्तिरित्युपमा, प्रथमद्वितीयपादपदार्थस्य रमण प्रति तृतीयपादपदार्थस्य च कम्पनं प्रति हेतुतया यथाक्रमेणान्वयात् पदार्थहेतुककाव्यलिङ्गानुप्राणितं यथासंख्यं, रमयति कम्पयतीत्यनेकक्रिययोः इयमित्येककर्तृकारकाभिसम्बन्धाद्दीपकं, आह्लादोद्वेगयोश्चित्तधर्मयो-र्घटनात् विषमश्चेतीत्येषामलङ्काराणां सङ्करः । तत्र दर्पणोक्तं यथासंख्यलक्षणं यथा—"यथा-संख्यमनूद्देश उद्दिष्टानां क्रमेण य"दिति । शिखरिणीवृत्तम् ॥

१२ । परिपाण्डुरिति । परिपाण्डुर्विरहेण नितिशयश्वेतौ पांसुलौ क्रियाविशेषानु-लेपनादिसंस्कारविरहाद्धूसरौ कपोलौ गण्डौ यस्मिन् तत् तादृशं आननं वदनं दधती धारयन्ती-यमिति शेषः, मनोहरतरत्वं अत्यधिकसौन्दर्यं आगता प्राप्ता । पाण्डुताद्यवस्थायामपि कथ-मेतादृक्सौन्दर्यमित्याकाङ्क्षायां तत्समर्थनायाह—रमणीयेति । हि यस्मात् रमणीयं शुभादृष्ट-वशादतिसुन्दरं जन्म यस्य तादृशे जने परिभ्रमन् व्याप्रियमाणः ललितः मनोज्ञः मान्मथो विधिः कामजविकारविशेषः विजयते सर्वोत्कर्षेण वर्त्तते । सहजसौन्दर्यशालिनि जने सर्वमेव शोभावहं, कामजविकारोऽपि तादृश्या मालत्याः शोभातिशयसम्पादको जात इति भावः । अत्र सामान्येन विशेषसमर्थनरूपः अर्थान्तरन्यासालङ्कारः । मञ्जुभाषिणीवृत्तम् ।

१३ । 'अथवे'त्यंशः क्वचित् पुस्तके नास्ति । नियतं निश्चितं अनया मालत्या सङ्कल्पनिर्मितः काल्पनिकः, न तु वास्तव इति भावः, प्रियसमागमः माधवसमागमः अनुभूयते मनसा माधवसङ्गमे

---

(১২) আরও দেখ, মালতী পাণ্ডুবর্ণ এবং ধূসর কপোলযুক্ত আনন ধারণ করিয়াও অতিশয় সৌন্দর্য্য লাভ করিয়াছে। যে হেতু শুভাদৃষ্ট বশতঃ যাহারা সুন্দর জন্মলাভ করিয়াছে, তাদৃশজনে ব্যাপ্রিয়মাণ মনোজ্ঞ কামজ বিকারও উৎকর্ষ সহকারেই বর্ত্তমান থাকে।

(১৩) অথবা, সতত্ই মালতী কল্পনায় প্রিয়সমাগম অনুভব করিয়া থাকে। তাহার প্রমাণ এই যে, ইহার—

नीवीबन्धोच्छ्वसनमधरस्पन्दनं, दोर्विषादः,
स्वेदस्तम्भं स्तनमधुराकेकरस्निग्धतारम्।
गात्रस्तम्भः, स्तनमुकुलयोरुन्नबन्धः प्रकम्पो,
गण्डाभोगे पुलकपटलं, मूर्च्छना, चेतना च ॥ १४ ॥

---

परिकल्प्य तन्मूलक कथञ्चिदुपभुज्यत इत्यर्थः। अथ तथा भावम् इत्याकाङ्क्षायां तदनुमापकानु भावान् दर्शयितुमाह—तथाहीति। यथा इति श्लोकार्थे, नीवीबन्धोच्छ्वसनमित्यादिभिरन्वियते।

१४। नीवीति। नीवीबन्धस्य कटीवसनबन्धनग्रन्थेः उच्छ्वसनं श्लथीभावः। रतिप्रारम्भ कामोत्पत्तिकाराकर्षणविकारेणेत्यर्थः। रतिप्रारम्भाभिधानं यथा रतिरहस्ये—"कलिकचिबुक-गण्डं नासिकाग्रं चुम्बन् पुनरपहितनीवीर्व्यालुजिताग्र भूयः। कलितवलितनाभीकक्ष-वक्षोरुदोषः प्रणयति हठधैर्य्य, चोभयिताय नीवी" मित्यादि। अधरस्पन्दनं ओष्ठकम्पः, स्फुरिताश्चुम्बनचिन्तयेत्यर्थः, स्फुरितलक्षणं यथा—"वदने विश्वमश्रोष्ठे पदौतु या समिच्छति। विश्रोष्ठः काम्यते यत्र स्फुरितं चुम्बनं मत" मिति। दोर्विषादः भुजयोः शैथिल्यं, परिरम्भ-भावनावशादिति भावः। स्वेदः घर्म्मः, रतिश्रमचिन्तयेत्यर्थः। एव चक्षुः नयनं मसृणे कोमले मधुरे ललिते चाकेकरे ईषदाकुञ्चिते स्निग्धे स्नेहयुक्ते तारकपक्ष्मपीतै इति यावत्, तारे कनीनिके यस्य तादृशम्। सुखभावनावशात् मसृणादयो दृष्टिविकारा जाता इति भावः। तत्र स्निग्ध मसृणयोर्लक्षणं पूर्व्वमेव दर्शितं मधुराकेकरयोर्लक्षणं यथा—

"प्रीतमौक्तिकैर्यैर्न तारौ येन मन्मथं स्मृतम्
आकुञ्चितपुटापाङ्गमङ्गताङ्गेनिर्विकौ।
तद्दृक्मधुरिततारा च दृष्टिराकेकराह्वता" इति ॥

गात्रस्य देहस्य स्तम्भः निश्चेष्टत्वलक्षणः सात्त्विकविकारविशेषः, सुरतकालीनातिशयहर्षवशा-दिति भावः, तथा उन्नाहितः प्रबन्धः अवर्णोऽपि स्फीत्यं येन तादृशः, स्तनौ मुकुलौ कुट्मलाविव स्तनावेव वा मुकुलौ (तनद्वौनातिशयदलत्वान्मुकुलत्वाध्यवसायः) तयोः प्रकम्पः वेपथुः, गाढा-लिङ्गनचिन्तावशादिति भावः। गण्डाभोगे कपोलतले पुलकपटलं रोमाञ्चजालं प्रियचुम्बन-संकल्पवशादिति भावः। तथा मूर्च्छना मोहः निरतिशयतन्मयत्वादेकदा सर्व्वेन्द्रियशक्ति-

---

(১৪) কটিবস্ত্রবন্ধনের শ্লথীভাব, ওষ্ঠের কম্পন, বাহুযুগলের শৈথিল্য ও (সর্ব্বাঙ্গে) ঘর্ম্ম পরিলক্ষিত হইতেছে, এবং ইহার চক্ষুর তারাযুগল কোমল, সুন্দর সর্ব্বদা কুঞ্চিত ও স্নেহব্যঞ্জক দেখা যাইতেছে। আরও ইহার শরীরে চেষ্টার অভাব, বক্ষঃস্থল পর্য্যন্ত কাঁপাইয়া স্তনযুগলের কম্পন, গণ্ডদেশে রোমাঞ্চ, (কখন) মূর্চ্ছা ও (কখন) চৈতন্য পরিলক্ষিত হইতেছে।

[ इत्युपसर्पति । ] (१५)

लव । [मालतीं चालयित्वा । ] (१६) मालदि ! इदो । (अ)

[ उभे उत्तिष्ठतः । ] (१७)

(अ) मालति ! इत ।

विगम इति यावत्। चेतना गतिविलासमङ्गल्येनाक्षरा चैतन्यञ्च। पक्षिलत्वात इत्यध्याहृत क्रियया सर्व्वत्रान्वयो निर्व्वाह्यः।

अत्र "स्त्रीकटीवस्त्रबन्धे च नीविपरिपणेऽपि च" इत्यमराद्यनुशासनात् नीवीशब्देनैव कटीवस्त्र-ग्रन्थिपर्य्यन्तलाभे पुनर्ग्रन्थिमोक्षकबन्धपदोपादानादापतित पुनरुक्ततादोषः, राढ़ीः श्विर इतिवत ग्रन्थिबन्धयोरवयवावयविभावविवक्षया कथञ्चित् समाधेयः।

अत्र स्तनमुकुलयोरित्यत्राभेदाध्यवसाये रूपक तदभावे उपमा, एव मूर्च्छनाचेतनयोर्व्विरु-पयो, संघटनादिषमालङ्कारः, तथा ततक्षतविच्छित्त्या नीवीबन्धोच्छ्वसनादिसाधनैः मालत्याः काल्पनिकप्रियसमागमानुभवरूपसाध्यस्य ज्ञानादनुमानालङ्कारश्च। अनुमानाकारश्च—मालती काल्पनिकप्रियसमागमानुभववती वास्तवप्रियसमागमानुभवाभावे सति नीवीबन्धोच्छ्वसनादि-तत्त्वक्षणवत्त्वादिति, हेतुतावच्छेदकसम्बन्धस्य साध्यसमानाधिकरणसम्पादको हेतुभेदेन यथायथं स्वयमुहनीयः विस्तरभयान्न लिख्यते। अनुमानालङ्कारलक्षणं यथा दर्पणे—"अनुमानन्तु विच्छित्त्या ज्ञानं साध्यस्य साधना"दिति। मन्दाक्रान्तावृत्तम्॥

१५। उपसर्पति समीपं आगच्छति कामन्दकीत्यर्थः।

१६। मालतीं माधवैकमनस्कतया बाह्यज्ञानशून्यामित्यर्थः। चालयित्वा बोधयित्वा।

(अ) इतः अस्मिन् कामन्दकी उपस्थितेति शेषः।

१७। उभौ मालतीलवङ्गिके। उत्तिष्ठत इति कामन्दक्या अभ्यर्थनार्थमित्यर्थः।

(১৫) ( কামন্দকী নিকটে উপস্থিত হইলেন )

(১৬) লব। ( মুগ্ধপ্রায়া ) মালতীকে সঞ্চালিত করিয়া ) মালতি ! এই যে (দেবী উপস্থিত হইয়াছেন)

১৭। ( উভয়ে উঠিয়া দাঁড়াইল )

मालः । भअवदि ! वन्दामि । (ट)

काम । महाभागे ! अभिमतफलभाजनं भूयाः । (१८)

लव । एदं आसणं, एत्थ उवविसदु भअवदी । (ठ)

[ सर्वा उपविशन्ति । ] (१९)

माल । कुसलं भअवदीए ? (ड)

काम । [निःश्वस्य । ] कुशलमिव । (२०)

लव । [स्वगतं ।] पत्थावणा क्खु एसा कवडनाडअस्स । [प्रकाशम्] गुरुअ-वाह-भरत्थम्भमन्थरिद-कण्ठ पडिलग्ग गोमासं भम्भारिसं जेव्व भअवदीए वअणं, ता किं दाणिं उवेअकारणं हुविस्सदि । (ढ)

---

(ट) भगवति ! वन्दे ।

(ठ) एतदासनं अत्रोपविशतु भगवती ।

(ड) कुशलं भगवत्याः ?

(ढ) प्रस्तावना खलु एषा कपटनाटकस्य । गुरुकबाष्पभरस्तम्भमन्थरितकण्ठप्रतिलग्नप्रतिश्वास मन्थादृशमिव भगवत्या वचनम् । तत् किमिदानीमुद्वेगकारणं भविष्यति ।

---

१८ । कामेति । अभिमतफलस्य माधवसमागमरूपस्य भाजनं पात्रम् ।

२० । कामेति । इवशब्देन मनागपि कुशलाभावः सूचितः ।

(१९) लवेति । एषा सनिःश्वासा कुशलमिवेतीवशब्देन [illegible], कपटैकरसीव नाटकं तस्य प्रस्तावना आमुखं सूचनेत्यर्थः । [illegible] भवेत्, [illegible] इति भावः । निःश्वसितशब्दसूचितस्य व्याकुलीभावस्य

---

(ঞ) মাল । ভগবতি ! প্রণাম করি ।

১৮ । কাম । মহাভাগে ! অভিমত ফলভাজন হও । (অভিমত ফল লাভ কর)

(ট) লব । এই আসন, ভগবতি ! উপবেশন করুন ।

(১৯) (সকলে উপবেশন করিল)

(ঠ) মাল । ভগবতীর কুশল ত ?

(২০) কাম । (দীর্ঘ নিশ্বাস ফেলিয়া) কুশলের মত ।

(ড) লব । (স্বগত) ইহাই কপট নাটকের সূচনা । (প্রকাশে) গুরুতর

काम। ननु अयमेव चीरचीवरविरुद्धः परिचयः। (२१)

लव। कथं विय ? (ग)

काम। अयि! त्वमपि न वेत्सि ? (२२)

इदमिह मदनस्य जैत्रमस्त्रं सहजविलासनिबन्धनं शरीरम्।
अनुचितवरसंप्रदानशोच्यं, विफलगुणातिशयं भविष्यतीति ॥२३॥

(घ) कथमिव ?

कारणं परीप्सुः पृच्छति—गुरुकेति। गुरुकस्य महत बाष्पभरस्य अश्रुसमूहस्य यः भरः अन्तर्निरोध, तेन मन्थरिते मन्दीकृते कण्ठे प्रतिलब्ध सुलब्ध निश्वासो यत्र तथाभूत मन्दीभावलक्षण एव निश्वासोद्गमात् तादृशकण्ठान्तर्भावेनैव संसक्तोनिःश्वासमित्यर्थः, भगवत्या वचनं अन्यादृशं पूर्वतो विलक्षणं श्रूयत इति शेष।

२१। कामेति। नन्विति सर्वाङ्गिकाभरूती। चीरं छिन्नवसनं निर्म्मितस्य चीवरस्य बौद्धसन्न्यासिवसनस्य छिन्नवस्त्रनिर्म्मितवस्त्रपरिधानस्य बौद्धसन्न्यासिधर्मात्मिद्धत्वात्। बौद्ध-सन्न्यासिनो हि नूतनमपि वसन बहुधा विच्छिद्य पुनस्तत्सन्धीजननिर्म्मितं वसनं व्यवहरन्ति। विरुद्धः सहानवस्थायी प्रतिकूल इति यावत। "सर्व्वसङ्गपरित्यागः पारिव्राजविधिर्म्मतः" इत्यादि धर्म्मशास्त्रैर्निषिद्धत्वादित्यर्थः। अर्थ—युष्माभिः सह सम्पर्क, परिचयः सम्प्रत, उद्वेगकारण-मिति शेष। यदि युष्माभिरेव परिचयो न सम्पत्स्यत, तदा मालतीमाधवमिलनार्थमुद्योगोऽपि मम नाभविष्यदित्याशयः।

(घ) लवेति। उद्वेगकारणं स्पष्टं श्रोतुं पुनः पृच्छति—कथमिवेति। अस्माभि सह परिचय कथमुद्वेगकारणमिति सुस्पष्ट ब्रूहीत्यर्थः।

२२। कामेति। त्वमपि न वेत्सीति, मालत्याः शुभानुध्यायिन्या प्रियसख्या त्वया इदमनिष्ट-मावश्यमनुसन्धातुं ज्ञातव्यमथच प्रायः सर्वजनविदितमप्येतत्र ज्ञातमित्याश्चर्य्यमित्यर्थः।

२३। स्वयमेवोद्वेगकारणं वक्ति—इदमिति। इह अस्मिन् यौवनप्रारम्भे मदनस्य कामस्य

অশ্রুসমূহের অন্তর্নিরোধবশতঃ মন্দীভূত কণ্ঠে নিশ্বাস লাভ করায় ভগবতীর বাক্য যেন অন্যরূপ প্রতীয়মান হইতেছে, তবে এখন উদ্বেগের কারণ কি ?

(২১) কাম। ছিন্ন বস্ত্রনির্ম্মিত ভিক্ষুবসনের বিরুদ্ধ তোমাদের সহিত এই পরিচয়ই উদ্বেগের কারণ।

(ঢ) লব। কি প্রকার ?

(২২) কাম। অয়ি! তুমিও কি জান না ?

(২৩) কামদেবের জয়শীল অস্ত্রস্বরূপ অকৃত্রিম বিলাসাস্পদে এই মালতীর

मालः। [स्वगतं।] कधं उवहारीकिदह्मि तादेण राइणो। (थ)

कामः। आश्चर्य्यम्।

गुणापेक्षाशून्यं कथमिदमुपक्रान्तमथवा,
कुतोऽपत्यस्नेहः कुटिलनयनिष्णातमनसाम्?।
इदं त्वैदम्पर्य्यं यदुत नृपतेर्नर्मसचिवः,
सुतादानान्मित्रं भवतु स हि मे * नन्दन इति॥२५॥

---

(थ) कथमुपहारीकृतास्मि तातेन राज्ञः।

---

(थ) मालतीति। राजानुरोधेनैव दानस्याङ्गीकरणात् नन्दनस्य इत्यनभिधाय राज्ञ इत्युक्तम्। उपहारीकृता उपायनीकृता। यथा देवतोपहारीकृतच्छागादीनां मरणमेव शरणं भवेत्, तथैवोपहारीकृताया ममापीति ध्वन्यते। चिन्तयैव पितुर्गुणानभिधाय ध्वन्यते। इह पश्चात्तापनामा नाट्यालङ्कारः। तदुक्तं—"अनुतापातिरेकस्तु पश्चात्ताप उदाहृतः" इति।

(२५) गुणेति। गुणापेक्षाशून्यं रूपशीलवयोविद्यादिगुणविचारनिरपेक्षं इदं हीनयौवनाय कुरूपाय नन्दनाय नन्दिन्या असामान्यरूपलावण्यादिसम्पन्नाया मालत्या दानरूपं कथमुपक्रान्तं आरब्धं अमात्येनेति शेषः। एतादृशानुष्ठानममात्यस्यापत्यं प्रति सर्वथैवासद्भावमत आश्चर्य्यमित्यर्थः। पक्षान्तरमाश्रित्य स्वयमेव समर्थयति—अथवेति। कुटिलनये कूटनीतौ निष्णातानि निपुणानि "निष्णातोऽस्त्री स्नाने कौशले" इत्यनेन निष्णातेति सत्वं, मनांसि येषां तादृशानां अपत्यस्नेहः कुतः? अर्थात् नास्तीति भावः। कूटनीतेरभिसन्धिमपि स्वयमेव स्फुटीकरोति—इदमिति। उत वितर्के निश्चये वा "उत निश्चयतर्कयोः" इति धरणिः। इदं भवद्भूरिकन्यादानोपक्रमणं वैदग्ध्यं इदम्परं एतदभिप्रायकमिति यावत्। इदम्परशब्दात् चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ्। यत् नृपतेः नर्मसचिवः विदूषकः स नन्दनः सुतायाः कन्यायाः दानात् मे मम मित्रं सुहृत् भवतु इति। तथात्वं राजद्वारि कदापि ममाहितं न भवेदित्यभिसन्धिरिति भावः।

---

(থ) মাল। (স্বগত) পিতা কেন রাজাকে আমায় উপহার দিলেন?

(২৫) কাম। কি আশ্চর্য্য! গুণাদির অপেক্ষা না করিয়া কেন অমাত্য এরূপ দানে স্বীকৃত হইলেন? অথবা যাঁহাদের চিত্ত কেবল কূটনীতি বিষয়ে নিপুণ, তাঁহাদের অপত্যস্নেহ কোথায়? এই দানাঙ্গীকারের ইহাই উদ্দেশ্য যে, রাজার নর্ম্মসচিব সেই নন্দন কন্যাদানদ্বারা আমার পরম মিত্র হউক।

---

* "सहि मे" इत्यत्र "सम भवि"ति क्वचित् पाठः, पुत्र इति तदर्थः।

माल। [स्वगतं।] राआराहणं क्खु तादस्स गुरुअं, ण उण मालदी (द)

लव। एव्वं जधा भअवदीए आणत्तं, अण्णधा तस्सिं वरे दुद्दंसणे अदक्कन्त-जोव्वणे किं ण विआरिअं अमच्चेण ? । (ध)

माल। [स्वगतम्।] हा हदम्हि! समुवट्ठिदाणत्थ-वज्जपदणा मन्द-भाइणी (न)

---

(द) राजाराधनं खलु तातस्य गुरुकं न पुनर्मालती।

(ध) एवं यथा भगवत्या आज्ञप्तं, अन्यथा तस्मिन् वरे दुर्दर्शने अतिक्रान्तयौवने, किं न विचारितममात्येन ?

(न) हा हतास्मि, समुपस्थितानर्थरूपवज्रपतना मन्दभागिनी।

---

अत्रार्थविश्रान्तावपत्यस्नेहाभावरूपसाधारणधर्मेण असदृशवरार्पणोपक्रमरूपविशेषस्य समर्थनादर्थापत्त्यनुप्राणितार्थान्तरन्यासालङ्कारः। अर्थापत्तिलक्षणं यथा दर्पणे—"दण्डापूपिकयान्यार्थागमोऽर्थापत्तिरिष्यते" इति। यच्छब्दान्वितवाक्यस्य परपाठादाकाङ्क्षितविधेयाविमर्शाख्यो दोषः। शिखरिणी वृत्तम्।

(द) मालेति। राजाराधनं राज्ञः सन्तुष्टिसाधनं गुरुकं महत्। न पुनर्मालती गुरुरित्यर्थः। कथमन्यथा मालत्या एवमसदृशसम्प्रदानाङ्गीकारेण राजाराधनं क्रियेतेति भावः।

(ध) लवेति। भगवत्या यथा आज्ञप्तं मालत्या नन्दनायार्पणस्य कारणं यथा अभिहितं एवं एवमेव तत्तथैवेत्यर्थः। अन्यथा—तादृशकारणं विना, तस्मिन् वरे नन्दने, दुर्दर्शने कुरूपे, अतिक्रान्तयौवने वृद्धतुल्ये। किं किमर्थं न विचारितं किं अविचार्यैव दानमङ्गीकृतमित्यर्थः।

(न) मालेति। समुपस्थितं अनर्थं नन्दनार्पणरूपमनिष्टं एव वज्रपतनं अशनिसम्पातो यस्याः तादृशी मन्दभागिनी अहं हतास्मि तातेन दैवेन वेति शेषः। जीवितमरणात्।

---

(द) माल। (স্বগত) রাজার তুষ্টিসাধনই পিতার অধিক হইল, কিন্তু মালতী নহে।

(ধ) লব। আপনি যাহা বলিলেন, তাহাই ঠিক, নচেৎ কেন অমাত্য হীনযৌবন বৃদ্ধ তুল্য সেই বরে দানাঙ্গীকার করিতে বিচার করিলেন না।

(ন) মাল। (স্বগত) হায় আমি নিতান্ত মন্দভাগিনী, তাই এই অনভিলষিত দানাঙ্গীকাররূপ অশনিসম্পাতে হত হইলাম।

लव। ता पसीददु भअवदी, परित्ताहि इमादो जीविदमरणादो पिअसहीं, तथावि एसा दुहिदा ज्जेव्व। (प)

काम। अयि, सरले! किमत्रभवत्या मया शक्यं कर्त्तुम्? प्रभवति प्रायः कुमारीणां जनयिता दैवञ्च। यत्र किल कौशिकी शकुन्तला दुष्मन्तं अप्सराः पुरूरवसञ्चकमे, इत्याख्यानविद आचक्षते, वासवदत्ता च राज्ञे सञ्जयाय पित्रा दत्तमात्मानमुदयनाय प्रायच्छत् इत्यादि, तदपि साहसिक्यमित्यनुपदेष्टव्यकल्पं, (२६) सर्वथा,—

(प) तत प्रसीदतु भगवती, परित्रायस्व अस्माज्जीवितमरणात् प्रियसखीं, तथाप्येषा दुहितैव।

(प) तथेति। जीवित जीवनमेव मरणं तस्मात्। निरन्तरदुःखबहुलत्वाद् ईदृश-जीवितस्य मरणकल्पत्वादिति भावः। दुहितैव कन्यातुल्यैव। तथाचापदनिर्विशेषत्वेन करुणया वा यथास्या नन्दनार्पणं न भवेत्तथा यतितव्यमिति भावः।

(२६) कामेति। विस्पष्टमर्थं तद्विषयं नावगच्छसीति दूषयितुमामन्त्रयति—सरले इति। ऋजुप्रकृतिके इत्यर्थः। अत्र अस्मिन् नन्दनार्पणविषये, अत्रभवत्याः निरतिशयसौन्दर्य-सद्गुणादिभिः सर्वजनपूज्यायाः मालत्या इति शेषः, किं कर्त्तुं मया शक्यं न किमपि शक्य-मित्यर्थः। अथाकारणेऽपि बन्धुतानुवर्त्तित्वे किं कर्त्तुं मया अशक्यम्? न किमपीत्यर्थोऽपि ध्वन्यते। अशक्यत्वे हेतुमाह—प्रभवतीति। कुमारीणामिति दानादाविति शेषः। गान्धर्व-विवाहे कन्यावरयोरपि प्रभुत्वमस्तीत्यावेदयितुं प्रायःपदमुपात्तम्। साहसे मतिं निवेदयितुं प्रख्यात पुरावृत्तं सक्षेपतः कीर्त्तयति—यत्रेति। कौशिकस्य विश्वामित्रस्यापत्यं स्त्री कौशिकी। दुष्मन्तमिति चकमे इत्यागामिनान्वयः। अप्सरा उर्वशी पुरूरवसं तन्नामानं चन्द्रवंशीयराजानं चकमे अन्यैरपीत्येवं कामयते स्म। आख्यानविदः पुराणशास्त्रादिसारदर्शिनः आचक्षते कीर्त्तयन्ति। दत्तं दातुमङ्गीकृतम्। प्रायच्छदित्यादीति आचक्षत इत्यनेनैवान्वेति। साहसिक्यं साहसिकस्य कर्म, इति हेतोः अनुपदेष्टव्यकल्पं आश्वेवोपदेशायोग्यं आकस्मिकचिन्तया यदि

(প) লব। অতএব ভগবতী আপনি প্রসন্না হউন, প্রিয় সখীকে এই জীবন্মৃত অবস্থা হইতে রক্ষা করুন। মালতী ত আপনার কন্যার তুল্য।

(২৬) কাম। অয়ি সরলে! সৌন্দর্য্য-গৌরবে সর্ব্বজনপূজ্য মালতীর নন্দনার্পণবিষয়ে আমি কি করিতে পারি? যে হেতু কুমারীদিগের দানাদিবিষয়ে পিতা এবং দৈবই প্রায় কর্ত্তা। তবে বিশ্বামিত্রকন্যা শকুন্তলা দুষ্মন্তকে, ও

राज्ञः प्रियाय सुहृदे सचिवाय कार्य्यात्
दत्त्वात्मजां भवतु निर्वृतिमान् अमात्यः।

---

स्वयमेव प्रवर्त्तेथां, तदाऽस्माभिः साहाय्यं कार्य्यमिति भावः। कल्पपदोपादानादीदृगवस्थायां तूपदिष्टव्यमित्यर्थोऽपि ध्वन्यते।

अत्र भद्रा साहसायोत्साहप्रदर्शनेन भेदो नाम मुखसन्ध्यङ्गं, "भेदः प्रोत्साहना" इति दर्पणधृतलक्षणात्। आख्यानमाला निदर्शननामा च नाट्यालङ्कारः क्रमेण। तल्लक्षणं यथा—"आख्यानन्तु तदुद्दिष्टं यत् पुरावृत्तकीर्त्तनं। कथनादन्यचेष्टानां साध्यसिद्धिर्निदर्शन"मिति।

"स्त्रियां बहुष्वप्सरसः" इत्याद्यमरानुशासनैरप्सरसूशब्दस्य बहुत्वविधानस्य प्रायिकत्वादत्राप्सरा इत्येकत्वनिर्देशेऽपि न च्युतसंस्कारताख्यदोषः। अत एव कातन्त्रपरिशिष्टकृता श्रीपतिना "या च जलौकसः समा अप्सरसः" विकल्पेनैव बहुत्वं विहितमित्याद्यनुसन्धेयम्।

पुराकिल कण्वो नाम महर्षिर्विश्वामित्रेण मेनकायामुत्पादितां कन्यां मातापितृभ्यां परित्यक्तां अरण्ये समाप्य कृतशकुन्तलानामधेयां प्रतिपालितवान्। ततः प्राप्तयौवनां तामतिथिसत्कारे नियोज्य तपश्चरणार्थं गते महर्षिकण्वे तमनपेक्ष्यैव सा शकुन्तला तपोवनदर्शनार्थमागताय दुष्मन्तायात्मानं स्वयमपि समर्पितवतीति महाभारतादिपर्वकथा।

पुरा पुराणमुनिर्नारायणस्तपोविघ्नार्थमागतानामप्सरसां गर्व्वखर्व्वकरणायोर्व्वशीमतीव सुन्दरीमुरुदेशादुत्पादयामास, साचैकदा दैत्यैरपह्रियमाणा कृतार्त्तस्वरा पथि गच्छन् पुरूरवा नाम चन्द्रवंशीयनरपतिर्दैत्यहस्तादररक्ष, तदानीमेव सोर्वशी जितकन्दर्पं तं भूपमन्यनिरपेक्षैव कामयते स्मेति हरिवंशीयकथा।

आसीत् पुरा प्रद्योतनामा नरपतिः, स च स्वीयकन्यां वासवदत्तां सञ्जयनाम्ने राज्ञे दातुमङ्गीकृतवान्। ततश्च सा वासवदत्ता वत्सराजमुदयनं स्वप्ने समालोक्य तत्रानुरक्ता गुरुजनमनपेक्ष्यैव दूतमुखेन तस्मै राज्ञे स्वाभिलाषं विज्ञापितवती। उदयनोऽपि तामपहृतवानिति कथासरित्सागरकथा चानुसन्धेया॥

---

অপ্সরা উর্ব্বশী পুরূরবাকে যে (অন্যমুখাপেক্ষিণী না হইয়াই) কামনা করিয়াছিল, ইহা পুরাণশাস্ত্রবিদ্গণ বলিয়া থাকেন, এবং বাসবদত্তা যে সঞ্জয়নামক রাজাকে দেওয়ার জন্য পিতা কর্ত্তৃক অঙ্গীকৃত হইয়াও উদয়নে আত্মসমর্পণ করিয়াছিলেন, তাহাও সাহসিকের কর্ম্ম, সুতরাং উপদেশের অযোগ্য।

दुर्दर्शनेन घटतामियमप्यनेन,
धूमग्रहेण शशिनो विमला कलेव ॥ २७ ॥

माल। [साम्र स्वगतं।] हा ताद! तुमम्पि मम णाम एव्वंत्ति सव्वधा जिदं भोअतिह्णाए। (फ)

(फ) हा तात! त्वमपि मम नाम एवमिति सर्वथा जितं भोगतृष्णया।

२७। साम्प्रतमौत्सुक्यजनकं पितुः स्वार्थमिव वरस्य च दोषं भङ्ग्या प्रतिपादयति —राज्ञ इति। अमात्य भूरिवसुः, कार्य्यात् स्वीयाभीष्टसाधनानुरोधात् राज्ञे नरपतेः प्रियाय प्रीतिनिमित्ताय सुहृदे भोः...शालिने। प्रियसुहृदोर्लक्षणं अपुत्रके भावप्रकाशे। यथा—

"अन्यरागार्जवरतिरुपकुर्वन् प्रियं वदन्।
भजते यः स्वयं प्रीतिं प्रियः स परिकीर्त्तितः॥
दुःखे विपदि सम्मोहे कार्य्यकालात्ययेऽपि च।
हितान्वेषी च हितकृद्यः सुहृत् सोऽभिधीयते" ॥

सचिवाय अमात्यमात्याय नन्दनाय आत्मजा कन्या दत्ता निर्वृतिमान् सुखी राजद्वारि अनिष्टाशङ्काविरहेण स्थितिः इति यावत्, भवतु। तथा इयमपि मालती दुर्दृष्टं दर्शनं यस्य तेन दर्शनादेवानिष्टसूचकेनेत्यर्थः, धूमग्रहेण धूमकेतुनाम्ना नक्षत्रविशेषेण। धूमकेतुरुदित, एवाशुभं ददातीति प्रसिद्धिः. विमला मलरहिता शशिनश्चन्द्रस्य कला इव दुर्दर्शनेन कुरूपेण अनेन नन्दनेन सह घटतां सयुज्यताम्, पितुर्निर्देशादिति भावः। धूमकेतुसहोदरेण नन्दनेन सह, शशिकलातुल्यायाः मालत्याः सम्मेलनमतीव दुःखजनकमित्यर्थोऽपि ध्वन्यते। अत्रोपमालङ्कारयोः सङ्करः। वसन्ततिलकं वृत्तम्।

(फ) मालतीति। एव अनर्थसम्पादकः। इति हेतोः भोगतृष्णया विषयोपभोगलालसया, जितं सर्वोत्कर्षेण वृत्तम्। यथा भोगतृष्णया त्वं परमस्नेहास्पदामपि मामात्मजां कुरूपायातिक्रान्तयौवनाय दातुं न कुण्ठितोऽसि मन्ये सैव सर्वथा बलवतीति भावः।

---

(২৭) অমাত্য ভূরিবসু স্বকীয়াভীষ্ট সিদ্ধির অনুরোধে রাজার প্রিয়সুহৃৎ অমাত্য নন্দনে আত্মজাকে দান করিয়া সর্ব্বপ্রকারে নিশ্চিন্ত হউন। নির্ম্মল শশিকলা যেমন দুর্দ্দর্শন ধূমকেতুর সহিত সম্মিলিত হয়, সেইরূপ এই মালতীও কুরূপ এই নন্দনের সহিত সম্মিলিত হউক।

(ফ) মাল। ( অশ্রুবিসর্জ্জন করিতে করিতে স্বগত ) হা তাত! তুমি ও

अव । चिराइद भअवदीए, णं भणामि, अमुत्थसरीरो महाभाओ माहवोत्ति । (ब)

काम । गम्यते, ० वत्से ! अनुजानीहि माम् । (२८)

लव । [जनान्तिकम् ।] सहि ! मालदि ! सम्पदं भअवदीए सआसादो, तस्स महाणुभावस्स उग्गमं जाणीमो । (भ)

---

(ब) चिरायितं भगवत्या, ननु भणामि अस्वस्थशरीरः खलु महाभागो माधव इति ।

(भ) सखि ! मालति ! साम्प्रतं भगवत्याः सकाशात्, तस्य महानुभावस्य उद्गमं जानीमः ।

---

(ब) अवेति । साहसाहीकारणस्यानुकूलतया पितुः स्वार्थित्वं नन्दनस्य च सर्वथैवायोग्यत्वं भगवत्याविष्कृतं अधुना माधवस्यावस्थापि प्रसङ्गादवगन्तव्येति भावशाऽवलोकिताभूमिका रचयति— चिरायितमिति । चिरायितं एतत्प्रसङ्गेन बहु विलम्बितं । अस्वस्थशरीरः पीडाभिभूतदेह तस्मात्तूर्णं तत्र गन्तव्यमित्याशयः ।

(२८) कामेति । गम्यते इत्यवलोकिता प्रत्युक्तिः, अधुनैव गम्यते इत्यर्थः । मालतीं प्रत्याह— वत्से इति । अनुजानीहि अनुमतिं वितर गमनायेति शेषः । अनेन "भेदो"नाम मुखसन्ध्यङ्गमुक्तं, "भेदः संहतिभेदनम्" इति दर्पणलक्षणात् ।

(भ) लवेति । जनान्तिकमित्यस्याहर्तव्याहक्रियायाः विशेषणम्, "अन्यस्याग्रतः कार्यैण पार्श्वस्थे स्याज्जनान्तिक"मिति भरतोक्तं तल्लक्षणम् । तस्य माधवस्य ; उद्गमं उत्पत्तिम् ।

---

আমার এরূপ অনর্থসম্পাদক হইয়াছে ? সুতরাং ভোগতৃষ্ণাই সর্ব্বপ্রকারে জয়লাভ করিল।

(ব) অব। ভগবতী অনেক বিলম্ব করিলেন, আমি বলিতেছি যে, মহাভাগ মাধব অসুস্থ।

(২৮) কাম। (অবলোকিতার প্রতি) বৎসে। আমি যাইতেছি। (মালতীর প্রতি) আমাকে (গমনের) অনুমতি কর।

(ভ) লব। (জনান্তিকে) সখি মালতি! সংপ্রতি ভগবতীর নিকট হইতে সেই মহানুভাবের (মাধবের) উৎপত্তিকথা পরিজ্ঞাত হই।

मालः। [अपवार्य्य] सहि! अत्थि मे कोदूहलं। (म)

लव। [प्रकाशम्।] भअवदि! को एसो माहवो णाम, जस्स भअवदी सिणिद्धगुरुअं अत्ताणं धारेदि? (य)

काम। अप्रस्ताविकी महती एषा कथा। (२८)

लव। तधावि आचक्खदु, मे भअवदी। पसादं करेदु। (र)

---

(म) सखि। अस्ति मे कौतूहलम्।

(य) भगवति। क एष माधवो नाम, यस्य भगवती स्वं स्निग्धगुरुकमात्मानं धारयति?

(र) तथाप्याचष्टां मे भगवती प्रसादं करोतु।

---

(म) मालेति। अपवार्य्य अपवारितं कृत्वा, अपवारितलक्षणं, यथा दर्पणे—"...तद्भवेदपवारितम्। रहस्यन्तु यदन्यस्य परावृत्य प्रकाश्यते। त्रिपताककरेणान्यानपवार्य्यान्तरा कथा"मिति। मे ममापि कौतूहलं औत्सुक्यं अस्ति तत् श्रोतुमिति शेषः। तस्मात् पृच्छेत्यर्थः।

(य) लवेति। यस्य कृते इति शेषः। क्वचिद्यस्मिन्निति पाठः। स्निग्धगुरुकं वात्सल्यप्रवणम्।

(२८) कामेति। अप्रस्ताविकी अप्रासङ्गिकी, महती विस्तृता च, सुतरां तत्कथनस्य नायमवसर इति भावः। गूढ़ताविशयोत्पादनाय कविनोक्तिरियम्।

(र) लवेति। तथापि अकृतप्रस्तावाऽपि, आचष्टां कथयतु, ममानुरोधादित्यर्थः। कथं तवानुरोधो रक्षितव्य इत्याकाङ्क्षायामाह—प्रसादं करोतु इति। तदभिधानरूपमनुग्रहं विधेहीत्यर्थः।

---

(ম) মাল। (অন্তেব অশ্রুতভাব প্রকাশকরতঃ) সখি! আমারও (সে কথা শুনিতে) কৌতূহল আছে।

(য) লব। (প্রকাশ্যে) ভগবতি; মাধবনামক এ ব্যক্তি কে? যাহার জন্ত ভগবতীর আত্মা অতি স্নেহপ্রবণ।

(২৮) কাম। একথা অপ্রস্তাবিক ও অতি বিস্তৃত। (সুতরাং এখন বলিবার উপযুক্ত নহে।)

(র) লব। তথাপি ভগবতী অনুগ্রহ করিয়া আমার নিকট বলুন।

कामं । श्रूयतां, अस्ति विदर्भाधिपतेरमात्यः, समस्तधुर्य्यपुरुष-प्रकाण्डचक्रचूडामणिर्देवरातो नाम, यम् अशेषभुवनमहनीयपुण्य-महिमानम् आत्मनः सतीर्थ्यं पितैव ते जानाति योऽसौ यादृश-श्चेति (२०) अपि च—

व्यतिकरितदिगन्ताः श्वेतमानैर्यशोभिः,
सुकृतविलसितानां स्थानमूर्जस्वलानाम् ।
अकलितमहिमानः केतनं मङ्गलानाम्,
कथमपि भुवनेऽस्मिन् तादृशाः सम्भवन्ति ॥ २१ ॥

---

(२०) काममिति । अपि कार्त्स्न्येन माधवो धुर्य्यो मन्त्रिणः, समस्तानां धुर्य्यपुरुषाणां यत्प्रकाण्डचक्रं श्रेष्ठसमूहः तस्य चूडामणिः चूडामणिरिव सर्वश्रेष्ठ इत्यर्थः । अशेषभुवने सर्वभुवनवासिलोकैरित्यर्थः, महनीयौ पूजनीयौ पुण्यमहिमानौ यस्य तं आत्मनः स्वस्य सतीर्थ्यं सहाध्यायिनं (समानं तीर्थं उपाध्यायो यस्येति सतीर्थशब्दात् यत्प्रत्ययः) "सतीर्थ्यास्त्वेकगुरव" इत्यमरः । ते तव मातुल्या इत्यर्थः । सहाध्यायितया बहुकालमेकत्रावस्थानेन तव पितैवास्य वंशगुणस्वभावादीनि सर्वाणि जानातीति मत्कथनेनालमिति भावः ।

(२१) तथापि यथावत् किञ्चित् श्रूयतामित्याह—व्यतिकरेति । श्वेतमानैः (श्वितावर्णे इति श्वितधातोरानशि रूपम्) शुभ्रीभवद्भिः यशोभिः, व्यतिकरः सम्बन्धः सञ्जातः एषामिति व्यतिकरिताः तारकादित्वादितच्, दिगन्ता येषां ते व्यतिकरितदिगन्ताः यशोव्याप्तदिगवकाशा इत्यर्थः । ऊर्जस्वलानां प्रबलानां सुकृतविलसितानां शुभादृष्टकार्याणां अथवा सुकृतानां पुण्यानां विलसितानां विलासानाञ्च स्थानमास्पदम् । तथा अकलित अपरिच्छिन्नः महिमा प्रभावः येषां ते तथोक्ताः । एवं मङ्गलानां मङ्गलानां केतनं निवासः । "केतनन्तु ध्वजे कार्य्ये निमन्त्रणनिवासयोः" इति विश्वः । तादृशाः देवरातत्ल्याः पुरुषाः अस्मिन् भुवने मर्त्त्यलोके

---

(২০) কাম। শ্রবণ কর। সমস্ত প্রধান মন্ত্রিপুরুষসমূহের চূড়ামণিস্বরূপ দেবরাতনামে বিদর্ভাধিপতির এক অমাত্য আছে, ত্রিভুবনসমাদৃত পুণ্যপ্রভাব-শালী সেই দেবরাতকে তোমার পিতাই নিজের সহাধ্যায়িরূপে জানেন, ইনি যেও যাদৃশ।

(২১) আরও শোন। যাঁহাদের শুভ্র যশঃসমূহে দিগন্ত পরিব্যাপ্ত, যাঁহারা

माल। [ सहर्षं ] सहि! तं क्खु भअवदीगहिदणामधेअं सव्वदा तादो सुमरेदि। (ल)

लव। सहि! समं क्खु भअवदीए गुरुस आसादो विज्जाहिगमो किदोत्ति, तक्कालसंवेदिणो मन्तअन्ति। (व)

(ल) सखि! तं खलु भगवतीगृहीतनामधेयं सर्वदा तातः स्मरति।

(व) सखि! समं खलु भगवत्या गुरुसकाशाद्विद्याधिगमः कृत इति तत्कालसंवेदिनो मन्त्रयन्ते।

कथमिव कथञ्चित् शापादिभिः कदाचिदित्यर्थः. सम्भवन्ति उत्पद्यन्ते। स्वर्गिणस्ताहृशाः महापुरुषा मर्त्यलोके शापादिभिर्योगिभ्रष्टाः कदाचित् सम्भवन्त्यपि विरला इति भावः। अत्र प्रानन्दैकसन्दोहात्सा इत्यस्य विशेषणत्वेऽपि 'वेदाः प्रमाण'मितिवत् विधेयप्राधान्यात् नपुंसकत्वमेकत्वञ्च बोध्यम्। ८

अत्र देवरातस्य प्राधान्यसम्पादनरूपकार्यं प्रति बहूनां कारणानां प्रदर्शनात् समुच्चयालङ्कारः। तल्लक्षणं यथा दर्पणे—"समुच्चयोऽयमेकस्मिन् सति कार्यस्य साधके। खले कपोतिकान्याया-त्तत्करः स्यात् परोऽपि चेत्। गुणक्रिये वा युगपत् स्यातां यद्वा गुणक्रिये"इति। मालिनी वृत्तम्।

(ल) सखीति। भगवत्या कामन्दक्या गृहीतं सश्लाघितं नामधेयं नाम यस्य तादृशं देवरातमित्यर्थः। मालत्या देवरातस्य भाविश्वशुरत्वं सम्भाव्य श्वशुरनामग्रहणस्य च शास्त्राचार-विरुद्धतया देवरातमित्यनुक्त्वा "भगवत्या गृहीतनामधेय"मित्येवंरीत्याभिहितमिति मन्तव्यम्।

(व) सखेति। सममिति देवरातभूरिवसुभ्यामिति शेषः। तत्कालवेदिनः तत्तत्समसामयिकाः मन्त्रयन्ते कथयन्ति। तथाच सतीर्थ्याविमौ परस्परं बाल्याभिमतत्वं, प्रणयः, स्मरणञ्च सर्वमुपपन्नमिति भावः।

प्रबल पुণ্য বিলাসের আশ্রয়স্বরূপ, যাঁহাদের প্রভাব অপরিচ্ছিন্ন ও যাঁহারা মঙ্গলের নিবাসস্বরূপ দেবরাতের ন্যায় তাদৃশ মহাপুরুষ এ জগতে অল্পই সম্ভূত হইয়া থাকে।

(ল) মাল। সখি! ভগবতী যাঁহার নাম করিলেন, সেই মহাপুরুষকে সর্বদাই আমার পিতা স্মরণ করেন।

(ব) লব। সখি! ভগবতীও তাঁহাদের সহিত গুরুসকাশে বিদ্যাভ্যাস করিয়াছিলেন, ইহা তৎসমসাময়িক ব্যক্তিগণ বলিয়া থাকেন।

काम। तत उदयगिरेरिवैक एव
स्फुरितगुणद्युतिसुन्दरः कलावान्।
इह जगति महोत्सवस्य हेतु-
र्नयनवतामुदियाय बालचन्द्रः॥ ३२॥

लव। [जनान्तिकम्।] सहि! अवि णाम माहवो भवे? (ञ)

(ञ) सखि! अपि नाम माधवो भवेत्?

(३२) सद्वंशत्वज्ञापनाय माधवस्य पितृगुणानुरूपां प्रकाशितां तदुत्पत्तिं कथयति—तत इति। उदयगिरेः उदयाचलादिव ततस्तस्मात् देवरातात् एक एव द्वितीयरहितः (एतेन पितुरैकापत्यतयातीव स्नेहास्पदोऽयमिति सूचितम्) स्फुरितानामतिप्रकाशितानां गुणानां रूपादीनां द्युत्या कान्त्या सुन्दरः सुभगः, यद्वा स्फुरिता गुणद्युतिर्यस्य स स्फुरितगुणद्युतिः स चासौ सुन्दरश्चेति कर्मधारयः। कलावान् नृत्यगीतादिचतुःषष्टिकलाभिज्ञः। (भाविन्यपि तादृशविद्याशालित्वे अलौकिकाकृतिदर्शनेन भाविनि भूतवदुपचारादुत्पत्तिकालेऽपि कलावत्त्वाभिधानमविरुद्धम्) इह जगति नयनवतां चक्षुष्मतां दर्शनशक्तिशालिप्राणिमात्राणामित्यर्थः, महोत्सवस्य परमानन्दस्य हेतुः कारणं बालचन्द्र इवेति बालचन्द्रः (उपमितसमासः) चन्द्रसदृशः कश्चिद्बालक इत्यर्थः, उदियाय उत्पन्नः। अत्र चन्द्रपक्षेऽपि तुल्यार्थकमेव सर्वं विशेषणं योज्यं, केवलं कलावानिति षोडशकलः इत्यर्थकम्। तदत्र उदयगिरेरिवेत्युपमानुसारात् श्लेषगर्भः पूर्णोपमालङ्कारः। पूर्णोपमायाः लक्षणं यथा दर्पणे—"सा पूर्णा यदि सामान्यधर्म औपम्यवाचि च। उपमेयञ्चोपमानं भवेद्वाच्य"मिति॥ पुष्पिताग्रा वृत्तम्॥

(ञ) लवेति। माधवो भवेदिति भगवत्या कथितोऽसौ बालचन्द्र इति शेषः।

(৩২) কাম। উদয়াচল হইতে চন্দ্রের ন্যায় সেই দেবরাত হইতে এক অদ্বিতীয় বালক উৎপন্ন হইয়াছে, যে বালক বিকাশিত রূপাদি কান্তিদ্বারা অতিসুন্দর ও চতুঃষষ্টিকলাভিজ্ঞ, এবং সে এই জগতে নেত্রশালী প্রাণিমাত্রেরই পরমানন্দের কারণ।

(ঞ) লব। (জনান্তিকে) সখি! সেই বালকই মাধব হইবে।

काम। असौ विद्याधारः शिशुरपि विनिर्गत्य भवनात्
इहायातः सम्प्रत्यविकलशरच्चन्द्रवदनः।
यदालोकस्थाने भवति पुरमुन्मादतरलैः,
कटाक्षैर्नारीणां कुवलयितवातायनमिव ॥ ३३ ॥

अत्र बालसुहृदा मकरन्देन सह, विद्यामान्वीक्षिकीमधिगच्छति, स एव माधवो नाम इति। (३४)

---

(३३)। असाविति। अविकलशरच्चन्द्रवदनः पूर्णशारदशशधरसदृशास्यः शिशुरपि बालोऽपि "बालो वापूरणषोडश" इति प्रचनात् पञ्चदशवर्षवयस्कोऽपि सन्नित्यर्थः। अन्यथा सर्वथा शिशोर्विद्याध्ययनयोग्यतयाऽसङ्गतेः। विद्याधारः आन्वीक्षिकीभिन्नविद्यानामाश्रयः न तु आन्वीक्षिकी मधिगच्छतीत्युत्तरवाक्याऽसङ्गतेः। असौ देवरातनन्दनः भवनात् स्वगृहात् विनिर्गत्य सम्प्रति इह अस्मिन्नगरे आयातः आगतः। यस्य आलोकस्थाने दर्शनयोग्यप्रदेशे पुरं नगरं (कर्तृ) उन्मादतरलैः कामावेशचपलैः नारीणां स्त्रीणां कटाक्षैः दृष्टिपातविशेषैः (करणैः) कुवलयितानि सञ्जातनीलोत्पलानि वातायनानि गवाक्षजालानि यत्र तत् तथोक्तमिव भवति। येन पथायं गच्छति तत्रत्याः पुरयुवत्यो वातायनैरेव व्यग्रतयैनं पश्यन्ति, येन तासां नयनैः वातायनानि सञ्जातकुवलयानि इव लक्ष्यन्त इति सरलार्थः। अनेन लोकोत्तरमस्य सौन्दर्यमिति सूचितम्।

अत्र शरच्चन्द्रवदन इति लुप्तोपमा, कुवलयितवातायनमिवेत्युत्प्रेक्षा, इत्यनयोः परस्परनैरपेक्ष्येण संसृष्टिः। शिखरिणी वृत्तम्॥

(३४) अत्रेति। अनु पश्चात् ईक्षा अन्वीक्षा परमार्थदर्शनं सैव प्रयोजनमस्या इत्यान्वीक्षिकी तर्कविद्या "आन्वीक्षिकी दण्डनीती तर्कविद्यार्थशास्त्रयो"रित्यमरः। तां अधिगच्छति अधीते।

---

(৩৩) কাম। যাহার বদন শরৎকালের পূর্ণ শশধরের ন্যায়, এবং যাহার দর্শনযোগ্য স্থানে কামাবেশচপলা নারীদিগের কটাক্ষদ্বারা পুরের বাতায়নগুলিতে নীলোৎপল উৎপন্ন হইয়াছে বলিয়া বোধ হয়, পঞ্চদশবর্ষবয়স্ক হইয়াও আন্বীক্ষিকী ভিন্ন সমস্ত বিদ্যার আধার এই বালক ভবন হইতে নির্গত হইয়া সম্প্রতি এস্থানে আসিয়াছে।

(৩৪) এস্থানে আসিয়া বালসুহৃৎ মকরন্দের সহিত আন্বীক্ষিকী বিদ্যা অধ্যয়ন করিতেছে। এই দেবরাতাত্মজই মাধব।

माल। [ सानन्दं जनान्तिकम् । ] सहि ! सुदं तुए ? (प)

लव। सहि ! कुदो वा महोदहिं वज्जिअ पारिजादस्स उग्गमोत्ति । (ष)

[ नेपथ्ये शङ्खध्वनिः । ]

काम। अहो ! कालातिपातः ! (३५) सम्प्रति हि—

---

(प) सखि ! श्रुतं त्वया ?

(ष) सखि ! कुतो वा महोदधिं वर्जयित्वा पारिजातस्य उद्गम इति।

---

"सभेदे नान्यतरवैयर्थ्य"मिति न्यायादस्य विद्यामित्यस्य न वैयर्थ्यम्। वक्तव्यमुपसंहरति—स एवेति। य एव देवरातात्मज उक्त, स एव माधवो नामेत्यर्थः। अपि विदर्भाधिपतेरित्यादि-सन्दर्भेण माधवं प्रति मालत्यनुरागस्य स्वाभिप्रेतस्य साधनाय बहुकीर्त्तनादस्य सिद्धिर्नाम नाट्यलक्षणं। तदुक्तं दर्पणे—"बहूनां कीर्त्तनं सिद्धिरभिप्रेतार्थसिद्धये" इति।

(प) मालतीति। श्रुतमिति माधवस्य सद्वंशोत्पन्नत्वादिकमिति शेषः। एतेन विशेषानुरागोदयो दर्शितः, तेन च षड्‌विंशो नाम मुखसन्धेरङ्गमुक्तं। तल्लक्षणं यथा दर्पणे— "बीजार्थस्य प्ररोहः स्यादुद्भेद" इति।

(ष) लवेति। महोदधिं महार्णवं वर्ज्जयित्वा परित्यज्य स्थितात् कुतः अन्यस्मादित्युत इत्यर्थः, तथाचाध्याहृतस्थितिक्रियैककर्त्तृकत्वात् प्रियं दृष्ट्वा मुखं स्यादित्यादिवद्वर्ज्जयित्वेत्यत्र क्तप्रत्ययः।

अत्र महोदधिभिन्नात् पारिजातोत्पादासम्भवरूपादप्रस्तुतात् समात् देवरातभिन्नात् माधवोत्पादासम्भवरूपस्य प्रस्तुतस्य समस्य गम्यमानत्वेन अप्रस्तुतप्रशंसालङ्कारः। तल्लक्षणं यथा दर्पणे— "क्वचिद्विशेषः सामान्यात् सामान्यं वा विशेषतः। कार्यान्निमित्तं कार्यञ्च हेतोरथ समात् समम्॥ अप्रस्तुतात् प्रस्तुतञ्चेद्गम्यते पञ्चधा ततः। अप्रस्तुतप्रशंसा स्यादिति"॥

(३५) कामेति। कालातिपातः कालक्षेपः नावगत इति शेषः। प्रस्तावितकथाख्यानव्यासङ्गादतिक्रान्तोऽपि कालो न परिज्ञात इति भावः। कालातिपातमेव समर्थयति—सम्प्रति हि इति।

---

(ध) माल। (আনন্দের সহিত জনান্তিকে) সখি! তুমি শুনিলে?

(ন) লব। সখি! মহোদধি ভিন্ন আর কোথা হইতে পারিজাতের উৎপত্তি হয়?

(নেপথ্যে শঙ্খধ্বনি হইতে লাগিল)

৩৫। কাম। আঃ! (কথাপ্রসঙ্গে) অনেক কালক্ষেপ হইয়াছে! সম্প্রতি—

क्षिपन्निद्रामुद्रां मदनकलहच्छेदसुलभाम्
अपामोत्कण्ठानां विहगमिथुनानां प्रथमतः।
दधानः सौधानामलघुषु निकुञ्जेषु घनताम्
असौ सन्ध्याशङ्खध्वनिरनिभृतः खे विचरति ॥ ३६ ॥

तदुत्तिष्ठामः * (३७)। [ इत्युत्तिष्ठति (३८)। ]

---

(३६) क्षिपन्निति। असौ श्रूयमाणः अनिभृतः अगुप्तः अतिविस्पष्ट इति यावत्, सन्ध्याशङ्खध्वनिः प्रतिदिननियमितः सन्ध्यासूचकः शङ्खशब्दः, अपाया सन्निहितविरहभावनया लब्धा उत्कण्ठा औत्सुक्यविशेषो यैस्तेषां विहगमिथुनानां चक्रवाकदम्पतीनां मदनकलहच्छेदेन सुरतावसानेन सुलभां अनायासप्राप्तां निद्रामुद्रां स्वापजनितमुद्रितावस्थां प्रथमतः आदौ क्षिपन् *विरहहेतुभूतरात्र्युपस्थितिज्ञापनेनापसारयन्*, ततः अलघुषु विशालेषु सौधानां प्रासादानां निकुञ्जेषु मध्यदेशेषु घनतां गाढतां प्रतिध्वनिना बहुलतामित्यर्थः, दधानः धारयन् खे आकाशे विचरति प्रसरति। तथाच सन्ध्या समागतेति नात्र विलम्बः कर्तव्य इति भावः।

अत्र चक्रवाकमिथुनानामिति विशेषे वक्तव्ये विहगमिथुनानामिति सामान्यप्रयोगात् विशेषेऽविशेषाख्यदोषः। निकुञ्जशब्दस्य लतामण्डपवाचित्वेऽपि सौधमध्यभागस्य निकुञ्जवत्सङ्कुलत्वात् तत्र मध्यभागलाक्षणिकनिकुञ्जशब्दप्रयोगान्न नेयार्थत्वदोषः, अन्यथा लाक्षणिकत्वमात्र एव तद्दोषप्रसङ्गात्।

एकस्य शङ्खध्वनेः क्रमेण चक्रवाककर्णसौधमध्यभागगगनेषु विचरणात् पर्यायालङ्कारः। तल्लक्षणं यथा दर्पणे—"क्वचिदेकमनेकस्मिन्ननेकं चैकगं क्रमात्। भवति क्रियते वा चेत्तदा पर्याय इष्यते॥" शिखरिणी वृत्तम्॥

(३७) तत् तस्मात् कालक्षेपादित्यर्थः।

(३८) अवलोकितया सह कामन्दकीति शेषः।

---

(৩৬) সন্ধ্যাকালে নিয়মিত শ্রূয়মাণ অতি বিস্পষ্ট এই শঙ্খধ্বনি প্রথমতঃ বিরহাশঙ্কায় উৎকণ্ঠিত চক্রবাকমিথুনের সুরতাবসানজনিত নিদ্রাবস্থাকে অপসারিত করিয়া বিশাল সৌধমধ্যভাগে গাঢ়ভাবলাভ করতঃ আকাশে বিচরণ করিতেছে।

(৩৭-৩৮) তবে আমরা উঠি, (এই কথা বলিয়া অবলোকিতার সহিত কামন্দকী উঠিলেন)।

---

* "भगवति! सुखं स्थीयता"मिति पाठान्तरम्।

मात। [अपवार्य्य।] कधं उवहारीकिदह्मि राइणो तादेण, राआराहणं क्खु तादस्स गुरुअं ण उण मालदी। [सास्रं।] हा ताद! तुमम्पि णाम मम एव्वं त्ति सव्वधा जिदं भोअतिह्णाए। [सानन्दं।] कधं महाकुलप्पभवो वि सो महाणुभाओ, सुभणिदं पिअसहीए कुदो वा महोदहिं वज्जिअ पारिजादस्स उग्गमोत्ति। अवि णाम सं पुणोवि पेक्खिस्सं (ङ)

लव। अवलोइदे! इदो एहि, एदिणा सोवाणेण ओदरह्म (च)।

---

(ङ) कथमुपहारीकृतास्मि राज्ञा तातेन, राजाराधनं खलु तातस्य गुरुकं, न पुनर्मालती। हा तात। त्वमपि नाम ममैवमिति, सर्वथा जितं भोगतृष्णया। कथं महाकुलप्रभवोऽपि स महानुभावः, सुभणितं प्रियसख्या, "कुतो वा महोदधिं वर्जयित्वा पारिजातस्योद्गम" इति। अपि नाम पुनरपि तं प्रेक्षिष्ये।

(च) अवलोकिते। इत एहि एतेन सोपानेनावतराव.।

---

(ङ) अपवार्य्य वलितग्रीव पराहत्य निभृतमिति यावत्। "निगूढभावसंयुक्तमपवारितकं मतं" इति भरतः। पूर्वोक्तमपि दुःखेन पुनः कथयति—कथमित्यादि। महाकुलप्रभवोऽपि प्रसिद्धवंशसम्भूतोऽपि न केवलमसामान्यरूपलावण्यपाण्डित्यादिसम्पन्न इत्यपेरर्थः। स माधवः, महानुभावः महाप्रभावः। अपि प्रश्ने, नाम सम्भावनायां, तं माधवं पुनरपि प्रेक्षिष्ये इति इतः परमेकवारदर्शनेऽपि जीवनं सार्थकं भवेदिति भावः।

(च) एहीति। इत अस्यां दिशि एहि आगच्छ। अत केवलावलोकिताया आह्वानेनैव समं मदयन्तिकायाः किञ्चिदग्रसरत्वमस्तीति सूचितम्।

---

(ঙ) মাল। (গ্রীবা ফিরাইয়া নিভৃতে) কেন রাজোদ্দেশে পিতা আমাকে উপহার দিলেন? রাজার তুষ্টিসাধনই পিতার গুরুতর হইল, মালতী নহে! (অশ্রু বিসর্জন করিয়া) হা তাত! তুমিও আমার প্রতি একপ দারুণ হইলে? সুতরাং ভোগতৃষ্ণাই সর্ব্বথা জয় লাভ করিল। (আনন্দের সহিত) কেন মহাকুলপ্রসূত হইয়াও তিনি মহাপ্রভাবশালী, অতএব প্রিয়সখী ভালই বলিয়াছে, "মহোদধিভিন্ন কোথা হইতে পারিজাতকুসুমের উৎপত্তি হয়"? এ দিকে এস, এই সোপানদ্বারা অবতরণ করি।

---

† "संजमनेने"ति क्वचित् पाठः, संयमनेन चतुःशालेनेति तदर्थः। "मज्जनमिदं। चतुःशाल"मित्यमरः।

काम [ अपवार्य्य। ] साधु, सम्प्रति मया तटस्थयैव, मालतीं प्रति निसृष्टार्थदूतीकृत्यस्य लघूकृतो भारः। तथाहि ( ३८ )

वरेऽन्यस्मिन् द्वेषः, पितरि विचिकित्सा च जनिता,
पुराहृत्तोद्गारैरपि च कथिता कार्य्यपदवी।
सुतं तस्याहात्म्यं, यदभिजनतो यच्च गुणतः
प्रसङ्गात् वत्सस्येत्यथ खलु विधेयः * परिचयः॥ ( ४० )

---

( ३९ ) कामेति। तटस्थयैव उदासीनयैव, न तु कृतमाधवपक्षपातयेत्येवकारार्थः। निसृष्टार्थदूतीकृत्यस्य "निसृष्टार्थदूतीकल्पस्त्वयितव्य" इति पूर्वप्रतिज्ञाततादृशदूतीकार्य्यस्य, भारः कर्त्तव्यत्वेन गुरुत्वं लघूकृतः कर्त्तव्यस्य प्राय साधिततया स्वल्पीकृतः। निसृष्टार्थदूतीलक्षणन्तु दर्पणोक्तं पूर्वमेव प्रदर्शितं। भरतोक्तं तल्लक्षणं यथा—"स्त्रीपुं सयोरागयवादेशाना स्वयञ्च कार्य्यं प्रतिपादयन्ती। सृष्टार्थिका सा परदारयोगे दूती नियोज्या बहुधा सुधीभि"-रिति। मालतीं प्रतीत्यनेन मदयन्तिका प्रति न लघूकृत इति सूचितम्। कृतांशं सङ्क्षेपणाभिधातुं कर्त्तव्यांशञ्च दर्शयितुमाह—तथाहीति।

( ४० ) प्रथमं कृतांशं दर्शयति—वर इति। अन्यस्मिन् वरे नन्दने द्वेषः कुरूपादिदोष कथनेन मालत्या वैरस्य जनित उत्पादित ( जनितेत्यस्यैव लिङ्गव्यत्ययेनान्वयः )। पितरि जनके भूरिवसौ विचिकित्सा भीमत्वमात्रयानृपानुरोधेन मत्सुखशान्तिमनपेक्ष्य नन्दनाय मामर्पयति कन्यायां स्नेहाभावेन वा राजसन्तोषमनपेक्ष्य माधवाय मामर्पयेदित्येवं सन्देहश्च जनिता सखीजनवाक्योपन्यासेन मया उत्पादिता। यथाच पितरि वैमुख्यं जायेतेत्याशयः। तथा पुरावृत्तानां शकुन्तलादिवृत्तान्तानामुद्गारैरुद्घाटनैः कार्य्यपदवी कर्त्तव्यपद्धति, पित्रादि-निरपेक्षैरणाभिलषितवराय आत्मार्पणरूपा सरणिरिति यावत्, कथिता वर्णिता मयेति शेषः। एवं वत्सस्य माधवस्य अभिजनतः सद्वंशतः यन्माहात्म्यं तथा गुणतः रूपलावण्यविद्यादिगुणैश्च

---

( ৩৯ ) কাম। সম্প্রতি উদাসীন থাকিয়াই আমি মালতীর প্রতি নিসৃষ্টার্থ-দূতীকার্য্যের ভার ভালরূপে লঘু করিয়াছি। দেখ—

( ৪০ ) অন্য বর নন্দনে দ্বেষ ও পিতৃবিষয়ে সংশয় উৎপাদিত করিয়াছি, পুরাবৃত্তোদ্ঘাটন করিয়া কার্য্যপ্রণালী বলিয়াছি। এবং প্রসঙ্গতঃ বৎসের

---

* "विधिविधेय" इति क्वचित् पाठः, सम्पादनीय इति तदर्थः।

[इति निष्क्रान्ताः सर्वे। (४१)

## इति मालतीमाधवे द्वितीयोऽङ्कः। (४२)

---

यन्माहात्म्यं महाभाग्यं वर्णितं इति शेषः। तदपि प्रसङ्गात् लवङ्गिकाजिज्ञासाप्रसङ्गेन स्तुत प्रशंसितम्। प्रसङ्ग विनाभिधाने माधवपक्षपातित्वाशङ्कया विश्वासयोग्यं न स्यादिति भाव।

एतेन वात्स्यायनकामशास्त्रानुसारित्वं दूतीकृत्यस्य प्रतिपादितम्। तथाहि वात्स्यायनकामशास्त्रे—कन्यासम्प्रयुक्तकाधिकरणे निसृष्टार्थदूतीकृत्यनिरूपणप्रकरणे सूत्राणि—"अन्यवरपितृणाश्च दोषानभिप्रायविरुद्धान् प्रतिपादयेत्।" मातापित्रोश्च गुणानभिज्ञतामनपेक्षतां लुब्धतां शठतां चपलतां बान्धवानां"। "याश्चान्या अपि समानजातीयाः कन्याः शकुन्तलाद्याः स्वबुद्ध्या भर्तारं प्राप्य मोदन्ते स्म ताश्चास्याः प्रदर्शयेत्।" तस्याः स्वबुद्ध्या नायकगुणान् भूयिष्ठान् परिवर्णयेदिति।

कृतांशमभिधायावशिष्टं कथयति—अथेति। अथ अनन्तरं परिचयः समागमसाधने-नोभयोः परस्परविशेषविज्ञानं विधेयं कर्त्तव्यः अस्माभिरिति शेषः।

अनेन प्रकृतसमागमोद्यमकथनात् करणं नाम मुखसन्धेरङ्गम्। तल्लक्षणं यथा दर्पणे—"...करणं पुनः। प्रकृतार्थसमारम्भ" इति। अङ्कावतारोऽपि सूचितः।

अत्र भाविलघुकरणरूपकार्यं प्रति अन्यवरदोषोपन्यासादिबहुतरकारणोपन्यासात् समुच्चयालङ्कारः। शिखरिणी वृत्तम्॥

(४१) जना इति शेषः, तथाच—पुंस्त्वं बहुत्वञ्च न विरुद्धम्। तथा निष्क्रमकारणन्तु पूर्वमेवोक्तम्।

(४२) क्वचित् पुस्तके "धवलगृहो नाम"इत्यधिकः पाठः। तथात्वे धवलगृहोपलक्षितता अस्य नाम कृतमित्यनुसन्धेयम्।

इति काव्यतर्कतीर्थोपनामक-श्रीकुञ्जविहारितर्कसिद्धान्तभट्टाचार्यकृतायां तत्त्वबोधिनी-समाख्यायां मालतीमाधवव्याख्यायां द्वितीयाङ्कविवृतिः समाप्ता।

---

বংশতঃ ও গুণতঃ মাহাত্ম্যের প্রশংসা করিয়াছি, অনন্তর সমাগমদ্বারা উভয়ের পরস্পর পরিচয় করিয়া দেওয়া বাকি রহিয়াছে। (সকলে নিষ্ক্রান্ত হইল)

মালতীমাধবের দ্বিতীয়াঙ্ক সমাপ্ত।

# तृतीयोऽङ्कः।

[ ततः प्रविशति बुद्धरक्षिता। ] ( १ )

बुद्ध। [ परिक्रम्याकाशे। ] अवलोइदे! अवि जाणासि कहिं भअवदीत्ति ? ( क )

[ प्रविश्य अवलोकिता ] बुद्धरक्खिदे' किं पमुज्झासि ? कोवि अकालो भअवदीए पिण्डवादवेलं वज्जिअ मालदीं अणुवत्त-माणाए (ख)।

---

( क ) अवलोकिते। अपिनाम जानासि कुत्र भगवतीति ?

( ख ) बुद्धरक्षिते! किं प्रमुग्धासि ? कोऽपि अकालो भगवत्याः पिण्डपातवेलां वर्जयित्वा मालतीमनुवर्त्तमानायाः।

---

( १ ) सम्प्रति कविरङ्कान्तरावताराय प्रवेशकं प्रणौति—तत इत्यादिना। "निशुक्तैव मया बुद्धरक्षिते"ति प्रथमाङ्कवाक्येन बुद्धरक्षितायाः प्रवेशः स्पष्टं सूचितः।

( क ) बुद्धेति। परिक्रम्य पादविक्षेपं कृत्वा। आकाशे शून्ये अप्रविष्टामवलोकितां संबोध्यार्थः, कथयसीति शेषः। "अप्रविष्टे सहालापो भवेदाकाशभाषित" मिति त्रिपुरारि-घृतमाकाशभाषितलक्षणम्।

"तदाप्तता किञ्चिदाख्यातुकामासी"त्यादिना "यदि तद्विषयोऽनुरागबन्ध" इत्यनेन लवङ्गिकया कामन्दक्या च मालतीमाधवयोर्मदनविकारस्य, वर्णनात् तयोः परस्परसमागमोपाय-भूतानुरागस्य लक्षणया नन्दनविवाहनिर्णयेनालक्ष्यतया च इतः प्रभृति चतुर्थाङ्कसमाप्तिं यावत् "प्रतिमुखसन्धिः"। तल्लक्षणं यथा दर्पणे—

"फलप्रधानोपायस्य मुखसन्धिनिवेशिनः।
लक्ष्यालक्ष्य इवोद्भेदो यत्र प्रतिमुखञ्च तदिति॥"

( ख ) प्रविश्येति। प्रमुग्धासि मोहं प्राप्तवत्यसि, कथमन्यथा विशेषतः परिज्ञातविषये

---

বুদ্ধরক্ষিতার প্রবেশ।

( ক ) বুদ্ধ। ( পাদবিক্ষেপ করতঃ অপ্রবিষ্ট অবলোকিতার প্রতি ) অব-লোকিতে! তুমি জান কি, ভগবতী কোথায় ( আছেন )?

( খ ) অবলোকিতা। ( প্রবেশ করিয়া ) বুদ্ধরক্ষিতে! তুমি কি মোহ-

बुद्ध। हुं, तुमं उण कहिं पत्थिदासि ? (ग)

अव। अहं क्खु भअवदीए माहवसआसं अणुप्पेसिदा, सन्दिट्ठं अ तस्स, जधा महुरघरसम्बद्धं कुसुमाअरं णाम उज्जाणं गदुअ कुञ्जअणिउञ्ज-पेरन्त रत्तासोअ-गहणे चिट्ठत्ति, गदो अ तत्थ माहवो (घ)।

---

(ग) हुं, त्वं पुनः कुत्र प्रस्थितासि ?

(घ) अहं खलु भगवत्या माधवसकाशमनुप्रेषिता, सन्दिष्टञ्च तस्य, यथा शङ्करगृहसम्बद्धं कुसुमाकरं नामोद्यानं गत्वा, कुब्जकनिकुञ्जपर्यन्तरक्ताशोकगहने तिष्ठ इति, गतश्च तत्र माधवः।

---

मम: सम्भवेदिति भाव:। ज्ञातमपि यदि श्रोतुमाग्रहस्तदा कथयामीत्यभिप्रायेणाह—कोऽपि चेति। पिण्डपातवेलां निर्द्दिष्टभोजनकालं वर्जयित्वा परित्यज्य मालतीं अनुवर्त्तमानाया: मालतीमनुसरन्त्या, कोऽपि च अनिर्वचनीय: काल: समय: भोजनकालातिरिक्त: सर्व एव कालस्त्वयं, गच्छतीति शेष.। भोजनसमयातिरिक्ते सर्वस्मिन्नेव समये भगवती मालती-समीप एव वर्त्तत इति मम्प्रत्यपि तत्रैवेत्यर्थ:।

(ग) हुं इति। हुमित्यनुमतौ। "हु वितर्के चानुमता"विति त्रिकाण्डशेष.।

(घ) अवेति। तस्य माधवस्य, शङ्करगृहसम्बद्धं शिवालयसंलग्नम्। कुब्जक: "कुजा" इति ख्यातो वृक्षविशेष: तस्य यो निकुञ्ज: लतागृहस्थानं तस्य पर्य्यन्ते प्रान्तभागे यत् रक्ताशोक-गहनं रक्ताशोकानां वनं तत्र। कुब्जपालत्वादिना तत्स्थानस्य दु:सञ्चारत्वाद्विजनत्वं सूचितमिति मन्तव्यम्।

---

প্রাপ্ত হইয়াছ ? নির্দিষ্ট ভোজনকাল ভিন্ন এই সুদীর্ঘ কাল (ভগবতীর) মালতীর অনুবর্ত্তনে অতিবাহিত হইতেছে।

(গ) বুদ্ধ। তাই, তুমি তবে কোথায় গিয়াছিলে ?

(ঘ) অব। ভগবতী আমাকে মাধবের নিকট পাঠাইয়াছিলেন এবং তাঁহার সম্বন্ধে আদেশ করিয়াছিলেন যে, "শিবালয়সংলগ্ন কুসুমাকরনামক উদ্যানে যাইয়া কুব্জকবৃক্ষপরিব্যাপ্ত কুঞ্জের প্রান্তভাগে রক্তাশোকবনে অবস্থান কর।" মাধবও তথায় গিয়াছে।

बुद्ध। किंत्ति तहिं माहवो अणुप्पेसिदो ? ( ङ )

अव। अज्ज कसणचउद्दसोत्ति, भअवदीए समं मालदी सङ्करघरं गमिस्सदि, तदो किल एव्वं सोहग्गं वड्ढदित्ति देवदाराहण-णिमित्तं सहत्थकुसुमावचअं उद्दिसिअ, लवङ्गिआदुदीआं मालदीं, भअवदीजेव्व कुसुमाअरुज्जाणं आणइस्सदि, तदो अण्णोण्णदंसणं भविस्सदित्ति। तुमं उण कहिं पत्थिदा ? ( च )।

---

( ङ ) किमिति तत्र माधवोऽनुप्रेषित ?

( च ) अद्य कृष्णचतुर्दशीति, भगवत्या सम मालती शङ्करगृहं गमिष्यति, ततः किल एवं सौभाग्यं वर्द्धत इति, देवताराधननिमित्त स्वहस्तकुसुमावचयमुद्दिश्य लवङ्गिकाद्वितीयां मालतीं भगवत्येव कुसुमाकरोद्यानमानेष्यतीति, ततोऽन्योन्यदर्शनं भविष्यतीति। त्वं पुनः क प्रस्थिता ?

---

( ङ ) बुद्धेति। किमिति किमर्थं केन हेतुनेति यावत्। तत्र कुसुमाकरोद्याने।

( च ) अवेति। इति हेतो: ( कृष्णचतुर्दश्या शिवार्चनस्य प्रशस्तत्वात् शङ्करगृहगमन-हेतुतया तदुपन्यासो युक्त इति मन्तव्यम्। ) भगवत्या कामन्दक्या। ततः शङ्करगृहगमनानन्तरं। किलेत्यलीके सौभाग्यवृद्धिकथनस्य मन्यात्वात्। एवं—स्वहस्तरचितकुसुमैरर्चने कृते। इति एवं बोधयित्वेति शेष.। देवताना आराधनं निमित्त हेतुर्यस्य तादृशं स्वहस्तेन कुसुमानां पुष्पाणा अवचय चयनं उद्दिश्य निमित्तीकृत्य, लवङ्गिकाद्वितीयां लवङ्गिका-मात्रानुयायिकां। अन्योऽन्यदर्शनं मालतीमाधवयो: परस्परनिर्जनसाचात्कार: भविष्यति इति हेतो: माधवस्तत्रानुप्रेषित इत्यर्थ:। मालतीमाधवयोरतर्कितविजनदर्शनेन परस्परानुराग: समतीव वर्द्धतामिति भगवत्या आशय.।

---

( ঙ ) বুদ্ধ। কি জন্য মাধব সে স্থানে প্রেরিত হইয়াছে ?

( চ ) অব। আজ কৃষ্ণচতুর্দ্দশী ( সুতরাং ) ভগবতীর সহিত মালতী শঙ্কর-গৃহে গমন করিবে। পরে ভগবতীই স্বহস্তোত্তোলিত কুসুমে দেবতার্চ্চনা করিলে সৌভাগ্য বৃদ্ধি পায় ( ইহা মালতীকে বুঝাইয়া ) দেবতার্চ্চনের নিমিত্ত স্বহস্তে কুসুমচয়নের উদ্দেশ করিয়া মাত্র লবঙ্গিকার সহিত মালতীকে কুসুমাকরোদ্যানে আনয়ন করিবেন। পরে মালতী ও মাধবের পরস্পরসন্দর্শন ঘটিবে। তুমি আবার কোথায় যাইতেছ ?

बुद्ध। अहं क्खु सङ्करघरं जेव्व पत्थिदाए पिअसहीए मदअन्तिआए आमन्तिदा, तदो भअवदीए पादवन्दणं करुअ, तहिं जेव्व गच्छामि (छ)।

अव। तुमं क्खु भअवदीए जस्सिं पओअणे णिउत्ता, तत्त को वुत्तन्तो ? (ज)।

बुद्ध। मए क्खु भअवदीए समादेसेण, तासु तासु विस्सम्भकधासु, ईरिसो तारिसोत्ति मअरन्दस्स उवरि पिअसहीए मदअन्तिआए दूरं आरोविदो परोक्खाणुराओ एसो अ से मणोरहो, अवि णाम तं पेक्खामित्ति (झ)।

---

(छ) अहं खलु शङ्करगृहमेव प्रस्थितया प्रियसख्या मदयन्तिकया आमन्त्रिता, ततो भगवत्याः पादवन्दनं कृत्वा तत्रैव गच्छामि।

(ज) त्वं खलु भगवत्या यस्मिन् प्रयोजने नियुक्ता, तत्र को वृत्तान्तः ?

(झ) मया खलु भगवत्याः समादेशेन तासु तासु विस्रम्भकथासु, ईदृशस्तादृश इति मकरन्दस्योपरि प्रियसख्या मदयन्तिकाया दूरमारोपितः परोक्षानुराग एष चास्या मनोरथः, अपि नाम तं प्रेक्ष्ये इति ?

---

(छ) बुद्ध ति। आमन्त्रिता आहूता। तत्रैव शङ्करगृह एव।

(ज) अवेति। यस्मिन् प्रयोजने मकरन्दे मदयन्तिकाया अनुरागवर्द्धनरूपे कार्य्ये। को वृत्तान्तः ? कीदृक् संवाद वर्त्तत इति शेषः।

(झ) बुद्ध ति। विस्रम्भकथासु विश्वस्तालापेषु। ईदृशः असामान्यरूपलावण्यसम्पन्नः, तादृशः अद्वितीयपाण्डित्यशौर्य्यवीर्य्यशाली मकरन्द इति शेष, इति इत्थं प्रलोभनवचनोपन्यासेनेत्यर्थः। प्रियसख्या मदयन्तिकायाः परोक्षानुरागः अन्तरनुरागः तथा तेन प्रकारेण दूरं

---

(छ) বুদ্ধ। আমিও শঙ্করগৃহেই প্রস্থিত মদয়ন্তিকা কর্ত্তৃক আহূত হইয়াছি, সুতরাং ভগবতীর পাদবন্দন করিয়া সে স্থানেই যাইব।

(জ) অব। তোমাকে ভগবতী যে কার্য্যে নিযুক্ত করিয়াছিলেন, তাহার কি হইল ?

(ঝ) বুদ্ধ। আমি ভগবতীর আদেশক্রমে সেই সেই বিস্রম্ভালাপে মকরন্দ

अव। साधु बुद्धरक्षिते! साधु। (ञ)

बुद्ध। एहि गच्छाव:। (ट) [ इति परिक्रम्य निष्क्रान्ता: ]

प्रवेशक:। (२)

[ तत: प्रविशति कामन्दकी। ] (३)

---

(ञ) साधु बुद्धरक्षिते! साधु।

(ट) एहि गच्छाव:।

---

आरोपित: हर्षं भावित:। अस्या मदयन्तिकाया "अपि नाम किं तं मकरन्दं प्रेक्षे साक्षात् पश्यामि" एष मनोरथ: अभिलाष: समभूदिति शेष:। मदापादितानुरागेण मदयन्तिका समत्येवमभिभूता यत् सर्वदैव साक्षान्मकरन्देक्षणमाकाङ्क्षतीति। इत्यन्तस्मिन् जात इति भाव:।

(ञ) अवेति। साधु सम्पादितमिति शेष:। अनेन त्वया भवत्या: कार्यभारो लघूकृत इति भाव:।

(२) द्वितीयाङ्कप्रवेशकव्याख्यायामेव प्रवेशकलक्षणमभिहितम्। अयञ्च प्रवेशक: इतश्च कुसुमाकरोद्याने माधवगमनस्य कामन्दकीनिर्देशेन मकरन्दं मदयन्तिकाया गाढानुरागोत्पादनस्य वर्णिष्यमाणस्य च मालत्यादीनां शङ्करगृहगमनादेर्निदर्शक इत्यनुसन्धेयम्।

(३) कामन्दक्या: प्रवेश: अवलोकितया सूचित:।

---

এইরূপ লাবণ্যসম্পন্ন, তাদৃশ পাণ্ডিত্য বীর্য্যোদার্য্যশালী এইরূপ প্রলোভনবাক্য বলিয়া মকরন্দের উপর প্রিয়সখীর এতাদৃশ অনুরাগ বৃদ্ধি পাওয়াইয়াছি যে, যদ্দ্বারা তাহার (মদয়ন্তিকার) এইরূপ মনোভিলাষ জন্মিয়াছে যে, 'তাহাকে (মকরন্দকে) সাক্ষাৎ নিরীক্ষণ করিব?"

(ঞ) অব। বুদ্ধরক্ষিতে! তুমি বেশ (সম্পাদন করিয়াছ)

(ট) বুদ্ধ। এস আমরা যাই।

(বুদ্ধরক্ষিতা ও অবলোকিতা নিষ্ক্রান্ত হইল)

কামন্দকীর প্রবেশ।

तथा विनयनम्रापि मया मालत्युपायतः ।
नीता कतिपयाहोभिः सखीविस्रम्भसेव्यताम् ॥ ( ४ )

सम्प्रति । व्रजति विरहे वैचित्त्यं, नः प्रसीदति सन्निधौ,
रहसि रमते, प्रौढ्या वाचं ददात्यनुवर्त्तते ।
गमनसमये कण्ठे लग्ना, निरुध्य निरुध्य माम्,
सपदि शपथैः प्रत्यावृत्तिं प्रणम्य च याचते ॥ ( ५ )

---

( ४ ) कामन्दकी स्वीयकार्य्यकुशलतामुचितां मालत्यवस्थां वर्णयति—तथेति। मया तथा तेन प्रकारेण गुरुजनोचितेनेत्यर्थः, विनयेन सत्कुलोत्पन्नकन्याजनसुलभस्वभावेन नम्रापि अवनतापि ( सत्यपि इति शेषः ) मालती उपायतः सततसमीपावस्थानादिसखीजनोचित-व्यवहारैः कतिपयाहोभिः स्वल्पैरेव दिवसैः ( राजादेराकृतिगणत्वादिह समासान्तत्वादपि नाहः-शब्दादत् प्रत्ययः ) सखीविस्रम्भसेव्यतां आत्मनि सखीजनोचितविश्वासव्यवहारार्हतां नीता प्रापिता।

पूर्व्वमन्यस्मिन् गुरुजन इव मय्यपि मालती गुरुजनोचितभक्तिश्रद्धालज्जाभयाद्यनुप्राणित-विनयभावेनैवान्यसत्कुलोत्पन्नकन्यकावदवनताऽसीत्, किन्तु कतिपयदिन मया सततसमीपा-वस्थानेन विविधभङ्ग्या कबरीबन्धनादिनाङ्गसौष्ठवसम्पादनेन कपोलकुचफलकादौ चित्रपत्र-लिखनेन सहास्यक्रीडनेन नानाविधनर्मालापोपन्यासेन च सखीजनोचितविविधोपायेन मालत्येव मायत्तीकृता यदधुना लवङ्गिकादिसखीजन इव मयि लज्जाभयादिपरित्यागेन विश्रब्धेव व्यवहरति, सुतरां स्वमनोगतमपि निःशङ्कमावेदयतीति तात्पर्य्योपेतः सरलार्थः। तस्मादवश्य-मतःपरं मालती मदुपदिष्टमाचरिष्यतीति भावः।

अत्र सखीविस्रम्भसेव्यतामिति लुप्तोपमालङ्कारः। अनुष्टुभ् वृत्तम्॥

( ५ ) सखीवद्व्यवहारमेव दर्शयति—व्रजतीति। नोऽस्माकं विरहे असन्निधाने वैचित्त्यं चित्तविकलतां व्रजति गच्छति। तथा सन्निधौ प्रसीदति प्रसन्नान्तःकरणा भवति। रहसि

---

( ৪ ) তথা। পূর্ব্বে মালতী গুরুজনোচিত ভক্তিশ্রদ্ধাপ্রাণিত কুলকন্যা-জনসুলভ নম্রভাবে আমার নিকট অবনত থাকিলেও আমি অল্পদিনেই সতত সমীপে অবস্থানাদি নানাবিধ উপায়ে লবঙ্গিকাদি সখীর ন্যায় মালতীর বিশ্বাস-যোগ্য হইয়াছি।

( ৫ ) সম্প্রতি মালতী আমার সন্নিধানে বৈমনস্য লাভ করে ও অসন্নিধানে

इदञ्च साधीयस्तव सम्प्रत्याशानिबन्धनम्। (६)
शाकुन्तलादीनितिहासवादान् प्रस्तावितानन्यपरैर्वचोभिः।
श्रुत्वा मदुत्सङ्गनिवेशिताङ्गी चिराय, चिन्तास्तिमितत्वमेति॥ (७)

---

निर्जने सम्यावस्थितीये स्थाने इत्यर्थः, रमते नर्मालापैर्मया सह क्रीडति। प्रीत्या प्रणयेन वाचं ददाति न कदाचिदपि परुषं भाषत इत्यर्थः। (वाचमित्यत्र "दायं देयं"मिति च पाठान्तरं दृश्यते, तत्र दायं सौहृदमनुसृत्य देयमिति वा "देयं दाने च दायः स्यादायः सौहृदभावयोः" इति मेदिनी। देयं उपहारयोग्यं कर्पूरादिकं वस्तित्यर्थः)। तथा अनुवर्त्तने प्रियसम्भाषणा-भ्युत्थानासनदानादिभिरुपचरति, यद्वा गमनसमये अनुवर्त्तने मामनुगच्छतीत्यर्थः। एवं गमन-समये तत्समीपान्मत्प्रति गमनावसरे कण्ठे लग्ना मदीयकण्ठलग्नबाहुपाशा मां निरुध्य निरुध्य बहुशो मम गमनप्रतिरोधं जनयित्वा प्रणम्य पादवन्दनं कृत्वा च शपथैः यदि नेदानीमागच्छसि तदा गुरुदयापादेन निग्यसे, अथवा मम मस्तकं खादसीत्याद्यनतिक्रमणीयशपथवाक्यैः सपदि तत्क्षणादेव प्रत्यावृत्तिं मम प्रत्यागमनं याचते प्रार्थयति। सर्व्वत्र मालतीति शेषः।

अत्र व्रजति प्रमोदते इत्याद्यनेकासु क्रियासु मालतीरूपमेकं कर्त्तृकारकमिति दीपकालङ्कारः, तथात्मनि सखीतुल्यव्यवहारप्रतिपादनरूपकार्य्ये प्रति विरहे वैचिन्त्यमालतादिरूपकारणाना-मुपन्यासान् समुच्चयालङ्कारः, इत्यनयोः सङ्करः। हरिणी वृत्तम्।

(६) इदमिति। सम्प्रति इदानीं तव मालतीमाधवयोः समागमसाधने इदं वक्ष्यमाणञ्च साधीयः दृढतरं आशाया नियतमिदं मदुत्कामाचरिष्यतीत्येवंरूपाया, प्रत्याशाया निबन्धनं हेतुः।

(७) किन्तदाशानिबन्धनमित्याह—शाकुन्तलादीनिति। अन्यपरैः मालत्युपदेशभिन्नतात्-पर्य्यकैः वस्तुतो मालत्युपदेशाय प्रयुक्तैरपि अन्योद्देशेन प्रयुक्तवदवभासमानैरित्यर्थः, वचोभिर्व्वाक्यैः प्रस्तावितान् मया मदिङ्गितज्ञेन सखीजनेन वा उत्थापितान् शाकुन्तलादीन् शकुन्तलाप्रभृती-

---

প্রসন্নচিত্তা হয়। নির্জ্জনে নর্ম্মালাপদ্বারা আমার সহিত ক্রীড়া করে, সর্ব্বদা প্রিয় কথা বলে ও সম্ভাষণাদিদ্বারা আনুগত্য স্বীকার করে। এবং গমনসময়ে আমার কণ্ঠলগ্না হইয়া বারবার আমাকে নিরুদ্ধ করিয়া ও প্রণাম করিয়া নানা-বিধ শপথদ্বারা তৎক্ষণাৎ আমার প্রত্যাগমন ভিক্ষা করে।

(৬) অনন্তর যাহা বলিতেছি তাহাও মালতীমাধবের সমাগমসাধনে সম্প্রতি দৃঢ়তর প্রত্যাশার কারণ।

৭। অন্য কোনও প্রসঙ্গক্রমে প্রস্তাবিত শকুন্তলাদির ইতিহাসকথা শ্রবণ

तदस्य माधवसमक्षमुत्तरमुपक्रमिष्ये । (८)

[ नेपथ्याभिमुखमवलोक्य । ] वत्से ! इत इतः । (९)

[ ततः प्रविशति मालती लवङ्गिका च । ]

माल । [ स्वगतम् । ] "कथं उवहारीकिदह्मि" इत्यादि पूर्वोक्तं पठति । (१०)

---

मुखात् इतिहासवादान् पुराकथानि श्रुत्वा सावधानं समाकर्ण्य मदुत्सङ्गे ममाङ्के निवेशिताङ्गी शरीरस्य मदाश्रयता निवेदयन्तीव पातितविग्रहा चिराय बहुकालं यावत् चिन्तया "शकुन्तलादिवत् स्वाधीनाचरणं मया कर्त्तव्यं न वा ? कौमारेण वा कर्त्तव्यमित्यादिभावनया शिथिलत्वं निश्चलत्वं धृतिं लभते । इत्येतदेव साधीयः सम्प्रत्यागामिसम्बन्धनमिति भावः । ( अत्र "प्रस्तावयन्त्यनवरतं त्वयोस्मि"रिति पाठान्तरं, तत्र अनवरतं, अनाप्रसङ्गेन उदितैर्वचोभिः मालत्येव शकुन्तलादीनितिहासवादान् प्रस्तावयति शकुन्तलादिभिः पित्रादिनिरपेक्षैर्यदात्मा दत्त इति यत् श्रूयते तत् किं सत्यं इति मां पृच्छतीत्यर्थः । तत्र श्रुत्वा शकुन्तलादिवृत्तं सत्यमेवेति मत्तः समाकर्ण्य इति विशेषः । अन्यत् समानम् । अत्रेन्द्रवज्रोपेन्द्रवज्रयोः सङ्करतया उपजाति वृत्तम् । छन्दोमञ्जरीविहितं तल्लक्षणं यथा—"अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः । इत्थं किलान्यास्वपि मिश्रितासु वदन्ति जातिष्विदमेव नाम ॥"

( ८ ) तदस्येति । तत्तस्मात् मालत्यवश्यं मदुक्तमाचरिष्यतीति पूर्वोक्तहेतुभिरवधारणा दित्यर्थः । माधवस्य समक्षं प्रत्यक्षं समीपं एवेति यावत्, उत्तरं अनन्तरकर्त्तव्यं उपक्रमिष्ये आरप्स्ये । 'प्रोपाभ्यामारम्भे'इत्यात्मनेपदम् ।

( ९ ) नेपथ्याभिमुखमवलोक्य नेपथ्याभिमुखावलोकनेन मालतीं दृष्ट्वेत्यर्थः । वत्से इति मालत्याः सम्बोधनम् । इत इत इति आगच्छेति शेषः ।

( १० ) मालेति । पूर्वोक्तं "कथमुपहारीकृतास्मि" इत्यन्तं सर्वं सन्दर्भमित्यर्थः ।

---

করিয়া মালতী তাহার শরীর আমার ক্রোড়ে সন্নিবেশিত করতঃ বহুকাল চিন্তার ফলে একেবারে নিশ্চলত্ব লাভ করে।

৮। সুতরাং মাধবের সমক্ষেই আজ ইহার পর যাহা কর্ত্তব্য, তাহার অবতারণা করিব।

৯। ( নেপথ্যের দিকে অবলোকন করিয়া ) বৎসে। মালতি এদিকে এস।

( মালতী ও লবঙ্গিকার প্রবেশ )।

১০। মাল। ( স্বগতঃ ) "কেন আমি উপহারীকৃত হইলাম" ইত্যাদি পাঠ করিতে লাগিল।

लव । सहि ! एसो क्खु महुर-महु-रसाद्द-मञ्जरी कवलण-केलि--कल--कोइल--उल--कोलाहलाकुलिद--सहआर- सिहरुड्डीण-चडुल-चञ्चरीअणिअर-व्वदिकरद्दलिद-दल--कराल-चम्प -आहिवास मणोहरो, मराल-मंसल-जहण-परिणाहुव्वहणमन्थरोरुभर-विसंठुल-खलिद-चलण-संचलणोब-णोद -सेअसीअर--सुहाबिंदुज्जल- मुद्ध मुह-चन्दणाअमाण-सीअलप्फरसो, तुमं परिस्सअदि कुसुमाअरुज्जाण-मारुदो, ता पविसह्म (ठ) [ इति परिक्रम्य प्रविशतः । ]

---

(ठ) सखि ! एष खलु मधुरमधुरसार्द्रमञ्जरीकवलनकेलिकलकोकिलकुलकोलाहला-कुलितसहकारशिखरोड्डीन-चटुलचञ्चरीकनिकरव्यतिकरो-द्दलित दलकरालचम्पकाधिवासमनो-हरो, मरालमांसलजघनपरिणाहोद्वहनमन्थरोरुभरविसंष्ठुलस्खलितचरणसञ्चलनोपनीतस्वेद-शीकरसुधाबिन्दुज्ज्वलमुग्धमुखचन्द्रचन्दनायमानशीतलस्पर्शः त्वां परिष्वजति कुसुमाकरोद्यान मारुतः, तत् प्रविशाव: ।

---

क्वचित् पुस्तके "कथं उवहारीकिदह्मि" इत्यादि । "अविनाम सं पुणोवि पेक्खिस्स" इत्यन्तः सर्व्व एव सन्दर्भ. पुनर्लिखितो दृश्यते । व्याख्या तु पूर्व्वमेव प्रदर्शिता ।

(ठ) लवेति । सखि । एष कुसुमाकरोद्यानमारुत त्वां परिष्वजति आलिङ्गतीत्यन्वयः । तत्, कुसुमाकरोद्यानमारुतं विशिनष्टि —मधुरेत्यादि । सुदीर्घसमासघटितप्रथमान्तपदद्वयेन, तदंशे मधुरेण सुस्वादुना मधुरसेन पुष्पनिर्य्यासद्रवेण आर्द्राणा क्लिन्नाना मञ्जरीणां चूतवल्लरीणां कवलने ग्रासने या केलिः क्रीडा तया कलेन मधुरास्फुटेन कोकिलकुलस्य पिकसमूहस्य कोला-हलेन कलकलेन आकुलितात् व्याप्तात सहकारशिखरात् अतिसुरभिचूतपल्लवात् "सहकारोऽति-सौरभ"इत्यमरः। उड्डीनस्य वासेनोत्पतितस्य चटुलस्य चञ्चलस्य चञ्चरीकनिकरस्य भ्रमर-समूहस्य "चञ्चरीकोऽलिगीतयो"रिति धरणिः । व्यतिकरेण सम्पर्केण तञ्जनितविमर्द्देनेति यावत् । उद्दलितदलानि विकासितपत्राणि, अत एव करालानि दन्तुराणि "करालो दन्तुरे तुङ्गे

---

(ঠ) লব। সখি ! মধুর পুষ্পনির্য্যাসে আর্দ্র চূতমঞ্জরীর কবলনক্রীড়াদ্বারা মধুরাস্ফুট যে কোকিলকুলের কোলাহল তৎপরিব্যাপ্ত অতি সুরভি চূতপল্লব হইতে ত্রাসবশতঃ উড্ডীন চঞ্চল ভ্রমরকুলের সম্পর্কে যাহাদের দলগুলি বিদলিত হইয়াছে ও তন্নিবন্ধন যাহারা করালদন্ত বলিয়া প্রতীয়মান হয়, সেই চম্পককুসুমের

[ ततः प्रविशति माधवः । ] (११)

माध । सहर्षम् । हन्त ! परागता भगवती । इयं हि मम । (१२)
आविर्भवन्ती प्रथमं प्रियायाः सोत्कण्ठमन्तःकरणं करोति ।
सन्तापदग्धस्य शिखण्डियूनो दृष्टिः पुरस्तादचिरप्रभेव ॥ (१३)

---

सौरभं चाभिधेय"मित्यादि मेदिनी । यानि चम्पकानि चाम्पेयकुसुमानि तेषाम् अधिवासेन सौरभेण मनोहरं चित्तोन्मादकरं, तथा—मरालस्य मसृणस्य मांसलस्य स्थूलस्य च जघनस्य स्फीकटीपुरोभागस्य यः परिणाहः विशालता, तस्य उद्वहनेन धारणेन मन्थरं मन्दं, उरुभरेण विसङ्कुलं विषमं यथा स्यात्तथा स्खलितशोणकिशलयाननखचरणयोर्यद्वृत् सञ्चलनं अर्थात् पादन्यासः तेन उपनीता उपस्थापिता ये स्वेदशीकराः घर्मबिन्दवः त एव सुधाबिन्दवः अमृतकणास्तैरुज्ज्वलस्य मुग्धमुखचन्द्रस्य अर्थात्तव वदनसुधाकरस्य चन्दनायमानः चन्दनवदाचरन् शीतलः स्पर्शो यस्य स तथोक्तः । तथा च वायोः शैत्यसौरभमान्द्यसद्भावः सूचितः । तत् तस्मात् एव सुखमिश्चपवनालिङ्गनात् प्रविशावः एतत् कुसुमाकरोद्यानं इति शेषः ।

( ११ ) "ततश्च तत्र माधवः" इति प्रवेशकोक्तवाक्येन माधवप्रवेशः सूचितः ।

( १२ ) माधेति । हन्त हर्षे, परागता उपस्थिता भगवती कामन्दकी । इयं हि ममेति "सोत्कण्ठमन्तःकरणं करोतीति" श्लोकस्थेनान्वेति । इयं कामन्दकी ।

( १३ ) आविरिति । सन्तापदग्धस्य ग्रीष्मातापसन्तप्तस्य शिखण्डियूनः तारुण्यावस्थापन्न मयूरस्य दृष्टेः पुरस्तात् वर्षणस्यादौ आविर्भवन्ती प्रकटीभवन्ती अचिरप्रभा विद्युदिव प्रियायाः

---

গন্ধে মনোহর এবং মসৃণ অথচ স্থূল জঘনের বিশালতা বহনহেতু মন্থর যে উরুভরে বিষমরূপে স্খলিত চরণযুগলের সঞ্চলন তদ্দ্বারা উপস্থাপিত ঘর্মবিন্দুরূপ যে অমৃত-কণাদ্বারা উজ্জ্বল তোমার মুখচন্দ্রসম্বন্ধে চন্দনবৎ আচরণশীল শীতল স্পর্শবিশিষ্ট কুসুমাকরোদ্যানের বায়ু সে তোমাকে আলিঙ্গন করিতেছে, সুতরাং ( এই কুসুমাকরোদ্যানে ) প্রবেশ করি। ( পাদবিক্ষেপকরতঃ উভয়ের উদ্যানে প্রবেশ )।

১১। '( মাধবের প্রবেশ )।

১২। মাধ। (হর্ষের সহিত) অহো! ভগবতী ( কামন্দকী ) আসিয়াছেন।

১৩। বৃষ্টির পূর্ব্বে প্রকাশমান বিদ্যুৎ যেমন গ্রীষ্মোত্তাপতপ্ততরুণ ময়ূরে

[ दृष्ट्वा । ] अये ! लवङ्गिकाद्वितीया मालत्यपि । (१४)

आयम्यमुत्पलदृशो वदनामलेन्दु-
सान्निध्यतो मम मुहुर्जड़िमानमेत्य ।
जात्येन चन्द्रमणिनेव महीधरस्य
सन्धार्य्यते द्रवमयो मनसा विकारः॥ (१५)

---

मालत्या प्रथमं आविर्भवन्ती इयं कामन्दकी सन्तापदग्धस्य कामानलतापततस्य मम अन्तःकरणं मनः सोच्छ्वासं प्रियागमनसूचकतया सजीवं करोति।

यथा दृष्टे, प्रथमं आविर्भवन्ती विद्युत् वृष्टेः सूचकतया ग्रीष्मोत्तापततस्य मयूरयूनो मनः समुच्छ्वसितं करोति, तथैव प्रियायाः प्रथममाविर्भवन्तीयं कामन्दकी प्रियागमनसूचकतया तद्विरहानलतापततस्य मम मनः समुच्छ्वसितं करोतीति सरलार्थः।

अत्र पुनरुपदोपादानमपुष्टार्थत्वदोषप्रशमनाय। श्लेषगर्भेत्युपमालङ्कारः, तेन च ग्रीष्मोत्तापततस्य शिखण्डियून इव कामानलसन्ततस्य ममेत्युपमापि व्यज्यत इत्यलङ्कारेणालङ्कार-ध्वनिः। इन्द्रवज्रा वृत्तम्। द्वितीयाङ्गतेन नन्दनाय मालतीदानप्रस्तावेन प्रकृतकार्य्यार्थ-विच्छेदे प्राप्ते अत्र पुनर्माधवस्य मालतीदर्शनसम्भावनं तस्या अच्छेदहेतुरिति विन्दुनामार्थकृतिः। तल्लक्षणं यथा दर्पणे—"अवान्तरार्थविच्छेदे विन्दुरच्छेदकारण"मिति॥

(१४) (दृष्ट्वा लवङ्गिकया सह मालतीमवलोक्य) अये इत्यानन्दजनितसम्भ्रमे। न केवलं कामन्दकी लवङ्गिकाद्वितीया मालत्यपि परागतेत्यर्थः। तस्मादतःपरं किमानन्दकारण-मिति भावः।

(१५) आयम्यमिति। उत्पलदृशः इन्दीवरलोचनायाः मालत्याः वदनं अमलेन्दुः निर्म्मलचन्द्र इव अन्यत्र वदनमिवामलेन्दुः तस्य सान्निध्यतः सामीप्याद्धेतोः, जातौ साधुः जात्यः तेन अभिजनवता इत्यर्थः, मम मनसा जात्येन उत्कृष्टेन महीधरस्य अचलस्य चन्द्रमणिना

---

মন উচ্ছ্বসিত করে, ইনিও তেমন প্রিয়ার প্রথমে আবির্ভূত হইয়া কামানলসন্তপ্ত আমার মন উচ্ছ্বসিত করিতেছেন।

১৪। (দেখিয়া) লবঙ্গিকার সহিত মালতীও আসিয়াছে।

১৫। এই ইন্দীবরাক্ষীর বদনসদৃশ চন্দ্রের সান্নিধ্যবশতঃ উৎকৃষ্ট পার্ব্বত্য চন্দ্রকান্তমণি যেমন বিগলিত হইয়া দ্রবময় বিকার ধারণ করে, আমার মনও তেমন

सम्प्रति रमणीयतरा मालती। (१६)
ज्वलयति मनोभवाग्निं, मदयति हृदयं, कृतार्थयति चक्षुः।
परिम्लदितचम्पकावलिविलासलुलितालसैरङ्गैः ॥ (१७)

---

चन्द्रकान्तमणिनेव मुहुः म्लानिमयं जड़िमानं जड़त्वं क्रियासु अपाटवं पक्षे जलप्रकृतिकत्वं एत्य प्राप्य द्रवमयो विकारः अन्ययाभावः सम्प्राप्यते अवलम्ब्यते इत्याश्चर्य्यम्। महीधरस्य चन्द्रमणिनेत्यनेन स्वस्यापि महीधरसाम्यप्रतीतेरचलवद्धीरस्यापि मनो द्रवीभवतीत्याश्चर्य्यमिति भावः।

अत्र जाड्येनेत्यत्र "जाड्यं ने"ति क्वचित् पाठः, तत्र जाड्येन जड़िम्नेति करणे तृतीया। एवं मनसेत्यत्र मनसः इत्यपि क्वचित् पाठः, अत्र च जड़िमानं एत्य स्थितस्य मनसो विकारः अन्यैः सम्प्राप्यते निषीयते इत्यर्थस्याध्याहारेण कथञ्चिन्निर्वाहेऽपि चन्द्रमणिनेवेत्युपमायाः सङ्गतेः श्लिष्टत्वतया न मौलिकत्वं तस्येति चिन्तनीयम्।

अत्र उत्पलदृश इत्यत्र वदनामलेन्दु इत्यत्र च लुप्तोपमालङ्कारः, चन्द्रकान्तमणिनेवेत्युपमालङ्कारः, तेन महीधरस्येव मनेत्युपमापि व्यज्यते इत्यलङ्कारेणालङ्कारध्वनिः। एव मनसो द्रवमयत्वस्य चन्द्रकान्तमणेर्द्रवमयत्वस्य चार्थतो वैलक्षण्येऽपि श्लेषेण तदभेदाध्यवसायादतिशयोक्तिरलङ्कारः इति तेषामङ्गाङ्गीभावेन सङ्करः। वसन्ततिलकं वृत्तम् ॥

(१६) सम्प्रतीति। रमणीयतरा पूर्वदृष्टावस्थात समधिकसौन्दर्य्यशालिनी। कामभावस्य पूर्वतः पल्लवितत्वात्तस्य स्वनिबन्धनत्वावधारणाच्च पूर्वतो रमणीयतरत्वावधारणं युज्यत एवेति भावः।

(१७) ज्वलयतीति। परिम्लदिता म्लानिमापन्ना या चम्पकावलिः चाम्पेयकुसुममाला तस्या विलास इव विलासः विभ्रमो चेष्टा तानि तथा लुलितानि विरहादिना आन्दोलितानि एवं अलसानि क्रियासु अनुन्मुखानि च तैः तथाभूतैः (परस्परस्यविशिष्यत्वविवक्षया त्रिपदकर्म्मधारय-समासः) अङ्गैः मनोभवाग्निं कामानलं ज्वलयति दीपयति, हृदयं मनः मदयति हर्षपरवशं करोति, तथा चक्षुः नयनं कृतार्थयति द्रष्टव्यचरमोत्कर्षदर्शनेन चरितार्थं करोति, सर्वत्र ममेति शेषः, पूर्वगद्यस्थित मालतीति कर्त्तृपदम्।

---

এই ইন্দীবরাক্ষীর বদনচন্দ্রের শোভাবশতঃ আমার কঠোর মনও চন্দ্রকান্তমণির ন্যায় দ্রবময় বিকার অর্থাৎ দ্রবীভাব ধারণ করিতেছে, ইহা নিতান্ত আশ্চর্য্যজনক।

১৬। সম্প্রতি মালতী পূর্ব্বদৃষ্টাবস্থা হইতে সমধিক সৌন্দর্য্যশালিনী হইয়াছে।

১৭। (সম্প্রতি মালতী) ম্লানিভাবাপন্ন চম্পকমালার ন্যায় শোভাযুক্ত

मालती। सहि! इमस्सिं कुज्जअणिउञ्जे कुसुमाइं अवचि-णुम्ह (ङ)।

माधव। प्रथमप्रियावचनसंश्रवस्फुरत्पुलकेन सम्प्रति मयावलम्ब्यते।
घनराजिनूतनपयःसमुक्षणक्षणमहकुड्मलकदम्बडम्बरः॥(१८)

(ङ) सखि! अस्मिन् कुब्जकनिकुञ्जे कुसुमानि अवचिनुवः।

अथानिर्दिष्टकर्मकधातोरकर्मकत्वनियमात् कथं अवलम्बते इति कृतमनुभवतीत्यत्र कर्मपद-मिति न चाशङ्कनीयं, यतोऽनिर्दिष्टकर्मकधातव एवाकर्मकाः, परन्तु तथानिर्दिष्टकर्मका कर्माकाङ्क्षानिवर्त्तते तथानिर्दिष्टकर्मकधातोः कर्मान्तरं न तिष्ठेत्, यथा फलयति कमलयतीत्यादि, यत्र चोद्देश्यविधेयभावादिनिबन्धनया कर्मतावच्छं भासते, तत्र विधेयकर्मणोऽनिर्-दिष्टत्वेऽपि तेनाकाङ्क्षया अनिवृत्तेरुद्देश्यादिरूपं कर्मान्तरं स्यादेव। अत एव विद्युतयति यथानं राशिमिति भावाऽऽलिङ्गिता दुर्गेन मन्थयति घटं पुत्रयतीति कलापचन्द्रकृता च प्रदर्शितं। "आधाराधेयतिनिबिडतनयाधन्ते बभ्रोऽत्र हर्षादीनाम्। यथोदकमिव गङ्गाप्रवाहपात-पवित्रयती" त्यादिकं वाक्यं कल्पतरुप्रतिनियादिवाक्यमपि तत्समर्थकं सम्पद्यते। तस्मा-दत्र अथ च कर्मत्वेऽपि न कश्चिद्विरोध इति स्थितम्।

मालतीवदेकैककर्मकारकाणां श्वलयतीत्याद्यनेकक्रियाणां प्रयोगाद् दीपकालङ्कारः। मनोभवादि-मिति यमकं। द्वितीयार्द्धे लुप्तोपमा चेति एतेषामङ्गाङ्गिभावेन सङ्करः। आर्या छन्दः।

(ङ) मालतीति। कुब्जकस्य नातिदीर्घतया अक्लेशेन तत्कुसुमचयनस्य सम्भाव्यमानत्वा-त्तथाभिलाषो मालत्या सूच्यत एवेति भावः।

(१८) प्रथमेति। प्रथमः आदिमः यः प्रियायाः मालत्याः वचनसंश्रवः "सहि" इत्यादि वाक्यश्रवणं, तेन स्फुरन् आविर्भवन् पुलकः रोमाञ्चः यस्य तेन तादृशेन मया सम्प्रति

विद्युत्प्रकोटित ও অনঙ্গ অমরাবা আমার কামাগ্নি প্রজ্বলিত করিতেছে, হৃদয় হর্ষযুক্ত করিতেছে ও চক্ষু কৃতার্থ করিতেছে।

(ঙ) মাল। সখি! এই কুব্জকনিকুঞ্জে কুসুম চয়ন করি।

১৮। মাধ। প্রিয়ার প্রথম বাক্যশ্রবণে রোমাঞ্চিত হইয়া সম্প্রতি আমি মেঘের নূতন জল সেচনক্ষণকুট্মল কদম্বপুষ্পের শোভা ধারণ করিতেছি।

लव। सहि एव्वं करेह्म। (ढ) [ पुष्पावचयं नाटयत:। ]

माध। अपरिमेयाश्चर्यमाचार्यकं भगवत्या: (१८)

माल। सहि ! इदोबि अग्गस्सिं अवचिणुह्म। (ण)

(ढ) सखि! एवं कुर्व्व।

(ण) इतोऽप्यन्यस्मिन् अवचिनुव।

घनराजेर्जलदजालस्य यानि नूतनपयांसि सद्योविगलितजलानि तैर्यत् समुत्क्षणं सेचनं तत्क्षणे तत्समये बद्धानि धृतानि कुड्मलानि मुकुलानि येन तस्य तथाभूतस्य कदम्बस्य नीपवृक्षस्य डम्बर, साम्य ग्रवलम्बते धीयते।

यथा जलदजालनवजलसेचनक्षण एव कदम्बतरुमुकुलितो भवति, तथैव प्रथमप्रियावचन-श्रवणसमय एवात्र रोमाञ्चितो जात इति सरलार्थः।

अत्रार्थी उपमालङ्कार, स च छेकानुप्रासेन संसृज्यते। मञ्जुभाषिणी वृत्तम्। "क्षणबद्ध-कुड्मलकदम्बडम्बर" इति चरणश्चाविकलमुत्तरगामचरितेऽपि दृश्यते। आश्चर्यमित्यादि श्लोक-द्वयेन माल्त्या मुखावलोकनवचनश्रवणतदन्तोपसर्पणादि-चेष्टाया प्रतीयमानतया रतिभोगार्थाया. समीहाया प्रतीते विलासो नाम प्रतिमुखसन्धेरङ्गम्। तल्लक्षणं यथा दर्पणे—

"समीहा रतिभोगार्था विलास इति कथ्यते।"

(ढ) लवेति। एव कुञ्जकनिकुञ्जे पुष्पावचयम्।

(१८) माधेति। भगवत्या कामन्दक्या आचार्यस्य उपदेष्टुर्भाव आचार्यकं कार्यसाधनो-पदेशकौशलं अपरिमेयाणि परिच्छेत्तुमशक्यानि आश्चर्याणि यत्र तादृशम्। राजानुरोधेन नन्दनार्पणस्यैव सम्भाव्यमानत्वादन्यदर्शनासम्भवे या यत् प्रभावादद्य कुसुमावचयकौतुकायोन्नमित-हस्तत्वेन सम्मननायककामप्यलक्षितो निःशङ्कमवलोकयितुं प्रभवामीति भाव।

एतेन पूर्वमवलोकितायाः पश्चादन्तरितदर्शनायाः माल्त्याः पुनरनुसर्पणात् परिसर्पो नाम प्रतिमुखसन्धेरङ्गं दर्शितम्। तल्लक्षणं यथा दर्पणे—"परिसर्पस्तु दृष्टनष्टानुसर्पणम्।"

(ण) मालेति। इतोऽपि प्रदेशात् अन्यस्मिन् प्रदेशे अवचिनुव पुष्पाणीति शेष।

(ঢ) লব। সখি। তাহাই করি। (উভয়েই পুষ্পচয়ন)।

১৮। মাধ। ভগবতীর কার্য্যোপদেশ-কৌশল অতীব আশ্চর্য্যজনক।

(ণ) মাল। সখি। এই স্থান হইতে অন্য দিকে যাইয়া পুষ্পচয়ন করি।

काम। [ मालतीं परिष्वज्य। ] अयि! विरम, निःसहासि जाता। (२०) तथाहि—

स्खलयति वचनं ते, संश्रयत्यङ्गमङ्गम्
जनयति मुखचन्द्रोद्भासिनः स्वेदविन्दून्।
मुकुलयति च नेत्रे सर्वथा सुभ्रु! खेद-
स्त्वयि विलसति तुल्यं वल्लभालोकनेन॥ (२१)

---

(२०) प्रच्छन्नावस्थापितमाधवो यथा निर्व्वाधं मालतीमवलोकयितुं प्रभवति, तथा सम्पादनार्थैव पुष्पावचयनव्याजेन तत्रानीताया मालत्या अन्यत्र गमने तद्व्याघातो भवेदिति मन्यमाना कामन्दकी पुष्पचयनार्थमन्यत्र जिगमिषन्तीं तां तत्रैवावस्थापयितुं छलतः प्राह—अयीति। विरम निवर्त्तस्व कुसुमचयनादिति शेषः। यतो निःसहा पुष्पचयनजनितश्रमसहनासमर्था असि भवसि।

(२१) स्खलयतीति। हे सुभ्रु! शोभनभ्रुयुगले! खेदः पुष्पचयनजनितः श्रमः "मनःशरीरयोः खेदः क्रियातिशयतः श्रम" इति कोषः। ते तव वचनं स्खलयति गद्गदं करोति, तथा अङ्गं अङ्गं प्रत्यवयवं संश्रयति, सर्व्वान् अवयवान् व्याप्य वर्त्तते। "स्रंसयती"ति पाठे तु अवसादयतीत्यर्थः। मुखचन्द्रोद्भासिनः मुखचन्द्रस्य शोभाविशेषसम्पादनशीलान् स्वेदविन्दून् घर्म्मजलकणान् जनयति। एवं नेत्रे नयने मुकुलयति निमीलयति च। अत एव वल्लभालोकनेन वल्लभकर्म्मकेण दृढाभिलाषकामिनीजनकर्त्तृकेन दर्शनेन तुल्यं समानं यथा स्यात्तथा त्वयि सर्व्वथा विलसति सर्व्वतोभावेन वर्त्तते। वल्लभावलोकनमपि युवत्या वचनं गद्गदं करोति, अवयवानवसादयति वदने घर्म्मविन्दून् जनयति, आनन्दातिशयसम्पादनेन नेत्रे च निमीलयतीति तुल्यविलासाभिधानं युज्यत एवेति मन्तव्यम्।

---

২০। কাম। (মালতীকে আলিঙ্গন করিয়া) অয়ি! পুষ্পচয়ন হইতে বিরত হও। তুমি পুষ্পচয়নশ্রম-সহনে অসমর্থ হইয়াছ।

২১। দেখ, হে সুভ্রু! এই পুষ্পচয়ন-জনিত শ্রম তোমার বাক্য স্খলিত করিতেছে, এবং এই শ্রম তোমার সর্ব্বাবয়বে পরিব্যাপ্ত হইয়াছে, মুখচন্দ্রের শোভা-বিশেষ-সম্পাদক ঘর্ম্মবিন্দু উৎপাদিত করিতেছে ও তোমার নেত্রযুগল নিমীলিত করিতেছে, অতএব এই শ্রম সর্ব্বপ্রকারেই বল্লভালোকনের তুল্যরূপে তোমাতে বর্ত্তমান আছে।

[ मालती लज्जते । ] (२२)

लव। सौहृदं भगवत्या आज्ञप्तम्। (त)

माध। हृदयङ्गमः परिहासः। (२३)

(त) शोभनं भगवत्याज्ञप्तम्।

अत्र वल्लभावलोकनमिव खिद्यन्त्यपि विलसतीत्यसम्भवार्थसिद्धतया आर्थी पूर्णोपमालङ्कारः। एवं खलयतीत्यादिवाक्यार्थानां विलसतीतिवाक्यार्थहेतुतया वाक्यार्थहेतुकं काव्यलिङ्गं, खिद्यत्येककर्तृकाना खलयतीत्याद्यनेकक्रियाणां प्रयोगाद्दीपकश्चालङ्कार इति तेषां सङ्करः। एवमत्र त्वं येन लतान्तरितवल्लभकर्तृकावलोकनेन सह तव पुष्पचयनजनितः श्रमो विलसतीत्यर्थोऽपि व्यज्यत इति सहोक्तिरपि ध्वन्यत इत्यनुसन्धेयम्। मालिनी वृत्तम्।

सानुरागं कान्तमवलोकयन्त्या ये अनुभावा जायन्ते श्रमवशात्त्वय्यपि ते दृश्यन्त इति परिहास-गर्भोक्तित्वात् नर्म्मनाम सन्ध्यङ्गम् "परिहासवचो नर्म्म" इति दर्पणोक्तं तल्लक्षणम्। अथात्र सुभ्रूशब्दस्याव्ययानीयत्वे नाऽभवति नदीत्वाभावेन कथं सम्बोधने ह्रस्वः सिद्ध्यतीति प्रश्ने "विमानना सुभ्रु कुतः पितुर्गृहे" इत्यादि महाकविप्रयोगदर्शनादिति केचिदाचचक्षिरे। केचिच्च "जाता सुभ्रु मनोरमे तदवशे"ति भट्टप्रयोगवत् सामान्योपक्रमेणेत्याहुः। वस्तुतस्तत्र दुर्गसमा-धानमेव साधीयः। तथाहि—"ह्रस्वश्च ङवती"ति सूत्रटीकायां दुर्गेणोक्तं—"कथं विमानना सुभ्रु कुतः पितुर्गृहे" इति? मतान्तरेणास्त्रीवचन इत्यस्य व्यावर्त्तनात्, अस्त्रीवचने भवति नदीव्यवहारः स्यात्, अभवति न भवति। स्त्रीवचने तु सर्व्वत्र नदीसंज्ञाऽस्त्येवेति न विरुध्यत" इति। "न समासे पुंसि ह्रस्वे सुभ्रुनदी"ति सूत्रं विदधता श्रीपतिनाप्येतदेव समर्थितम्। "सुभ्रु विमान-लीवने।" इति परमपण्डितदण्डिवचनमप्येनमर्थं समर्थयतीति स्त्रीवचने सुभ्रूशब्दस्य नदीत्व-मस्त्येवेति स्थितम्। तथात्रापि च्युतसंस्कारतादोषोऽपीति।

(२२) लज्जते लज्जां नाटयतीत्यर्थः, क्वचित्तदेव पाठः।

(त) सौहृदेति। भगवत्या यदाज्ञप्तं पुष्पावचयाद्विरमेति यदनुज्ञातं तत् साधु युक्तियुक्तम्। यतो भवत्यपि श्रमलवणं लक्ष्यत इति विराम एव विधेय इति भावः।

(२३) माधवेति। परिहासः खलयतीत्यादिरूपं मद्वचनं हृदयङ्गमः मनोज्ञः।

২২। ( মালতী লজ্জার ভাব দেখাইতে লাগিল )।

(ত) লব। ভগবতী ভাল আজ্ঞাই করিয়াছেন।

২৩। মাধ। এই পরিহাস অতীব হৃদয়ঙ্গম

काम। तदास्यतां, किञ्चिदाश्चर्यमाख्यातुकामास्मि। (२४)

[ सर्वा उपविशन्ति। ]

काम। [ मालत्याश्चिबुकमुन्नमय्य। ] शृणु विचित्रमिदं, सुभगे!। (२५)

माल। अवहितास्मि। (थ)

काम। अस्ति तावदेकदा प्रसङ्गतः कथित एव मया माधवाभिधानः कुमारो यस्त्वमिव मामकीनस्य मनसो द्वितीयं निबन्धनम्। (२६)

---

(थ) अवहितास्मि।

---

(२४) कामेति। तस्मात् आस्यतां उपविश्यतां; किञ्चिदत्यन्तमेव आश्चर्यं वक्तव्यं आख्यातुकामा वक्तुमभिलषन्ती अस्मि—भवामीति शेषः।

(२५) कामेति। चिबुकं वदनाधोभागं उन्नमय्य न्यग्भावनतत्वादुन्नीय, प्राङ्गिष्याङ्गत-क्रियैककर्तृकत्वात्तत्पूर्वकाले क्त्वादयः। विचित्रं आश्चर्यं, सुभगे! सौभाग्यशालिनि! अनेन माधवचित्ताकर्षकत्वात्तवासामान्यं सौभाग्यमिति ध्वनितम्।

(थ) मालेति। अवहिता अवधे दत्तावधाना।

(२६) कामेति। प्रसङ्गतः "अनन्यशरीरो माधव" इत्यत्रोक्तितालापप्रसङ्गात् मया कथित. तवास्तिके उक्तः माधवाभिधानः माधवनामा कुमारः अविवाहितः कश्चिद्युवा। यः माधवः त्वमिव मामकीनस्य मदीयस्य (मनीदमित्यर्थे—मम-ख भीन)। मनसः चेतसः, निबध्यते अवरुध्यते अस्मिन्निति निबन्धनं आलम्बनम्। मम मनसस्त्वं यथैकमालम्बनं तथा माधवो द्वितीयमालम्बनमित्यर्थः।

---

২৪। কাম। তবে উপবেশন কর, কিঞ্চিৎ বক্তব্য বিষয় বলিতে ইচ্ছা করিতেছি।

(সকলের উপবেশন)

২৫। কাম। (মালতীর বদনের অধোভাগ উত্তোলিত করিয়া) অয়ি সৌভাগ্যশালিনি! এই বিচিত্র কথা শ্রবণ কর।

(থ) মাল। আমি অবহিত হইয়াছি।

২৬। কাম। মাধবনামক এক কুমারের কথা প্রসঙ্গক্রমে এক দিন

लव। सुमरामो। (द)

काम। स खलु मन्मथोद्यानयात्रादिवसात् प्रभृति दुर्मनायमानः, परवानिव शरीरोपतापेन। (२७)

यदिन्दावानन्दं प्रणयिनि जने वा, न भजते,
व्यनक्त्यन्तस्तापं तदयमतिधीरोऽपि विषमम्।
प्रियङ्गुश्यामाङ्गप्रकृतिरपि, चापाण्डुमधुरम्
वपुः क्षामं क्षामं वहति, रमणीयश्च भवति॥ २८॥

(द) स्मरामः।

(द) लवेति। स्मराम' भवत्या कथितस्य माधववृत्तान्तस्येति शेष.।

(२७) कामेति। स माधवः दुर्मनायमान. दुर्मनाः दुःखितान्तःकरण इव आचरन्, शरीरोपतापेन कामसन्देहदाहेन परवान् पराधीन इव जात इति शेषः।

(२८) विशेषतो मदनदशा दर्शयति—यदिन्दाविति। यद् यस्मात् इन्दौ चन्द्रे सर्वलोकाह्लादकरेऽपीत्यर्थः प्रणयिनि निरतिशयप्रेमास्पदे जने वा हृदि सतीति शेषः। आनन्दं आह्लादविशेषं न भजते न लभते, तस्मात् अतिधीरोऽपि निरतिशयधैर्यशाली अपि अयं माधवः विषमं दुःसहं अन्तस्तापं हृदयनिहितसन्तापं व्यनक्ति प्रकटयति, मुहुःस्फुटान्तःसन्तापाभावे सर्वाह्लादकरं सुधाकरं प्रणयिनं जनं वा समालोक्यानन्दाप्रकाशनं नैव सम्भवेदिति भावः। अनेनारति-सन्तापाभिधाने मदनावस्थे दर्शिते। तथा—"प्रियङ्गुः फलिनीलता" तद्वत् श्यामा श्यामवर्णा अङ्ग-प्रकृतिः शरीराकृतिर्यस्य सः, तथाविधश्यामाकृतिरपीत्यर्थः, आपाण्डु विरहेणेषत् श्वेतवर्णं, तथापि मधुरं माधुर्ययुक्तम् ("सर्वावस्थासु चेष्टानां माधुर्यं मधुरक्रिया"ति माधुर्यलक्षणम्)। क्षामं क्षामं

তোমার নিকট বলিয়াছি। যে মাধব তোমারই ন্যায় আমার মনের দ্বিতীয় আলম্বনস্বরূপ।

(দ) লব। সেই মাধবের বৃত্তান্ত স্মরণ আছে।

২৭। কাম। সে (মাধব) মদনোদ্যানযাত্রার দিবস হইতে দুর্মনায়মান হইয়া যেন কামজ শরীরতাপের অধীন হইয়া পড়িয়াছে।

২৮। যেহেতু সে (সর্ব্বাহ্লাদকর) চন্দ্র বা নিতান্ত প্রেমাস্পদ জনকে দেখিলেও আনন্দলাভ করিতেছে না, সুতরাং সে অতি ধৈর্য্যশালী হইলেও অতি বিষম অন্তঃ

लव। एदंवि तस्सिं अवसरे भअवदीं तुवरावन्तीए, अवलोइदाए उदीरिदं आसि, जधा असत्थसरीरो माहवोत्ति (ध)।

काम। यावदस्मच्छ्रवणं, मालत्येवास्य मन्मथोन्मादहेतुरिति, ममापि स एव निश्चयः। कुतः—(२८)

---

(ध) एतदपि तस्मिन्नवसरे भगवतीं त्वरयन्त्या अवलोकितयोदीरितमासीत्, यथा अस्वस्थशरीरो माधव इति।

---

अतिशयकृशं वपुः शरीरं वहति धारयति, रमणीयः कान्तिमात्रविशेषेण मनोहरश्च भवति। तथाच नेयं पाण्डुता क्षीणता वा रोगजनिता, तथात्वे रमणीयत्वासम्भवादिति भावः। अनेन कार्श्यं नाम मदनावस्था दर्शिता।

अत्र प्रथमार्द्धे इन्दुप्रभृतिजनावलोकनरूपकारणे सत्यपि आनन्दलाभरूपतत्फलाभावात् विशेषोक्तिः, तत्फलाभावेन च अलब्धापरूपमाध्यानुमानादनुमानञ्चालङ्कारः। द्वितीयार्द्धे च स्फुट एव विरोधाभास इत्येतेषां परस्परनैरपेक्ष्येण संसृष्टिः। "सति हेतौ फलाभावे विशेषोक्तिस्तथा द्विधे"ति विशेषोक्तिलक्षणम्। अनयोस्तु लक्षणे प्रोक्ते। शिखरिणी वृत्तम्।

(ध) लवेति। एतदपि तस्य शरीरोपतापवृत्तमपि। तस्मिन्नवसरे माधववृत्तान्तकीर्त्तनकाले।

(२९) कामेति। अस्मच्छ्रवम् कर्णाकर्णिकया श्रुतवती। ननु लोकपरम्परया श्रवणं कदाचित् मिथ्यापि भवेदित्याशङ्कानिरासार्थमाह—ममापीति। स एव अस्य कामोन्मादः मालतीनिमित्तक इत्येव निश्चयः अवधारणम्। तादृशावधारणे कारणं दर्शयितुमवतरणिकां पातयति—कुत इति।

---

সন্তাপ প্রকাশ করিতেছে। এবং সে কদলী লতার ন্যায় শ্যামবর্ণাকৃতি হইয়াও (বিরহবশতঃ) ঈষৎ পাণ্ডুবর্ণ মধুর ও অতিশয় কৃশ শরীর ধারণ করিতেছে—অথচ কান্তিমাত্রবিশেষ বলিয়া মনোহর হইতেছে।

(ধ) লব। মাধবের শরীরোপতাপের কথা ও মাধববৃত্তান্ত কথনকালে আপনাকে ত্বরায় যাওয়ার জন্য অবলোকিতা বলিয়া দিল, যথা—"মাধবের শরীর নিতান্ত অসুস্থ"।

২৯। লোকপরম্পরা শুনিয়াছি যে, মালতীই সেই মদনোন্মত্ততার কারণ, আমারও তাহাই ধারণা। তাহার হেতু এই যে—

अनुभवं वदनेन्दुरुपागमद्वियतमेव यदस्य महात्मनः ।
क्षुभितमुत्कलिकातरलं मनः पय इव स्तिमितस्य महोदधेः ॥३०

माध । अहो ! उपन्यासशुद्धिः, अहो ममात्महत्त्वारोपणे यत्नः ।(३१)

अथवा—

शास्त्रेषु निष्ठा सहजश्च बोधः प्रागल्भमभ्यस्तगुणा च वाणी ।
कालानुरोधः, प्रतिभानवत्त्वमेते गुणाः कामदुघाः क्रियासु ॥ ३२ ॥

---

(३०) अनुभवमिति । माधवस्याभिव्यक्तैश्च दृष्ट्वैतच्छ्लोकं निर्दिशति—एष इति । एष वदनेन्दुः मालत्या आननसुधाकरः नियतं निश्चितमेव महात्मनः महानुभवस्य अस्य माधवस्य अनुभवं प्रत्यक्षत्वं तद्विषयतामिति यावत्, उपागमत् अभजत् । यद्यस्मात् मनः अस्य चित्तं स्तिमितस्य निश्चलस्य महोदधेः जलनिधेः पयो जलमिव उत्कलिकातरलं उत्कण्ठया कल्लोलैश्च चञ्चलं सत् क्षुभितं धैर्यरहितं जातं नितरां अभूदिति शेषः । "कलिकोत्कलिकोत्कण्ठा हेला अलिकलीरपि" इति मेदिनी । यथा समुद्रजलमिन्दुदर्शनादेव क्षुभ्यति, तथा माधवमनोऽपि तत्र वदनचन्द्रावलोकनेनैव क्षुब्धमित्यनुमानाद्विनिर्णीयते, माधवसदृशगाम्भीर्यवतिनोऽस्य मनसः मालती-सदृशवनितावदनावलोकनं विना सर्वदैव क्षोभासम्भवादिति भाव ।

अत्र वदनेन्दुरिति रूपकेण पय इवेत्युपमयानानुप्राणितं माधवमनःक्षोभरूपकार्यनिर्देशेन मालतीमुखेन्दुदर्शनरूपकारणस्यानुमानादनुमानमलङ्कारः । द्रुतविलम्बितं वृत्तम् । "द्रुतविलम्बित-माह नभौ भरा"विति तल्लक्षणम् ।

(३१) माधेति । उपन्यासस्य प्रतिपाद्यविषयव्याख्यानस्य शुद्धिः यथार्थप्रतादिदोषशून्यत्वम् । महत्त्वारोपणे मयि अविद्यमानस्यापि माहात्म्यस्य संस्थापने ।

(३२) अथवा ईदृशौन्नत्येदमाश्चर्यकरमिति सूचयितुमाह—अथवा शास्त्रेष्विति । शास्त्रेषु नीत्यादिसकलविद्यासु निष्ठा संशयादिरहितज्ञानवत्त्वं पारदर्शितेति यावत्, सहज'

---

৩০। এই মালতীর মুখচন্দ্র নিশ্চয়ই এই মহাত্মা মাধবের প্রত্যক্ষীকৃত হইয়াছে, যেহেতু নিশ্চল সমুদ্রের জল যেমন কল্লোলে চঞ্চল হইয়া ধৈর্য্যরহিত হয়, ইহার মনও সেইরূপ উৎকণ্ঠায় চঞ্চল হইয়া ধৈর্য্যরহিত হইয়াছে।

৩১। মাধ। অহো! কথোপন্যাসের কি বিশুদ্ধতা এবং আমার মহত্ত্বা-রোপের জন্য কি চেষ্টা!! অথবা—

৩২। শাস্ত্রের পারদর্শিতা স্বাভাবিক নির্মল বুদ্ধিতা, প্রাগল্ভাদি গুণযুক্ত

काम । अतस्तेन जीविताद्‌द्विजमानेन दुष्करमपि न किञ्चिन्न क्रियते । असौ हि,—(१२)

---

स्वाभाविकी धीः अनभ्यस्तेष्वपि विषयेषु झटिति प्रवेशशीला विमला बुद्धिः, प्रागल्भ्यं "निःसाध्वसत्वं प्रागल्भ्यं प्रयोगेष्वपि सर्वत" इत्युक्तलक्षणं, वाग्मित्वं, तथा अभ्यस्ता आयत्तीकृता गुणाः प्रसादमाधुर्य्यादयो यया एवम्भूता वाणी वाक्यस्य कालावबोधः कस्मिन् समये किं वक्तव्यमित्यवसरज्ञानं, प्रतिभानवत्त्वं तात्कालिकप्रत्युत्पन्नमतिशालित्वं एते गुणाः क्रियासु अभीष्टकार्य्येषु कामं दुहन्तीति कामदुघाः ( काम—दुह—क खश्चान्तादेशः )। अभिलाषसम्पादकाः। तदाच एभिर्गुणैः सविशेषं शोभमानाया भगवत्या उपन्यासपटुत्वादिकं न विस्मयावहमिति भावः।

अत्राप्रस्तुतात् क्रियासामान्यात् प्रस्तुतदूतीक्रियायाः प्रतीतेरप्रस्तुतप्रशंसालङ्कारः, स च गुणसमुच्चयालङ्कारेण संसृज्यते। तथाच तादृशगुणयुक्तकामन्दकीरूपमहद्दूतीलाभात्मनोरथोऽपि मालतीसमागमरूपो माधवस्यावश्यं फलिष्यतीति वस्तु व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः। अप्रस्तुतप्रशंसालक्षणं यथा दर्पणे—"क्वचिद्विशेषः सामान्यात् सामान्यं वा विशेषतः। कार्य्यान्निमित्तं कार्य्यञ्च हेतोरथ समात् समं। अप्रस्तुतात् प्रस्तुतञ्चेद्गम्यते पञ्चधा ततः। अप्रस्तुतप्रशंसा स्या"दिति ॥

(१२) कामेति। अतः मनसो धैर्य्यराहित्याद्धेतो तेन माधवेन जीवितात् जीवनात् उद्विजमानेन त्वया विना जीवनधारणमतीव दुःखकरमिति मन्यता, दुष्करं दुःसम्पाद्यमपि किञ्चित् कार्य्यं न क्रियत इति न, अपि तु क्रियत एवेत्यर्थः।

त्वद्विरहेण जीवनमेवेदानीमतिदुःसहदुःखाकरमिति विभाव्य जीवनाद्भिभ्यता तेन तत्परिजिहीर्षया दुष्करमपि जीवननाशकरं कार्य्यं क्रियत एवेति सरलार्थः।

हि तथाहि—असौ माधव इति श्लोकस्थेन असौ इत्यादिना अन्वेति।

---

বাক্য, কোন্ কালে কি বলিতে হয়, তাহার অবসরপরিজ্ঞান এবং প্রতিভশালিত্ব এই সকল গুণাবলীই কার্য্যে অভিলাষ-সম্পাদক হয়। ( ইহার সমস্তই দেবীতে বিদ্যমান আছে, সুতরাং ইহার কথোপন্যাসের যে বিশুদ্ধতা হইবে, তাহাতে আর বিস্ময় কি ? )।

৩৩। কাম। অধীরতাবশতঃ তোমার বিরহে জীবনধারণ নিতান্ত ক্লেশকর, বিধায় জীবনে নীতশ্রদ্ধ হইয়া মাধব যে দুষ্কর কার্য্যের অনুষ্ঠান করিতেছে না, তাহা নহে।

धत्ते चक्षुर्मुकुलिनि रणत्कोकिले बालचूते
  मार्गे गात्रं क्षिपति बकुलामोदगर्भस्य वायोः।
दावप्रेम्णा सरसबिसिनीपत्रमात्रान्तराय-
  स्ताम्यन्मूर्त्तिः श्रयति बहुशो मृत्यवे चन्द्रपादान् ॥ ३४ ॥

(३४) धत्ते इति। मुकुलिनि सञ्जातकोरके रणत्कोकिले शब्दायमानपिके बालचूते बालत्वात् मनोहरे सहकारतरौ मृत्यवे मरणाय बहुशो वारं वारं चक्षुर्धत्ते पातयति। अत्र मुकुलिनि इत्यनेन कामशायकत्वस्य रणत्कोकिल इत्यनेन च कामसैन्यत्वाभिव्यक्तम्, तथाच कोकिलकुलसमाकुलितादस्मात् सहकारविटपिनं कोरकनाराचनिकरं मम चक्षुर्भित्त्वा प्राणनाशं विधास्यतीत्यभिप्रायेण—दृष्टिविषसर्पं इव विरहिजनातिदुःसहेऽपि सहकारतरौ मरणाय पुनः पुनर्दृष्टिं पातयतीति भावः। तथा—बकुलामोदः केसरकुसुमसौरभं गर्भे मध्ये यस्य तस्य वायोर्दक्षिणानिलस्य मार्गे निर्गमपथे मृत्यवे बहुशो गात्रं देहं क्षिपति न्यस्यति। किमनेन दुःखानुभवदुर्वहदेहेन? कामनाराचधारापातसदृशोऽयं वायुरेवैनम् चूर्णयतु इत्यभिप्रायेणेत्यर्थः। चन्दनाचलमन्दगन्धवहस्य विरहिजनातिदुःसहतया कामबाणपातसदृशत्वकल्पनं नाशकत्वकल्पनञ्च न विरुद्धमिति मन्तव्यम्। किञ्च—सरसं आर्द्रं यत् बिसिनीपत्रं विरहजदाहशमनाय परिजनोपनीतं सरोजपत्रं तन्मात्रं अन्तरायः दाहप्रतिबन्धको यस्य सः, सरससरोजपत्राभावे विरहजदाहेनैव भस्मसम्भवाद्दावमीलितं स्यादिति भावः। "पत्रमात्रोत्तरीय" इति पाठे तादृशं पत्रमात्र उत्तरीयं प्रावरणं यस्य इत्यर्थः। तथा ताम्यन्ती ग्लानिं प्राप्नुवन्ती मूर्त्तिराकृतिर्यस्य स तादृशः) मदवस्थितमाधवस्य विशेषणम्। दावप्रेम्णा सन्तापकत्वाच्चन्द्रकिरणेषु दावानलबुद्ध्या मरणसाधकतया तत्पक्षपातेनेत्यर्थः, मृत्यवे मरणाय बहुशो वारं वारं चन्द्रस्य पादान् किरणान् श्रयति सेवते। विरहिजनानां निरतिशयसन्तापकत्वं अद्ययत् तत् सन्निधानो मरणायालम्बात इत्यर्थः। "दवदावौ वनारण्यवह्नी" इति॥ "पादा रश्म्यङ्घ्रितुर्य्यांशाः" इति चामरः।

৩৪। এই মাধব মরণের জন্য মুকুলিত ও শব্দায়মান কোকিলযুক্ত নব সহকার বৃক্ষে বার বার দৃষ্টি নিক্ষেপ করিতেছে। বকুলপুষ্পগন্ধামোদিত বায়ুর সঞ্চরণপথে মরণের জন্য বারবার গাত্র পাতিয়া রাখিতেছে। এবং নিতান্তম্লান-মূর্ত্তি হইয়া পরিজনসমানীত সরস কমলিনীপত্রকেই একমাত্র বিরহানল কর্ত্তৃক দাহের বিঘ্নস্বরূপ মনে করিয়া অতি সন্তাপকত্বনিবন্ধন দাবানলবোধে মরণের জন্য বারবার চন্দ্রকিরণের সেবা করিতেছে।

माध। अन्य एव अक्षुण्णः कथाप्रकारो भगवत्याः। (३५)

माल। [ स्वगतं। ] अदिदुक्करं करेदि। (न)

काम। तदेवं प्रकृत्या सुकुमारः कुमारः कदाचिदपि अन्यत्र अपरिक्लिष्टपूर्वस्तपस्वी, यतोऽधुना अक्रममनेन मरणमपि अनुभवितुम्। (३६)

---

( न ) अतिदुष्करं करोति।

---

अत्र मुकुलितानीत्यादिविशेषणानां साभिप्रायत्वात् परिकरालङ्कारः। तथा मृत्युलक्ष्मी—एकस्मिन् कार्ये धत्ते इत्यादि बहुक्रियाणां साधनत्वेनोपन्यासात् समुच्चयालङ्कारः। तासां क्रियाणामसाविस्येककर्त्तृकत्वाद्दीपकालङ्कारश्चेति तेषामङ्गाङ्गिभावेन सङ्करः। मन्दाक्रान्ता वृत्तम्।

(३५) माधेति। अन्य एव साधारणोक्तप्रकारादिलक्षण एव अनन्यसाधारण इति यावत्, अक्षुण्णः अदृष्टः, कथाप्रकारः कथनक्रमः।

(न) मालेति। अतिदुष्करं मरणाध्यवसायं मद्दंसाध्यमित्यर्थः, करोति स माधव इति शेषः, क्वचित् पुस्तके "स" इति मूलोक्त एव पाठः।

(३६) कामेति। यतो यस्मात् अनेन माधवेन तदेव उपक्रमेण मरणमपि अधुना अनुभवितुं शक्यं, अतः प्रकृत्या स्वभावेन कुमारः उत्तमसौकुमार्य्यशाली "सौकुमार्य्यं विधाभिन्नं श्रेष्ठमध्याधमक्रमात्। प्रसूनपल्लवस्पर्शासहं यत् स्यात्तदुत्तमम्"। कुमारः अकृतदारः (एतेन विशेषतो युवतिजनवरणीयत्वं सूचितम्)। अन्यत्र त्वद्विषयां तपस्या अपरिक्लिष्टपूर्व्वः पूर्व्वं अक्लिष्टः पूर्व्वमीदृशस्मरशरासनाविषयीभूत इत्यर्थः। (अनेनाननुभूतपूर्व्वत्वात् क्लेशस्यातिदुःसहत्वं त्वमेव प्रथमानुरागविषय इति धन्या त्वमिति च ध्वन्यते)। अयं माधवः तपस्वी अनुकम्पनीयः "तपस्वी तापसे चानुकम्प्ये च" इति विश्वः। त्वमप्यस्मिन्ननुरक्ते अनुरागयोग्ये जने अनुरक्ता सती एवं रक्षस्वेति भावः।

---

৩৫। মাধব। ভগবতীর কথার উপক্রম সর্ব্বতোভাবেই বিলক্ষণ ও নির্দ্দোষ।

(ন) মাল। (স্বগত) অতি দুষ্কর করিতেছে।

৩৬। কাম। স্বভাবতঃ অতি কোমল অবিবাহিত এই মাধব যেহেতু কখনও কোন স্ত্রীবিষয়ে এরূপ ক্লেশ অনুভব করে নাই, কাজেই ইহার পক্ষে মরণও অসম্ভব নহে।

माल। [जनान्तिकं।] सहि! अत्तणो कारणादो तस्स सव्वलोअलङ्कारभूदस्स, किम्पि आसङ्कमाणाभूदाविट्ठाविअ ण आणामि किं पडिवदिस्सिम्हि (प)

माध। दिष्ट्यानुकम्पितोऽस्मि भगवत्या। (३७)

लव। भअवदी एव्वंवादिणीत्ति आअक्खीअदि, अह्माणम्मि भट्टिदारिआ, भवणासण्णरच्छामुहम्मुहुत्तमण्डणस्स, तस्स ज्जेव्व बहुसो अणुभूददंसणा भविअ, रविकिरणासिलिट्ठमुद्धकमलिणी-

---

(प) सखि। आत्मनः कारणात्तस्य सर्वलोकालङ्कारभूतस्य, किमपि आशङ्कमाना भूताविष्टेव न जानामि किं प्रतिपत्स्य इति।

(फ) भगवती एवं वादिनी इति आख्यायते अस्माकमपि भर्तृदारिका, भवनासन्नरथ्यामुखमुहूर्तमण्डनस्य तस्यैव बहुशोऽनुभूतदर्शना भूत्वा, रविकिरणाश्लिष्टमुग्धकमलिनीकन्दसुन्दरा-

---

(प) मालेति। आत्मनः मम इत्यर्थः। किमपि अवक्तव्यं मरणमित्यर्थः, भूतेन शिवानुचरदेवयोनिविशेषेण आविष्टा ग्रस्ता अभिभूता इति यावत्। किं प्रतिपद्यते भगवतीवचनस्य किमुत्तरं दीयते इति न जानामीत्यन्वयः। तथाच त्वयैव यथोचितमुत्तरं दीयतामित्याशयः।

(३७) माधेति। अनुकम्पितः मालत्या अनुरागसम्पादकेन एवं रीत्या कथोपन्यासेनानुगृहीतः।

(फ) लवेति। एववादिनी निःशङ्कमकपटं माधवस्य कामावस्थाप्रकाशिनी इति हेतोः आख्यायते अथापि मालत्या अवस्था अभिधीयते। तव वाक्येन लब्धप्रसरेवाहं लज्जादिकं परित्यज्य गुरुजनस्यापि तवान्तिके मालत्या अवस्था कथयितुमुद्युक्तास्मीति मम धृष्टता न गृहीत-

---

(প) মাল। (জনান্তিকে) সখি! আমার জন্য সর্বালঙ্কারভূত সেই মহাত্মার যদি কিছু হয়, এই আশঙ্কায় আমি ভূতাভিভূতার ন্যায় হইয়া দেবীবাক্যের যে কি উত্তর দিতে হইবে, তাহা বুঝিতেছি না।

৩৭। মাধ। ভাগ্যক্রমেই আমি ভগবতীকর্ত্তৃক অনুগৃহীত হইতেছি।

(ফ) লব। ভগবতী মাধবের অবস্থা ব্যক্ত করিতেছেন বলিয়াই আমিও মালতীর অবস্থা বলিতেছি। আমাদের ভর্তৃদারিকা মালতী স্বীয় বাসগৃহের

कन्द-सुन्दरावअव-सोहा-बिभाविदाणङ्ग-वेअणा-धिअदर-रमणीआवि, परिअणं दूणेदि । णाभिणन्ददि केलिकलाओ, केवलं कमलाअमाण-कन्तहत्थपल्लत्थगण्डमण्डला दिअसाइं गमेदि । (फ)

---

वयवशोभाविभाविताऽनङ्गवेदनाधिकतररमणीयापि, परिजनं दुनोति नाभिनन्दति केलिकलाः, केवलं कमलायमानकान्तहस्तपर्य्यस्तगण्डमण्डला दिवसानि गमयति ।

---

ध्येति भावः । भर्त्तृदारिका प्रभुकन्या मालती भवनस्य स्वीयवासगृहस्य आसन्नं सन्निहितं यत् रथ्यामुखं प्रशस्तपथः तस्य मुहूर्त्तं मण्डनं भूषणं येन तथाभूतस्य तस्यैव माधवस्यैव बहुशो वारं-वारं अनुभूतदर्शना प्राप्तदर्शनाभूत्वा (अनेन चक्षुःप्रीतिरुक्ता) रविकिरणैः सूर्यरश्मिभिः आश्लिष्टं स्पृष्टं मुग्धं मनोहरं यत् कमलिनीकन्दं नलिनीमूलं मृणालमिति यावत् । ("कन्दोऽस्त्री सूरणे मूले" इति त्रिकाण्डशेषः)। तद्वत् सुन्दरस्य पाण्डिमत्वान्मनोहरस्य अवयवस्य शोभया कान्त्या विभाविता सूचिता या अनङ्गवेदना मदनपीडा तया अधिकं यथा स्यात्तथा रमणीया कामाक्लिष्टकायस्य कान्तिप्रकर्षादाह्लादजनिकाऽपि (अतिकान्तस्य सुखजनकत्वनैयत्येऽपि दुःखजनकत्वाद्विषमद्योतनायापिशब्दः)। असौ परिजनं भाण्डशं सखीजनं दुनोति सन्तापयति । विरहदुःखप्रतिकारासामर्थ्यादिति भावः। (अनेनाङ्गम्लानिः पाण्डिमा च दर्शितः) दुःखप्रकारमेव दर्शयति—नाभिनन्दतीति । केली: कन्दुकादिक्रीडाः, कलाः नृत्यगीतादीः नाभिनन्दति नाद्रियते । (अनेनारतिरुक्ता) । कथं तर्हि दिनान्यतिपातयतीत्याह—केवलमित्यादि । कमलायमानः सरोजवदाचरन् कान्तः मनोज्ञः यो हस्तः कमलदलतुल्यं पाणितलमित्यर्थः, तत्र पर्यस्तं न्यस्तं गण्डमण्डलं यया सा तथाभूता । (एतेन चिन्ता कथिता)। कान्तालाभे करतले गण्डविन्यासः युवतीनां स्वाभाविकः, यथोक्तं भरतेन—"अप्राप्ते च प्रिये कार्य्यः स्त्रीभिर्गण्डान्वितः करः" इति ।

---

সন্নিহিত প্রশস্ত পথের অলঙ্কারকারী সেই মাধবেরই বারবার দর্শনলাভ করিয়া সূর্য্যরশ্মি-সংস্পৃষ্ট মুগ্ধ মৃণালের ন্যায় সুন্দর অবয়বের শোভাদ্বারা সংসূচিত যে কামবেদনা তদ্দ্বারা অধিক মনোহর হইয়াও মাদৃশ সখীদিগকে সন্তাপিত করিতেছে। কন্দুকাদিক্রীড়া ও নৃত্যগীতাদি বিষয় আদর করিতেছে না। কেবল কমলবৎ বিরাজমান হস্তে মস্তক বিন্যস্ত করিয়া দিন অতিবাহিত করিতেছে।

अविअ। विअसिआरविन्दमअरन्दणिस्सन्द-सुन्दरेण, दर-दलिअ-कुन्दमाअन्द-महुविन्दुसन्दोहवाहिणा, भअणुज्जाणपेरन्तमारुदेण उत्तम्मदि। (व)

अण्णं अ जदोप्पहुदि तस्सिं जत्तादिअहे णिअमहूसवाब्भुदअ-दंसण-पडिवण्णरूवस्स भअवदो कामस्स विअ, कामकाणणालङ्कार-आरिणो तस्स, विविहविब्भमाहिरामं, अणुरूआणुराआणुबन्धमह-

---

(व) अपिच। विकसितारविन्दमकरन्दसुन्दरेण कुन्दमाकन्दमधुविन्दुसन्दोहवाहिना मदनोद्यानपर्यन्तमारुतेन उत्ताम्यति।

(भ) अन्यच्च, यतः प्रभृति तस्मिन् यात्रादिवसे, निजमहोत्सवाभ्युदयदर्शनप्रतिपन्नरूपस्य भगवतः कामस्येव, कामकाननालङ्कारकारिणः तस्य, विविधविभ्रमाभिराममनुरूपानुरागानु

---

(व) अपिचेति। विकसितानाम् अरविन्दानां मकरन्दनिस्यन्देन निर्यासद्रवेण तत् संस्रवेणेत्यर्थः, सुन्दरः गन्धवत्त्वेन मनोहरः तेन, तथा दरविदलितौ ईषद्विकसितौ ("ईषदर्थे दराव्यय"मित्यमरः)। यौ कुन्दमाकन्दौ कुन्दचूतकुसुमे ("माकन्दः सहकारेऽस्त्री धात्रीनगर-भेदयो"रिति मेदिनी)। तयोर्मधुविन्दुसन्दोहं मधुकणसमूहं वहति धारयतीति तेन तथाभूतेन पुष्पनिर्यासस्पर्कादतिसौरभेणेत्यर्थः। मदनोद्यानस्य पुरःस्थितोपवनस्य पर्यन्तमारुतेन तत्प्रान्त-सञ्चारिणा वायुनेत्यर्थः, उत्ताम्यति अतीवाधीरा भवति। (एतेनोद्दीपनविभावजनित-वेदनाभिहिता)।

(भ) अन्यच्चेति। निजस्य स्वस्य यो महोत्सवः स एव अभ्युदयः वृद्धिः तस्य दर्शनाय प्रतिपन्नरूपस्य अनङ्गत्वेऽपि स्वप्रभावेन सायहमङ्गीकृतविग्रहस्य भगवतः कामस्य मदनस्येव कामकाननालङ्कारकारिणः स्वकान्त्या मदनोद्यानशोभाभिवृद्धिविधायिनः तस्य माधवस्य विविधैः नानाप्रकारैः विभ्रमैर्विलासैः अभिरामं मनोरमं अनुरूपस्य समुचितस्य प्रियजनाभिलाषविशेषस्य

---

(व) অপর এই যে, বিকসিত নির্য্যাসসংস্রবে সদ্গন্ধযুক্ত ও ঈষদ্বিকসিত কুন্দ এবং চূতকুসুমের মধুকণবাহী ভবনোদ্যানপ্রান্তসঞ্চারী বায়ুদ্বারা সে অতীব অধীরা হইতেছে।

(ভ) আরও এই যে, সেই যাত্রাদিবসে যে সময় হইতে নিজমহোৎসবরূপ অভ্যুদয়দর্শনের জন্য শরীরধারী কামদেবের ন্যায় মদনোদ্যানের অলঙ্কারকারী সেই মাধবের বিবিধবিলাস-মনোহরসমুচিতানুরাগানুসরণদ্বারা যৌবনাবস্থের

ग्घीकिदजोव्वणारम्भं अण्णोण्णदिट्ठिविणिवादसज्झसावसरक्खिज्जमाण-चित्ततुवरन्तकोदूहलं समुल्लसिद-सज्झसत्थम्भमन्थराअअवपडिलग्गसेअ-पुलअवेवक्कम्प-सुन्दरं, आणन्दिदसहीअणं पिअसहीए परम्पराअलोअण-सुहं समासादिदं, तदो पहुदि, सविसेस-दूसहाआसविअम्भमाणुद्दाम-देहदाहदारुणं दसापरिणामं अणुभवन्ती, मुहुत्त-मेत्तसम्पत्तपुव्व-चन्दोदआ बालकमलिणी विअ पम्मलाअदि । (अ)

---

र्घमहार्घीकृतयौवनारम्भमन्योऽन्यदृष्टिविनिपातसाध्वसावसररक्ष्यमाणचित्तत्वरमाणकौतूहलं, समु-ल्लसितसाध्वसस्तम्भमन्थरायमाणप्रतिलग्नस्वेदपुलकोत्कम्पसुन्दरं, आनन्दितसखीजनं, प्रियसख्या परम्परावलोकनसुखं समासादितं, ततः प्रभृति, सविशेषदुःसहायासविजृम्भमाणोद्दामदेह-दाहदारुणं दशापरिणाममनुभवन्ती मुहूर्त्तमात्रसम्प्राप्तपूर्वचन्द्रोदया बालकमलिनीव प्रम्लायति ।

---

अनुबन्धेन अनुवर्त्तनेन महार्घीकृतः श्लाघ्यीकृतः यौवनारम्भो येन तत् तथोक्तं, तथा अन्योन्यदृष्टि-विनिपातः परस्परदृष्टिनिक्षेप एव वञ्चना विरहकालदुःसहत्वात् प्रतारणा तस्या अवसरे समये क्षिद्यमानं कामभावोदयेन सन्तप्तं यच्चित्तं तस्मिन् त्वरमाणं सत्वरं कौतूहलं अवलोकनस्यैव कौतुकं यस्मिन् तत् एवं समुल्लासितेन उत्पन्नेन साध्वसेन भयेन यः स्तम्भः स्तब्धीभावः तेन मन्थरेषु निश्चेष्टेषु अवयवेषु हस्तपदादिषु प्रतिलग्नाः उत्पद्य वर्त्तमानाः ये स्वेदपुलकोत्कम्पाः घर्मरोमाञ्चकम्पाः सात्त्विकभावविशेषाः तैः सुन्दरं अत एव आनन्दिताः स्वयोग्यजनावलोकन-जनितानुरागविशेषमवधार्येति सन्तुष्टाः सखीजना येन तत् तथाभूतं परस्परावलोकनसुखं यतः प्रभृति प्रियसख्या मालत्या समासादितमित्यन्वयः । ततः प्रभृति सविशेषः सातिशयः अत एव दुःसहः य आयासः कामखेदविशेषः तेन विजृम्भमाणो वर्द्धमानः उद्दामः महान् यो देहदाहः शरीरसन्तापः तेन दारुणं भीषणं दशापरिणामं अवस्थापरिणतिं अनुभवन्ती इयं मालतीति शेषः । मुहूर्त्तमात्रं अत्यल्पसमयमात्रं सम्प्राप्तः अधिगतः पूर्वं चन्द्रोदयो यया सा तथाभूता सती यथोक्तविशेषणा बालकमलिनी नवनलिनीव (बालपदस्य नलिनीकोमलताद्योतनार्थं) । प्रम्लायति अवसीदति, पक्षे मुद्रिता भवति । यथा पूर्वचन्द्रोदयदर्शनमात्रेणैव बालकमलिनी सङ्कुचिता

---

শ্লাঘাসম্পাদক পরস্পর দৃষ্টিনিক্ষেপরূপ প্রতারণাবসরে কামভাবোদয়নিবন্ধন চিত্ত সন্তপ্ত হইলে অতিত্বরায় দর্শনকৌতূহলশালী, সমুৎপন্ন ভয়জনিত স্তব্ধতা বশতঃ নিশ্চেষ্টাবয়বে প্রতিলগ্ন ঘর্ম, রোমাঞ্চ ও কম্পদ্বারা মনোহর এবং সখী-

तहावि अ, मुहुत्तमेत्त-हिअअविणिहिदणिअ-वल्लह-समागमा, णिब्भर-सलिलासारसिच्चमाणेव्व मेइणी सीदलाअदित्ति जाणामि। जेण पप्फुरिद-कन्तदसणच्छदुच्छलन्तदन्तमुत्तिआवलिकन्ति सविसेस-सोहिदं, णिरन्तरूससिद-पुलअ-पम्हलकवोलघोलन्तसंददानन्दबाहत्थ-

(म) तथापि च, मुहूर्त्तमात्रहृदयविनिहितनिजवल्लभसमागमा निर्भरसलिलासारसिच्यमानेव मेदिनी शीतलायत इति जानामि। येन प्रस्फुरत्कान्तदशनच्छदोच्छलद्दन्तमौक्तिकावलिकान्ति-सविशेषशोभितं, निरन्तरोच्छ्वसितपुलकपक्ष्मलकपोलघूर्णमानसन्ततानन्दबाष्पस्तवकमीषद्विकसित-

भवति, तथैयमपि मालती तद्विरहवेदनामनुभवन्ती चन्द्रोदयदर्शनमावेशादतितरमवसादं लभत इति सरलार्थः। विरहिणीनामतिदुःखकरत्वाच्चन्द्रदर्शनस्येति भावः। अथवा यथा पूर्णचन्द्रोदय-दर्शनमात्रेणैव कमलिनी ग्लानिं भजते, तथैव तादृशातिदुःसहं दशापरिणाममनुभवन्ती मालती ग्लानिं भजत इत्यर्थः। एवञ्च—मुहूर्त्तेत्यादि विशेषणं कमलिनीपक्ष एव योज्यम्।

(म) अथैवमवसन्ना चेत् कथं जीवतीत्याह—तथापि चेति। तादृशकामदशापरिणामा-वसन्नापि चेत्यर्थः। मुहूर्त्तमात्रमत्यल्पकालं हृदये विनिहितः कल्पनया निर्म्मितः निजवल्लभस्य स्वप्रियस्य माधवस्य समागमो यया सा, अत एव निर्भरेण अतिशयितेन सलिलासारेण वर्षणधारा-सम्पातेन सिच्यमाना आर्द्रीक्रियमाणा मेदिनी पृथिवीव शीतलायते कथञ्चिदुपशमितमदन-सन्तापा शीतलेव आचरति, इति जानामि अनुमिनोमि। सङ्कल्पोपनीतप्रियसमागम एवास्याः सञ्जीवनौषधिरिति भावः। एतेन सङ्कल्प उक्तः। सङ्कल्पोपनीतप्रियसमागमानुमाने हेतुं दर्शयति—येनेति। तत्र समागमाङ्गं प्रियचुम्बनानुभवं दर्शयितुं मुखं विशिनष्टि—प्रस्फुरदी-त्यादिना। प्रस्फुरद्भ्यां स्पन्दमानाभ्यां दशनच्छदाभ्यां ओष्ठाधराभ्यां उच्छलन्ती प्रकाशमाना या दन्तमौक्तिकावलिः दन्तरूपमौक्तिकश्रेणि, तस्याः कान्त्या शोभया सविशेषं सातिशयं शोभितं भूषितम्, तथा निरन्तरोच्छ्वसितैः घनभावेनोत्पन्नैः पुलकैः रोमाञ्चैः पक्ष्मलयोः कण्टकितयोः

জনের আনন্দজনক পরস্পরাবলোকনসুখ প্রিয়সখী অনুভব করিয়াছিল, সেই হইতেই অতিশয় দুঃসহ কামজ খেদে পরিবর্দ্ধমান দেহদাহদ্বারা ভীষণ অবস্থা-পরিণাম অনুভব করতঃ অতি অল্পকালমাত্র চন্দ্রোদয়দর্শনে নব নলিনীর ন্যায় ম্লানভাব ধারণ করিতেছে।

(ম) তাদৃশ কামদশাপরিণামে অবসন্না হইয়াও মুহূর্তমাত্র হৃদয়ে মাধব-সমাগমের কল্পনা করতঃ অতিশয় বর্ষণধারায় আর্দ্রীভূত মেদিনীর ন্যায়

वअं ईसि-विअसिदणिप्फन्दमन्दतारत्ताणमसिणमउलाअन्तणेत्त-णीलुप्पलं, अविरलुब्भिष्ण-सेअजलविन्दूसुन्दर-ललाटपट्टं णवचन्दलेहा-मणोहरं मुद्धमुहपुण्डरीअमुव्वहन्ती, विअड्ढसहअरीचित्त संसइद-कोमारभावा भोदि। (म)

---

निष्पन्दतारोत्तानमसृणमुकुलायमाननेत्रनीलोत्पलं, अविरलोद्भिन्नस्वेदजलविन्दुसुन्दरललाटपट्टं नव-चन्द्ररेखामनोहरं मुग्धमुखपुण्डरीकम् उद्वहन्ती विदग्धसहचरीचित्तसंशयितकौमारभावा भवति।

---

कपोलयोः गण्डयोः उपरीत्यर्थः, घूर्णमानः अभिष्यन्दमान सन्ततः अविरलधारः आनन्दवाष्पस्तवकः चुम्बनानन्दानुभवसमुत्थाम्बुजलसमूहः यत्र तत् तथोक्तम्। सद्यःउपनीतवल्लभं प्रति—दर्शनप्रकार दर्शयितुं विशिनष्टि—ईषदित्यादिना। ईषद्विकसिते बलवद्दिदृक्षासत्त्वेऽपि लज्जावशात् किञ्चि द्विकसिते निष्पन्दं सौन्दर्यातिशयचिन्तया क्वचिन्निश्चले मन्दतारे सकौतुकदर्शनादनतिविक-सिततारात्मके उत्ताने ऊर्द्धदेशदर्शनार्थं कदाचिदुन्नमिते मसृणे कोमले मुकुलायमाने मुकुल इवाचरन्ती कुट्मलसदृशे इत्यर्थः, नेत्रोत्पले नयनेन्दीवरे यत्र तत् तथाभूतम्। सद्यःउपस्थापित-प्रियेण सह रतिसम्भोगानुभवं दर्शयितुं विशिनष्टि—अविरलेत्यादिना। अविरलं अविश्रान्तं यथा स्यात्तथा उद्भिन्नैः उत्पन्नैः स्वेदजलबिन्दुभिः घर्म्मोदककणैः सुन्दरं ललाटपट्टं कपालदेशो यस्मिन् तत् तथाभूतं एवं नवचन्द्ररेखामनोहरं नवोदितेन्दुकलाभिरामं मुग्धं मनोहरं मुखपुण्डरीकं वदनसरोजं उद्वहन्ती धारयन्ती मालती येन कारणेन दन्तच्छदस्फुरणादिना संयोगचिह्नेन विदग्धाभिः पण्डिताभिः सुचतुराभिरिति यावत्। सहचरीभिः सखीभिः चित्ते स्वचेतसि संशयितः सन्देहगोचरीकृतः कौमारभावः अपरिणीतावस्थात्वं यस्याः सा तथाभूता भवति,—तेनैवकारणेन सुहृत्संमानहस्तनिहितवल्लभसमागमेयमिति जानातीत्यन्वयः।

---

শীতলভাব ধারণ করিতেছে বলিয়া আমি অনুমান করি। যে হেতু ওষ্ঠাধরের স্পন্দনবশতঃ প্রকাশমান দন্ত মৌক্তিকশ্রেণীর কান্তিদ্বারা বিশেষরূপে পরি-শোভিত, নিরন্তরোৎপন্ন রোমাঞ্চদ্বারা কণ্টকিত, গণ্ডদেশে অবিরলধারে অভিষ্যন্দ-মান ( চুম্বনানুভবজনিত আনন্দাশ্রুপরিব্যাপ্ত, ঈষদ্বিকশিত নিষ্পন্দ নাতিবিকসিত-তারাদ্বয়যুক্ত উন্নমিত কোমল এবং কুট্মলের ন্যায় পরিদৃশ্যমান নেত্রযুগল-শালী, অবিশ্রান্ত উৎপন্ন ঘর্ম্মবিন্দুদ্বারা সুন্দর ললাটপট্টযুক্ত ও নূতন চন্দ্রলেখার ন্যায় মনোহর, মুখপুণ্ডরীক ধারণ করিয়া সুচতুরা সখীদিগের চিত্তে এইরূপ সন্দেহ জন্মাইতেছে যে, এখনও অবিবাহিতা অবস্থা আছে কি না ?

किंच—उद्दामससिमऊहणिउरुम्बचुम्बिदपउत्तिणीसन्दचन्दमणिहारधारिणी ·कप्पूरपूरसविसेस सिसिरचन्दणरसच्छडा·भारणिब्भर दन्तुरिदबालकदलीवत्त स अणा पादसंवाहणादि·व्वावारतुवरन्त सहअरीसत्थविरइदोवणीदकमलिणीदलजलद्दतालवन्ताउम्भिद्दा एव्व रअणीओ गमेदि। (य)

---

(य) किञ्च। उद्दामशशिमयूखनिकुरम्बचुम्बितप्रवृत्तनिष्यन्दचन्द्रमणिहारधारिणी, कर्पूरपूरसविशेषशिशिरचन्दनरसच्छटाभारनिकरदन्तुरितबालकदलीपत्रशयना, पादसंवाहनादिव्यापारत्वरमाण·सहचरीसार्थविरचितोपनीतबालकमलिनीदलजलार्द्रतालवृन्ता उन्निद्रैव रजनीर्गमयति।

---

दर्शितदन्तच्छदस्फुरणरोमाञ्चानन्दबाष्पह्निकारविशेषस्वेदप्रभृतिभिः संयोगचिह्नैः परा: सुचतुरा: सखीजना: "किं मालत्यास्मदगोचर एव कश्चित् परिरब्धोऽभूत्: ? कथमन्यथेवं सम्भोगचिह्नानि सम्भवेयु"रिति सन्देहदोलायमाना जाता, वस्तुतस्तु विशेषतोऽस्या: सर्व्वभावाभिव्यक्तिचिह्नै: सङ्कल्पोपनीतप्रियमाधवसमागमभिवानुभिनोमीति भाव:।

(थ) रात्र्यवस्थां कथयति—किञ्चेत्यादिना। उद्दामेन मार्द्द्येन शशिमयूखानां इन्दुकिरणानां निकुरम्बेण समूहेन चुम्बित: स्पृष्ट: अत एव प्रवृत्तनिष्यन्द: समारब्धजलस्राव: विगलित इति यावत्, यश्चन्द्रमणिहार: चन्द्रकान्तमणिनिर्म्मितो हारस्तं धारयतीति तथोक्ता। एवं कर्पूरपूरेण कर्पूरसमूहेन सविशेषशिशिराया निरतिशयशीतलाया: चन्दनरसच्छटाया: चन्दनद्रवसमूहस्य भाराभिनिकरेण धारासम्पातनिवहेन दन्तुरितं विषमीकृतं बालकदलीपत्रमेव शयनं शय्या यस्या: सा (कदलीपत्रस्य बालत्वविशेषणं शैत्यसौकुमार्य्यशालित्वसूचनार्थं)। तथा—पादसंवाहनादिव्यापारत्वरमाणेन सत्वरीभूतेन सहचरीसार्थेन सखीनिवहेन विरचितोपनीतं "कृष्टमदीकृत"मित्यादिवत् पूर्व्वं विरचितं निर्म्मितं पश्चात् उपनीतं उपस्थापितमित्यर्थ:, यत् बालकमलिनीदलं नवीननलिनीपत्रं तदेव जलार्द्रं तालवृन्तं व्यजनं यस्या: सा तथाभूता उन्निद्रैव निद्रारहितैव रजनी: रात्री: गमयति अतिवाहयति। एतेन जागरावस्था कथिता।

---

(থ) আরও কি বলিব? পরিণত চন্দ্রকিরণসমূহের স্পর্শে বিগলিত চন্দ্রকান্তমণিনির্ম্মিত হার ধারণ করিয়া কর্পূরসমূহসম্পর্কে বিশেষরূপে শীতলীকৃত চন্দনরসের ধারাসম্পাতে বিষমীকৃত বালকদলীপত্ররূপ শয্যায় শয়ান মালতী পাদসেবাদিব্যাপারে ত্বরাযুক্ত সখীগণ পূর্ব্ববিরচিত বালকদলীদলরূপ ব্যজনদ্বারা বাতাস করিলেও অনিদ্রিতাবস্থাতেই রাত্রি অতিবাহিত করিয়া থাকে।

कधंवि उवलद्धणिद्दासुहा सेदपप्फुरिदपादपल्लवुव्वत्तपिण्डालत्तअरसा थरथरायन्त-पीवरोरुमूलपासविसंवादिणीविबन्धना उक्खुब्भन्त-हिअअन्तरुत्तरंगणीसासविसमसमूच्छसन्तपव्भल-पओहरोवरिणिहित्तवेवन्तभुअलदावेट्टनबन्धणा झत्ति पडिबोधवेलाविसज्जिदु-

---

(२) कथमपि उपलब्धनिद्रासुखा स्वेदप्रस्फुतपादपल्लवोद्वान्तपिण्डालक्तकरसा, थरथरायमानपीवरोरुमूलपार्श्वविसंवादिनीविबन्धना, उत्क्षुभ्यमाणहृदयान्तरोत्तरङ्गनिश्वासविषमसमुच्छ्वसत्पन्नलपयोधरोपरिनिहितवेपमानभुजलतावेष्टनबन्धना, झटिति प्रतिबोधवेलाविसर्जितोविग्रहदि-

---

न च कमलिनीपत्रस्य तालवृन्तत्वासम्भवादयोग्यमिदं वाक्यमिति शङ्कनीयं, तालवृन्तपदस्य व्यजनमात्र एव रूढत्वात्। अत एवामरसिंहेनापि—"व्यजन तालवृन्तक"मिति व्यजनसामान्यपरत्वमेवोपदिष्टं। "सञ्चालयामि नलिनीदलतालवृन्त"मित्यादिकालिदासादिवाक्यमपि तथैव प्रतिपादयतीत्यनुसन्धेयम्।

(२) स्वाभाविकनिद्राविगमेऽपि चिन्ताजनिता निद्रा दर्शयति—कथमपीति। "दौर्बल्यालस्यचिन्तादेर्निद्रा स्यात् कथमपि वे"ति निद्रायाश्चिन्ताजनितत्वे प्रमाणम्। कथमपि प्रबलदुश्चिन्तया इत्यर्थ.। उपलब्धं निद्रैव सुखं स्वप्ने प्रियसमागमसम्पादकत्वात् परमानन्दरूपं यया सा, अत एव स्वेदेन स्वप्ने सुरतश्रमजनितघर्मजलेन प्रसृताभ्यां व्याप्ताभ्यां पादाभ्यां चरणाभ्यां उद्वान्त. द्रवीभूय पतित. पिण्डालक्तकरस: पिण्डीभूतो लाक्षाद्रवो यस्या: सा, थरथरायमाणं स्वप्ने वल्लभोरुयुगलाक्रमणानुभवात् कम्पमानं यत् पीवरं महत् ऊरुमूलं तस्य पार्श्वात् समीपात् विसंवादि वल्लभाकर्षणभावनया स्खलितं नीविबन्धनं यस्या: सा, (थरथरायमाणेति शब्दो ग्राम्य: कम्पार्थक:) तथा उत्क्षुभ्यमाणस्य कामसन्तापेन क्षुब्धीक्रियमाणस्य हृदयस्य अन्तर्मध्ये उत्तरङ्गा: निरुद्धवेगतया समुद्वेलिता: ये निश्वासा तै: विषमं आतिशय्यं यथा स्यात्तथा समुच्छ्वसद्भि: समुल्लसद्भि: पुलकै: रोमाञ्चै: पक्ष्मलौ कण्टकितौ यौ पयोधरौ स्वकीयस्तनौ तयोरुपरिनिहिताभ्यां वल्लभभुजभावनया स्थापिताभ्यां भुजलताभ्यां स्वकीयबाहुवल्लीभ्यां यत् आवेष्टनं तदेव बन्धनं वल्लभालिङ्गनं यस्या: सा। तादृशस्वप्नभङ्गकालीनावस्थां कथयति—झटितीति।

---

(२) অতি দুশ্চিন্তাবশতঃ কদাচিৎ নিদ্রাসুখলাভ করিলেও স্বপ্নদৃষ্ট সুরতশ্রমজনিত ঘর্মজলব্যাপ্ত চরণযুগল হইতে শুষ্ক অলক্তক রসগুলি (ঘর্মজলে দ্রব হইয়া) ক্ষরিত হইতে থাকে। (বল্লভ উরুযুগল আক্রমণ করিতেছে, এইরূপ স্বপ্নদর্শন করায়) থর থর কম্পান্বিত স্থূল উরুমূলের সমীপদেশ হইতে (কাঞ্চ-

ब्विगदिट्टि-विणिवादविग्घादसुण्णसअणिज्जसज्झादमोहमोलन्तलोअणा ससम्भमसहीअण-पअत्तपडिवण्णमुच्छाविच्छेअसमअ-संगलिददीहणीसासजणिदजीविदासा, किंकादब्वदाभूढदाए पढमपत्थिदणिअजीविदावसाणं दुब्वारदेब्वविलसिदोवालम्भमेत्तब्वावारं अम्हारिसं जणं करेदि। (र)

---

विनिपातविघातशून्यशयनीयसञ्जातमोहमीलल्लोचना, ससम्भ्रमसखीजनप्रयत्नप्रतिपन्नमूर्च्छाविच्छेदसमयसङ्गलितदीर्घनिश्वासजनितजीविताशा किंकर्त्तव्यतामूढतया प्रथमप्रार्थितनिजजीवितावसानम् दुर्वारदैवविलसितोपालम्भमात्रव्यापारमस्मादृशं जनं करोति।

---

झटिति शीघ्रं प्रतिबोधवेलायां जागरणकाले विसर्जिता निक्षिप्ता उद्दिग्ना वल्लभविच्छेदभयतया ससाध्वसा या दृष्टिः तस्या विनिपातेन सन्निकर्षेण विज्ञात अवगतं शून्य वाञ्छितजनविरहितं यत् शयनीयं शय्या तस्मिन् सञ्जात वल्लभवियुक्तत्वादर्शनेन पुनरुत्पन्नो यो मोह. तेन मीलती पुनर्निमीलिते लोचने नेत्रे यस्याः सा तथाभूता। ससम्भ्रमाया चैतन्यसम्पादनाय सत्वरायां सखीजनानां प्रयत्नेन शीतलानिलसञ्चालनादिव्यापारेण प्रतिपन्नः उत्पन्न. यो मूर्च्छाविच्छेदः मोहविगमः तस्य समये काले सङ्गलितेन बहिर्गतेन दीर्घनिश्वासेन जनिता उत्पादिता जीविताशा जीवनमस्तीति सखीजनानां विश्वासो यस्या सा तथाभूता मालती अस्मादृश जनं सखीजनसमूहमित्यर्थ.। किङ्कर्त्तव्यतामूढतया कर्त्तव्यावधारणासामर्थ्येन प्रथमप्रार्थितं प्रथमाभिलषितं निजजीवितस्य स्वस्य जीवनस्य अवसानं विनाशो येन त, तथा दुर्वारस्य साधारणमनुष्यैरप्रतिकार्य्यस्य दैवस्य नियतेर्यत् विलसित अभिप्रेतं कार्य्यं तस्य उपालम्भमात. तिरस्कारमात्रः व्यापारः अनुष्ठानं यस्य तं तथाभूतं करोति। प्रार्थितवल्लभस्यातिदुर्लभतया तादृशीं विषमां दशामनुभवन्त्या मालत्या अन्याहितमकथ्यमचिरमेव भविष्यतीति शङ्कातङ्कितचित्ता वय अति दुःसहात् तदत्याहितापतनात् पूर्व्वमेवास्माक पतन कामयामहे, अन्यसामर्थ्याभावेन चाप्रतिविधेयं दैवविलसितमेव केवलमुपालभामहे इति भाव'।

---

কর্ত্তৃক আকর্ষণভাবনায়) নীবিবন্ধন শিথিল হইয়া যায়। কামজ সন্তাপ-ক্ষুব্ধ হৃদয়মধ্যে সমুদ্বেলিত নিশ্বাসবশে বিষমরূপে সমুৎপন্ন রোমাঞ্চদ্বারা কণ্টকিত নিজস্তনযুগলের উপরিভাগে (বল্লভের ভুজলতাবিবেচনায়) নিজের ভুজলতা স্থাপন করিয়া তৎপরিবেষ্টনরূপ কান্তালিঙ্গন অনুভব করিতে থাকে। হঠাৎ

ता पेक्खदु भअवदी, इमेसु दाव लावस्स-भूइट्ठणिम्माणपरिवेल-वेसु अङ्गेसु दारुणविजिम्भिदस्स किअच्चिरं कुसलावसाणदा मम्महस्स भविस्सदि । (ल)

कधं अ इमाइं रमणकेलिकलहकोवोमराअपल्लविअकेरलीकवोल-कोमलुब्वेल्लन्तविमलचन्द-चन्द्रिओद्दामदलिदतिमिरावरणाइं विहा-

---

(ल) तत् प्रेक्षतां भगवती, एतेषु तावल्लावण्यभूयिष्ठनिर्माणपरिपेलवेषु अङ्गेषु दारुण-विजृम्भितस्य कियच्चिरं कुशलावसानता मन्मथस्य भविष्यति ।

---

(ल) वक्तव्यमुपसंहरति—तदिति । तत् तस्मात् मालत्या एवमवस्थापन्नत्वात् प्रेक्षतां स्वकीयदुर्लभयोगबलेन निर्द्धारयतु । लावण्यभूयिष्ठं लावण्यबहुलं निर्म्माणं येषां तानि अत एव परिपेलवानि क्षीणमानानि तेषु अङ्गेषु मालत्यवयवेषु दारुणविजृम्भितस्य भीषणभावेन हृद्धिमापन्नस्य मन्मथस्य कामदेवस्य कुशलेन मालतीजीवनस्थितिरूपमङ्गलेन सह अवसानं प्रशमनं यस्य तस्य भावः तत्ता, कियच्चिरं कियन्तं कालमपर्य्यन्तमित्यर्थः । भविष्यतीत्यन्वयः । मालत्या जीवन-सत्त्व एवास्य दुर्विसहकामजसन्तापस्य प्रशमनं भविष्यति नवेति—स्वीययोगप्रभावबलेनावधार्य्या-स्माकं स्थाने कथयतु भगवतीति सरलार्थः ।

---

জাগরণকালে কান্তবিরহাশঙ্কায় সভয় দৃষ্টি নিক্ষেপ করতঃ শয্যাতল শূন্য বুঝিতে পারে ও পুনরায় মূর্চ্ছিত হইয়া নেত্রযুগল নিমীলিত করে। চৈতন্য-সম্পাদনে ব্যস্ত সখীজনের প্রযত্নে কথঞ্চিৎ মূর্চ্ছা ভাঙ্গিলেও অতিবেগে প্রবাহিত দীর্ঘ নিশ্বাসেই কেবল জীবনাশা সঞ্চার করিয়া থাকে। (মালতীর এইরূপ অবস্থাদর্শনে) আমাদের ন্যায় সমদুঃখসুখভাগী সখীসকল (অচিরকাল-মধ্যে মালতীর মরণ আশঙ্কা করিয়া) কিংকর্ত্তব্যবিমূঢ়তাবশতঃ অগ্রে নিজ নিজ মরণকামনা করে ও কেবল অপ্রতিবিধেয় দৈববিধানের নিন্দা করিয়া থাকে।

(ল) সুতরাং আপনি যোগবলে নিরীক্ষণ করিয়া দেখুন, কতদিনে লাবণ্য-বাহুল্যপরিনির্ম্মিত অতিশোভমান এই মালতীর শরীরাবয়বে অতিভীষণভাবে পরিবর্দ্ধমান কামভাবের মঙ্গলময় অবসান ঘটিবে।

अरोमुहाइं । इमे अ उल्लसिददुद्धसिन्धुपूरधवलुज्जलजोण्हाजलप्पक्खा-
लिदगअणांगणा, परिमिलिदपाडलावउलणिम्महणबहलपरिमलुग्गार-
सम्बलणमसिणसंचलाअन्तमलअमारुदुद्धूमाविद दहदिहामुहा वसन्त-
रअणीपरिणाहा अणत्थकारिणो भविस्सन्ति पिअसहीएत्ति। (ब)

काम । लवङ्गिके !

यदि तद्विषयोऽनुरागबन्धः स्फुटमेतद्धि फलं गुणज्ञतायाः ।

---

(ब) कथञ्च इमानि रमणकेलिकलहकोपोपरागपल्लवितकेरलीकपोलकोमलोर्जस्विमल-चन्द्रचन्द्रिकोद्दामदलिततिमिरावरणानि विभावरीमुखानि। इमे च उल्लसितदुग्धसिन्धुपूरधवलो-ज्ज्वलज्योत्स्नाजलप्रक्षालितगगनाङ्गनाः परिमिलितपाटलावकुलनिर्मथनबहलपरिमलोद्गारसंवलन-मसृणमांसलायमानमलयमारुतोद्धूमायितदशदिङ्मुखा वसन्तरजनीपरिणाहा अनर्थकारिणो भविष्यन्ति प्रियसख्या इति।

---

(ब) *कथञ्चेति। इमानि उपस्थितप्रायाणि, रमणकेलिकलहेन सुरतक्रीडाविषयक-*विवादेन (जनित') यः कोप तेन (उपनीत') य उपरागः लौहित्यं तेन पल्लवितौ पल्लवतुल्यारक्तीभूतौ यौ केरलीकपोलौ केरलदेशीयस्त्रिया गण्डद्वयं (अत्र केरली-पदोपादानं केरलदेशीयस्त्रीकपोलस्यातिकोमलत्वप्रसिद्धा तन्माहात्म्येनातिकोमलत्वद्योतनार्थं ) तद्वत् कोमलाः मार्दवशालिनः उद्वेल्लन्तौ उल्लसन्तौ विमला निर्मला च या चन्द्रिका ज्योत्स्ना तया उद्दामं अतिशयित यथा स्यात्तथा दलितानि निराकृतानि तिमिरावरणानि तमो-रूपाच्छादनानि येषां तानि तथाभूतानि विभावरीमुखानि प्रदोषकालाः कथं केन वा प्रकारेण "अनर्थकारिणौ भविष्यन्तौ"ति परेण अनर्थकारीण्येति लिङ्गव्यत्ययेनान्वयः। तदपि प्रेषता भगवतीति सम्बन्धः कार्यः। प्रदोषस्यातिशयकामोद्दीपकत्वादव तल्लाभार्थं विभावरीमुखानी-त्युक्तम्, अतएव सामान्यतो वक्ष्यमाणेन रजनीपरिणाहेन न चरितार्थता। तथाच विभावरीमुखा अतीव दुःखदायीनि भविष्यन्तीति भाव.।

---

(ব) সুরতক্রীড়াবিষয়ক কলহজনিত কোপোপনীত রক্তিমায় পল্লবসদৃশ আরক্তীকৃত কেরলদেশীয় স্ত্রীলোকদিগের কপোলের ন্যায় কোমল ও উল্লসিত নির্মল জ্যোৎস্নাদ্বারা যাহার অন্ধকারাবরণ নিঃশেষরূপে বিদলিত হইয়াছে,উপস্থিত প্রায় সেই প্রদোষকাল কি প্রকার অনর্থকারী হইবে। এবং যেই বসন্ত-রজনীতে ক্ষীরসমুদ্রপ্রবাহের ন্যায় শুভ্র ও দীপ্তিমৎ জ্যোৎস্নারূপজলে গগনতল বিধৌত হয়,

इति नन्दितमप्यवश्यायाऽस्या हृदयं दारुणया विदार्य्यते मे ॥ (१८)

इमे च नातिदूरवर्त्तिन., उल्लसिता उद्दीप्ता दुग्धसिन्धुपूरवत् क्षीरसमुद्रप्रवाहवत् धवला यथा चन्द्रश्रीः दीप्तिमती च या ज्योत्स्ना सैव जलं तेन प्रक्षालितं विधौतं समीपसारणेन निर्म्मलीकृतमिति यावत्, नभोऽङ्गनं आकाशप्रदेशो येषु ते। तथा परिमलितानि सञ्जातपरिमलानि (तारकादित्वादितच्) यानि पाटलावकुलानि कुसुमविशेषाः तेषां निर्म्मथनेन विमर्द्दनेन यो बहुलानां प्रभूतानां परिमलानां सौरभाणां उद्गारः उद्गमः तेन यत् संवलनं मिश्रीभावः तेन मसृणः कोमल, मांसलायमानः मांसलः पुष्ट इवाचरन् यो मलयमारुतः दक्षिणानिलः तेन उद्धूमायितानि उद्गतधूमायमानानि कृतानि (उद्गता धूमा येषु तानि उद्धूमानि, उद्धूमानीवाचरन्तीति उद्धूमायानि आचारात् पचादित्वादच्, तानि कृतानीति करोत्यर्थे—उद्धूमायमन्दादिन्, तत उद्धूमायीतीनन्तधातोः कर्म्मणि क्तप्रत्ययेन उद्धूमायितानीति सिद्धम्) दशदिङ्मुखानि सकलदिक्‌चक्राणि येषु ते तथाभूताः वसन्तरजनीपरिणाहाः वसन्तकालीनविभावरीविस्तारसाः विरहवशादतिदीर्घवत् प्रतीयमानाः वसन्तत्रियामा इत्यर्थः। प्रियसख्या मालत्या. कथं कीदृशा अनर्थकारिणः विपत्तिसम्पादिनः भविष्यन्ति। इति च भगवती प्रेक्षतामित्यन्वयः।

अत्र कथं हि लवलङ्गनिद्रासुहा इत्याद्यैरनन्तरवाक्यैः दारुणतो प्रतिकारस्योपायादर्शनात् "तापनं" नाम प्रतिमुखसन्ध्यङ्गम्। तल्लक्षणं यथा दर्पणे—"उपायादर्शनं यत्तु तापनं नाम तद्भवे"दिति ॥

(१८) यदीति। अनुरागबन्धः. मालत्याः गाढानुरागः यदि तद्विषयः स माधव एव विषयो यस्य तादृशः माधवालम्बन इति यावत् अभवदिति शेषः, तदा एतद्धि एतदेव गुणज्ञतायाः गुणपक्षपातस्य स्फुटं व्यक्तं फलम्। माधवः अमतीव गुणवानिति तत्रानुरागो युक्त एवेति भावः।। इति हेतोः अस्मादनुरागाद्धेतोरित्यर्थः, नन्दितमपि आह्लादितमपि मे मम हृदयं अस्याः मालत्याः

---

এবং মল্লিকাপরিমলপাটলা কুসুমের বিমর্দনবশতঃ বহুলসৌরভোদ্গমসংমিশ্রণে মসৃণ ও পরিপুষ্টাচারী দক্ষিণানিল দিক্‌সমূহকে ধূমধূম্রের ন্যায় করিয়া থাকে, বিরহবশতঃ দীর্ঘবৎ প্রতীয়মান অদূরবর্ত্তিনী সেই বসন্তরজনীই বা প্রিয়সখীর পক্ষে কিরূপ অনর্থকারিণী হইবে, ইহাও ভগবতী ভাবিয়া দেখিবেন।

(৩৮) কাম। লবঙ্গিকে! মালতীর এই গাঢ়ানুরাগ যদি মাধবের প্রতিই হইয়া থাকে। তবে ইহা নিতান্তই গুণজ্ঞতার সুব্যক্ত ফল। এই অনুরাগে

माध । स्थान एव हृल्लासो भगवत्याः । ( ३९ )

काम । अहो ! प्रमादः । ( ४० )

प्रकृतिललितमेतत्सौकुमार्य्यैकसारम्
वपुरयमपि सल्यं दारुणः पञ्चबाणः ।
चलितमलयवातोद्धूतचूतप्रसूनः,
कथमयमपि कालश्चारुचन्द्रावतंसः ॥ ४१ ॥

---

दारुणया भीषणया अवस्थया त्वदुक्तकामपीड़ोत्कटदशया विदार्य्यते, अस्याः समतीव कोमल-हृदयतयानिष्टोपनिपातं सम्भाव्य विदारितमिव क्रियत इत्यर्थः ।

अत्र गम्यस्य माधवगुणवत्त्वस्य भङ्गीविशेषेणाभिधानात् पर्य्यायोक्तालङ्कारः । तथा कार्य्य-भूतविदारणस्य कामन्दकीहृदयगतत्वेन तत्कारणीभूतावस्थायाः मालतीगतत्वेन च कार्य्य-कारणयोर्भिन्नदेशत्वादसङ्गतिरलङ्कार इत्यनयोर्मिथो नैरपेक्ष्येण संसृष्टिः । तयोर्लक्षणं यथा—दर्पणे—"पर्य्यायोक्तं यदा भङ्ग्या गम्यमेवाभिधीयते ।" "कार्य्यकारणयोर्भिन्नदेशतायामसङ्गतिः ।" मालभारिणीवृत्तम्—"विषमे ससजा यदा गुरू चेत् सभरा येन तु मालभारिणीय"मिति तल्लक्षणम्—

( ३९ ) माधेति । योग्यार्थो अत्र स्थाने शब्दः, भगवत्याः कामन्दक्याः हृल्लासः हृदय-शोषः स्थान एव युक्त एवेत्यर्थः । मालत्याः शरीरावस्थादर्शनेनातीवानिष्टस्य सम्भावनादिति भावः । "अभ्युल्लास" इति पाठे तु अभ्युल्लासः अनिष्टाशङ्कया उद्वेग इत्यर्थः ।

( ४० ) कामेति । प्रमादः अस्माकं अनवधानता । अहो आश्चर्य्यं । यदेतावतापि कालेन कश्चिदुपायमुद्भाव्यानयोः समागमो न साधितः, परन्तु केवलं सन्देह एव क्रियते तदतीवाश्चर्य्य-मिति भावः ।

(४१) प्रमादेन सम्भाव्यमानमनिष्टं दर्शयितुमाचष्टे—प्रकृतेति । एतद्वपुः मालत्याः शरीरं

---

আমার হৃদয় নিতান্ত আনন্দিত হইলেও মালতীর এই ভীষণ কামাবস্থা অনিষ্টোপ-নিপাতের আশঙ্কা জন্মাইয়া হৃদয়কে বিদীর্ণ করিতেছে ।

(৩৯) মাধ। ভগবতীর এই হৃদয়-শোষ যুক্তই হইয়াছে।

(৪০) কাম। অহো আমাদের কি অনবধানতা ।

(৪১) এই মালতীর শরীর যে স্বভাবসুন্দর ও কোমলতামাত্রাবলম্বনে নির্ম্মিত

लव। अणुसु, जाणिदं भोदु भअवदीए। एदं माहवपडिच्छन्द-सणाहं चित्तफलअं। [मालत्याः स्तनांशुकमपनीय] एसावि तस्सज्जेव्व सहत्थविरइदेत्ति कण्ठावलम्बिदा बउलमाला जीवणं पिअसहीएत्ति (य)

---

(य) अन्यच्च, ज्ञातं भवतु भगवत्या। एतन्माधवप्रतिच्छन्दकसनाथं चित्रफलकम्। एषापि तस्यैव स्वहस्तविरचितेति कण्ठावलम्बिता वकुलमाला जीवनं प्रियसख्या इति।

---

प्रकृत्या स्वभावेनैव ललितं सुन्दरं, तथा सौकुमार्यं कोमलतैव एकः अद्वितीयः सारः स्थिरांशो यस्मिन् तत्, कोमलतामात्रावलम्बनेनैव निर्मितमित्यर्थः। एतत् सत्यं निश्चितम्। तथा अयं पञ्चबाणः कामोऽपि दारुणः समतीव भीषण, एतदपि सत्यम्। पञ्चबाण इत्यनेनैकबाणापेक्षया दुःसहत्वमुक्तं। तथाच कोमलतरेऽस्मिन् शरीरे पञ्चबाणाक्रमणमतीवानर्थसम्पादकमिति भावः। भवतु नामैवं, कथं चलितेन प्रवहता मलयवातेन दक्षिणानिलेन चन्दनस्पर्शिनेत्यर्थः, उद्धूतानि कम्पितानि चूतप्रसूनानि आम्रमुकुलानि यस्मिन् स तथाभूतः, तथा चारुः मेघहिमाद्यपगमात् कालान्तरापेक्षया मनोज्ञः चन्द्रः अवतंसः भूषणं यस्य तादृशः अयं कालोऽपि विरहिजनाति-दुःसहः वसन्तसमयोऽपि इदानीमेव समुपस्थित इति शेषः। तथाचातीवानर्थपरम्परा समापतितेति प्रमादेनाधुनापि मेलनविलम्बे नेयं जीविष्यतीति भावः।

अत्र स्वभावसुन्दरं कोमलतरञ्च शरीरं तथा दारुणः पञ्चबाणः इत्यनयोर्विरूपयोः संघटनात् विषमालङ्कारः, तथा अप्रस्तुतात् दारुणपञ्चबाणतादृशवसन्तकालरूपाद्वेतोः मालत्या अनिष्टैक-मौत्यानर्थरूपप्रस्तुतकार्यप्रतीतेरप्रस्तुतप्रशंसालङ्कारः इत्यनयोरङ्गाङ्गिभावेन सङ्करः। मालिनीवृत्तम्॥

(य) अवेति। मालत्या अनुरागस्य माधवविषयकत्वे संशयं निरस्यति—अन्यच्चेति। अपरञ्च—माधवानुरागव्यञ्जकमिदं भगवत्या ज्ञातव्यमित्यर्थः। माधवस्य प्रतिच्छन्देन प्रतिकृत्या सनाथं युक्तम्। कण्ठावलम्बितवकुलमालाप्रदर्शनार्थं स्तनांशुकापनयनमिति मन्तव्यम्। तस्यैव माधवस्यैव स्वहस्ताभ्यां रचिता निर्मिता इति हेतोः माधवस्वहस्तनिर्मितत्वमेव स्रजः कण्ठाव-

---

ইহা সত্য, কামদেব যে অতি নিদারুণ ইহাও সত্য। পরন্তু যেই বসন্তকালে প্রবহমাণ দক্ষিণানিলে আম্রমুকুলগুলি কম্পিত হয় ও অতিমনোহর চন্দ্র যাহার ভূষণ সেই বসন্তকালও আবার কেন এসময়েই উপস্থিত হইয়াছে।

(য) লব। ইহাও ভগবতীর জ্ঞাতব্য যে, মাধবের প্রতিকৃতিযুক্ত এই চিত্র

माध। [ सस्पृहं। ] (४२)

जितमिव भुवने त्वया यदस्याः,
सखि वकुलावलि! वल्लभासि जाता
परिणतबिसकाण्डपाण्डुमुग्ध-
स्तनपरिणाहविलासवैजयन्ती ॥ (४३)

---

जीवने हेतुरित्याशय। जीवनं जीवनहेतुत्वाज्जीवनस्वरूपा, कार्यकारणयोरभेदादिति भावः। तथाच मालत्या माधवं प्रत्यनुरागो न किञ्चिदपि भगवत्या संशयितव्यमिति यथाकथञ्चित् सम्मेलनोपायः शीघ्रमवधारणीय इत्यर्थः।

(४२) स्तनाग्रकाण्वनयनेन स्तनयोर्व्यक्तदर्शनात् सस्पृहत्वम्।

(४३) जितमिति। हे सखि! (मालत्यनुरागानुकूल्यकरणात्) वयस्यास्वरूपे! वकुलावलि! वकुलमालि! इह भुवने संसारे त्वया त्वयैव जितं सर्व्वथा जयित्वा इत्यम्। यद्यस्मात् त्वं परिणत. प्रौढ यो बिसकाण्डः मृणालदण्डः तद्वत् पाण्डू श्वेतवर्णौ मुग्धौ मनोज्ञौ च यौ स्तनौ कुचौ तयोः परिणाहो विशालता तस्य यो विलासः सौन्दर्य्यं तस्य वैजयन्ती पताकास्वरूपा सती अस्या मालत्या वल्लभा वक्षसि स्थापनात् प्रियतमस्थानीया जाता असि। यन्मालतीस्तनस्पर्शादिसुखं मया सततमाशास्यते तन्मनल्पमण्डनभूतया त्वया तत्सुखमविरतं लब्धम् इत्यहो महत्ते सौभाग्यमिति भावः।

"वयं तत्त्वान्वेषान्मधुकर! हतास्त्वं खलु कृती" इत्यभिज्ञानशाकुन्तलश्लोकानुरूपोऽयमिति मन्तव्यम्।

अत्र त्वयैव जितं न मयेति प्रतीयमानत्वादार्थी परिसंख्या, विलासवैजयन्तीति रूपकं तथा त्वया भुवने जितमिति वाक्यार्थं प्रतीतरवाक्यार्थानां हेतुत्वात् काव्यलिङ्गं, तृतीयचरणे छेकानुप्रासश्चालङ्कार इत्येतेषां मिथो नैरपेक्ष्यात् संसृष्टिः।

---

কণ্ঠে (মালতীর স্তনাংশুক সরাইয়া) এবং সেই মাধবের স্বহস্তনির্ম্মিত বলিয়া কণ্ঠাবলম্বিত এই বকুলমালাই (এখন) প্রিয় সখীর জীবনস্বরূপ।

(৪২) মাধ। (সতৃষ্ণ হইয়া)

(৪৩) সখি! বকুলমালে! তুমিই জগতে সর্ব্বথা জয়লাভ করিয়াছ। যে হেতু প্রৌঢ় মৃণালদণ্ডবৎ শুভ্র ও মনোজ্ঞ স্তনযুগ্ম বিশালতার বিজয়পতাকাস্বরূপ হইয়া এই মালতীর বল্লভস্থানীয় হইতে পারিয়াছ।

[ नेपथ्ये कलकलः। (४४) सर्वे आकर्णयन्ति। ]

[ पुनर्नेपथ्ये। ] रे रे सङ्करघराधिवासिणो जाणवदा! एसो क्खु जोव्वणारम्भ-गव्वसम्भरिद-दुव्विसहामरिसरोस-व्वदि-अर-बलामोडि-विहडिदुग्घाडिद-लोहपञ्जर-पड़िलग्ग-संगलिअ-णिअलो* णिअलीला-विलासुव्वेलिअवलहतुङ्गलङ्गूलविअडवेजअन्तिआ-विसमडामरुद्दाम-सरीर-सण्णिवेसो, मडादो अवक्कमिअ, तक्खणमतिक्क-वलिदाणि-अदेहि देहावयवमञ्जणिट्ठुरअत्थिखण्डखण्डनटङ्कार-कडकडा-अन्त-करवत्तकठिणदाढ़ा-करालमुहकन्दरो, पअण्डवज्जणिग्घाद-दारुण-

(थ) रे रे शङ्करगृहवासिनो जानपदाः। एष खलु यौवनारम्भगर्वसंभृतदुर्विषहामर्षरोषव्यतिकरबलात्कार-विघटितोद्घाटितलोहपञ्जरप्रतिलग्नसङ्गलितनिगलः, निजलीलाविलासो-

तथा रमणीयत्वेन मालतीकुचमण्डनाद्याकाङ्क्षाप्रतीतेः "स्पृहा" नाम नाट्यालङ्कारः। तल्लक्षणं यथा दर्पणे—"आकाङ्क्षा रमणीयत्वाद्वस्तुनो या स्पृहा तु सा"।

"पुष्पं" नाम प्रतिमुखसन्धेरङ्गम्। तल्लक्षणं यथा दर्पणे—"पुष्पं विशेषवचनं मत"मिति। अत्र यच्छब्दस्योत्तरवाक्यगतत्वेन तच्छब्दानपेक्षणाद्विधेयाविमर्शदोषाभावः। पुष्पिताग्रा वृत्तम्।

(४४) एवमन्योऽन्यानुरागद्योतकपरस्परावस्थाकीर्त्तनेन शृङ्गाररसं परिपोष्य, रसान्तरेण तं तिरोधातुं "चूलिका" नामार्थोपक्षेपमाह—नेपथ्य इति। चूलिकालक्षणं यथा—"अन्तर्जवनिकासंस्थैश्चूलिकार्थस्य सूचना" इति।

(थ) रे रे शङ्करेति। यौवनारम्भेण यो गर्वः दर्पः, तेन सम्भृतौ पूर्णौ दुर्विषहौ अन्यैः सोढुमशक्यौ यौ अमर्षरोषौ ईर्ष्याक्रोधौ, यद्वा स्थिरक्रोधतात्कालिकक्रोधौ (यथोक्तं

(४४) ( নেপথ্যে কল কল শব্দ হইতে লাগিল ও সকলে শুনিতে লাগিল )।

(থ) ( পুনর্নেপথ্যে ) হে শঙ্করগৃহবাসি-জনগণ! এই দুষ্ট ব্যাঘ্র যৌবনারম্ভ-দর্পপূর্ণ অসহনীয় ঈর্ষা ও ক্রোধবশতঃ বলপ্রয়োগদ্বারা লৌহপিঞ্জর ভগ্ন ও

* "प्रतिबद्धश‍ृङ्खलानिरोधप्रतिभङ्गशङ्कलिते"त्येकं क्वचित् पाठान्तरम्। लोहपिञ्जरे प्रतिबद्धया शङ्खलया यो निरोधः, तेन यः प्रतिभङ्गः विपरीतभङ्गः तेन सम्बलिता मिलिता या निजलीलेत्यादिरर्थः।

चवेडामोडिदकवलिदाणेअणरतुरङ्गजंगलुग्गारभरिदगलगुहागब्भगम्भीरघग्घरो, रसिदगज्जिरणसद्दसंदब्भपरिपूरिदणहत्थलो णिहदणिप्पेसिदणट्ठणिद्दाविदासेस-जणणिवहो, कठोरणहरक्कम्पक्कमणणिद्दअ-दारिद-जन्तुगत्तावअवप्पउत्तरत्तकद्दमिदगइवहो दुट्ठसद्दूलो कुविअकिअन्तलीलाइदं करेदि। ता रक्खध जधासत्ति अत्तणो जीविदं त्ति। (ष)

---

ल्लितबद्धमत्तुङ्गलाङ्गूलविकटवैजयन्तिकाविषमडामरोद्दामशरीरसन्निवेशः, मदादपक्रम्य, वज्रमुख-विवरकवलितानेकदेहिदेहावयवमध्यनिहितास्थिखण्डखण्डनटङ्कारकटकटायमानकरपत्रकठिन-दंष्ट्राकरालमुखकन्दरः, प्रचण्डवज्रनिर्घातदारुणचपेटामोटितकवलितानेकनरतुरङ्गजाङ्गलोद्गारभरित-गलगुहागर्भगम्भीरघर्घरः रसितगर्जनशब्दसन्दर्भपरिपूरितनभस्तलः, निहतनिष्पेषितनष्टनिद्रापिताशेषजननिवहः, कठोरनखरकर्कशाक्रमणनिर्दयदारितजन्तुगात्रावयवप्रवृत्तरक्तकर्दमितगतिपथो, दुष्टशार्दूलः, कुपितकृतान्तलीलायितं करोति। तद्रक्षत यथाशक्ति आत्मनो जीवितमिति।

---

*"क्रोधः क्षमापराधेषु स्थिरोऽमर्षत्वमश्नुते। रोषस्तात्कालिकः कोप" इति)। तयोर्व्यतिकरेण सम्पर्केण यो बलात्कारः बलप्रयोगः, तेन पूर्वं विघटितं भग्नं, पश्चादुद्घाटितं कृतद्वारोद्घाटनं यल्लौहपञ्जरं तत्र प्रतिलग्नः संसक्तः स्खलितं पादद्वयाद्भ्रष्टः शिगलं शृङ्खला यस्य सः।

निजः स्वकीयो यो लीलाविलासः बहुकालात् परं पञ्जरबन्धापगमाद्यथेच्छविचरणम्, तेन उद्वेल्लितं ऊर्द्धं सञ्चालितम् अत एव बल्लभं प्रियं तुङ्गं उन्नतं लाङ्गूलं तदेव विकटा भीषणा वैजयन्तिका पताका तया विषमो दुर्दर्शः डामरो भीषणः उद्दामः प्रचण्डः शरीरसन्निवेशो देहसंस्थानं यस्य सः।

---

উদ্‌ঘাটিত করিয়াছে এবং তৎকালে ইহার পাদদ্বয়ের শৃঙ্খল স্খলিত হইয়া সেই পিঞ্জরেই সংসক্ত রহিয়াছে। (বহুকাল পরে বন্ধনোন্মুক্ত হওয়ায়) যথেষ্ট বিচরণবশতঃ ঊর্দ্ধসঞ্চালিত প্রিয় ও উন্নত লাঙ্গুলরূপ ভীষণ পতাকাদ্বারা ইহার দেহসংস্থান অতি-প্রচণ্ড ভীষণ ও দুর্দ্দর্শনীয় হইয়াছে। এবং স্বীয় বন্ধনাগার হইতে নির্গত হইয়াই তৎক্ষণাৎ সতৃষ্ণ ভাবে প্রাণিদিগের হস্তপদাদি অনেক অবয়ব কবলিত করিতেছে ও তন্মধ্যস্থিত কঠিন অস্থিখণ্ডের চর্ব্বণশব্দে কটকটশব্দায়মান করাতের ন্যায় কঠিন দন্তগুলিদ্বারা তাহার মুখবিবর অতি ভয়ঙ্কর ভাব ধারণ করিয়াছে। প্রচণ্ড

मठात् स्वकीयशयनमन्दिरात् अपक्रम्य निर्गत्य, तत्क्षणं अपक्रमणस्यैव समये सततं आकाङ्क्षं यथा स्यात्तथा कवलितानां खादितानां अनेकेषां देहिनः प्राणिनो देहावयवानां हस्तपदादिशरीरावयवानां मध्ये निष्ठुराः कठिना ये अस्थिखण्डाः तेषां खण्डनस्य दन्तैर्निष्पेषणस्य घटङ्कारः शब्दविशेषः तेन कटकटायमानाभिः कटकटाशब्दं कुर्वाणाभिः करपत्रवत् क्रकचवत् कठिनाभिः दंष्ट्राभिः दन्तैः करालो भयङ्करः मुखकन्दरो वदनविवरं यस्य सः ।

प्रचण्डवज्रनिर्घातवत् दारुणः भीषणः यश्चपेटः पाणितलप्रहारः तेन आमोटितानि आदौ प्रमर्द्दितानि ( मुटप्रमर्द्दने इत्यस्य रूपम् ) पश्चात् कवलितानि गलाधःकृतानि ( आमोटितेत्यत्र आमोडनेति पाठे आमोडनं घूर्णनं तेन कवलितानीत्यर्थः ) यानि अनेकेषां नरतुरङ्गाणां मनुष्यघोटकानां जाङ्गलानि मांसानि ( "जाङ्गलं क्लीं मांस"मिति शब्दकल्पद्रुमः ) । तेषां उद्गारैः पुनर्बहिष्करणेन भरितः परिपूर्णो यो गलगुहागर्भः गलविवरमध्यः, तत्र गम्भीरः घर्घरः तदाकाराव्यक्तशब्दो यस्य सः ।

तथा रक्लिद्दीर्घमधुरः यो गलूरवशब्दः मांसभक्षणकालीनकुपितशार्दूलादिकण्ठगर्जनध्वनिविशेषः, तस्य सन्दर्भेण समूहेन परिपूरितं व्याप्तं नभस्तलं आकाशदेशो येन सः ।

तथा केचन निहता व्यापादिताः केचन निष्पेषिताश्चूर्णीकृताः केचन नष्टाः ( अन्तर्भूते-नर्थत्वात् ) अदर्शनं प्रापिताः, केचन निष्ठापिताः भयातिशयवशेन तत्र तत्रैव निष्ठां स्थितिं लम्भिताः अशेषा जननिवहा येन सः ।

( अत्र केचित् "घर्घरोल्लिसमधुरवशब्दसन्दर्भप्रतिरवाभोगभीषितनष्टनिष्ठापिताशेषजननिवह" इत्येकं पाठं कल्पयन्तः घर्घरो दीर्घमधुरो उल्लिङ्गितगर्जितं तेन यो गलूरवशब्दः तस्य

---

বজ্রনির্ঘাতবৎ ভীষণ চপেটাঘাতে বিমর্দ্দিত করিয়া অনেক নর এবং ঘোটকের মাংসগুলি গিলিতেছে ও গিলিতমাংসগুলির উদ্গারে পরিপূর্ণ ইহার গলদেশে গম্ভীর ঘর ঘর শব্দ হইতেছে। এমন কি দীর্ঘ মধুর মাংসভক্ষণকালীন সকোপ-গলগর্জ্জনশব্দসমূহে গগনতল পর্য্যন্ত পরিব্যাপ্ত করিতেছে। এবং কেহকে আক্রমণ করিতেছে, কেহকে চূর্ণ করিতেছে, কেহকে বিনাশিত করিতেছে, কেহকে বা ভয়াভিভূত করিয়া স্বস্থানেই বিনাশ করিতেছে ও শিরোহির ন্যায় কঠিন নখপ্রহারে নির্দ্দয়ভাবে বিদারিত প্রাণিসমূহের গাত্র হইতে নিঃসৃত রক্তধারা গমনপথকে কর্দ্দমিত করিতেছে। ( আর অধিক কি বলিব ) এই দুষ্ট ব্যাঘ্র যেন কোপাক্রান্ত যমের লীলাভিনয় করিতেছে। সুতরাং সকলেই যথাশক্তি আত্ম-জীবন-রক্ষার চেষ্টা কর।

[प्रविश्य बुद्धरक्षिता । सत्रासं । ] परित्तामध, एसा णो पिअसही अमच्चणन्दणस्स बहिणिआ मदअन्तिआ, एदिणा दुट्ठसद्दूलेण विणिहदविद्दाविअसेसपरिअणा अहिभवीअदि (स)

माल । लवङ्गिए ! अहो पमादो । (ह)

माध । [ ससंभ्रममुत्थाय । ] बुद्धरक्षिते ! क्वासौ । (४५)

---

(स) परित्रायध्व, एषा न. प्रियसखी अमात्यनन्दनस्य भगिनी मदयन्तिका, एतेन दुष्टशार्दूलेन विनिहतविद्रावितशेषपरिजना अभिभूयते ।

(ह) लवङ्गिके । अहो प्रमाद. ।

---

शब्दौघ समूहेन प्रतिरवाभोग: प्रतिशब्दविस्तार' तेन भीषितो भयं प्रापित इत्यादि व्याचष्टे । तत्र च रक्तिगन्नूरघेत्यादिदेशीयाप्रचलितशब्दप्रयोगे यथेच्छं शब्दार्थयो: कल्पन नानल्पजल्पनासहमिति मन्तव्यम् । कथचैव सुदीर्घसमासराशिसङ्घटनेन कर्कशाप्रचलित-शब्दविन्यासेन च लोकव्यामोहने भवभूतेरसदभिनिवेश इति स एव जानाति, यतो निरङ्कुशा कवय इति )।

तथा कठोरा. कठिना नखरा: नखा. कर्परा शिरोस्थीनीव तदाक्रमणेन तत्प्रहारेण निर्दय निष्ठुर यथा तथा दारितेभ्य. विदारितेभ्य जन्तुगात्रावयवेभ्य: प्राणिशरीरहस्तपदादिभ्य: प्रहतैर्निर्युतै रक्तै. शोणितै. कर्दमित: पङ्किलीकृत गतिपथो गमनमार्गो येन स.। दृप्तो हिंसाप्रवण. शार्दूलो व्याघ्र., कुपितकृतान्तलीलायितं क्रुद्धकान्तलीलानुकरणं करोति ।

(स) प्रविश्येति । विनिहता विनाशिता विद्राविता प्रभद्दिताश्च अशेषा: नि.शेषा: परिजना यस्या. सा । एतेन परिजनकर्तृकरक्षणासम्भव सूचित' । अभिभूयते व्यापाद्यते ।

(ह) मालेति । अहो इति विषादे । प्रमाद. अनवधानता पशुपालकपुरुषाणामिति शेष: ।

(४५) माधेति । असौ दुष्टशार्दूलेनाक्रान्ता मदयन्तिका क्व कुत्र, शार्दूलं निहत्याधुनैव ता मोचयिष्यामीत्याशय. ।

---

(স) বুদ্ধরক্ষিতা। (প্রবিষ্ট হইয়া) পরিত্রাণ কর। এই, দুষ্ট ব্যাঘ্র, সমস্ত পরিজনদিগকে বিনাশিত ও বিমর্দ্দিত করিয়া অমাত্যনন্দনের ভগিনী আমাদের প্রিয়সখী এই মদয়ন্তিকাকে আক্রমণ করিয়াছে।

(হ) মাল। লবঙ্গিকে ! অহো পশুপালক পুরুষদিগের কি অনবধানতা।

(৪৫) মাধ। (সসম্ভ্রমে উঠিয়া) বুদ্ধরক্ষিতে ! মদয়ন্তিকা কোথায় শার্দ্দূল কর্ত্তৃক আক্রান্ত হইয়াছে ?

माल। [ दृष्ट्वा सहर्षसाध्वसं आत्मगतं। ] अम्महे ! एसोवि इहत्थो ज्जेव्व (ख)

माध। [ स्वगतं। ] हन्त ! पुण्यवानस्मि, यदहमतर्कितोपनतदर्शनोल्लसितलोचनया अनया। (४६)

अविरलमिव दाम्ना पौण्डरीकेण नद्धः,
स्नपित इव च दुग्धस्रोतसा निर्भरेण।
कवलित इव कृत्स्नश्चक्षुषा स्फारितेन,
प्रसभममृतवर्षेणेव सान्द्रेण सिक्तः॥ (४७)

---

(ख) अहो ! एषोऽपि इहस्थ एव।

---

(ख) मालेति। सततामिलषितवल्लभस्यातर्कितावलोकनात् हर्षः, निर्जनोपवने अत्र सन्निहितां मां यदि कश्चिद्दिवादवलोकयेत्तदा किं मंस्यते तथाशङ्कया च साध्वसं, ताभ्यां सह यथा स्यात्तथा दृष्ट्वा माधवमिति शेषः। "अम्महे" इति सम्भ्रमाद्विस्तार्थकाव्ययं नाटके प्राकृतभाषायां व्यवह्रीयते—तदुक्तं—

"विस्तार्थे सम्भ्रमादायां अम्महे इति कल्पितम्।
शब्दरूपं विशेषेण प्रयोक्तव्यं प्रयोक्तृभिः॥" इति

संस्कृते पुनरेतदर्थकशब्दविरहादत्रोशब्दे नैवास्यानुवादः क्रियते। एषोऽपि माधवोऽपि। अपिर्विस्मये।

(४६) माधेति। हन्तेति हर्षे। अतर्कितं पूर्व्वमचिन्तितं यथा तथा उपस्थितं यद्दर्शनं मम विलोकनं तेन उल्लसिते आनन्दिते लोचने चक्षुषी यस्यास्तथाभूतया अनया मालत्या अहं नद्ध इत्यादि श्लोकस्थक्रियापदैरन्वयः।

(४७) अविरलमिति। अनया मालत्या (कर्त्त्रा) अहं ( कर्म्म ) स्फारितेन विस्फारितेन चक्षुषा ( करणेन ) पौण्डरीकेण सितपद्मसम्बन्धिना दाम्ना मालया अविरलं घनं यथा-

---

(ক) মাল। ( হর্ষ ও ভয়ের সহিত দেখিয়া আত্মগত ) অহো! মাধবও দেখি এখানেই উপস্থিত আছে।

(৪৬-৪৭) মাধ। ( স্বগত ) অহো আমি অতীব পুণ্যবান্, যে হেতু অচিন্তিতোপনতদর্শনে চঞ্চলনয়না এই মালতী বিস্ফারিতনেত্রে যেন ( শ্বেতপদ্ম-

बुद्ध। महाभाग! उज्जाण-बाहिरत्था-मुहे। (क)

[ माधवः साटोपं परिक्रामति। ] (४८)

काम। वत्स! अप्रमत्तो भूत्वा विक्रमस्व। (४९)

---

(क) महाभाग! उद्यानबाह्यरथ्यामुखे।

---

स्याममा नद्धो बद्ध इव। निर्भरेण अतिमात्रेण दुग्धस्रोतसा दुग्धाम्बुप्रवाहेण च अपित, आप्लुत इव। "दुग्धस्रोतसां निर्भरेणे"ति पाठे तु निर्झरेण प्रवाहेणेत्यर्थः। ग्रस्त, निगीर्ण, अद सर्व्वाणि मम अङ्गानीत्यर्थं, कवलित ग्रस्त इव। तथा सान्द्रेण घनेन अमृतवर्षेण सुधावृष्टिना प्रसभ बलात् सिक्त इव। अनेन मालत्याः दृष्टिव्यापारः प्रदर्शित। यथोक्तं—"धारावाहिकसञ्चारी यस्य तत्प्रीलमुच्यते" इति।

अत्र दुग्धस्रोतसा इत्यनन्तरमेव चकारस्य युक्तत्वात्तत्पूर्व्वविन्यासेन प्रथमचतुर्थचरणयो नद्धमिक्तपदयो. पूर्व्वविन्यासेन च "अक्रमता" दोष.।

नद्ध इवेत्यादि क्रियोत्प्रेक्षाचतुष्टयस्य परस्परनैरपेक्ष्येण संसृष्टिरलङ्कारः। मालिनीवृत्तम्।

(क) बुद्धेति। "क्वासा"विति माधवप्रश्नस्योत्तरमाह—महाभागेति। अत्र मालतीमाधवयोर्म्मालोक्दयस्य स्वगतत्वेन न कथाविच्छेद इति मन्तव्यम्। उद्यानबाह्यरथ्यामुखे उपवनबहिर्व्वर्त्तिवर्त्मनि ग्राह्।ेणाक्रान्ता मदयन्तिका वर्त्तत इत्यर्थः।

(४८) माधव इति। साटोपं सदर्पं परिक्रामति, तत्र गमनाय पादविक्षेपं करोति।

(४९) कामेति। अप्रमत्तः अनवधानतारहितः सावहित इति यावत्। विक्रमस्व मदयन्तिकारक्षार्थं विक्रमप्रकाशाय उद्यतस्व। "वृत्तिसर्गतायनेषु क्रम" इति कर्थादित्वात् आत्मनेपदम्।

---

মালাদ্বারা আমাকে গাঢ়ভাবে আবদ্ধ করিতেছে। অতিমাত্রদুগ্ধস্রোতোদ্বারা যেন আমাকে আপ্লুত করিতেছে ও আমার সর্ব্বাঙ্গ যেন গ্রাস করিতেছে। এবং গাঢ় অমৃতবর্ষণদ্বারা যেন আমাকে সবলে সিক্ত করিতেছে।

(ক) বুদ্ধ। মহাভাগ! উদ্যানবাহ্য পথের মুখে (মদয়ন্তিকা আক্রান্ত হইয়াছে)।

(৪৮) (মাধব সগর্ব্বে পাদবিক্ষেপ করিতে লাগিলেন)।

(৪৯) কাম। বৎস! সাবহিত হইয়া বিক্রম প্রদর্শন করিও।

माल। [ जनान्तिकं। ] लवङ्गिए! हद्धी! हद्धी! संसओ क्खु जादो। (ख) [ सर्वास्त्वरितं परिक्रामन्ति। ] (५०)

माध। [ अग्रे दृष्ट्वा सबीभत्सं। ] अहह! (५१)

संसक्तत्रुटितविवर्त्तितान्त्रजाल-
व्याकीर्णस्फुरदपवृत्तकण्ठखण्डः।
कीलालव्यतिकरगुल्फदघ्नपङ्कः
प्राचण्ड्यं वहति नखायुधस्य मार्गः॥ (५२)

---

(ख) लवङ्गिके! हा धिक्! हा धिक्! संशयः खलु जातः।

---

(ख) मालेति। मदय. शार्दूलाक्रमणात् मदयन्तिकायामृतौ सन्देहः।

(५०) सर्वा इति। सर्वाः कामन्दकीप्रमुखाः, परिक्रामन्ति मदयन्तिकाया अवस्थां द्रष्टुं पादविक्षेपं कुर्वन्ति।

(५१) माधेति। सबीभत्सं सघृणं आहेति शेषः। "अहह" इति खेदे।

(५२) संसक्तेति। संसक्तानि पथिपार्श्वस्थितस्तम्भादावादौ संलग्नानि पश्चात् त्रुटितानि प्रबलाकर्षणेन छिन्नानि, ततश्च विवर्त्तितानि भूमौ विक्षिप्तानि यानि अन्त्रजालानि नाडीविशेषसमूहाः तैर्व्याकीर्णा व्याप्ताः स्फुरन्तो अचिरहतत्वेन स्पन्दमानाः अपवृत्ताः विपर्यस्ताः कण्ठानां छिन्नशिरसाम् खण्डा यस्मिन् सः, तथा कीलालानां शोणितानां व्यतिकरेण सम्पर्केण गुल्फदघ्नः गुल्फपरिमाणः ("प्रमाणे मात्रट् द्वयसट् दघ्नट्" इत्यनेन गुल्फशब्दाद्दघ्नट् प्रत्ययः) पङ्कः कर्द्दमो यत्र स तथाभूतः, नखा एव आयुधानि अस्त्राणि यस्य तस्य शार्दूलस्य मार्गः तत्पथातिक्रान्तवर्त्म प्राचण्ड्यं अतिभयङ्करतां वहति धारयति।

अत्र प्राचण्ड्यवहनं प्रति प्रथमद्वितीयपदार्थयोर्हेतुत्वात् पदार्थहेतुककाव्यलिङ्गालङ्कारः। प्रहर्षिणी वृत्तम्॥

---

(খ) মাল। (জনান্তিকে) লবঙ্গিকে! হা ধিক্ হা ধিক্!! (মদয়ন্তিকার জীবনরক্ষাবিষয়ে) সংশয় হইতেছে।

(৫০) (সকলে দ্রুত পদবিক্ষেপ করিতে লাগিল)

(৫১-৫২) মাধ। (অগ্রে দেখিয়া ঘৃণার সহিত) অহো! এই নখায়ুধের (বাঘের) গমনপথে পথিপার্শ্বস্থিত স্তম্ভাদিতে সংলগ্ন ও পরেতে (সবেগাক্রমণে) ছিন্ন হওয়ায় ভূমি বিক্ষিপ্ত নাড়ীশ্রেণীদ্বারা পরিব্যাপ্ত কম্পমান ছিন্নশির

अहो प्रमादः। (५३)

वयं वत विदूरतः क्रमगता पशोः कन्यका (५४)

सर्वाः। हा मदयन्तिए! (ग)

[ कामन्दकीमाधवौ सहर्षाकूतं। ] (५५)

कथं तदभिपातितादधिगतायुधः पूरुषात्।

कुतोऽपि मकरन्द एत्य सहसैव मध्ये स्थितः॥ (५६)

---

(ग) हा मदयन्तिके।

---

(५३) अहो इति। प्रमादः अनवधानता रक्षिपुरुषाणामिति शेषः, यत एतादृश्यविपद्यपि ते उदासत इति भावः।

(५४) मदयन्तिकाविपत्प्रतीकारासामर्थ्यं दर्शयति—वयमिति। वयं विदूरतः दूरवर्तिनि देशे वर्तामहे इति शेषः, कन्यका मदयन्तिका पशोः शार्दूलस्य क्रमं पादविक्षेपं गता प्राप्ता, एकमात्रपादविक्षेपलभ्यस्थाने वर्तत इत्यर्थः। तथाचास्मदागमनात् पूर्वमेव मदयन्तिका शार्दूलस्य कवलगता भवेदित्यस्या इयं विपन्निरस्मत्प्रतिकारसाध्येति भावः।

(ग) सर्वा इति। अत्र हा शब्दः आत्मीयजनविपत्तिद्योतकः।

(५५) कामेति। उपयुक्तरक्षकोपस्थित्या मदयन्तिकायाः रक्षासम्भावनादुभयोर्हर्षः। आकूतमभिप्रायः। तथाहि मकरन्दो यदि मदयन्तिकां रक्षितुं समर्थो भवति तदा तस्यातीव सुहृत्-सुहृद्योपयत इति माधवस्याभिप्रायः। प्राणदानेन उपकृताया मदयन्तिकाया मकरन्देन सह संयोजनं अनायाससाध्यं भवेदिति च कामन्दक्या अभिप्रायः। दर्शितहर्षाकूताभ्यां सह यथा स्यात्तथा कथयत इति शेषः।

(५६) कथमिति। अत्र कथमव्ययं हर्षे। "कथं हर्षे च गर्हायां प्रकारार्थे च सम्भ्रमे

---

দেহগুলি (লুণ্ঠিত হইতেছে এবং শোণিতসম্পর্কে গুরুপরিমাণ কর্দ্দম হইয়াছে। সুতরাং এইপথ অতি ভীষণ ভাব ধারণ করিয়াছে।

(৫৩) অহো নগররক্ষকদিগের কি অনবধানতা (যে হেতু তাহারা এখনও নিশ্চেষ্ট আছে)

(৫৪) আমরা এখনও দূরে আছি, মদয়ন্তিকা প্রায় ব্যাঘ্রের আক্রমণগতা, (সুতরাং আমাদের রক্ষা অসম্ভব)

(গ) সকলে হা! মদয়ন্তিকে!!

(৫৫-৫৬) কামন্দকী ও মাধব। (হর্ষ ও অভিপ্রায়ের সহিত) একি এই ব্যাঘ্র-

इतराः। साधु, महाभाग! साधु। (घ)

कामन्दकीमाधवौ। [ सभयं ]—हृदयं पशुना हतः ( ५७ )

इतराः। अत्याहितं। अत्याहितं। ( ङ )

कामन्दकीमाधवौ। [ सहर्षं। ]—प्रमथितश्च दंष्ट्रायुधः॥ (५८)

---

(घ) साधु महाभाग! साधु।

(ङ) अत्याहितमत्याहितम्।

---

भये असम्भावनायाञ्च" इति मेदिनी। तेन शार्द्दूलेन अभिपालितात् विनाशितात् दुष्टात् कस्माच्चित् तापुरुषादित्यर्थः, अभिमत आहत्य लक्ष्य आयुध अभिमुखेन तथाभूतो मकरन्दः कुतोऽपि अकस्मादविदितादेव स्थानात एत्य आगत्य सहसैव स्वकीयजीवनचिन्तनविभ्रममपि अकृत्वैव मध्ये अन्तराले मदयन्तिकाशार्द्दूलयोरिति शेषः, स्थितः मदयन्तिकारक्षणार्थं शार्द्दूलनिधनार्थेति भावः।

(घ) इतरा इति। साधु साधु इति हर्षे द्विरुक्तिः। कृतमिति शेषः।

(५७) कामेति। पशुना शार्द्दूलेन हृदं तीव्र यथा स्यात्तथा हतः अस्त्रैः प्रहृतः मकरन्द इत्यर्थः।

(ङ) इतरा इति। अत्याहिते महद्भय अनेन शार्द्दूलकृतप्रहारेणोपस्थापितमिति शेषः।

(५८) कामेति। दंष्ट्रा दन्ताः आयुध प्रहरणं यस्य स दंष्ट्रायुधः शार्द्दूलश्च प्रमथितः वक्षःस्थलादिष्वसिप्रहारेण निहतः मकरन्देनेति शेषः। "व्याघ्रस्वी कृतवासुने" इति क्वचित् पाठः, अमुना मकरन्देन असौ व्याघ्रः व्यसुः विगतप्राणः कृत इति तदर्थः।

अत्र आश्चर्यस्य अनालम्बोद्यावान्तरस्थवचनेऽपि—५४—५६—५७—५८ अङ्कचिह्नितांशैरेव एव श्लोकः। अत्र च प्रथमे पाठे व्याघ्रकर्तृकवधविषये मदयन्तिकाप्रकाशविषये च

---

কর্ত্তৃকই আহত কোন এক পুরুষের অসি গ্রহণ করিয়া মকরন্দ সহসা কোথা হইতে মদয়ন্তিকা ও ব্যাঘ্রের মধ্যবর্ত্তী হইল?

(ঘ) সকলে। সাধু মহাভাগ! সাধু। (তুমি ভালই করিয়াছ)।

(৫৭) কামন্দকী ও মাধব। (সভয়ে) মকরন্দ শার্দ্দূলকর্ত্তৃক দৃঢ়রূপে আহত হইয়াছে।

(ঙ) অন্যসকলে। সর্ব্বনাশ সর্ব্বনাশ!

(৫৮) কামন্দকী ও মাধব। (সহর্ষে) দংষ্ট্রায়ুধ (ব্যাঘ্র) মকরন্দকর্ত্তৃক নিহত হইয়াছে।

इतराः । [ सानन्दं । ] दिट्ठिया परिहदं दुज्जादं (च)

काम । [ साकूतं । ] कथं व्यालनखरप्रहारनिःसृतरक्तप्रवाहः, क्षितितलनिपन्नखड्गलतावष्टम्भनिश्चलः, संभ्रान्तमदयन्तिकावलम्बितः साम्यतीव वत्सो मे मकरन्दः । (५८)

---

( च ) दिष्ट्या प्रतिहतं दुर्जातम् ।

---

प्रथमे पशुकव्यसयोः सामान्ययोरुपादानात्, द्वितीये असिरूपायुधविशेषे वक्तव्ये आयुधमिति सामान्योपादानात्, चतुर्थेऽपि व्याघ्ररूपपशुविशेषे वक्तव्ये पशुनेति सामान्यत उपादानाच्च अस्थाने विशेषे अविशेषाद्यदोषाः, एवं प्रथमे पादे भेदशोषकक्रियत्वादिशब्दस्य वक्तव्यत्वेऽपि तदनभिधानादवाच्यानभिधानतादोषः, तथा तृतीयपादे अष्टमाक्षरे पृथ्वीछन्दोनियमस्य पदच्छेदस्याभावेन यतिभङ्गदोषश्च । यतिभङ्गस्य दोषत्वमुक्तम् । यथा काव्यादर्शे—

"श्लोकेषु नियतस्थानं पदच्छेदं यतिं विदुः ।
तदपेतं यतिभ्रष्टं श्रवणोद्वेजनं यथा ॥"

पृथ्वीछन्दः । "जसौ जसयला वसुग्रहयतिश्च पृथ्वीगुरु"रिति तल्लक्षणम् ।

( च ) इतरा इति । दुर्जातं व्यसनं "दुर्जातं व्यसने क्लीबमसम्यग्जातवस्तुनी"ति केशवः । दिष्ट्या भाग्येन प्रतिहतं नाशितं मकरन्देन शार्दूलस्य वधादिति शेषः ।

(५८) कामेति । साकूतं आकूतेन "मदयन्तिकामकरन्दयोर्हृद्यसम्पर्कोऽयं परस्परसंस्पर्श एवोभयोरनुरागसंवर्द्धको भविष्यती"त्यभिप्रायेण सह यथा स्यात्तथा । कथमिति सम्भ्रमे । व्यालस्य हिंस्रपशोः "अथ व्यालसर्पे व्यालस्तथा हिंस्रपशौ स्मृत" इति हलायुधः । शार्दूलस्येत्यर्थः, नखरप्रहारेण नखाघातेन निःसृतः निर्गतः रक्तप्रवाहो यस्य सः, क्षितितले निपन्ना मग्नैकोटिः या खड्गलता तस्या अवष्टम्भेन अवलम्बनेन निश्चलो निस्पन्दः, तथा सम्भ्रान्तया समतिलराञ्चितया मदयन्तिकया अवलम्बितः पतनभयाद्धृतः मे मम वत्सः अतिप्रियो मकरन्दः ताम्यतीव मुह्यतीव ।

---

( চ ) অন্য সকলে। ভাগ্যক্রমে এই ব্যসন বিনাশিত হইল।

( ৫৯ ) কাম। ( সাভিপ্রায়ে ) শার্দ্দূলের নখপ্রহারে মকরন্দের গাত্র হইতে রক্তপ্রবাহ নির্গত হইতেছে। ক্ষিতিতলসংলগ্ন খড়্গলতা অবলম্বন করিয়া বৎস মকরন্দ একেবারে নিস্পন্দ হইয়া পড়িয়াছে ও পড়িয়া যাওয়ার আশঙ্কায় অতি-

सर्वाः। हद्धी ! हद्धी ! गाढ़प्पहारदाए किलम्मदि महाभाओ (छ)

माध। कथं प्रमुग्ध एव। [कामन्दकीं प्रति।] भगवति! मां परित्रायस्व। (६०)

काम। अतिकातरोऽसि। तदेहि तावद् पश्यावः। (६१)

---

(छ) हा धिक्। हा धिक्। गाढप्रहारतया क्लाम्यति महाभागः।

---

(छ) सर्वा इति। गाढप्रहारतया तीव्राघाततया महाभागः मकरन्दः क्लाम्यति मुह्यति।

(६०) माधवेति। कथमिति सम्भावनार्थे। प्रमुग्धो मूर्च्छितः। मां परित्रायस्व मित्र-व्यसनादुद्धर। अत्र 'विरोधो' नाम मुखसन्धेरङ्गं। तल्लक्षणं यथा दर्पणे—"विरोधो व्यसन-प्राप्ति"रिति।

(६१) कामेति। तत् तस्मात् मित्रव्यसनेनातिक्लिष्टत्वादित्यर्थः, एहि आगच्छ, पश्यावः गत्वावलोकयावः, मकरन्दमिति शेषः।

अत्र च अङ्कावसाने "प्रविश्य सम्भ्रान्ता बुद्धरक्षिता।" "परित्रायध्वं एसा णो पियसही"-त्यादिना अङ्कसमाप्तिपर्यन्तेन सन्दर्भेण बुद्धरक्षितादिभिः पात्रैस्तुर्याङ्कगततत्तत्कथाविभागेन सूचनात् "अङ्कावतारो" नामार्थोपक्षेपकविशेषोऽयम्। तल्लक्षणन्तु प्रथमाङ्कव्याख्यायामेव-प्रदर्शितम्।

---

ব্যথিতা হইয়া মদয়ন্তিকা তাহাকে ধরিয়াছে। একি আমার অতি স্নেহাস্পদ মকরন্দ বুঝি বা মূর্চ্ছিত হইল।

(ছ) অন্য সকলে। হায় হায়! প্রহারের তীব্রতানিবন্ধন মহাভাগ মকর ক্লান্ত হইয়া পড়িয়াছেন।

(৬০) মাধ। একি মূর্চ্ছিতই হইল! (কামন্দকীর প্রতি) ভগবতি আমাকে (এই বিপদ্ হইতে) উদ্ধার কর।

(৬১) কাম। তুমি অতি কাতর হইয়াছ; সুতরাং এস, যাইয়াই ম মকরন্দকে দেখি।

इति परिक्रम्य निष्क्रान्ताः सर्वे । (६१)

## इति मालतीमाधवे शार्दूलविद्रावणो नाम तृतीयोऽङ्कः (६२)

---

(६१) सर्वे माधवादयः । (क्वचित् पुस्तके एतदंशो नास्ति ।)

(६२) इतीति । शार्दूलस्य विद्रावणं विनाशो यत्र सः । शार्दूलविद्रावणस्यैवात्र प्रधानतः चक्षुर्विषयत्वात्तथात्वे नाङ्कत्वमित्यनुसन्धेयम् ।

इति काव्यतर्कतीर्थोपनामक-श्रीकृष्णविहारितर्कसिद्धान्तभट्टाचार्यकृतायां तत्त्वबोधिनी समाख्यायां मालतीमाधवव्याख्यायां तृतीयाङ्कविवृतिः समाप्ता ॥

---

(৬২) পাদবিক্ষেপপূর্ব্বক সকলের প্রস্থান ।

মালতীমাধবের শার্দ্দূলবিদ্রাবণনামক তৃতীয় অঙ্ক সমাপ্ত ।

# चतुर्थोऽङ्कः।

ततः प्रविशतो मदयन्तिकामालतीभ्यामवलम्ब्यमानौ प्रमुग्धौ मकरन्दमाधवौ, सम्भ्रान्ता कामन्दकी बुद्धरक्षिता लवङ्गिका च। (१)

मद। पसीद भअवदि! परित्ताहि परित्ताहि मदयन्तियाणिमित्तसंसइदजीविदं आवण्णजणाणुकम्पिणं महाभाअं (क)।

इतराः। हद्धी! हद्धी! किं दाणिं अह्मेहिं एत्थ पेक्खिदव्वं। (ख)

---

(क) प्रसीद भगवति! परित्रायस्व, मदयन्तिकानिमित्तसंशयितजीवितमापन्नजनानुकम्पिनं महाभागम्।

(ख) हा धिक्! हा धिक्! किमिदानीमस्माभिरिह प्रेक्षितव्यम्।

---

(१) पूर्वाङ्काङ्कावतारेण सूचितपात्रप्रवेशेनाङ्कान्तरं कविरारभते—तत इत्यादिना। अत्र मदयन्तिकया अवलम्ब्यमानो मकरन्दः मालत्या च माधव इति यथासंख्येनान्वयो बोद्धव्यः। व्याघ्रनखप्रहारेण मकरन्दस्य मित्रव्यसनेन च माधवस्य प्रमुग्धतया सन्निहिताभ्यां ताभ्यां दयाप्रणोदितहृदयाभ्यां प्रतीकारचेष्टया धारणात्तेन तयोरेव प्रागल्भ्यकल्पनं न सहृदयहृदयगम्यमित्यनुसन्धेयम्।

(क) मदेति। भगवति! इति कामन्दक्याः सम्बोधनम्। सा परिव्राजिकेति जीवनरक्षणादौ तस्याः सामर्थ्यमस्तीति विश्वासात् प्रार्थनोक्तिरियम्।

(ख) इतरा इति। हा धिक् हा धिगिति खेदे द्विरुक्तिः। माधवमकरन्दयोः प्राणनाशमाशङ्क्याह—किमिदमिति।

---

(১) মদয়ন্তিকা এবং মালতীকর্ত্তৃক অবলম্ব্যমান মূর্চ্ছিত মকরন্দ ও মাধব সম্ভ্রান্তা কামন্দকী, বুদ্ধরক্ষিতা ও লবঙ্গিকার প্রবেশ।

(ক) মদ। ভগবতি! প্রসন্না হও। মদয়ন্তিকার (আমার) নিমিত্ত সংশয়িতপ্রাণ বিপন্ন দয়ালু এই মহাভাগকে রক্ষা কর, রক্ষা কর।

(খ) সকলে। হায় হায়!! এখানে এখন আমাদের কি দেখিতে হইবে।

कामन्दकी। [ उभौ कमण्डलूदकेन सिक्त्वा। ] ननु भवत्यः पटाञ्चलेन वत्सौ वीजयन्तु। ( २ )

[ मालत्यादयस्तथा कुर्वन्ति। (३) ]

मक। [ समाश्वस्यावलोक्य च। ] वयस्य! कातरोऽसि, किमेतत्, ननु स्वस्थ एवास्मि। ( ४ )

मद। [ सहर्षं। ] अम्महे! पडिवुद्धं दाणिं मअरन्दपुण्णिमा-चन्देन ( ग )।

माल। [ माधवस्य ललाटे हस्तं दत्त्वा। ] महाभाअ! दिट्ठिआ वड्ढसि, णं भणामि, पडिवण्णचेअणो महाभाओत्ति ( घ )

( ग ) अहो। प्रतिबुद्धमिदानीं मकरन्दपूर्णिमाचन्द्रेण।

( घ ) महाभाग। दिष्ट्या वर्द्धसे ननु भणामि प्रतिपन्नचेतनो महाभाग इति।

( २ ) कामेति। पटाञ्चलेन वस्त्रप्रान्तभागेन।

( ३ ) तथा—पटाञ्चलेन वीजनम्।

( ४ ) मान्वेति। वयस्येति माधवामन्त्रणम्। एतत् कातर्यं किम् किमर्थम्? निरर्थ-मित्यर्थः, स्वस्मिन् स्वभावे तिष्ठतीति स्वस्थः प्रकृतिस्थ एवास्मि अहमिति शेषः। तथाच मत्-कृते कातर्यमलमिति भावः।

( ग ) मदेति। मकरन्द एव पूर्णिमाचन्द्रस्तेन प्रतिबुद्धं चैतन्यमाप्तम्। निरतिशय-नयनाह्लादकरत्वान्मकरन्दे पूर्णिमाचन्द्रत्वारोपणेन च महाननुरागो व्यज्यते।

( घ ) मालेति। मूर्च्छापनोदनस्य शीतक्रियासाध्यत्वात्तदर्थमेव माधवललाटे हस्तार्पणम्। नन्वित्यवधारणे। चेतनशब्दस्यात्र भावप्रधाननिर्द्देशत्वात् प्रतिपन्नचेतनः प्राप्तचैतन्य इत्यर्थः, महाभागो मकरन्दः। यस्य मूर्च्छादर्शनेन जीवनाशङ्कया त्वं हतनतं मूर्च्छितोऽसि स मकरन्द-

( २ ) কাম। ( মকরন্দ ও মাধবকে কমণ্ডলুজলে সিক্ত করিয়া ) তোমরা বৎস দুইটিকে বস্ত্রাঞ্চলদ্বারা বাতাস দেও।

( ৩ ) ( মালতী প্রভৃতি বাতাস করিতে লাগিল )

( ৪ ) মক। ( আশ্বস্ত হইয়া ও দেখিয়া ) বয়স্য। কাতর হইয়াছ, তোমার এ কাতরতা কেন? আমি ত সুস্থই আছি।

( গ ) মদ। (সহর্ষে) অহো! মকরন্দরূপ পূর্ণিমাচন্দ্র চৈতন্যলাভ করিয়াছে!

( ঘ ) মাল। ( মাধবের মস্তকে হস্তার্পণ করিয়া ) মহাভাগ! ভাগ্যক্রমেই

माध। [आश्वस्य] वयस्य! साहसिक! एह्येहि। [इत्यालिङ्गति (५)]।

काम [उभौ शिरस्याघ्राय] दिष्ट्या जीवितवत्सास्मि (६)

इतराः। पिअं पिअं णो संवुत्तम्। (ङ)

[सर्वा हर्षं नाटयन्ति।] (७)

बुद्ध। [जनान्तिकम्] हला मदअन्तिए? एसो ज्जेव्व सो। (च)

---

(ङ) प्रियं प्रियं नः संवृत्तम्।

(च) सखि मदयन्तिके। एष एव सः।

---

श्रेयः लब्धवानिति तत्कृते चिन्तां परित्यज्य स्वयं सुस्थो भवेति भावः। मालत्या धृष्टता मङ्गनीया ईदृशि विपत्काले समुचितोपचारकरणस्य कुतापि लोके धृष्टतयाऽकल्पनादित्युक्तप्रायम्।

(५) माधेति। आश्वस्य धृत्वा लब्धा। शार्दूलव्यापादनरूपातिदुष्करकार्य्यकारित्वात् साहसिकेति मकरन्दामन्त्रणम्।

(६) कामेति। शिरस्याघ्राणमाशुर्वैर्द नाप्नेति वृद्धाः। अत एव गुरुजनैरलि-ङ्गे ह स्पर्शिरत्यादिषु तथा क्रियते। जीवन्तौ वत्सौ पुत्रकल्पौ माधवमकरन्दौ यस्याः सा। अद्य युवयोर्जीवनं वनुमन्तु वचामीति वदः)।

(ङ) इतरा इति। प्रियं प्रियमिति हर्षे द्विरुक्तिः। उभयोर्जीवनरूपं प्रियमित्यर्थः।

(७) नाट्येन हर्षभाव दर्शयन्त बोधयन्तीत्यर्थः।

(च) बुद्धेति। हलेति सखी सम्बोधनम्। एष दृश्यमान एव सः यो मकरन्दस्त्वयि बद्धा-नुरागस्तया बहुशो मया कथित इति शेषः।

---

বৃদ্ধিলাভ করিয়াছ, আমি নিশ্চয় বলিতেছি, মহাভাগ মকরন্দ চৈতন্যলাভ করিয়াছে।

(৫) মাধ। (আশ্বস্ত হইয়া) বয়স্য সাহসিক! এস এস। (এই কথা বলিয়া মকরন্দকে আলিঙ্গন করিল)

(৬) কাম। (উভয়ের মস্তক আঘ্রাণ করিয়া) ভাগ্যক্রমেই আমার বৎস-দ্বয় জীবিত হইয়াছে।

(ঙ) অন্যসকলে। আমাদের অতিপ্রীতির বিষয় সম্পন্ন হইয়াছে!

(৭) (সকলে হর্ষভাব অভিনয় করিতে লাগিলেন)

(চ) বুদ্ধ। (জনান্তিকে) সখি মদয়ন্তিকে! ইনিই সেই (মকরন্দ)।

मद। तदा जेव्व जाणिदं मए, जदा एसो माहवो, अमं पि मो जणोत्ति (छ)।

वृद्ध। अयि, सच्चवादिणी अहम्? (ज)

मद। ण क्खु, अह्मारिसेसु तुह्मारिसीओ पक्खवादिणीओ होन्ति। [माधवमवलोक्य] सहि! मालदीअ वि रमणीओ इमस्सि महाणुहावे अणुराअप्पवादो (झ)

(छ) तदैव ज्ञातं मया यथा एष माधव, अयमपि स जन इति।

(ज) अपि सत्यवादिनी अहम्।

(झ) न खलु अस्मादृशेषु युष्मादृश्य. पक्षपातिन्यो भवन्ति। सखि! मालत्या अपि रमणीय एवास्मिन् महानुभावेऽनुरागप्रवाद.

(छ) मदेति। यदैव स्वजीवितनिरपेक्षतया मत्प्राणान् रक्षितुमयमागतः माद्दृशा घातेन मूर्च्छांपन्नमेनमालोक्य "हा वयस्ये"ति विलपन् माधवस्य मान्त्वनादिभि. परित्रायातिकमुपागतस्तदैवेत्यर्थः। तथाच मालत्यादीनां व्यवहारो विस्तृतमालत्यानुरागस्य माधवस्य परिज्ञाने स्वजीवितनिरपेक्षया मत्प्राणपरित्राणप्रवृत्तत्वं एकमात्रवयस्यतया मृतस्य माधवस्य चोद्देशेन "हा वयस्ये"ति विलापसम्भवश्च मकरन्दपरिज्ञाने हेतुरिति मन्तव्यम्। मकरन्दस्य नामाग्रहणन्तु भाविपतित्वसम्भावनयेति।

(ज) वृद्धेति। अपि प्रश्ने। दृष्टयौनशौर्य्यादिगुणस्य यस्मया कथितं तत्प्रत्यक्षीकृत्य मा सत्यवादिनी सम्प्रति भवेत्यर्थः।

(झ) मदेति। अस्मादृशेषु सखीजनेषु युष्मादृश्य अकृत्रिमस्नेहसम्पन्नचित्ता. सख्यः, पक्षपातिन्य गुणहीनस्यापि जनस्य पक्षपातेन गुणवत्ताप्रतिपादिन्य. न खलु भवन्ति, तथात्वे स्निग्धकृत्रिमसखीत्वहान्यापत्तेरिति भाव'। (अस्मादृशेष्विति पाठे गुणादिपरिहीनेष्विति तदर्थ.)। अस्मिन् महानुभावे माधवे अनुरागप्रधान. एकान्ताभिलाष. किंवदन्ती रमणीय. परस्परयोग्यत्वेनैकान्तमनोहर'। तथाच मदयन्त्या मालतीमाधवं प्रत्यासायुष्टुरपराहतैवेति भावः।

(छ) मद। इनि यथन निজের জীবনের প্রতি দৃষ্টিপাত না করিয়া [illegible]
মালত্যাদি পরিবৃত হইয়া অপর ব্যক্তি ইহার নিকটে আসিয়াছে, তখনই বুঝিয়াছি যে, অপর ব্যক্তি মাধব ও ইনিই সেই ব্যক্তি।

(জ) বৃদ্ধ। কেমন আমি সত্যই বলিয়াছি ত?

(ঝ) মদ। মাদৃশজনে তোমার মত স্নেহপ্রবণ সখীজনের পক্ষপাত

[ इति मकरन्दमेव सस्पृहमवलोकयति । (८) ]

काम । [स्वगतम्] रमणीयोर्ज्जितं हि मदयन्तिकामकरन्दयोर्दैवादस्य दर्शनम् । [प्रकाशम्] वत्स मकरन्द ! कथं पुनरायुष्मान् अस्मिन्नवसरे मदयन्तिकाजीवितपरित्राणहेतोर्भवता दैवेन सन्निधापितः (९) ।

मक । अद्याहमन्तर्नगर एव काञ्चिद्वार्त्तामुपश्रुत्य माधवस्य चित्तोद्वेगमधिकमाशङ्कमानस्त्वरितमवलोकितानिवेदितकुसुमाकरोद्यानवृत्तान्तः परापतन्नेव शार्द्दूलावस्कन्दगोचरगतामेवमभिजातकन्यकामभ्युपपन्नवानस्मि (१०) ।

---

(८) सस्पृहं स्पृहया निरतिशयाभिलाषेण सह वर्त्तमानं यथा स्यात्तथा अवलोकयति पश्यति । मदयन्तिका सानुरागं पुनर्मकरन्दस्यैव दर्शनं नाटयतीत्यर्थः ।

(९) कामेति । रमणीयं सम्भ्रमसस्तस्तनाद्यव्यजतया सुस्पष्ट परस्पराङ्गसौष्ठवग्राहित्वात्, साध्वसव्यपदेशेन गाढालिङ्गनसुखानुसन्धित्वात् विपन्निस्तारकतया केनाप्यनाशङ्कनीयत्वाच मनोहरं, ऊर्ज्जितं शार्द्दूलनिरासकत्वेन बलप्रकाशकं (परपदस्य विशिष्टत्वविवक्षयाऽनयोः कर्म्मधारयः ।) ईदृशं दर्शनं परस्परसाक्षात्कारः दैवात् नितान्तानुकूलविधिनियोगवशादेव सम्पन्नमिति शेषः । अवदादिप्रयत्नदर्शनस्य सर्व्वथैवासम्पादनीयत्वादिति भावः । आयुष्मान् दीर्घायुस्त्वं ("आयुष्मानिति वृद्धैर्न वाच्यो बालः शुभाशय" इति भरत. ) । कथं केन प्रकारेण, अस्मिन्नवसरे एतच्छार्द्दूलाक्रमणसमये । मदयन्तिकाजीवितत्राणहेतोः मदयन्तिकाया जीवनरक्षार्थं । सन्निधापित. समीपवर्त्तीकृतः ।

(१०) मकेति । अन्तर्नगर एव नगरमध्य एव । काञ्चिद्वार्त्तां माधवस्योद्वेगवर्द्धकं

---

সম্ভবপর হয় না। (মাধবকে দেখিয়া)! এই মহানুভবে মালতীর অনুরাগকিংবদন্তীও সর্ব্বথা উপযুক্ত হইয়াছে।

(৮) (পুনরায় মকরন্দকেই সস্পৃহলোচনে দেখিতে লাগিল).

(৯) কাম। (স্বগতঃ) অতি মনোহর ও বলপ্রকাশক এই মদয়ন্তিকা-মকরন্দের পরস্পরসন্দর্শন দৈববশতঃই অদ্য সম্পন্ন হইয়াছে। (প্রকাশ্যে) বৎস মকরন্দ!, এই শার্দ্দূলাক্রমণাবসরে মদয়ন্তিকার জীবনরক্ষার্থ কি প্রকারে ভগবান্ দীর্ঘায়ুষ্ক তোমাকে সন্নিহিত করিলেন?

(১০) মক। আজ আমি এই নগরমধ্যেই কোন একটি বৃত্তান্ত শুনিয়া

[ मालतीमाधवौ विस्मयतः । (११)]

काम । [ स्वगतम् ]। वृत्तान्तेन खलु मालतीप्रदानेन भवितव्यम् । [ प्रकाशम् ]। वत्स माधव ! दिष्ट्या सुहृद्बुद्ध्या वर्द्धितोऽसि मालत्या तदयमवसरः प्रीतिदानस्य ।

माध । भगवति ! इयं हि—

---

कश्चिद् गान्तम्। अधिकं यद्भवात् इति लोकपरम्परया तद्वार्त्ताश्रवणस्यावश्यम्भावादिति भावः। अवलोकितया निवेदितः कुसुमाकरोद्यानस्य वृत्तान्तः मालतीमाधवसन्निधानादिवार्त्ता यस्य तादृशोऽहं त्वरितं सत्वरं पदापतन्नेव आगच्छन्नेव याद् शार्दूलस्कन्दगोचरगतां व्याघ्राक्रमणविधुरता-मापन्नां अभिजातकन्यकां सीमन्तसिन्दूरादिवियुक्ताकृतिविशेषानुमितकुलीनकुमारीभावां ("अभिजातः कुलीने स्याद्वाच्यपण्डितयोस्त्रिषु" इति मेदिनी) अभ्युपपन्नवान् उपगतवानस्मि।

(११) मालतीति । विस्मयत.—का सा वार्त्तेति चिन्तयत, निस्पन्दभयनत्वादिना तद्भावना-मभिनयत इति यावत् । माधवार्पितचित्तत्वेन समसुखदुःखभागितया माधवोद्वेगवर्द्धकवृत्तान्त-गतौ मालत्या अपि भावना युक्तैवेति मन्तव्यम् ।

(१२) कामेति। मालतीप्रदानेन नन्दनाय मालतीदानसंश्लिष्टेन, भवितव्यमिति तावत्तैव माधवोद्वेगसम्भवात् स्वयमपि तथैव श्रुतत्वादेवमनुमानमिति भावः। सुहृद्बुद्ध्या बन्धुज्ञानेन, वर्द्धितोऽसि मस्तके हस्तसंवाहनादिना चेतनीकृतोऽसि। तत्तस्मात् प्रीतिदानस्य पारितोषिक-दानस्य अयं अवसरः अवकाशः, अधुनैव तद्देयतामिति भावः।

---

মাধবের চিত্তোদ্বেগবৃদ্ধির আকাঙ্ক্ষা করিত, অবলোকিতার নিকট কুসুমাকরোদ্যানবৃত্তান্ত অবগত হইয়া অতি দ্রুতপদে তথায় যাইতে যাইতেই ( পথে ) শার্দ্দূলকবলগত এই কুলীন-কন্যার কাছে আসিয়া পড়িয়াছিলাম্।

( ১১ ) (মালতী ও মাধব্ "সেই কথাটি কি ?" তাহার চিন্তাভিনয় করিতে লাগিলেন )।

( ১২ ) কাম। ( স্বগত ) বৃত্তান্তটি নন্দনে মালতী প্রদান সম্বন্ধেই হইবে। (প্রকাশ্যে) বৎস মাধব ! ভাগ্যক্রমে বন্ধুজ্ঞানে মালতী তোমাকে চৈতন্য করিয়াছে, সুতরাং প্রীতিদানের এই অবসর।

यद्व्यालव्रणितसुहृत्प्रमोहमुग्धम्
कारुण्यात् विहितवती गतव्यथं माम्।
तत्कामं प्रभवति पूर्णपात्रवृत्त्या
स्वीकर्तुं मम हृदयञ्च जीवितञ्च ॥ (१३)

लव। पड़िच्छिदो क्खु णो पिअसहीए अअं पसादो (ञ)

---

(ञ) प्रतीष्टः खलु नः प्रियसख्या अयं प्रसादः।

---

(१३) यदिति। इयं हि एषैव मालती यद्यस्मात् व्यालेन हिंस्रजन्तुना व्याघ्रेणेत्यर्थः, व्रणितस्य (व्रणः सञ्जातोऽस्येति तारकादित्वादितच्,) विक्षतशरीरस्य सुहृदः प्रियस्य मकरन्दस्य प्रमोहेन मूर्च्छया मूर्च्छादर्शनजनितजीवितसंशयेनेत्यर्थः, मुग्धं मूर्च्छितं मां गतव्यथं हस्तस्पर्शादिना "परित्रायस्व महाभाग" इत्याद्यभिधानेन च प्रकृतिस्थं विहितवती कृतवती। तत् तस्मात् कामं यथेच्छं मदनुमतिं विनापीत्यर्थः, पूर्णपात्रस्य "हर्षादुत्सवकाले यदलङ्कारांशुकादिकम्। आकृष्य गृह्यते पूर्णपात्रं पूर्णानकञ्च तत्" इति जटाधरलक्षणलक्षितस्य प्रियनिवेदकेन बलादाक्रम्य गृह्यमाणस्य वस्त्रालङ्कारादिकस्य वृत्त्या प्रकारेण मम हृदयञ्च जीवितञ्च स्वीकर्तुं ग्रहीतुं प्रभवति शक्नोति। अत्र मालत्यै दानयोग्यं मम हृदयं जीवितञ्च धनुष्पादि-परिगृहीतमेव मालत्या पूर्वमेव तयोः स्वायत्तीकृतत्वात्तदधिकदेयद्रव्याभावेन किमिदानीमपरं दास्यामीति भावः। प्रकटोत्तरत्वादिदं प्रगमनं नाम प्रतिमुखसन्ध्यङ्गम्। "प्रगमनं वाक्यं स्यादुत्तरोत्तरम्" इति तल्लक्षणात्।

अत्र हिंस्रविशेषे शार्दूले वक्तव्ये सामान्यहिंस्रवाचकव्यालपदोपादानात् विशेषेऽविशेषाख्य-दोषः। पूर्णपात्रस्येवेति आर्थी उपमालङ्कारः। प्रहर्षिणी वृत्तम्॥

(ञ) लवेति। नः प्रियसख्या मालत्या अयं प्रसादः तव अनुग्रहः प्रतीष्टः स्वीकृतः।

---

(১৩) মাধ। ভগবতি! যেহেতু এই মালতী সৌজন্যবশতঃ ব্যাঘ্রকর্তৃক বিক্ষতশরীর প্রিয়সুহৃৎ মকরন্দের মূর্চ্ছাদর্শনে মূর্চ্ছিত আমাকে হস্তসঞ্চালন ও মকরন্দের চৈতন্যবার্ত্তাদি দ্বারা প্রকৃতিস্থ করিয়াছে, সেইহেতু পূর্ণপাত্রবৃত্তি প্রথানুসারে (অর্থাৎ মঙ্গলবার্ত্তাজ্ঞাপক ব্যক্তি যেমন উৎসবকালে বলপূর্ব্বক বস্ত্রালঙ্কারাদি গ্রহণ করিয়া থাকে, সেইরূপ বলপূর্ব্বক) আমার অনুমতি ব্যতিরেকেই আমার হৃদয় ও জীবন গ্রহণ করিবার অধিকারিণী।

(ঞ) লব। আমার প্রিয়সখী মালতী আপনার এই অনুগ্রহ সর্ব্বতোভাবে স্বীকার করিলেন।

मद। [ स्वगतम् ] जाणादि महाभाअधेओ जणो अवसरे गुरुअरमणिज्जं मन्तिदुम् (ट)।

माल। [ स्वगतम्। ] किं णाम मअरन्देण उव्वेअकारणं सुदं भविस्सदि ? (ठ)।

माध। वयस्य ! का पुनर्ममाधिकोद्वेगहेतुर्वार्त्ता ? (१४)

[प्रविश्य पुरुषः।] वत्से मदयन्तिके ! भ्राता ते ज्यायान् अमात्य-नन्दनः समादिशति, "अद्य परमेश्वरेण अस्मद्भवनमागत्य, भूरिवसो-

(ट) जानाति महाभागधेयो जनोऽवसरे गुरुकरमणीयं मन्त्रयितुम्।

(ठ) किं नाम मकरन्देन उद्वेगकारणं श्रुतं भविष्यति।

सव हृदयजीवितयोर्भावत्वधीनत्वे नान्यत् किमपि मालत्या प्रार्थनीयमिति भावः। गुरुजन-सन्निधौ स्वयमभिधाने मालत्या धृष्टता स्यादिति मालतीहृद्गतं लवङ्गिकयेदमभिहितमिति मन्तव्यम्।

(ट) मदेति। महाभागधेयः परमसौभाग्यशाली जनः, अवसरे उपयुक्तकाले, गुरुक-रमणीयं वाञ्छितार्थसूचकत्वेनातिमनोहरं, मन्त्रयितुं अभिधातुम्। तथाच यथावसर-मुपयुक्तमिदमुत्तरं माधवेन दत्तमिति भावः।

(ठ) मालेति। उद्वेगकारणमिति माधवस्येति शेषः।

(१४) माधेति। "काचिद्वार्त्तानुपश्रुते"ति यन्मकरन्देनाभिहितं तां वार्त्तां माधवः पृच्छति—का पुनरिति।

(१५) प्रविश्येति। पुरुषः कश्चित् आयमलोनि शेषः। ज्यायान् ज्येष्ठः। परमे-श्वरेण अप्रतिहतेच्छत्वात् परमेश्वरतुल्येन महाराजेनेत्यर्थः। तथाच तद्वचनेन कदापि नान्यथा

(ट) मद। (স্বগত) পরম সৌভাগ্যশালী ব্যক্তিগণ উপযুক্ত অবসর বুঝিয়াই অতি রমণীয় কথা বলিতে জানেন।

(ঠ) মাল। (স্বগত) মকরন্দ (মাধবের) কি উদ্বেগের কারণ শুনিলেন ?

(১৪) মাধ। বয়স্য ! আমার অধিক উদ্বেগের হেতুজনক সংবাদটি কি ? (যাহা শুনিয়া তুমি সত্বর আসিয়াছ ?)

(১৫) কোন্ একটি পুরুষ। (প্রবেশ করিয়া) বৎসে ! মদয়ন্তিকে,

त्वपरि परं विश्वासमस्मासु च प्रसादमाविष्कुर्वता, स्वयमेव प्रतिपादिता मालती, तदेहि सम्भावयामः प्रमोद"मिति। (१५)

मक। वयस्य! सेयं वार्त्ता। (१६)

[ मालतीमाधवौ वैवर्ण्यं नाटयतः। (१७) ]

मद। [ मालतीं सहर्षमालिङ्ग्य। ] सहि मालदि! तुमं क्खु

---

भवितव्यमिति सूचितम्। भूरिवसौ मालत्याः पितरि परं निरतिशयं विश्वासं "भूरिवसुः कथमपि मद्वचनमुल्लङ्घयितुं न शक्नुया"दिति विस्रम्भम्। कथमन्यथा वाचा प्रतिपादनेऽपि निःसंशयः स्यादिति भावः। प्रसादं अनुग्रहम्। आविष्कुर्वता प्रकटयता। अत्र च विश्वासाविष्करणं भूरिवसोरधीनत्वाभिप्रायद्योतकत्वादिप्रतिपादनेन, प्रसादाविष्करणञ्चैतदर्थं मन्दन-नियमनमादिनेति मन्तव्यम्। प्रतिपादिता दत्ता दातुं प्रतिश्रुतेति यावत्। प्रमोदं आनन्दं सम्भावयामः माङ्गलिकक्रियाभिः सम्पादयामः। "प्रसाद"मिति पाठे प्रसादं तदनुग्रहं सम्भावयामः उत्सवादिभिः बहु मन्यामहे इत्यर्थः।

(१६) मकेति। इयं प्रविष्टपुरुषेण कथिता नन्दनाय मालतीप्रतिपादनरूपा वार्त्ता सा तवाधिकोद्वेगहेतुत्वेन मया कल्पितेत्यर्थः, इमामेवोपश्रुत्य त्वमिहागत इति भावः।

(१७) मालेति। वैवर्ण्यं अप्रतिविधेयोक्तविपत्पातजनिततापहेतुकं मालिन्यादिरूपं विवर्णभावम्। तथाचोक्तं—"वैवर्ण्यं वर्णभेदः स्यात्तापमद्भाभयादिभि"रिति।

---

তোমার জ্যেষ্ঠ ভ্রাতা মকরন্দনন্দন আদেশ করিয়াছেন, "অদ্য মহারাজ স্বয়ং আমাদের ভবনে আসিয়া ভূরিবসুর উপরে পরম বিশ্বাস ও আমার উপর অনুগ্রহ প্রকটন করতঃ মালতীপ্রদানে প্রতিশ্রুত হইয়াছেন, সুতরাং এস আমরা আনন্দানুষ্ঠান করি"।

(১৬) মক। বয়স্য! এই পুরুষ যাহা বলিল, সেই মালতীর নন্দনার্পণ-প্রতিশ্রুতিবার্তাই তোমার অধিক উদ্বেগের কারণ বলিয়া আমি মনে করিয়াছি।

(১৭) (মালতী ও মাধব সন্তাপজনিত বিবর্ণ ভাব প্রকটন করিতে লাগিল)।

एक्कणअरणिवासेण सहपंसुकीलणादो पहुदि मे- पिअसही आसि वहिणिआ अ, सम्पदं उण णो घरस्स मण्डणं जादासि । (ड) ।

काम । वत्से मदयन्तिके ! दिट्ठ्या वर्द्धसे भ्रातुर्मालतीलाभेन । (१८)

मद । भअवदि ! तुह्माणं आसिसां पहावेण । सहि लवङ्गिए ! फलिदा णो मणोरहा तुह्माणं लाहेण । (ढ)

---

(ड) सखि मालति । त्वं खलु एकनगरनिवासेन सहपांशुक्रीडनात् प्रभृति मे प्रियसखी आसीर्भगिनिका च, साम्प्रतं पुनरस्माकं गृहस्य मण्डनं जातासि ।

(ढ) भगवति । युष्माकमाशीःप्रभावेण । सखि लवङ्गिके ! फलिता नो मनोरथा युष्माकं लाभेन ।

---

( ड ) मदेति । सह पांशुक्रीडनात् प्रभृति मिलित्वा धूलिखेलात आरभ्य । नः अस्माकं गृहस्य मण्डनं राजानुग्रहजनितमाहात्म्यजनकत्वेन प्रासादस्य भूषणम् ।

( १८ ) कामेति । सोपहासोक्तिरियम् ।

( ढ ) मदेति । प्रभावेण माहात्म्येन मालतीलाभो जात इति शेषः । अत्र मिथोक्तिर्नाम नाट्यलक्षणम् । यथोक्तं दर्पणे—

"स्यात् प्रसादयितुं पूज्यं मिथोक्तिर्वचनं च य"दिति ।

तथा "नो" इत्यस्य अस्माकमितिवत् निषेधार्थकत्वस्यापि सम्भवेन कामन्दक्यादिचातुर्यात् युष्माकं लाभेन मनोरथा नो फलिताः सफला न जाता इति भविष्यत्प्रधानार्थान्तरस्यापि सूचनात् पताकास्थानमिदम् । यथोक्तं दर्पणे—

"द्व्यर्थो वचनविन्यासः सुश्लिष्टः काव्ययोजितः ।
प्रधानार्थान्तराक्षेपी पताकास्थानकं पर"मिति ॥

---

( ড ) মদ ( সহর্ষে মালতীকে আলিঙ্গন করিয়া ) সখি মালতি ! এক নগরে বসতিনিবন্ধন একত্রিত হইয়া ধূলিখেলা হইতে আরম্ভ করিয়াই তুমি আমার প্রিয়সখী ভাগিনী ছিলা, এখন আবার আমাদের গৃহের অলঙ্কারস্বরূপ হইলা ।

( ১৮ ) কাম। বৎসে মদয়ন্তিকে ! ভাগ্যক্রমেই তোমরা মালতীলাভে বৃদ্ধি লাভ করিলা ।

( ঢ ) মদ। ভগবতি ! আপনাদের আশীর্বাদপ্রভাবেই ( এই মালতী লাভ ঘটিল )। লবঙ্গিকে ! তোমাদের লাভে আমার মনের অভিলাষ সফল হইল ।

लव। सहि ! किं अह्माणम्पि अत्थि मन्तिदव्वं (ण)।

मद। सहि वुद्दरक्खिदे ! दाणिं विवाहमहूसवं सम्भाविह्म। (त)

वुद्द। सहि ! एहि गच्छह्म। (थ) [ इत्युत्तिष्ठतः। ] (१८)

लव। [जनान्तिकम्]। भअवदि ! जदा एदे हिअअभरिदुव्वित्त-विह्मआणन्द-सुन्दरा-दोलिद-धीरत्तण-मणोहरा, पङ्कुत्यन्ति मदअन्ति-

---

(ण) सखि ! किमस्माकमप्यस्ति मन्त्रयितव्यम्।

(त) सखि बुद्धरक्षिते ! इदानीं विवाहमहोत्सवं सम्भावयावः।

(थ) सखि ! एहि गच्छाव.।

---

"युष्माक"मिति बहुवचनन्तु मालतीप्रभृति तत्परिजनतामस्याप्यवश्यम्भावादुपात्तमिति मन्तव्यम्।

(ण) लवेति। अस्माकमपि मन्त्रयितव्यं अस्मिन् विषये वक्तव्यं किमस्ति न किञ्चिदपी-त्यर्थः। युष्माभिर्लब्धत्वादस्माकमपि मनोरथसिद्धिर्जातेति भावः। इयमपि परिहासोक्तिः। अत्र च "अस्माकमप्येतन्मन्त्रयितव्य"मित्यर्थकमस्ति पाठान्तरम्, तथात्वे च एतत्—"फलिता मो मनोरथा युष्माकं लाभेने"ति वाक्यं अस्माकमपि-वक्तव्यमित्यर्थः। परन्तु युष्माकं सपरिजनाया भवत्या लाभेन भाविना मकरन्दमालिकयैव अस्माकं मनोरथा. सफला भवितार इत्येतदस्माकं मन्त्रयितव्यमित्यर्थोऽपि सूच्यत इति ध्येयम्।

(त) मदेति। विवाहमहोत्सवं मालतीमाधवयोर्निर्वाहस्य प्रमोदं, सम्भावयामः यथो-चितानुष्ठानेन सम्पादयामः। अत्र"उद्यमो" नाम नाट्यालङ्कारः। यथोक्तं दर्पणे—"कार्यस्यारम्भ उद्यम" इति।

(१८) उत्तिष्ठत इति मदयन्तिकाबुद्धरक्षिते इति शेषः।

(द) लवेति। हृदये चित्ते भरिताभ्यां व्याप्ताभ्यां पूर्णाभ्यां पश्चात् उद्वृत्ताभ्यां हृदये स्थाना-

---

(ণ) লব। সখি ! এবিষয়ে আমাদেরই আর কি বক্তব্য আছে ?

(ত) মদ। সখি ! বুদ্ধরক্ষিতে ! এখন যথোচিত অনুষ্ঠানে বিবাহমহোৎসব সম্পন্ন করিব।

(থ) বুদ্ধ। সখি ! এস আমরা যাই। ১৮ (মদয়ন্তিকা ও বুদ্ধরক্ষিতা উঠিল)।

आमभरन्दाणं दरदलिदणीलुप्पलदामघरिछा कडक्खविक्खेवा तह तक्केमि संघीरहणिव्वुत्तसम्बन्धा एदेत्ति। (१९)

काम। [ विहस्य। ] ननु इमौ विलोकनेन, मानसं मुहुर्मुहुः प्रमोदमनुभवतः। (२०) तथाहि—

---

(१९) अथवेति। यथैते हृदयभरितोद्दलद्विकासानन्दसुन्दरान्दोलितधीरत्वमनोहराः परिवर्त्तिते मदयन्तिकामकरन्दयोर्दरदलितनीलोत्पलदामसदृशाः कटाक्षविक्षेपाः तथा तर्कयामि मनोरथ-निर्वृत्तसम्बन्धावेताविति।

---

भरितात् हृदि पूर्णात् ताभ्यां विकासानन्दाभ्यां सुन्दरं यथा स्यात्तथा आन्दोलिताः सञ्चालिताः तथा धीरत्वेन आत्मगोपनार्थमवलम्बितधैर्य्येण मनोहराः सुन्दराः। परस्य विशिष्टत्वविवक्षया उभयोः कर्म्मधारयः। तथा दरविदलितानां ईषद्विकसितानां नीलोत्पलानां यद्दाम माला तत्सदृशाः तत्तुल्याः एते मदयन्तिकामकरन्दयोः कटाक्षविक्षेपाः दृष्टिभेदाः यथा येन प्रकारेण प्रवर्त्तन्ते परस्परं प्रति निपतन्ति, तथा तेन प्रकारेण तर्कयामि अनुमिनोमि मनोरथेन निर्वृत्तः सम्पन्नः सम्बन्धः परस्परसमागमरूपसङ्गमो ययोस्तादृशौ एतौ मदयन्तिकामकरन्दौ इति।

(२०) कामेति। नन्विति लवङ्गिकामन्त्रणे। इमौ मदयन्तिकामकरन्दौ, मानसं प्रमोदं सङ्कल्पनिर्म्मितसम्भोगजनितानन्दं मुहुर्व्वारं वारं विलोकनेन परस्परसन्दर्शनेन अनुभवत इत्यन्वयः। "मानस मोहन"मिति पाठे तु, मोहनं सुरतं, तथाच कामशास्त्रं—"मोहनं नारमेत्तावत् यावन्नोत्कण्ठिता प्रिया" इति। मानसं प्रमोदमनुभवत इति यदुक्तं हेतुवक्तव्येन तद्दृढयितुमाह—तथाहीति।

---

(১৯) অথ। (মনোধিকে) হৃদয়ে পূর্ণ হইয়া হর্ষাতিশয়ে বহির্ভূত বিকাশ এবং আনন্দবশতঃ সুন্দরভাবে সঞ্চালিত ও ধীরতাবশতঃ মনোহর ঈষদ্বিকসিতনীলোৎপলমালার সদৃশ এই মদয়ন্তিকা ও মকরন্দের কটাক্ষবিক্ষেপ যেরূপ ভাবে প্রবর্ত্তিত হইতেছে, তাহাতে মনে হয়, মনে মনে ইহাদের পরস্পর সম্বন্ধ সম্পন্ন হইয়াছে।

(২০) কাম। (হাস্য করিয়া) অয়ি লবঙ্গিকে! বার বার পরস্পরাবলোকনদ্বারা ইহারা মনঃকল্পিত সম্ভোগের আনন্দ অনুভব করিতেছে। দেখ—

ईषत्तिर्यग्वलनविषमं कूणितप्रान्तमेतत्
प्रेमोद्भेदस्तिमितललितं किञ्चिदाकुञ्चितभ्रु ।
अन्तर्मोदानुभवमसृणं स्रस्तनिष्कम्पपक्ष्म
व्यक्तं शंसत्यचिरमनयोर्दृष्टमाकेकराक्षम् ॥ * (२१)

---

(२१) ईषदिति। ईषत्तिर्यग्वलनेन किञ्चिद्वक्रीभावचलनेन विषमं वक्रं प्रान्ते अपाङ्गदेशे कूणितमिति कूणितप्रान्तं अपाङ्गदेशे भागत्रये सङ्कुचितमित्यर्थः, राजदन्तादित्वात् परनिपातः। तथा प्रेम्नः अनुरागस्य उद्भेदेन प्रकाशेन क्वचित् स्तिमितं निष्पन्दं क्वचित् ललितं अन्तर्विकाससारं परस्य विशेष्यत्वविवक्षया उभयोः कर्मधारयः। किञ्चिदाकुञ्चिता ईषदुत्कुञ्चिता भ्रूर्यत्र तत् किञ्चिदाकुञ्चितभ्रु। अन्तर्मोदस्य मानसिकानन्दस्यानुभवेन मसृणं अनुरागरञ्जितं, तथा स्रस्तानि अवसन्नानि निष्कम्पानि निश्चलानि पक्ष्माणि नेत्रलोमानि यत्र तथाभूतं एतत् प्रत्यक्षीक्रियमाणं अनयोः मदयन्तिकामकरन्दयोः आकेकराक्षं वक्रभावतस्तचपलचितं दृ' परस्परावलोकनं (कर्तृ) व्यक्तं स्पष्टं यथा स्यात्तथा अचिरं अचिरजातं शंसति मानसिकमनोदानुभवं कथयतीत्यर्थः।

अत्र दृष्टेः पूर्वोक्तैकैकविशेषणेन वक्रादिदर्शनविशेषा दर्शितास्तेषां लक्षणानि यथा—

"वलितो वाङ्गसञ्चारी यत्र तद्वक्रमुच्यते।"

"भागत्रयस्य सङ्कोचो विकासस्तत्परस्य च।
यस्माद्दृष्टेर्भवेत्तद्धि कूणितमुच्यते॥"

"निष्पन्दं तद्वदस्य हृष्टास्पन्दते क्वचित्।"

"प्रेमार्द्रमन्तर्विकाससारं ललितमुच्यते॥"

---

(২১) কিঞ্চিদ্বক্রিমভাবে উর্দ্ধসঞ্চালন হেতু বক্র অপাঙ্গদেশের ভাগত্রয়ে সঙ্কুচিত এবং অনুরাগের উদ্রেকবশতঃ কচিৎ নিশ্চল, কচিৎ ললিত ও ঈষদুৎকুঞ্চিত ভ্রূ মানসিকানন্দানুভববশতঃ অনুরাগরঞ্জিত, পরন্তু যাহাতে চক্ষুর পক্ষ্মগুলি অবসন্ন ও নিশ্চল তাদৃশ আকেকরাক্ষ এই উভয়ের পরস্পরসন্দর্শন স্পষ্টভাবেই অচিরজাত মানসিকানন্দ উপভোগ ব্যক্ত করিতেছে।

---

* "ईषत्तिर्यग्वलितविषमं कूणितप्रान्तमेतत्। प्रेमोद्भेदस्तिमितलुलितं किञ्चिदाकुञ्चितभ्रु। अन्तर्मोदानुभवमसृणं स्रस्तनिष्कम्पपक्ष्म।" क्वचित् पुस्तके पूर्वपादत्रये एतादृशः पाठभेदो दृश्यते।

पुरुषः । वत्से !' मदयन्तिके ! इतः इतः । (२२)

मद । सहि बुद्धरक्खिदे ! अवि णाम पुणो वि दाव दीसइ एस जीविदप्पदो पुण्डरीअलोअणो ? (ध) ।

बुद्ध । जइ देव्वमणुकूलं भविस्सदित्ति । (न)

[ पुरुषेण निष्क्रान्ते । ] (२३)

माध । [ अपवार्य्य । ]

---

(ध) सखि बुद्धरक्षिते ! अपि नाम पुनरपि द्रक्ष्यत एष जीवितप्रदः पुण्डरीकलोचनः ।

(न) यदि देवमनुकूलं भविष्यति ।

---

"एकस्या एव प्रवृत्तेरो भ्रूव कुञ्चनमुच्यते ।"

मसृण तत्तु विज्ञेयमनुरागकषायितं ।"

"आकुञ्चितपुटा याऽसङ्गतार्धनिमीलिता ।

मुहुर्व्यावर्त्तितारा च दृष्टिराकेकरा मता ॥"

अमान्यवासम्भाविततद्दर्शनरूपसाधनेन मनःकल्पितसम्भोगजनितानन्दानुभवज्ञानादनुमानालङ्कारः । व्यक्त यवति कथयति वेति प्रतीयमनोत्प्रे चेति केचित् । प्रसतीत्यस्य कर्म्मपदानुपन्यासात् न्यूनपदत्वदोषः । मन्दाक्रान्ता वृत्तम् ।

(२२) पुरुष इति । इत इत इति आगम्यतामिति शेष. ।

(ध) मदेति । अपि नामेति सम्भावनायां । पुनरपीति औत्सुक्यातिशयद्योतनार्थम् । जीवितप्रद' शार्द्दूलनिधनेन जीवनदाता । एष. मकरन्द , नामाग्रहणं भावि पतित्वसम्भावनया ।

(न) बुद्धे ति । अनुकूलं साहाय्यकारि, भविष्यतीति तदा पुनर्द्रक्ष्यत इति शेषः । इति शब्दो मदयन्तिकाबुद्धरक्षितयोस्तात्कालिकालापसमाप्तिद्योतक. ।

(२३) पुरुषेण इति सहार्थे तृतीया । निष्क्रान्ते मदयन्तिकाबुद्धरक्षिते इति शेष ।

---

(২২) পুরুষঃ । বৎসে ! মদয়ন্তিকে ! এদিকে এদিকে ।

(ধ) মদ । সখি বুদ্ধরক্ষিতে ! পুণ্ডরীকলোচন জীবনদাতা এই মহানুভবকে পুনরায়ও কি দেখিতে পাইব ?

(ন) বুদ্ধ । যদি দৈব অনুকূল হয় ( তবে দেখিতে পাইবে । )

(২৩) (পুরুষের সহিত মদয়ন্তিকা ও বুদ্ধরক্ষিত নিষ্ক্রান্ত হইল ) ।

चिरादाशातन्तु स्फुटतु बिसिनीसूत्रभिदुरो,
महानाधिव्याधिर्निरवधिरिदानीं प्रसरतु।
प्रतिष्ठामत्यर्थं व्रजतु मयि पारिप्लवधुरा,
विधिः स्वास्थ्यं धत्तां, भवतु कृतकृत्यश्च मदनः॥ (२४)

अथवा—समानप्रेमाणं जनमसुलभं प्रार्थितवतो,
विधौ वामारम्भे मम समुचितैषा परिणतिः।

---

(२४) अथ मालत्यानन्दनार्पणनिश्चयमधिगतवान् माधवो नैराश्यजनितमुद्वेगमनन्तरपरलोकगमनमाह—चिरादिति। चिरात् बहुकालादनुवृत्त इत्यर्थः, बिसिनीसूत्रवत् मृणालतन्तुवत् भिदुरः (भिदिः कुरच्) स्वयमेव भिद्यमानः आशातन्तुः मालतीप्राप्तिप्रत्याशारूपं सूत्रं स्फुटतु इदानीं छिन्नो भवतु; मालतीलाभस्यासम्भवादिति हेतुः सर्वत्र योज्यः। तथा इदानीं महान् विशालः आधिरेव मालतीलाभाभावविगमनिबन्धना मानसी व्यथैव व्याधिः रोगः निरवधिः सीमारहितः यावज्जीवनस्थायीति यावत् प्रसरतु विजृम्भताम्। पारिप्लवधुरा (धुरक्षपथेति समासादित्वादत्) अरतिरूपचित्तचापल्यभारः अत्यन्तं निष्कपटं अप्रतिहतं यथा स्यात्तथा प्रतिष्ठां स्थितिं भजतु लभताम्। तथा विधिः मदीयदुःखविधानकं दैवं स्वास्थ्यं निर्वृतिं विश्रामस्थैर्यं, धत्तां अवलम्बताम्। निरवधि दुःखार्पणरूपतदीयकर्तव्यस्य सम्पादितत्वादिति भावः। मदनश्च कन्दर्पश्च कृतकृत्यः निर्वर्तितकार्यः भवतु। विरहिविरहदहनरूपतत्कार्यस्यापि सम्पादितत्वादिति भावः।

आशातन्तुरिति आधिव्याधिरिति च निरङ्गं रूपकं, बिसिनीसूत्रभिदुर इति लुप्तोपमा, तथा स्वकीयातिदुःसहदुःखप्रतिपादनरूपैककार्यं प्रति बहुकारणाभिधानात् समुच्चयश्चालङ्कारः। शिखरिणीवृत्तम्॥

(२५) नितान्तपरितप्तोऽप्यगत्या स्वयमेवात्मानं समाश्वासयन्नाह—अथवा समानेति।

---

(২৪) মাধ। ( গোপনে ) মৃণালতন্তুর ন্যায় স্বয়ং ভিদ্যমান বহুকাল যাবৎ পরিপোষিত মালতীলাভের আশারূপসূত্র এখন ছিন্ন হউক। মালতীলাভ-প্রত্যাশায় ছেদনজনিত মনোব্যথারূপ বিশাল রোগ এখন যাবজ্জীবনের জন্য বিস্তৃত হউক। অরতিরূপচিত্ত চাঞ্চল্যভার অপ্রতিহতভাবে আমাতে স্থিতি-লাভ করুক। আমার দুঃখবিধানকর্তা বিধাতা এখন স্বাস্থ্যলাভ করুন, এবং কামদেবও এখন কৃতকার্য্য হউন।

(২৫) তুল্যানুরাগ দুর্লভ জনকে প্রার্থনা করিলে ও বিধি প্রতিকূলাচারী

तथाप्यस्मिन् दानश्रवणसमयेऽस्याः प्रविगल-
त्प्रभं प्रातश्चन्द्रद्युति वदनमन्तर्दहति माम् ॥ (२५)

काम। [ स्वगतम्। ] एवमतिदुर्मनायमानः पीडयति मां वत्सो माधवो, वत्सा मालती च। दुष्करं निराशा ग्रथितीति। [प्रकाशम्।] वत्स! पृच्छामि तावदायुष्मन्तं, अपि भवान् अमंस्त यथा भूरिवसुरेव मालतीमस्मभ्यं दास्यति ?। (२६)

---

समानमं मार्थं तुल्यानुराग मसुलभं पितायधीनत्वं न दुष्प्राप जन मालतीमित्यर्थः, प्रार्थितवतः मनसा प्रार्थितवतो मम विधौ देवे वामारम्भे प्रतिकूलोद्योगे सति एषा प्रत्यक्षीक्रियमाणा परिणतिः दशाविपर्यासः मालतीलाभवैपरीत्येन परमविषादलाभ इति यावत्, समुचिता युक्तैव। विधौ हि प्रतिकूले सुलभमपि न लभ्यते का कथा दुर्लभस्य लाभस्येति भाव.। ईदृगायाधस्यापनेऽपि पुनःसमधिकपरितापकारणं दर्शयति—तथापीति। युक्तत्वं भीऽपरमविषादलाभस्य कथञ्चित् सहनीयत्वेऽपीत्यर्थः, अस्मिन् दानश्रवणसमये "नन्दनाय राज्ञामालतीदत्ते"त्यर्थकवाक्याकर्णनकाले प्रविगलन्ती दुर्विषहविषादवशात् अपयान्ती प्रभा मनुष्यता यस्मात् तत्, अत एव प्रातश्चन्द्रद्युति प्रत्यूषप्रभातसदृशप्रभं अस्या मालत्या वदनं (कर्तृ) मां अन्तर्दहति ममान्तर्दाहं जनयति। नन्दनार्पणवार्ताश्रवणमात्रेणैवास्या ईदृशी दशा जातेति इतो पुनस्तदर्पणे किमस्या भविष्यतीत्येव मे सम्प्रति नितरां परितापहेतुनं स्वकीयदशाविपर्यास इति भावः।

अनीप्सितपरिणतिं प्रति असुलभत्वस्य विधेः प्रतिकूलत्वस्य च हेतुतया पदार्थहेतुकं काव्यलिङ्गं, एवमन्तर्दाहरूपकार्यस्य माधवगतत्वेन विगलत्प्रभवदनरूपकारणस्य मालतीगतत्वेन च कार्यकारणयोर्भिन्नदेशतया असङ्गतिः प्रातश्चन्द्रद्युतीति लुप्तोपमा चालङ्कार, इत्येतेषामङ्गाङ्गिभावेन सङ्करः। शिखरिणीवृत्तम्।

(२६) कामेति। एव अनेन नन्दनार्पणवृत्तान्तेन अतिदुर्मनायमानः अतिदुर्मनस्कः,मालती च अतिदुर्मनायमानेत्यर्थः। मां पीडयति सन्तापयति। तथाच मालतीमाधवयोर्दुर्मनायमानत्वेन

---

হইলে তাহার পক্ষে ঈদৃশ বিষাদলাভরূপ পরিণাম যুক্তই। কিন্তু তথাপি এই নন্দনার্পণবার্ত্তাশ্রবণমাত্রেই তৎক্ষণাৎ ক্ষীণপ্রভ প্রাতঃকালীন শশধরের তুল্য-কান্তি এই মালতীর বদন আমাকে অন্তর্দগ্ধ করিতেছে।

(২৬) কাম। (স্বগত) এই নন্দনার্পণবৃত্তান্তে নিতান্ত দুর্মনায়মান বৎস মাধব ও বৎসা মালতী আমাকে সন্তপ্ত করিতেছে। নিরাশ ব্যক্তিদিগের জীবন

माध । [ सलज्जम् । ] नहि नहि । (२७)

काम । न तर्हि प्रागवस्थाया: परिहीयसे ? (२८)

---

पीडनं प्रति हेतन्तरमुपन्यस्यति—दुष्करमिति । निर्न विद्यते आशा यस्या सा निराशा जननेति शेष, तथाच निराशो जनसमूह: प्राणिति जीवतीति यत्तद् दुष्करमित्यर्थ, दुष्करमिति प्राणिति क्रियाविशेषणं वा, आशाभ्रंशो जनस्य जीवनधारणं मरणापेक्षयापि क्लेशावहमिति भाव: । एवञ्च मालतीमाधवयोरपि चिरपोषिताया, सम्मेलनाशाया नन्दनार्पणप्रतिश्रुतिहतान्तेन विनाशाज्जीवनधारणमशक्यमेव भवेदित्यपि मां पीडयतीति स्थितम् । सम्प्रति आश्वासप्रदानाय प्रकाशं भूमिकामारचयति—वत्सेति । "भूरिवसु"रेव अस्माकं सखा (वाक्यदर्शेति बहुवचनम्) । मालती दास्यति इति अपि किं भवान् अमल मनसा निर्द्धारितवान्" ? इति आयुष्मन्तं दीर्घजीविनं भवन्तमित्यर्थ: पृच्छामीत्यन्वय: । तथा निर्द्धारण एव त्वां परिहायाघ्नी मालतीदाने भूरिवसुनाङ्गीकृतेऽपि भवत: परितापो युज्यते नान्यथा, तुभ्य मालतीप्रदानस्याश्मदादिप्रयत्नसाध्यत्व निर्द्धारिते तत्सम्भावनाया अधुनापि विद्यमानत्वादिति भाव. । आयुष्मन्तमित्यनेन "मयि जीवन्त्यां त्वया जीवनसन्देहो न कर्त्तव्य" इति सूचितम् ।

(२७) माधेति । "स्वकीयचित्तचाञ्चल्यादेव भवान् मालत्यामनुरक्तो, न तु मालतीप्रदानार्थं भूरिवसुनाहूतोऽत्र समागत इति कामन्दकीवचनाभिप्रायावगतिरेवात्र सलज्जत्वे हेतु: । नहि नहि—"भूरिवसुरेव मह्यं मालतीं दास्यतो"ति नैवाहं मनसा निर्द्धारितवानित्यर्थ: । तेन मदीयनामधेयस्याप्यपरिज्ञानादिति भाव । युष्माकं प्रयत्नेन मालतीप्राप्तिसम्भावनासौहित्यर्थोऽप्यनेन व्यज्यते ।

(२८) कामेति । तर्हि भूरिवसुकर्तृकमालतीदानस्य प्रत्याशाया अकृताया प्रागवस्थाया: पूर्व्वावस्थात: न परिहीयसे न कथमपि विच्युतो वर्त्तसे । पूर्वत इदानीं न किञ्चिदपि वैलक्षण्यं जातमित्यर्थ: । यथाहि पूर्वमपि भूरिवसुर्मालतीं दास्यतीति प्रत्याशा नासीत, इदानीमपि नास्ति ; युवयो: परस्परानुरागोऽपि यथापूर्वं वर्त्तते, अस्माकं प्रयत्नोऽपि पूर्ववदेव विद्यते, तस्मादधुनापि कस्यचिदभिनवोद्वेगकारणस्यानुत्पादात् नैवाधिक: परिताप: कर्त्तव्य इति भाव: ।

---

ধারণ করা অতীব দুষ্কর। (প্রকাশ্যে) বৎস মাধব! দীর্ঘায়ু তোমাকে জিজ্ঞাসা করি, তুমি কি মনে ভাবিয়া ছিলা যে, "ভূরিবসুই আমাকে মালতী প্রদান করিবে"।

(২৭) মাধ। (লজ্জিত ভাবে) ভূরিবসুই যে আমাকে মালতী প্রদান করিবেন, ইহা আমি কখনও ভাবি নাই।

(২৮) কাম। ভূরিবসু কর্ত্তৃক মালতীপ্রদানের আশা না করিয়া থাকিলে এযাবৎ পূর্ব্বাবস্থা হইতে কিছুই বিচ্যুত হও নাই।

मक। भगवति! दत्तपूर्वेत्याशङ्कते। (२९)

काम। जानामि तां खलु वार्त्तां इदन्तु प्रसिद्धमेव, यथा नन्दनाय मालतीं प्रार्थयमानं भूरिवसुः प्रतिमुक्तवान्, "प्रभवति निजस्य कन्यकाजनस्य महाराज" इति। (३०)

मक। अस्त्येतत्। (३१)

---

(२९) मकेति। पूर्वं दत्ता दत्तपूर्वा (सुप्सुपेति समासः) भूरिवसुना महाराजाय मालती समर्पिता, यथेप्सितवराय मालतीसमर्पणाधिकारो महाराजाय दत्त इतियावत्, इति हेतो. आशङ्कते महाराजेन नन्दनाय मालतीवार्त्तां श्रुत्वा सन्दिग्धते, माधवेनेति शेषः। यद्यपि पूर्वं कस्मैचिदपि मालत्या अप्रतिपादनात् भूरिवसुना मालतीप्रदानार्थमनाहूतस्यापि भवत्य तस्यामयोग्यतासीत्, इदानीन्तु लब्धाधिकारेण महाराजेन नन्दनाय मालती दत्तेति वार्त्तया समाकर्णनेन योग्यतापि सम्भाव्यते पूर्वाभ्यासात् इदानीमधिकोऽशङ्काहेतुः वैतथ्य-मित्याशयः।

(३०) कामेति। तां वार्त्तां पुष्पमेष्वोक्तं वृत्तान्तं जानामि सर्वदैवाहमवगच्छामि, नहि ममाविदितं किञ्चिदित्याशयः। तथापि मालत्या परित्यक्तव्येति समर्थयितुं भूमिकामारचयति— इदन्त्विति, प्रसिद्धमेव सर्वजनविदितमेव। प्रभवतीत्यादि वाक्यस्वरूपाविर्भावकमितिपद-मुक्तमानिबद्ध कर्म।

(३१) मकेति। एतत् सर्वजनविदितं अस्ति, मयाप्येतत् स्वीकार्यमित्यर्थः, तेन प्रकृते किमायात तदुच्यतामित्याशयः।

---

(২৯) মক। ভগবতি! ভূরিবসু পূর্ব্বেই মহারাজকে যথেচ্ছ পাত্রে মালতী-প্রদানের অধিকার দিয়াছেন, এই জন্যই "মহারাজ নন্দনে মালতী সমর্পণ করিতে, প্রতিশ্রুত হইয়াছেন শুনিয়া বয়স্য মাধব আশঙ্কা করিতেছেন।

(৩০) কাম। আমি সেই বৃত্তান্ত জানি, ইহাও সকলেই জানে যে, নন্দনকে মালতী দেওয়ায় অনুরোধ করিলে মহারাজকে ভূরিবসু ইহা বলিয়াছিলেন, "মহারাজই আমার নিজকন্যকাজনের প্রভু"।

(৩১) মক। ইহা যে সর্ব্বজনবিদিত তাহা আমিও স্বীকার করি।

काम। अद्य च स्वयं राज्ञैव दत्ता मालतीति प्रत्ययेनावेदितं, तदत्र! यदि प्रतिष्ठानिबन्धनानि देहिनां व्यवहारतन्त्राणि, वाचि पुण्यापुण्यहेतवो व्यवस्थिताः, सर्वञ्च वचनानामायत्तं, सा च भूरिवसोर्वागनृतात्मिकैव, न खलु महाराजस्य मालती निजा कन्यका, कन्याप्रदाने च नृपतयः प्रमाणमिति नैवंविधो धर्माचारसमयः,

---

(३२) कामिति। राज्ञैव न तु प्रकृताधिकारिणा भूरिवसुनेति भावः। सम्प्रत्येव इदानीमेव एवकारेण कालविलम्बव्यवच्छेदात् भूरिवसुना न दत्तैवेति स्थितं, भूरिवसुना नन्दनाय वाङ्गीकारे कृत एवं चिन्ताकारणमासीदित्याशयः। ननु प्रभवतीत्यादिवाक्येन पूर्वमेव भूरिवसुना राज्ञे दानाधिकारस्यार्पणात् राजाङ्गीकारेणैव तदङ्गीकारोऽपि सिद्ध एवेत्याशङ्कापनयनाय तद्वाक्यस्य कल्पकत्वं निर्बन्धु भूमिकामवतारयति—तदत्रेति। देहिनां प्राणिनां व्यवहारतन्त्राणि व्यवहारपद्धतयः तन्त्राणि कुटुम्बकृत्यानि "तन्त्रं कुटुम्बकृत्ये स्यादि"ति इत्यमरः। यदि प्रतिष्ठानिबन्धनानि हृदयस्थितिहेतुकानि हृदगताभिप्रायानुरूपाणीति यावत्, न तु केवलं वाक्यानुरूपाणीत्यर्थः। ननु हृदगताभिप्रायानुसारेणैव वाक्यानि निःसरन्तीति कुतो वाक्यानुरूपत्वव्यभिचार इत्याशङ्कायां सत्यवाक्यस्य तथात्वेऽपि कपटवाक्यस्य न तथात्वमिति व्यवस्थापयितुं सत्यमिथ्याभेदेन वाक्यस्य द्वैविध्यं फलतः प्रतिपादयति—वाचीति। पुण्यापुण्ययोः धर्माधर्मयोः हेतवः प्रयोजकानि सत्यत्वमिथ्यात्वरूपाणीत्यर्थः, वाचि वाक्ये व्यवस्थिताः "सत्यं ब्रूयान्नानृत"मिति विधिनिषेधाभ्यां स्थिरीभूताः। एतदेवार्थं स्पष्टयति—सर्वञ्चेति। सत्यप्रकटनं मिथ्याप्रकटनञ्च सर्वमित्यर्थः, वचनायत्तं वाक्याधीनं सत्यं मिथ्या च सर्वमेव वाक्यैः प्रतिपादयितुं शक्यत इति भावः। नन्वेतावतापि प्रकृते किमायातं तत्राह—सा चेति। तथा चेति चकारार्थः, उक्तप्रणाल्या वाक्यस्य द्वैविध्ये सतीत्यर्थः, सा—"प्रभवति निजस्ये"त्यादिका भूरिवसोर्वाक् अनृतात्मिकैव शिष्टपदघटितत्वेन श्रूयमाणतया सत्यवत् प्रतीयमानत्वेऽपि परमार्थतो मिथ्याभूतैव। तथा च नाभिप्रायानुरूपेति भावः। मिथ्याभूतत्वमेव द्रढयति—न खल्विति। तथा च मालत्या महाराजस्य निजकन्यात्वाभावेऽपि तत्प्रतिपादकत्वेनार्थविसंवादितया तद्वचनं मिथ्याभूतमेवेत्यर्थः। एवञ्च तद्वाक्यप्रतिपादितं प्रतिनिधित्वमप्यलीकमिति भावः। ननु नैतावता भूरिवसुर्मिथ्यावादित्वे निश्चय इति शङ्कायां राज्ञोऽप्यस्य बोधयितुं प्रयुक्तत्वेन वस्तुगत्या तद्वाक्यस्य मिथ्यात्वेऽपि "निजस्य अपत्यस्य कन्यकाजनस्य महाराजः

---

(৩২) কাম। স্বয়ং মহারাজই মালতীদানে প্রতিশ্রুত হইয়াছেন, ইহা সম্প্রতিই নন্দনের দূতী বলিয়া গেল। সুতরাং বৎস! হৃদগতাভিপ্রায়ানুসারেই লোকের ব্যাবহারিক কার্য্য হইয়া থাকে। (কেবল বাক্যানুসারে নহে) বাক্যেতে পুণ্য ও

तस्माद्विमर्शितव्यमेतत् । कथय, वत्स ! माम् अनवधानां मन्यसे। पश्य । (३२) मा वा भवत्स्वपि नाम तद्भूत् पापं यदस्यां तु मया विमृष्टम् । तत्सर्वथा सङ्गमनाय यत्नः प्राणव्ययेनापि मया विधेयः ॥ (३३)

---

प्रभवति न तु मम कन्यकाजनस्य" इत्येतादृशार्थान्तराभिसन्धानेनापि तेनाभिहितत्वात् । न चैतादृश-चातुर्यपूर्णाभिधानमपि दूषणीयमिति वचनीयम् । "अश्वत्थामा हत" इत्यभिहितवता धर्मावतार-युधिष्ठिरेणाप्यसत्या तादृशाभिधानस्याङ्गीकृतत्वेन राजानुमत्यधी-नामात्यादिजनानामेतादृशस्थले तादृगभिधानस्य प्रायः स्वभावसिद्धत्वादिति मन्तव्यम् ।

ननु तद्वाक्यप्रतिपादितप्रतिनिधित्वस्यानौकत्वेऽपि राज्ञः सर्वस्वामित्वादेवान्यदीयकन्याप्रदानेऽपि स्वत एव तस्यास्त्यधिकार इत्याशङ्कां निराकर्तुमाह—कन्याप्रदाने चेति । नृपतयः राज्ञः प्रमाथ निरन्तार स्वतन्त्रकर्त्तार इति यावत्, इत्येवंविधः एवम्प्रकारः धर्म्माचारसमयः धर्म्मशास्त्रशिष्टाचारयोः सिद्धान्त ( "समयाः शपथाचार कालसिद्धान्तसंविदः" इति विश्वः ) न नास्तीत्यर्थः । वाक्यार्थमुपसंहरति—तस्मादिति । दर्शितयुक्त्यादिभिः राज्ञः प्रदानस्य लोकशास्त्र-विरुद्धत्वादैवेत्यर्थः, एतत् राज्ञः प्रदानप्रतिश्रुत्यादिकं विमर्शितव्यं विशेषतो विवेचनीयं युष्माभि-रिति शेषः । तथाच राज्ञः प्रदानवार्त्तामात्रेणैवाशा न त्यक्ष्यति भावः ।

नन्वेतावतापि नन्दनाय समर्पणे राज्ञो व्यावृत्तिभयात् माधवाय समर्पणे कस्यापि चेष्टा विरहात् माधवस्य कथं तत्प्राप्तिप्रत्याशेत्याशङ्कयामाह—कथयेति । कथं केन हेतुना अनवधानां मालतीमाधवयोः समागमविषये उदासीनां मन्यसे चिन्तयसि ? तथाच मदीयचेष्टयैव मालती-माधवयोः सङ्घटनं भविष्यतीति भाविष्टं ग्रहणीयमिति भावः । विश्वासस्थापनाय साहङ्कार-माह—पश्येति । जानीहीत्यर्थः । अत्र-तुल्यतर्कोनाम नाट्यलक्षणम् । तथाच दर्पणे—"तुल्यतर्को यद्रूपेण तर्कः प्रकृतगामिना" इति ।

(३२) माधेति । नु भो ! अस्यां मालत्यां यत् पाप विवाहानिर्वाहे मरणरूपं यदनिष्ट

---

পাপের হেতু সত্যও মিথ্যাও ব্যবস্থিত আছে। সত্য ও মিথ্যা প্রকটন সমস্তই বাক্যের অধীন। সুতরাং ভূরিবসুর সেই বাক্য সর্ব্বৈব মিথ্যা। মালতী কিছু মহারাজের নিজকন্যা নহে, রাজা যে কন্যা প্রদানের কর্ত্তা এরূপও ধর্ম্মশাস্ত্রের বা শিষ্টাচারের সিদ্ধান্ত নাই, সুতরাং রাজার এইরূপ প্রদানাঙ্গীকার যে যুক্তিযুক্ত কি না, ইহা তোমাদের বিশেষ বিবেচনীয়। বৎস। আমাকেই বা এবিষয়ে উদাসীন মনে করিতেছ কেন ? দেখ—

(৩৩) তোমার সহিত বিবাহনির্ব্বাহ না হইলে মালতীর যে / অনিষ্টের আশঙ্কা

मक । सुष्ठु युज्यमानमादिश्यते युष्माभिः । अयि च—(३४)

दया वा, स्नेहो वा, भगवति ! निजेऽस्मिन् शिशुजने
भवत्याः संसाराद्विरतमपि चित्तं द्रवयति ।
अतश्च प्रव्रज्यासमयसुलभाचारविमुखः,
प्रसक्तास्ते यत्नः प्रभवति पुनर्दैवमपरम् ॥ (३६)

---

मया विमृश्य "प्रेम पश्यति भयान्यपदेऽपी"ति नीत्या आशङ्कनीयं तदनिष्टं स्वप्नेऽपि मनुष्यपि किं पुनस्तादृशस्नेहास्पदयोरित्यर्थः । मा स्म भैव ( माशब्द एवार्थे ) भूत् नैव भवतु । तदभीष्ट-मङ्गलस्य पापपदैर्नोपघ्नाम । तस्मात् सर्वथा सर्वप्रकारेण माङ्गल्यवेनापि जीवनत्यागेनापि किं पुनः साधारणायासेनेत्यर्थः, सङ्गमनाय युवयोर्मेलनाय मया यत्नः विधेयः कर्त्तव्यः । तदायत्तं मदीयप्रयत्नेनैव फलनाभमप्यायया इतः परं न भवितव्यमिति भावः । अत्र "मा"इत्यत्र 'मा वा भवत्वि"त्यत्र "त्वयि वे"ति च पाठान्तरं, तदाने अस्या त्वयि माधवे वा यत् पापं आशङ्कनीयं वा युवयोः स्वप्नेष्वपि तन्माभूदिति वाक्यार्थः । यत्नो नाम द्वितीयावस्थेयम् । तथाच दर्पणे—"प्रयत्नस्तु फलावाप्तौ व्यापारोऽतित्वरान्वितः" । अत्र किं पुनस्तादृशस्नेहास्पदयोरित्यर्थस्य किं पुनः साधारणायासेनेत्यर्थस्य च आपत्तौ नाभादर्थापत्तिरलङ्कारः । तल्लक्षणं यथा दर्पणे—"दण्डापूपिकयाऽन्यार्थागमोऽर्थापत्तिरिष्यते" इति । इन्द्रवज्रा वृत्तम् ।

(३४) सद्विति । सुष्ठु युज्यमानं सम्यक् युक्तियुक्तं आदिश्यते कथ्यते । तथाचास्मद्याचितोऽस्माकं ज्ञात इत्यर्थः । अत्रादिश्यत इति पदोपादानं युष्माभिरिति बहुवचनञ्च गौरवद्योतनार्थम् ।

(३५) दया वेति । निजे आत्मीये तस्मिन् शिशुजने मालत्यां माधवे च दया अनुकम्पा वा स्नेहो वात्सल्यं वा (वाशब्दो चार्थे, काकाक्षिगोलकवदत्रापि भवत्या इति योजनीयम्, तथाच भवत्या दया च स्नेहश्चेत्यर्थः ।) संसारात् स्वाङ्गपोषणसङ्गगौरवविषयरूपसंसारसुखभरागादेः विरतमपि प्रव्रज्याग्रहणेन निवृत्तमपि भवत्याश्चित्तं द्रवयति आर्द्रं करोति आकर्षतीति यावत् । अतश्च अत एव कारणात् प्रव्रज्यासमये सन्न्यासाश्रमकाले सुलभा ये आचारा "सर्वसङ्गपरि-

---

আমি করিতেছি, তাহা যেন শত্রুদিগেরও না হয়, সুতরাং প্রাণপাতেও আমি তোমাদিগের সঙ্গমনের জন্য সর্বতোভাবে চেষ্টা করিব।

(৩৫) অয়ি ভগবতি, এই স্বকীয় শিশুজনে ( মালতী ও মাধবে ) আপনার দয়া বা স্নেহই আপনার সংসার-বিরক্ত চিত্তকেও আর্দ্র করিতেছে। অতএব এই

[ नेपथ्ये । ] भअवदि कामन्दइ ! एसा भट्टिणी विण्णवेदि, जधा मालदीं घेत्तण तुरिदमाअच्छदुत्ति (प) ।

काम । वत्से । उत्तिष्ठ । [ सर्वे उत्तिष्ठन्ति । ] (२६)

[ मालतीमाधवौ सकरुणानुरागमन्योऽन्यमवलोकयतः । ] (२७)

---

(प) भगवति कामन्दकि ! एषा भट्टिनी विज्ञापयति, यथा मालतीं गृहीत्वा त्वरितमागच्छतु इति।

---

त्यागी ब्रह्मचर्य्यसमन्वितः। जितेन्द्रियत्वमाधाय नैकस्मिन् वसतिस्थिरः" इत्यादि शास्त्रनिर्द्दिष्टः सर्व्वसङ्गपरित्यागादयः तैश्च विमुखा विरोधी न तत्र यत्र मालतीमाधवसमागमसम्पादने प्रवृत्तिः प्रसक्ता नाम्नाऽऽपतित इति यावत्। अपरं पुनः इतः परन्तु दैवं अनयोर्भाग्यं भगवति समागमाभिलाषं पूरयितुं नाशयितुं वा शक्नोति। मया तु यावत् कर्त्तव्यं तावदेव क्रियते, तथापि यदि सफलोरथसिद्धिर्न भवेत्तदा निरपराधाऽहमिति भावः। इष्टस्यानुनयरूप पर्य्युपासनं नाम प्रतिमुखसन्धेरङ्गम्। तदुक्तं दर्पणे "—कृतस्यानुनयः पुनः। स्यात् पर्य्युपासनं—" अत्राप्रस्तुतयोर्दम्पत्योर्दैवयतोरेकक्रियाभिसम्बन्धात्तुल्ययोगितालङ्कारः। शिखरिणीवृत्तम्। उभयोरेव लक्षणमुक्तम्।

(प) नेपथ्य इति। भट्टिनी राज्ञी, यथाह भरतः—"राजस्त्रियस्तु सम्भाष्याः सर्व्वाः परिजनेन तु। भट्टिनी स्वामिनीत्येव नृत्ये प्राहुर्व्विचक्षणाः॥" त्वरितमागच्छतु वैवाहिकमाङ्गलिकानुष्ठानसम्पादनार्थमित्याशयः।

(२६) कामेति। वत्से मालति! उत्तिष्ठ त्वरितमित्यर्थः, राज्ञी विज्ञापनाया अप्रदर्शने कार्य्यहानिः स्यादित्याशयः। सर्व्वे मालतीमाधवादयः।

(२७) मालेति। सकरुणानुरागं करुणानुरागाभ्यां सह यथा स्यात्तथेत्यर्थः। अत्र कारुण्यं परस्परानिष्टाशङ्कया, अनुरागः परस्परभावाभिव्यक्तिद्वारेण।

---

সন্ন্যাসাশ্রমসমুচিত ব্যবহারের বিরোধী যত্ন ও আপনার আপতিত হইয়াছে। এখন ইহাদের অদৃষ্টই যাহা করিতে সমর্থ হয়।

(প) ( নেপথ্যে ) ভগবতি কামন্দকি ! রাজ্ঞী জানাইতেছেন যে, মালতীকে নিয়া অতি সত্বর আসুন।

(২৬) কাম। বৎসে ! উঠ। (সকলে উঠিল)।

(২৭) (মালতী এবং মাধব করুণ ও অনুরাগের সহিত পরস্পরকে অবলোকন করিতে লাগিল )।

माध। [स्वगतम्।] कष्टमेतावती लोकयात्रा मालत्या समं माधवस्य, अहो नु खलु भोः। (३८)

सुहृदिव प्रकटय्य सुखप्रदः प्रथममेकरसामनुकूलताम्।
पुनरकाण्डविवर्त्तनदारुणो विधिरहो विशिनष्टि मनोरुजम्॥३९

माल। [स्वगतम्।] महाभाअ! लोअणाणन्द! एत्तिअं दिट्ठोसि। (क)

---

(क) महाभाग लोचनानन्द! एतावद्दृष्टोऽसि!

---

(३८) माधेति। माधवस्य दुर्भाग्यस्य कर्मेदं। मालत्या समं लोकयात्रा दर्शनालापव्यवहारानुरागजनोचितलौकिकव्यवहार, एतावती इयती पर्यवसानेति यावत्। तदिदम् कष्टमित्यर्थः। अहो आश्चर्य्ये, नु वितर्के, खलु निश्चये, भोः सम्बोधने, तथाच हे हृदय! आश्चर्य्यमेव दैवस्य दुर्विलसितमिति तर्कयामीत्यर्थः। अथवा "अहोनुखलुभो" इत्येकमिवाव्ययं निरतिशयविषादसूचकम्।

(३९) सुहृदिति। विधिर्विधाता सुहृदिव बन्धुरिव प्रथमं आदौ एकरसां एकगुणा काण्डैकगुणामिति यावत् (शृङ्गारादौ विषे वीर्य्ये गुणे रागे द्रवे रस इत्यमरः)। अनुकूलतां प्रस्तुतकार्य्यानुगुण्यं प्रकटय्य प्रकाश्य सुखप्रदः सुखविधायकः सन् अहो आश्चर्य्यं पुनः अकाण्डे अनवसरे असमये इति यावत् (काण्डोऽस्त्री दण्डबाणार्वदर्गावसरवारिषु इत्यमरः)। विवर्त्तनेन विरुद्धवर्त्तनेन प्रातिकूल्येनेत्यर्थः, दारुणः कठिनः सन् मनसश्चित्तस्य रुजं पीड़ां विशिनष्टि विशेषेणोत्पादयति। विधेरिदमतीवान्याय्यमिति भावः। तथाच विधिनिन्दया विषादातिशयो व्यज्यते। उत्तररामचरितचतुर्थाङ्केऽपि श्लोकोऽयमविकलं परिदृश्यते। अत्र सुहृदिवेति श्रौती उपमालङ्कारः। द्रुतविलम्बितं वृत्तम्।

(क) मालेति। लोचनयोरानन्दो यस्मात् स लोचनानन्द लोचनानन्दकर इत्यर्थः,

---

(৩৮) মাধ। (স্বগত) অহো! মালতীর সহিত আলাপাদি সানুরাগ জনোচিত ব্যবহার মাধবের এ পর্য্যন্তই পরিসমাপ্ত হইল। দৈবগতি নিতান্তই আশ্চর্য্য মনে হইতেছে।

(৩৯) বিধাতা প্রথমে কারুণ্যপ্রধান অনুকূলতা প্রকাশ করিয়া সুখপ্রদ হইয়াও পুনরায় অসময়ে অকারণ প্রতিকূলাচরণে কঠিন হইয়া চিত্তপীড়া উৎপাদন করিতেছেন; ইহা অতীব আশ্চর্য্য।

(ক) মাল। (স্বগত) হে মহাভাগ! লোচনানন্দকর! এ পর্য্যন্তই তোমাকে দেখিলাম।

लव। हद्धी ! हद्धी ! शरीरसंसग्गं जेव्व णो पिअसही आरोविदा अमच्चेण (ब)।

माल। [स्वगतम्] परिणदं दाणीं मे जीविदत्तिह्णाए फलम्। [सास्रम्।] णिव्वूढं अ णिक्करुणदाए तादस्सवि कावालिअत्तणं, पडिट्ठिदो दुट्ठदेव्वस्स दारुणसमारम्भसरिसो परिणामो, कं एत्थ उवालहामि मन्दभाइणी, कं वा असरणा सरणं पडिवज्जामि (भ)।

---

(ब) हा धिक् हा धिक् शरीरसंसर्गमेव न, प्रियसखी आरोपिता अमात्येन।

(भ) परिणतमिदानीं मे जीविततृष्णायाः फलम्। निर्व्यूढं च निष्करुणतया तातस्यापि कापालिकत्वम्। प्रतिष्ठितो दुष्टदैवस्य दारुणसमारम्भसदृशः परिणामः। कमिहोपालभे मन्दभागिनी, कं वा अशरणा शरणं प्रतिपद्ये।

---

कथितवदेव पाठ.। एतेन [illegible], [illegible] ध्वनिः। एतावत् [illegible] भावादिति भाव'। [illegible] प्रतिमुखसन्धेरङ्गं। तदुक्तं दर्पणे— "प्रत्यक्षनिष्ठुरं वज्र" मिति।

(ब) लवेति। शरीरसंसर्गं [illegible], आरोपिता अर्पिता भगवति! अमात्येन भूरिवसुना। तस्मात् गुरुजनमनपेक्ष्य त्वमेव तस्याः प्राणरक्षणे यतस्व इत्याशयः।

(भ) मालेति। जीविततृष्णाया प्राणधारणस्पृहाया. फलं परिणतं पर्य्यवसितं। कापालिकत्वस्य नरबलिदानकर्तृभाव. कापालिकत्वं तद्धर्मसत्त्वमित्यर्थः, निर्व्यूढं सम्पन्नं दुष्टदैवस्य क्रूरनियते. दारुणः भयङ्करः यः समारम्भः मद्विषये कार्य्यनिष्पादनक्रमः तत्सदृशः तदनुरूपः परिणामः परिणति.-प्रतिष्ठितः (प्रतिष्ठा समाप्तिः सञ्जाता अस्येति तारकादित्वादितच्) समाप्तिं प्राप्त इत्यर्थः। मरणस्याचिरभावित्वात्तदतिरिक्तस्य च परिणामस्याभावादिति भावः। मन्दभागिनी मन्दभागधेया अहमिति शेष., कं उपलभे निन्दामि? भाग्यमेव मे निन्दनीयमित्यर्थः।

---

(ব) লব। অহো!! অমাত্য আমাদের প্রিয় সখীকে জীবনসংশয়াবস্থায় আরোপিত করিলেন।

(ভ) মাল। (স্বগত) এপর্য্যন্তই আমার প্রাণধারণ-স্পৃহার, ফল পর্য্যবসিত হইল। নির্দ্দয়তায় পিতারও নরঘাতকের ন্যায় নৃশংসত্ব সম্পন্ন হইল। দুষ্ট নিয়তির

लव। सखि, इदो इदो (म) [इति निष्क्रामन्ति।]

माध। [स्वगतम्।] नूनमाश्वासनमात्रमेवैतत् माधवस्य मङ्गलच्छेदकातरा करोति भगवती। [सोद्वेगम्।] हन्त सर्वथा संशयितजन्मसाफल्यः संवृत्तोऽस्मि, तत्किमिदानीं कर्त्तव्यम्।

[विचिन्त्य।] न खलु महामांसविक्रयादन्यदुपायान्तरं पश्यामि। [प्रकाशम्।] वयस्य! मकरन्द! अपि भवान् उत्कण्ठते मदयन्तिकायाः? (४०)

(म) सहि! इत इत.।

---

यथारथा रक्षकस्य पितुरपि विनाशसाधकत्वात् रक्षकहीना क्व वा शरणं रक्षकं प्रतिपद्ये प्राप्नोमि? तथाच भगवति कामन्दकि! रक्ष रक्ष! इत्यमेव मां रक्षतमित्याशयः।

(म) लवेति। इत इत आगम्यतामिति शेषः। निष्क्रामन्ति मालतीकामन्दकी-लवङ्गिका इति शेषः।

(४०) माधेति। अहमपि तेन मां प्रति स्वाभाविकमात्सर्य्येन कातरा मदीयदुःखभावना-दुःखखिन्ना भगवती कामन्दकी नूनं निश्चितं एतत्—"न सर्वं मालवस्यायाः परिहीयसे" इत्यादिकं माधवस्य मम समाश्वासनमात्रं केवलं सान्त्वनामेव करोति। स्वयं महाराजस्य विरोधित्वात् कार्य्येण किमपि कर्त्तुं न शक्नोतीति मात्रपदेन सूचितम्। संशयितं यतः प्रति-बन्धकत्वात् कामन्दक्या आनुकूल्याच सन्दिग्धं जन्मसाफल्यं मालतीप्राप्तिरूपं आत्मनः सार्थकत्वं यस्य स तादृशः संवृत्तोऽस्मि। मयाचात्र मालतीप्राप्तिरेव जीवनसाफल्यस्फलकत्वेन मालत्या

---

অপরের কার্য্যক্রমের অনুরূপ পরিণামও পরিদৃশ্যমান হইল। মন্দভাগিনী আমি এবিষয়ে কাহাকেই বা তিরস্কার করিব? রক্ষকবিহীন হইয়া কাহাকেই বা রক্ষক পাইব?

(ম) লব। সখি! এদিকে এদিকে। (কামন্দকী, মালতী ও লবঙ্গিকা নিষ্ক্রান্ত হইল)

(৪০) মাধ। (স্বগত) মঙ্গল চ্ছেদকাতরা ভগবতী (কামন্দকী) নিশ্চয়ই (পূর্ব্বোক্ত সকল বলিয়া) মাধবের আশ্বাস প্রদর্শন মাত্র করিলেন। উদ্বেগের

मक। अथ किम्। (४१)

तस्मै मनः चिपति यत्सरसप्रहारमालोक्य मामगणितस्खलदुत्तरीया।
त्रस्तैकहायनकुरङ्गविलोलदृष्टिराश्लिष्टवत्यमृतसंवलितैरिवाङ्गैः ॥४२

---

गुणातिशयत्वादिप्रतिपादनात सातिशयवचनरूप पुष्प नामाङ्गम्। तथाचोक्तं—"पुष्पं सातिशयं वचः" इति।

विचिन्त्य कर्त्तव्यं निर्द्धारयति—न त्वन्यदिति। महामांसस्य नरमांसस्य विक्रयात मालती रूपमूल्यलाभाभिसन्धानेन चामुण्डानुचरपिशाचसमर्पणात् अन्यं भिन्नं उपायं मालतीप्राप्तिनिबन्धनं न पश्यामि। तथाच जात्यनुचितोऽपि शीघ्रफलदत्वेन स एव मया कर्त्तव्य इत्याशय.।

वामाचारानुसारेण महाश्मशाने चामुण्डार्च्चनानन्तर तदनुचरपिशाचेभ्यो हि दीन महामांसार्पणं शीघ्रफलदमिति तन्त्रशास्त्रे प्रसिद्धम। यदिच "गोनरेभाश्वमहिषवराहोष्ट्रोरगोद्भवं महामांसाष्टकं देवि। देवताप्रीतिकारक"मित्यादिना गवांद्यष्टकमांसमेव महामांसशब्देनोच्यते, तथापीहतदनुष्ठाने नरमांसस्यैव विहितत्वादिह नरमांसमेव बोद्धव्यम। अनेन पश्चादङ्करणीयमपि सूचितमिति मन्तव्यम्। महामांसविक्रयरूपसाहसानुष्ठाने जीवनसंशयादिभयेन मकरन्दप्रतिबन्धातौत्याशङ्क्य तमन्यथाप्रभावयितुमाह—मयस्ये त्यादि। मदयन्तिकाया. कृते इति शेष:। अपि प्रश्ने। तथाच मदयन्तिकार्थे किमुत्कण्ठितोऽसि त्वमित्यर्थ·।

(४१) मकेति। अथ किमिति स्वीकारे, उत्कण्ठित एवास्मीत्यर्थ:।

(४२) उत्कण्ठां द्रढयति—तदिति। सरस सशोणित: प्रहार: शार्द्दूलनखराघातजनितव्रणं यस्य तादृशं मा मामालोक्य दृष्ट्वा अगणित अविचारितं स्खलत विगलत् उत्तरीयं स्तनावरणार्थकं यया सा, स्तनावरणार्थकम मृमध्यलक्षणमित्यर्थ', (एतेन परमौत्सुक्यद्योतितं कुच-

---

सहित) হায় মালতী-প্রাপ্তিরূপ আমার জীবনের সার্থকতা সর্ব্বপ্রকারেই সন্দিগ্ধ হইয়া দাঁড়াইল, সুতরাং এখন কি কর্ত্তব্য?

(চিন্তা করিয়া) চামুণ্ডানুচর পিশাচদিগকে নরমাংস অর্পণ করা ভিন্ন মালতীপ্রাপ্তির উপায়ান্তর দেখিতেছি না। (প্রকাশ্যে) বয়স্য মকরন্দ! তুমিও মদয়ন্তিকার জন্য উৎকণ্ঠিত হইতেছ কি?

(৪১) মক। আর কি বলিব? সর্ব্বথা উৎকণ্ঠিত হইতেছি।

(৪২) ভীত ও একবর্ষবয়স্ক হরিণের ন্যায় চঞ্চলদৃষ্টি মদয়ন্তিকা ব্যাঘ্রের আঘাতে আমাকে রক্তাক্ত দেখিয়া নিজের উত্তরীয় বসনভ্রংশের দিকেও লক্ষ্য,

माध । सुलभैव बुद्धरक्षिता प्रियसखी भवतः । अपि च—(४३)

प्रमथ्य क्रव्यादं मरणसमये रक्षितवतः
परिष्वङ्गं लब्ध्वा तव, कथमिवान्यत्र रमताम् ।
तथा च व्यापारः कमलनयनाया नयनयो-
स्त्वयि व्यक्तस्नेहस्तिमितरमणीयश्चिरमभूत् ॥ (४४)

---

स्यर्थोऽपि ज्ञात इति सूचितम् )। तथा यत्र कुत्रचित् कारणाद्भीतः यः एकहायनकुरङ्गः एक-वर्षवयस्कमृगः ( वर्षोऽब्दो हायनोऽस्त्री स्यादित्यमरः ) तस्येव विलोले विशेषेण चञ्चले दृष्टी नयने यस्याः सा ( बालत्वं एकहायनत्वञ्च कुरङ्गस्य विशेषणं नेत्रयोश्चाञ्चल्यातिशयद्योतनार्थं ) तथाभूता मदयन्तिका अमृतसंवलितैः सुधाविमिश्रितैरिवाङ्गैः उरःप्रभृतिशरीरावयवैः यत् आश्लिष्टवती आलिङ्गनं कृतवती, तत् आलिङ्गनं ( कर्तृ ) मे मम मनः क्षिपति आकुलयति । तस्मादतीवोत्कण्ठितोऽस्मीति भावः । अत्र तन्मे मनः क्षिपतीत्यत्र विधेयत्वेनाभिमतस्य मनः-क्षेपस्य यच्छब्दघटितवाक्यपूर्व्वं पाठक्रमरचनावैपरीत्येन गुणीभूतत्वात् "अकारी द्वयमेव मे य"-दित्यादिवद्वाक्यगतविधेयविमर्षदोषः, तथा क्षिपधातोराकुलीकरणार्थावाचकत्वादवाचकत्व-दोषश्च । अत्र तृतीयचरणे लुप्तोपमालङ्कारः । चतुर्थचरणे च अमृतसंवलितैरिवेति क्रियोत्प्रेक्षालङ्कारः, इत्यनयोर्निरपेक्षत्वेन संसृष्टिः । वसन्ततिलकं वृत्तम् । एतत् श्लोकीयतृतीय-चरणस्य षष्ठ्यन्तत्वमात्रं परिवर्त्तितमुत्तररामचरितेऽपि दृश्यते ।

( ४३ ) माधवेति । बुद्धरक्षितायाः प्रियसखी मदयन्तिका भवतः सुलभैव अवश्यं प्राप्यैव । अत्र बुद्धरक्षिताप्रियसखीत्वेन कथनमनुकूलदूतीसद्भावद्योतनार्थं । यथाच बुद्धरक्षितैव विविधसुपायमुद्भाव्य तत्समागमं साधयिष्यतीत्याशयः । सुलभत्वमेवोपपत्त्या द्रढयति—अपि-चेति । अन्यच्च तदवाप्तौ कारणं पश्येत्यर्थः ।

( ४४ ) किन्तत् कारणमित्याह—प्रमथ्येति । क्रव्यं मांसं अत्तीति ( अपकर्षत्वेनेति नियमात् कर्म्मण्यण् ) क्रव्यादं मांसाशिनं व्याघ्रमित्यर्थः, प्रमथ्य निहत्य मरणसमये तस्याः प्राण-

---

না করিয়া যে সুধাবিমিশ্রিতের ন্যায় প্রতিভমান অঙ্গদ্বারা আলিঙ্গন করিয়াছে, সেই আলিঙ্গনই আমার মনকে আকুলিত করিতেছে।

(৪৩) মাধ। বুদ্ধরক্ষিতার প্রিয়সখী (মদয়ন্তিকা) অবশ্যই তোমার অনায়াসলভ্যা হইবে। আরও দেখ—

(৪৪) মরণসময়ে ব্যাঘ্র নিহত করিয়া তুমি তাহাকে রক্ষা করিয়াছ, সুতরাং

मक। तदुत्तिष्ठ पारासिन्धुसम्भेदमवगाह्य नगरीमेव प्रविशाव:। (४५) [ उत्थाय परिक्रामत: । ]

---

विपणिकान्ते दर्शितवत: जीवितप्रदानेनानुपमेयमुपकारं कृतवतस्तव परिष्वङ्गं आलिङ्गनं लब्ध्वा कथमिव केन प्रकारेण मदयन्तिका अन्यत्र तद्भिन्ने जने रमतां अनुरक्तचित्ता भवेत्, अपितु नैवेत्यर्थ:। तथाच प्राणरक्षणरूपोपकारकरणात् एतस्यालिङ्गनं लब्ध्वा पुरुषान्तरानुसरणस्य कुलमानविरुद्धत्वाच्च मदयन्तिका कथमपि जनान्तरं न भजेतेति तवैव सुलभा भवेदिति भाव:। ननु तदीयतात्कालिकालिङ्गनं कामहेतुकमेव नानुरागहेतुकमिति शङ्कां निराकर्तुमनुरक्तिनिदर्शनं स्वीकरोति—तथाचेति। तथाच त्वयि मदनुरागानुमानकारणञ्चेत्यर्थ:। कमल-नयनाया: पक्ष्मलाया: मदयन्तिकाया: नयनयोर्व्यापार: दृष्टिनिक्षेप: त्वयि व्यक्तस्नेहेन परि-स्फुटानुरागेण स्तिमित: निश्चल: अत एव रमणीय: मनोहर: चिरं बहुकालं व्याप्य अभूत्, मदयन्तिका बहुकालं व्याप्य निष्पन्दनेत्राभ्यां त्वामद्राक्षीदित्यर्थ:।

तथाचात्र तादृशनिष्पन्दावलोकनरूपसाधनेन मकरन्दे मदयन्तिकाया दृढानुरक्तिरूपसाध्यस्य ज्ञानात् अर्थापत्तिप्रमाणात् विच्छित्तिविशेषानुमानालङ्कार:। एवं तादृशविशेषे वाच्ये वक्तव्ये कस्मादिति सामान्याभिधानाद्विधेयेऽविमर्शाख्यदोष:। तथा युक्तिप्रदर्शनेनार्थविशेषावधारणात् "उपन्यासो" नाम प्रतिमुखसन्ध्यङ्गम्। तल्लक्षणं प्राचीनोक्तं यथा—"उपपत्तिकृतो योऽर्थ, उपन्यास उच्यते" इति तादृशनिश्चयेन मकरन्दस्य प्रसन्नताया अप्युत्पादनात् "उपन्यास: प्रसादन"मिति दर्पणोक्तलक्षणमप्यत्र घटत इति मन्तव्यम्। शिखरिणीवृत्तम्।

(४५) नवेति। पाराश्च सिन्धुश्च तन्नाम्नी नदीविशेषौ तयो: सम्भेदं सङ्गमम्। अवगाह्य आलोड्य स्नात्वेति यावत्। श्रमशान्त्यर्थं शार्दूलव्यापादनजनितशोणितादिक्षालनार्थञ्च स्नानाभिसन्धानमिति मन्तव्यं। "पारे"स्थले"वरदेति"पाठभेद:।

---

তোমার আলিঙ্গন লাভ করিয়া মদয়ন্তিকা কিপ্রকারে পুরুষান্তরে অনুরক্তা হইবে? তাহার অনুরাগের নিদর্শনও এই যে, সেই কমলনয়নার বহুকালব্যাপী দৃষ্টিনিক্ষেপও তোমাতে পরিস্ফুটস্নেহ নিশ্চলতারমণীয় হইয়াছিল।

(৪৫) মক। তবে উঠ, পারা ও সিন্ধুনদীর সঙ্গমস্থলে অবগাহন করিয়া নগরেই প্রবেশ করি। ( উঠিয়া উভয়ের পরিক্রমণ )।

माध। अयमसौ महानद्योः सम्भेदः, य एषः। (४६)

जलनिविड़ितवस्त्रव्यक्तनिम्नोन्नताभिः
परिगततटभूमिः स्नानमात्रोत्थिताभिः।
रुचिरकनककुम्भश्रीमदाभोगतुङ्ग-
स्तनविनिहितहस्तस्वस्तिकाभिर्वधूभिः॥ (४७)

---

(४६) माधेति। अयं दृश्यमानः, असौ तदुक्तः, महानद्योः पारासिन्ध्वोः। "सम्भेदः" इत्यत्र "व्यतिकरः" इतिपाठभेदः, सोऽपि सङ्गमार्थक एव।

(४७) जलेति। य एषः सम्भेदः—स्नानमात्रं अवगाहनानन्तरमेव (मात्रशब्देन वस्त्रसम्वरणादिव्यवच्छेदः)। उत्थिताभिः तीरं उत्तीर्णाभिः अत एव जलेन निविड़ितानि (निविड़ितानि करोतीति करोत्यर्थेऽन्तान्निविडशब्दात् कर्मणि क्त)। नितान्तसंश्लिष्टतया देहे समन्तात् संलग्नानि वस्त्राणि यासां ताः, अत एव च व्यक्तानि सुस्पष्टं दृश्यमानानि निम्नानि नाभिमध्यादिनिम्नदेहस्थलानि उन्नतानि स्तनमण्डलाद्युन्नतदेहस्थलानि च यासां तथा रुचिरकनककुम्भवत् मनोहरस्वर्णकलसवत् श्रीमन्तः कान्तिमन्तः आभोगेन परिपूर्णतया ("आभोगः परिपूर्णते"त्यमरः)। तुङ्गाः उन्नताश्च ये स्तनाः तेषु निहिताः अर्पिताः हस्ताः पाणयः स्वस्तिका इव मङ्गलद्रव्याणीव ("स्वस्तिको मङ्गलद्रव्ये चतुष्कपदभेदयोः। पिष्टकस्य विकारस्य स्वस्तिको रसतान्त्रिक" इति विश्वः)। हस्ता एव च स्वस्तिको याभिस्तथोक्ताभिर्वधूभिः स्त्रीभिः परिगता व्याप्ता तटभूमिः तीरप्रदेशो यस्य तथोक्तः वर्तते इति शेषः। स्वस्तिकः विन्यासविशेष इति केचित्, तथाचोक्तं "मणिबन्धनविन्यस्ता-वरालौ स्त्रीपयोजितौ। उत्तानौ वामपार्श्वस्थौ स्वस्तिकः परिकीर्तित" इति। अत्र वधूभिरित्यनेन चातुर्वर्ण्यसमागमद्योतनात् "वर्णसंहारो" नाम प्रतिमुखसन्ध्यङ्गम्। तथाचोक्तं दर्पणे—"चातुर्वर्ण्योपगमनं वर्णसंहार इष्यते"। इति।

तथा स्नानोत्थितस्त्रीजनसमावर्णनात् स्वभावोक्तिः, जलनिविडितेत्यादिपदार्थहेतुकत्वेन काव्यलिङ्गम्, रुचिरकनककुम्भश्रीमदिति लुप्तोपमा, हस्तस्वस्तिकेत्यत्र विनिगमकाभावेन रूपकोपमयोः सन्देहसङ्करस्यालङ्कार इत्येतेषामङ्गाङ्गिभावेन सङ्करः। मालिनीवृत्तम्।

---

(৪৬) মাধ। এই সেই পারা ও সিন্ধুনদীর সঙ্গমস্থল।

(৪৭) জলধারা বস্ত্রের নিতান্ত গাত্রলগ্নতা নিবন্ধন যাহাদের নাভি ও স্তনমণ্ডলাদি নিম্নোন্নত স্থানগুলি সুস্পষ্টরূপে পরিদৃষ্ট হইতেছে, মনোজ্ঞ স্বর্ণ-কলসের ন্যায় শোভমান ও পরিপূর্ণতায় উন্নত স্তনে যাহারা হস্তরূপ মাঙ্গলিক দ্রব্য ন্যস্ত

[ इति निष्क्रान्ताः सर्वे । (४८) ]

इति मालतीमाधवे शार्दूलविभ्रमो नाम चतुर्थोऽङ्कः (४८)।

---

(४८) इतीति। अन्यानि दयोर्निष्क्रान्तावपि सर्व्वेषामपि बहुवचनमत्र चोपपत्तिः प्रथमादिष्विवबोद्धव्या।

(४९) इतीति। शार्दूलस्तत्प्रहारेण विभ्रमः मकरन्दमाधवयोर्भ्रमः यस्मिन् सः, नाम तथाख्या प्रसिद्ध। अथवात्र शार्दूलस्तत्प्रहारेण मकरन्दाय विभ्रमः तद्दर्शनेन माधवस्य च प्रधानतया वर्णित इति शार्दूलविभ्रमनाम्ना प्रसिद्धोऽयमङ्क इत्यर्थः। क्वचित् पुस्तके शार्दूलविभ्रमोनामेत्ययं नास्ति॥

इति काव्यतर्कतीर्थविशारद-श्रीकृष्णविहारि तर्कसिद्धान्तभट्टाचार्य्यकृतायां तत्त्वबोधिनी समाख्यायां मालतीमाधवव्याख्यायां चतुर्थाङ्कविवृतिः समाप्ता॥

---

করিয়াছে, স্নানমাত্রোত্থিত সেই সকল বধূজনে যাহার তটভূমি পরিব্যাপ্ত।

(৪৮) ( সকলে নিষ্ক্রান্ত হইল )।

(৪৯) ( শার্দ্দূলবিভ্রমনামক চতুর্থ অঙ্ক সমাপ্ত )।

# पञ्चमोऽङ्कः ।

[ ततः प्रविशति आकाशयानेन भीषणोज्ज्वलवेशा
कपालकुण्डला । (१) ]

कपा । षड्धिकदशनाडीचक्रमध्यस्थितात्मा,
हृदि विनिहितरूपः सिद्धिदस्तद्विदां यः ।

---

(१) चतुर्थाङ्कसूचितमहामांसविक्रयोपयोगिवृत्तान्तावेदकं विष्कम्भकमारभते—तत इत्यादिना । भीषणो नरशिरोऽस्थिधारणादिना भयप्रद, उज्ज्वलो योगप्रभावादिना प्रदीप्तश्च वेशो यस्याः सा, कपाले नरशिरोऽस्थिनी कुण्डले कर्णालङ्कारविशेषौ यस्याः सा कपालकुण्डला तन्नाम्नी काचित् कामचारिणी आकाशयानेन योगजसिद्धिप्रभावाद्गगनमार्गेण खेचरगत्येति यावत्, प्रविशति रङ्गभूमिमाक्रम्य तिष्ठति ।

(२) षड्धिकेति । यः षड्भिरधिका षड्धिकाः ( षष्ठ्यादन्यथाधिक इति निपातः ), दश षड्धिका दश इत्यर्थः, या नाड्यः इडादयः, तासां यच्चक्रं मण्डलाकारं हृत्पद्मं तस्य मध्ये स्थित आत्मा स्वरूपं यस्य स तथाभूतः, तथा तद्विदां तादृशात्मवेदिनां योगिनां हृदि हृदये विनिहितं ध्यानेन संस्थापितं रूपं स्वकीयाकृतिर्येन तादृशः सन् सिद्धिदः भुक्तिमुक्तिप्रदः, तथा अविचलितमनोभिः तदेकायत्तमानसैः साधकैः उपासकैः मृग्यमाणः अन्विष्यमाणः, शक्तिभिः इच्छाक्रियाज्ञानरूपाभिः परिवृतः व्याप्तः अथवा ब्राह्म्याद्यष्टशक्तिभिः परिवृतः प्राणवल्लभतया परिवेष्टितः, स शक्तिनाथ. शक्तीनां निग्रहेच्छादिक्रियाज्ञानरूपाणां नाथः प्रयोक्ता, अथवा ब्राह्म्याद्यष्टशक्तिभिः परिवृतः प्राणवल्लभतया परिवेष्टितः, स शक्तिनाथः शक्तीनां निग्रहेच्छादिक्रियाज्ञानरूपाणां नाथः प्रयोक्ता, अथवा ब्राह्म्यादिशक्तीनां पतिः मूलनाथ इत्यर्थः, जयति सर्वोत्कर्षेण वर्तते ।

नाडीनामनन्तत्वेऽप्यत्र षोडशत्वाभिधानं प्राधान्यानुसन्धानेन, प्रधानाः षोडश नाड्यो यथा—

"इडा च पिङ्गला चैव सुषुम्ना च परा [illegible] ।
गान्धारी हस्तिजिह्वा च पूषा [illegible] तथा ॥

---

(১) গগনমার্গে ভীষণ ও উজ্জ্বল বেশধারিণী কপালকুণ্ডলার প্রবেশ।

(২) কপা। যাহার স্বরূপ ইড়াপিঙ্গলাদি ষোড়শ নাড়ীচক্রের অর্থাৎ হৃৎপদ্মের মধ্যে অবস্থিত, যিনি তাদৃশ আত্মজ্ঞদিগের হৃদয়ে নিজের আকৃতি

इयमद्य इदानीं—
नित्यं न्यस्तषडङ्गचक्रनिहितं हृत्पद्ममध्योदितम्,
पश्यन्ती शिवरूपिणं लयवशादात्मानमभ्यागता।
नाडीनामुदयक्रमेण जगतः पञ्चामृताकर्षणा-
दप्राप्तोत्पतनश्रमा विघटयन्त्यग्रे नभोऽम्भोमुचः ॥ (२)

---

मदानार्थे रात्रौ सूचनमेवमादिदर्शनादुपायचिन्तया च स्वकीयसाहसात् प्राप्तिसम्भव इति "प्रत्याशा" नाम तृतीयावस्था। यथोक्तं—"उपायापायचिन्ताभ्यां प्रत्याशा प्राप्तिसम्भव" इति। अस्या अङ्गानि च यथास्थानं सलक्षणं निवेद्यान्यनुसन्धेयानीति। मालिनी वृत्तम्।

(२) नित्यमिति। न्यस्त पूजाजपादिप्रारम्भसमये "आं हृदयाय नमः, ईं शिरसे स्वाहा" इत्यादि प्रसिद्धलिङ्गमन्त्रमेव न्यासीकृत यत षण्णां अङ्गानां हृदयशिरःशिखाकवच-नेत्रास्त्राणां चक्रं समूहः, तत्र निहितं आरोपितं षडङ्गन्यासपूर्व्वकं तत्र ध्यातमिति यावत्, अत एव हृत्पद्मस्य पूर्व्वोक्तद्वादशदलहृदयपुण्डरीकस्य मध्ये कर्णिकास्थाने उदितं प्रकाशमानं शिवरूपिणं तद्रूपेणैव चिन्तिततया गृहीतमहादेवविग्रहं आत्मानं परमात्मानं नित्यं सदा पश्यन्ती साक्षात् कुर्व्वती, तथा लयः योगशास्त्रप्रसिद्ध ऊर्द्ध्वमाकृष्टस्य वायोर्नाडीविशेषेषु निरोधः एकाग्रता वा तद्वशात् तदवलम्बनात् नाडीनां पूर्व्वोक्तइडापिङ्गलासुषुम्नानां उदयक्रमेण वायु-पूरणादिरीत्या पूरककुम्भकरेचकात्मकप्राणायामेनेत्यर्थः, जगतः जङ्गमात् गतिशीलाद्वायोरिति यावत्, ("जगत् स्यात् विष्टपे क्लीवं वायौ ना जङ्गमे त्रिषु"इति मेदिनी)। पञ्चामृतानां "विट् च मूत्रमसृङ् मज्जा शुक्रं पञ्चामृतं स्मृतं"मित्युक्तानां शरीरगुरुत्वापादकविण्मूत्ररक्तमज्जा-शुक्राणां आकर्षणात् आक्रम्यापसारणाद्धेतोः न प्राप्त उत्पतनस्य आकाशगमनस्य श्रमः आयासो यया तथाभूता इयमद्य प्रागुक्तगद्यस्थितं विशेष्यपदमिदमनुसन्धेयं), अग्रे नभसः स्वच्छ-स्थिताकाशस्य (अग्रे इत्येकान्तमव्ययं) अम्भोमुचो गमनप्रतिकूलीभूतान् मेघान् विघटयन्ती दीपवर्त्तिनापसारयन्ती सती इदानीं (इदमपि गद्यस्थितं) अधुना अभ्यागता श्रीपर्व्वता-दिदं करालायतनं प्राप्ता।

पूर्व्वश्लोकवदत्रापि पक्ष्मपक्ष्मादिशब्दयोर्भग्नप्रक्रमतौत्यदोषः स्वयं परामर्शादग्राह्यतामेव

---

স্থাপিত করিয়া সিদ্ধি প্রদান করেন, একাগ্রচিত্ত সাধকগণের অবিদ্যমান ব্রাহ্মাদি অষ্ট শক্তি-পরিবেষ্টিত সেই শক্তিনাথ ( মহাদেব ) সর্ব্বোৎকর্ষেই বর্ত্তমান আছেন।

(৩) এই আমি বহুল জ্ঞানপূর্ব্বক হৃদয়াদি ষড়ঙ্গে আরাধনাবশতঃ হৃৎপদ্ম-

तथाहि—(५)

विष्वग्वृत्तिर्जटानां प्रचलति निविड़ग्रन्थिनद्धोऽपि भारः,
संस्कारक्वाणदीर्घं पटु रटति कृतास्थिखट्वाङ्गघण्टा ।
ऊर्द्ध्वं धुनोति वायुर्विघटितशवशिरःश्रेणिगुच्छेषु गुञ्ज-
न्मूलालः किङ्किणीनामनवरतरणत्कारहेतुः पताकाम् ॥ (६)

---

(५) रमशोचड़ामरत्वमेव समर्थयति—तथाहीति ।

(६) विष्वगिति । विष्वक् सर्वतोऽभिरवस्थानं यस्य स तादृश, जटानां भारः कलापः, निविड़ेन गाढ़ेन ग्रन्थिना बन्धनेन नद्धो बद्धोऽपि सन् प्रचलितवेगवशात् कम्पते । खट्वाङ्गस्य अस्थिविशेषस्य भैरवीजनोचितस्य त्रिशूलस्य घण्टा तद् घण्टा घण्टिकेत्यर्थः, संस्कारेण वेगाख्यसंस्कारविशेषेण । ("संस्कारभेदो वेगोऽत्र स्थितिस्थापकभावने" इति विश्वनाथः ।) । यः क्वाणः क्वणनं किङ्किण्यादीनां ध्वनलसितिं यावत्, ("निक्वाणो निक्वणः क्वाणः क्वणः क्वणन" मित्यमरः ।) । तेन दीर्घं अधिकं पटु स्फुटं तथाकृता पाटवं: पुनः पुनरभ्यासो यस्मिन् तद्यथा स्यात्तथा (एतत् द्वयमेव रटतीति क्रियाविशेषणं), रटति शब्दायते तथा उत्तालः उत्कटः ("उत्ताल उत्कटे श्रेष्ठे विकराले भयङ्करे" इति मेदिनी) । किङ्किणीनां क्षुद्र-मालावलम्बितक्षुद्रघण्टिकानां अनवरतः अविश्रान्तः यो रणत्कारः निनादः तस्य हेतुः सम्पादकः वायुः पवनवेगानिलः विघटितानि अस्थीकृतानि मांसहीनतया निरावरणीकृतानि भागानीति यावत्, यानि शवशिरांसि कङ्कालमालावलम्बमानानि तेषां श्रेणयः गुच्छा इव श्रेणयः एव वा गुच्छाः तेषु तदीयान्तरालेष्वित्यर्थः, गुञ्जन् अव्यक्तमधुरं रवं कुर्वन् सन् पताकां वैजयन्तीं खट्वाङ्गध्वजस्थामिति यावत् ऊर्द्ध्वं ऊर्द्ध्वीकृतं यथा स्यात्तथा धुनोति कम्पयति । तदत्र वेगवत्ताहारः सर्व्वथा रमशोचस्य डामरत्वञ्च प्रतिपादयतीति भावः ।

अत्र - प्रबलवेगानिलस्वभाववर्णनात् स्वभावोक्तिः, श्रेणिगुच्छे चेति उपमारूपकयोः सन्देहसङ्करः, यदा गुच्छेषु गुञ्जदिति श्रुत्यनुप्रासात् छेकानुप्रासस्याङ्गाङ्गिभावः इति एषा संसृष्टिः । छेकानुप्रासलक्षणं यथा दर्पणे—"छेको व्यञ्जनसङ्घस्य सकृत्साम्यमनेकधा" इति । स्रग्धरा वृत्तम् ।

---

(৫।৬) যেহেতু গর্ভাচ্ছাদনে অবস্থিত আমার জটাসমূহ দৃঢ় গ্রন্থিবদ্ধ হইয়াও পবনবেগবশতঃ কম্পিত হইতেছে। আমার ত্রিশূলের ঘণ্টা সংস্কারজনিত শব্দে দীর্ঘ সুস্পষ্ট ও অত্যুৎকট শব্দ করিতেছে এবং কণ্ঠমালাস্থিত কিঙ্কিণীগুলির কারণীভূত উৎকট পবনবায়ু মাংসাদি আবরণশূন্য কণ্ঠমালার নরমুণ্ডশ্রেণী-

[ परिक्रम्यावलोक्य गन्धमाघ्राय च । ] इदं तावत् पुराणनिम्बतैलाक्तपरिभुज्यमानलशुनगन्धिमिश्रितचिताधूमैः पुरस्ताद्विभावितस्य महतः श्मशानवाटस्य नेदीयः करालायतनम् ॥ (७)

यत्र पर्यवसितमन्त्रसाधनस्य भगवतोऽघोरघण्टस्य आज्ञया सविशेषमद्य पूजासम्भारो मया सन्निधापनीयः, कथितञ्च मे गुरुणा, "वत्से कपालकुण्डले ! अद्य मया भगवत्याः करालायाः प्रागुपयाचितं स्त्रीरत्नमुपहर्त्तव्यम् । तदत्रैव नगरे विदितमास्त" इति तद्विचिनोमि।

---

(७) इदमिति । पुराणेन चिरन्तनेन निम्बतैलेन अक्तानां म्रक्षितानां परिभुज्यमानानां भर्जितुमारब्धानां दह्यमानानां लशुनानां ("लशुनं गृञ्जनारिष्टमहाकन्दरसोनकाः" इत्यमरः), गन्ध इव गन्धो येषां तैः मिश्रैः चिताधूमैः पुरस्तात् अग्रत एव विभावितस्य सूचितस्य महतः विस्तीर्णस्य श्मशानवाटस्य श्मशानाभिमुखविस्तृतपथस्य ( वट्यते वेष्ट्यते अनेनेति वाटः, वट+घञ् ) "पन्था वाटः पथो मार्ग" इति भास्करः । नेदीयः अतिसमीपवर्त्ति ( अन्तिक + ईयसु, "अन्तिकबाढयोर्नेदसाधौ" इति अन्तिकशब्दस्य नेदादेशः ), इदं दृश्यमानं करालाया तदाख्यदेवताया आयतनं प्रशस्तस्थानं । यत् मम गन्तव्यमिति भावः ।

(८) यत्रेति । यत्र करालायतने । पर्यवसितं समाप्तं मन्त्रसाधनं पुरश्चरणात्मकव्यापारविशेषः यस्य तथाभूतस्य सविशेषं दिनान्तरेभ्यो विशिष्टेन आधिक्येन सह वर्त्तमानं यथा स्यात्तथा । पूजासम्भारः करालार्च्चनोपकरणद्रव्यकलापः, सन्निधापनीयः उपस्थापनीयः । विशेषमेव विकाशयति—कथितमिति । प्राक् मन्त्रसाधनारम्भात् पूर्व्वं, उपयाचितं स्वीकृतं "अस्य मन्त्रसाधनस्य समाप्तौ भवत्यै स्त्रीरत्नमुपहरिष्यामी"ति प्रतिज्ञातमित्यर्थः ( "यद्दीयते तु देवेभ्यो मनोराज्यस्य सिद्धये । उपयाचितकं तत्तु दोहद सम्प्रचक्षत ॥" इति हारावली ) । स्त्रीरत्नं

---

ফুরে অব্যক্তমধুর শব্দ করিতে করিতে ত্রিশূলের বৈজয়ন্তীকে ঊর্দ্ধে উঠাইয়া কম্পিত করিতেছে।

(৭) অগ্রেই পুরাতন নিম্বের তৈল ভাজা রশুনের গন্ধের ন্যায় চিতাধূমের গন্ধে সংসূচিত বিস্তৃত শ্মশানপথের নিকটবর্ত্তী এই করালা দেবীর গৃহ।

(৮) এই করালাদেবীর গৃহে মন্ত্রসাধনশেষ আমার গুরু অঘোরঘণ্টের আদেশে আজ আমাকে বিশেষরূপে পূজোপহার উপস্থিত করিতে হইবে। গুরুদেব আমায় বলিয়াছেন "বৎসে কপালকুণ্ডলে! আজ আমায় ভগবতী

[सकौतुकमग्रेऽवलोक्य ।] तत्कोऽयमतिगम्भीरमधुराकृतिः उच्छ्रित-कुटिलकुन्तलः, कृपाणपाणिः श्मशानवाटमवतरति ? य एषः—(८)

कुवलयदलश्यामोऽप्यङ्गं दधत्परिधूसरम्,
ललितचरणन्यासः श्रीमान्मृगाङ्कनिभाननः ।
हरति विनयं वामो यस्य प्रकाशितसाहसः ।
प्रविगलदसृक्पङ्कः पाणिर्ललद्वरजाङ्गलः ॥(८)

---

काचिदुत्कृष्टा स्त्री, ("नारी नारी यदुत्कृष्टं तत्तु रत्नं प्रचक्षते" इति विश्वः)। स्वहस्तेनैव बलिरूपेण दातव्यम्। तत् स्त्रीरत्नं अत्रैव नगरे सन्निहिते पद्मावतीनामकजनपदे, विदितं सर्वैर्जनावगतं चास्ति विद्यते। इति मे गुरुणा कथितमित्यन्वयः। तस्मात् 'विचिनोमि' अन्विष्यामि। सकौतुक—"एतादृशगम्भीरमधुराकृतिरयं कथमस्मिन् भीषणे महाश्मशाने निशायां सञ्चरती"ति कौतुकेन सह वर्त्तमानं यथा स्यात्तथेत्यर्थः। अतिगम्भीरा ईदृशभीषण-स्थानेऽपि अत्रस्तकम्पादिविकारभावा मधुरा कोमला च आकृतिर्यस्य सः। गाम्भीर्यमाधुर्ययो-र्लक्षणं यथा—

*यथा*—"विकाराः सहजा यस्य हर्षक्रोधभयादिषु।
भावेषु नोपलभ्यन्ते तद्गाम्भीर्यमुदाहृतम् ॥
अभ्यासात् करणानां हि श्लिष्टत्वमुपजायते।
महत्स्वपि विकारेषु तन्माधुर्यमुदाहृतम् ॥" इति

तथा उच्छ्रितः ऊर्द्धीकृत्य बद्धः कुटिलः वक्रः कुन्तलभारः केशकलापो यस्य सः, कृपाणः खड्गः पाणौ हस्ते यस्य सः, एवम्भूतः कोऽयं श्मशानवाटं अवतरतीत्यन्वयः। तमेव विशिनष्टि—य एष इति।

(८) कुवलयेति। कुवलयदलश्यामोऽपि स्वभावतः इन्दीवरपत्रवन्नीलवर्णोऽपि सन् परिधूसरं चिताभस्मादिनिमित्तकसंस्काररहितत्वात् धूसरवर्णं अङ्गं दधत् धारयन्, ललितः

---

করালা দেবীর নিকট পূর্বপ্রতিশ্রুত স্ত্রীরত্ন উপহার দিতে হইবে। সর্বজনবিদিত সেই স্ত্রীরত্ন এই পদ্মাবতীনগরেই আছে" সুতরাং আমি অন্বেষণ করিয়া দেখি। (কৌতুকের সহিত সম্মুখের দিকে অবলোকন করিয়া) ঊর্দ্ধীকৃতরূপে বদ্ধ কেশকলাপশালী ও অতি গম্ভীর মধুরাকৃতি ইনি আবার কে খড়্গহস্তে শ্মশান-পথে অবতরণ করিতেছেন ?

(৯) ইনি স্বভাবতঃ নীলোৎপলপত্রের ন্যায় শ্যামবর্ণ হইয়াও চিতাভস্মাদি

[निरूप्य] अये! स एष कामन्दकीसुहृत्पुत्रो महामांसस्य पणयिता माधवः। तत्किमनेन, भवतु समीहितं सम्पादयामि। विगलितप्रायश्च पश्चिमसन्ध्यासमयः। तथाहि सम्प्रति—(१०)

---

मनोहरः चरणन्यासः पादविक्षेपो यस्य सः, श्रीमान् स्वभावतः कान्तिशाली, सुधांशुरिवानन सुधांशुसदृशवदनः य एष दृश्यते, परिलक्ष्यत इति शेषः। यस्य अस्य सव्यम् विलसत् नरकपालं मनुष्यमांसं यत्र सः ("कापालं निर्मांसस्थाने विशिष्टा विघसितेऽस्त्रिया"मिति मेदिनी), अत एव प्रविलसन्तः अनन्त अशक्तपङ्का रक्तकर्द्दमा यस्मात् सः, अत एव च प्रकाशितं प्रकटीकृतं साहसं मांसार्थं मनुष्यमारणरूपं भीषणाध्यवसायकार्य्यं येन सः तथाभूतः, वामः दक्षिणेतरः पाणिः करः विनयं विनीतभावं हरति विनाशयति अविनीतत्वमेव द्योतयतीत्यर्थः। तदर्थं किमप्यसाध्यं साधयितुमेव पराक्रम्य इदं साहसमङ्गीकृतवानिति भावः। साहसमुक्तं नारदेन यथा—

"मनुष्यमारणं स्तेयं परदाराभिमर्षणम्।
पारुष्यमनृतञ्चैव साहसं पञ्चधा स्मृतम्॥"

अत्र प्रथमार्द्धे लुप्तोपमालङ्कारः, द्वितीयार्द्धे च पदार्थहेतुकं काव्यलिङ्गद्वयमिति तेषां परस्परनैरपेक्ष्येण संसृष्टिरलङ्कारः। हरिणीवृत्तम्।

(१०) निरूप्येति। निरूप्य योगप्रभावेणावधार्य्य। स कामन्दकीसुहृदः कुण्डिननगराधिपतिसचिवदेवरातस्य पुत्रः माधवः दृष्टपूर्व्वं इत्यर्थः, स एष महामांसस्य पणयिता कार्य्यविशेषसिद्धये श्मशानपिशाचेभ्यो विक्रेता सन् अवतरतीत्यन्वयः। पण व्यवहारे स्तुतौ चेति व्यवहारार्थकपणधातो स्तृचि रूपं पणयितेति। अत्र महामांसविक्रयस्य चतुर्थाङ्के स्वगतोक्तेः काव्यापरिज्ञानत्वेऽपि योगबलेन तदवधारणं न विरुद्धमिति मन्तव्यम्। ननु मत्तात् अनेन एतदनुसरणेन किं? किं फलं किमपि प्रयोजनं नास्तीत्यर्थः। भवतु अस्यानुसरणमिति शेषः।

---

আগন্তুক কারণে ধূসরবর্ণ অঙ্গ ধারণ করিয়াছেন। ইঁহার চরণবিক্ষেপ অতি মনোহর ও মুখচন্দ্রের ন্যায় সুন্দর এবং ইনি স্বভাবতঃই কান্তিশালী; কিন্তু সাহসপ্রকাশক বাম হস্ত ইঁহার বিনীতভাব বিনাশ করিতেছে। যেহেতু বাম হস্তে নরমাংস বিলম্বিত হইতেছে ও তন্নিবন্ধন সেই হস্ত হইতে রক্তকর্দম নিঃসৃত হইতেছে।

(১০) (নিরূপণ করিয়া) অহো! এই ব্যক্তি কামন্দকীর সুহৃৎপুত্র সেই মাংসবিক্রেতা হইয়া মাধব অবতরণ করিতেছে। তবে ইঁহার অনুসরণে আর

व्योम्नस्तापिच्छगुच्छावलिभिरिव तमोवल्लरीभिर्व्रियन्ते
पर्यन्ताः प्रान्तवृत्त्या पयसि वसुमती नूतने मज्जतीव ।
वात्यासंवेगविष्वग्वितवलयितस्फीतधूम्याप्रकाशम्
प्रारम्भेऽपि त्रियामा तरुणयति निजं नीलिमानं वनेषु ॥ (११)

---

समीहितं चेष्टे: स्वीयवानयनरूपं सम्पादयामि साधयामि । अथमन्य कार्यं साधयतु, अहमपि स्वकार्यं साधयामीति भाव, गुर्व्वादिष्टसाधनकालोऽप्युपस्थित इत्याह—विगलितप्राय इति । गतप्राय इत्यर्थः, पश्चिमसन्ध्यासमयः सायंसन्ध्यासमयः । विगलितप्रायत्वमेव समर्थयति—व्योम्न इति ।

(११) व्योम इति । व्योम्न आकाशस्य पर्यन्ताः दृष्टिसीमान्तवर्त्तिनया भूतललग्ना इव प्रतिभासमाना प्रदेशा, तमोवल्लरीभि ध्वान्तलताभि, तापिच्छगुच्छावलिभिरिव तमालस्तवक-श्रेणीभिरिव व्रियन्ते आच्छाद्यन्ते । तथा वसुमती पृथिवी प्रान्तवृत्त्या परित पर्यन्तभागनिमज्जनक्रमेण नूतने अभिनवे पयसि जले मज्जतीव निमग्ना भवतीव । तथा त्रियामा रात्रि: प्रारम्भेऽपि ॥त्रियामिकारेऽपि प्रदोषकालेऽपीति यावत्, वनेषु वनप्रदेशेषु वात्याया वायुसमूहस्य ("अथ-प्रजो वातावी स्याद्वात्या वातमण्डलिनी" इति त्रिकाण्ड शेषः), संवेगेन सम्यक् वेगेन विष्वक् सर्व्वत: वितता विस्तारिता वलयिता वलयाकारेण स्थिता स्फीता प्रभूता या धूम्या धूमसमूह: ("धूम्या धूमसमूहेऽपि नीहारेऽपि निगद्यते" इति धरणि:),तस्या' प्रकाशो यस्य तं तद्रूपमित्यर्थ: । निज स्वीय नीलिमानं नीलत्वं तरुणयति प्रारभ्य एव प्रगाढान्धकारतया यौवनदशामापादयति । तथाच समीहितसाधनस्यायमेव योग्यावसर इति भाव: ।

यथा सुकोमलकटाहादिवर्त्तुलवस्तुनो जलमज्जनकाले प्रथमतः प्रान्तभाग एव निमज्जति, तत' क्रमशो मध्यादिभागमज्जनेन सर्व्वथैवाहश्यता जायते, तथा दृष्टिसीमान्तवर्त्तितया भूतल-लग्न इव प्रतीयमानो गगनभाग एव प्रथमतस्तमालगुच्छवन्निबिडगाढान्धकारवल्लरीभिराच्छाद्यत इति पृथिव्या अपि गगनलग्न इव प्रतीयमान, पर्यन्तीभूतलदेश एव प्रथमतस्तमसाच्छन्न', तत: क्रमश: मध्यस्थितमध्यादिभागस्य प्रबलतमसाच्छन्नतया पयोराशिनिमग्नाया इव सर्व्वथैवाहश्यता

---

কল কি ? ইহার অবতরণ হউক, আমিও ( শ্রীরত্ন আনয়নরূপ ) সমীহিত কর্ম্ম সম্পাদন করি। সায়ংসন্ধ্যার সময়ও প্রায় অতীত হইয়াছে। যেহেতু সম্প্রতি—

(১১) আকাশের দৃষ্টিসীমাবর্ত্তী প্রদেশগুলি তমালস্তবকশ্রেণীর ন্যায় অন্ধকার লতায় আচ্ছাদিত হইতেছে। পৃথিবী যেন পর্য্যন্তভাগ নিমজ্জনক্রমে [illegible]র জলে নিমগ্ন হইতেছে এবং ত্রিযামা ( রাত্রি ) বাতমণ্ডলীর সংবেগ

इति परिक्रम्य निष्क्रान्ता ॥ (१२)

विष्कम्भकः ॥ (१३)

ततः प्रविशति यथानिर्दिष्टो माधवः ॥ (१४)

[ मांसम् । ] माधः ।

प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढ़रागोदया-
स्तास्ता मुग्धदृशो निसर्गमधुराश्चेष्टा भवेयुर्मयि ।

---

जायते । अत रात्रिरपि प्रदोषकाल एव कालावच्छिन्नाम्बरकाकारदरिद्राश्मीतवमान श्वेति धूमराशिमहस्र स्वकीयनीलत्व निशीथगुह्यप्रदोषस्वा प्रापयतीति भावार्थः ।

अत्र तापिच्छगुच्छावलिभिरिवेन्द्रमा, मन्यतीवेति क्रियोत्प्रेक्षा, धूम्राणिकाहमिति लुप्तोपमाद्वयात् इत्यनेषा परस्परनैरपेक्ष्येण सहस्थिति । स्रग्धरा वृत्तम् ॥

(१२) इतीति । परिक्रम्य रङ्गभूमौ परिभ्रम्य निष्क्रान्ता बहिर्गता कपालकुण्डलेति शेषः ।

(१३) विष्कम्भक इति । विष्कम्भकस्य लक्षणमुक्तम् । कपालकुण्डलालापेन करालायै अघोरघण्टादाम्पत्यापघोरघण्टमङ्गलस्य तदर्थं करालायतने समागमप्रयत्नक्रियायाघोरघण्टप्रतिपादनस्य महामांसविक्रयार्थं तत्र माधवप्रवेशस्य च इतिकर्तव्यस्य वर्तिष्यमाणानाञ्च कार्याणामवगतीना निदर्शनादस्य तल्लक्षणसमन्वयः । कपालकुण्डलाह्वयम् अत्र नामन्योऽपि अतिशयाभावार्थं "शुद्धविष्कम्भकः" क्वचित् पुस्तके "इति शुद्धविष्कम्भकः" इत्येव पाठ । तल्लक्षणं यथा दर्पणे—

मध्येन मध्यमाभ्यां वा पात्राभ्यां सम्प्रयोजितः । शुद्धः स्यात्..............." इति ॥

(१४) तत इति । यथानिर्दिष्टः कपालकुण्डलानिरूपितरूपः मसृणुचिरः वामहस्तेन नरमांसखण्डं दक्षिणहस्तेन कृपाणञ्च धारयन्नित्यर्थः ।

(१५) मांसेति । मांसमिदं—मांसमेतद् यत्क्रेता मांसविक्रयरूपं दुष्करं कर्म चिकीर्षितं तत पार्श्वतया सह यथा स्यात्तथा माध्विदं ।

(१६) प्रेमेति । प्रेम्णा चक्षु रितास्वादानुराग विशेषेण "परस्परानुबन्धं निखण्डं भावबन्धनम् । यदीभावयतोपाधि तत् प्रेमेति निगद्यते" इति लक्षणलक्षितेनेति यावत् । आर्द्राः सरसाः, तथा

---

সর্বতো বিস্তৃত বলয়াকারে স্থিত ও স্ফীত ধূমসমূহের ন্যায় নিজ নীলিমাকে বনান্ত-প্রদেশে প্রদোষকালেই গাঢ়কৃষ্ণাবস্থাপন্ন করিতেছে।

(১২) ( রঙ্গভূমি পরিভ্রমণ করিয়া কপালকুণ্ডলার প্রস্থান )।

(১৪) ( তৎপরে বামহস্তে নরমাংসখণ্ড ও দক্ষিণ হস্তে খড়্গ ধারণ করিয়া মাধবের প্রবেশ )।

यास्वन्तःकरणस्य बाह्यकरणव्यापाररोधी क्षणात्
आशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रोलयः* ॥ (१६)

---

अथ प्रकर्षेणापादितं प्रेमाह (उपचारैर्मिथो पुनर्यद्यप्यभिनवाभिषेकः। प्रेमणीयं प्रकर्षेण स एव प्रणयः स्मृतः॥" इति भरत) स्पृशन्ति भजन्त इति प्रणयस्पृशः, तथा परिचयात् पुनः-पुनर्दर्शनस्पर्शनसम्भाषणादिभिर्विशेषेण परिज्ञातत्वात् उद्गाढम् अतिप्रौढम् अनुरागस्य उदयः उद्गमो यासु ताः तथाभूताः, निसर्गमधुराः स्वभावमधुराः, कुम्भजस्य मनोहरदर्शनशालिन्या मान्यया ताः पूर्वानुभूताः चेष्टाः भ्रूनासिकाग्रकटाक्षविक्षेपादिलक्षणाः अपि भवेयुः पुनरपि भूयासुरित्याशंसया लिङ्। यासु चेष्टासु आशंसया आशंसामात्रेण कल्पितासु निर्मितासु एवमन्या कटाक्षविक्षेपादिकमनुभवेयमिति मदन्यभावोपनीतासु अपि का कथा यथार्थरूपासु विषयेष्वित्यर्थः। यस्मात् तत्क्षणात् सद्यस्तत्क्षणादित्यर्थः, बाह्यकरणानां बहिरिन्द्रियाणां चक्षुरादीनां ("करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि" इत्यमरः)। यो व्यापारः रूपादिस्वस्वविषय-ग्रहणशक्तिः तं रोद्धुं आच्छादयितुं शीलं यस्य सः तथाभूतः, सान्द्रः घनतीव गाढः आनन्दः सुखं एव स आनन्दसान्द्रः (अग्न्याहितादीनीति सान्द्रशब्दस्य परनिपातः)। अन्तःकरणस्य चित्तस्य लयः लीनत्वं तदेकनिष्ठत्वमिति यावत्, भवति जायते।

कन्दर्पाभासोपनीतासु अपि यासु मान्यया विभावादिचेष्टासु चित्तस्य तत्क्षणात् तन्मयता जायते इति चित्तसम्बन्धविरहेण तदनन्तरं चक्षुरादिबहिरिन्द्रियैः सन्निकृष्टस्यापि विषयस्य ग्रहणं न भवति, परन्तु केवलमनिर्वचनीयः कश्चित् अविच्छिन्न आनन्द एव उत्पद्यते स्वभाव-रमणीयास्त्वेता यदि यथार्थतो लभ्येरंस्तदा कीदृगानन्दसागरे चिरनिमग्नः स्यामिति कथमपि वक्तुं न प्रभवत इति तादृशाः सर्वदैव प्रार्थनीया इति भावार्थः।

अत्र प्रेमार्द्रा इत्यादिभिः साभिप्रायविशेषणैः परिकरः, कल्पनोपनीतास्वपि चेष्टासु आनन्दातिशयो जायते इति यथार्थरूपासु चेष्टासु ततोऽप्यधिकतमानन्दोदयो भवेदित्यर्थ-स्याक्षेपः प्रायतया अर्थापत्तिरलङ्कार इत्यनयोरङ्गाङ्गिभावेन सङ्करः। शार्दूलविक्रीडितं वृत्तम्॥

---

(১৪।১৬) যাহা। (প্রার্থনার সহিত) অনুরাগের উদ্রেকে মদন প্রেমস্পর্শী ও পরিচয়বশতঃ ক্রমশঃ গাঢ় অনুরাগযুক্ত এবং স্বভাবরমণীয় মনোহরদর্শনা মানভীর কটাক্ষবিক্ষেপাদি সেই সেই চেষ্টাগুলি গাঢ় প্রার্থনাবশতঃ কল্পিত হইলেও কল্পনাকালেই চক্ষুরাদি বাহ্যেন্দ্রিয়গণের স্ব স্ব বিষয় গ্রহণশক্তির নিবৃত্তি-কারক ও অতিশয় আনন্দবর্দ্ধক অন্তঃকরণের তন্ময়ত্ব জন্মিয়া থাকে।

---

* क्वचित् पुस्तके "आनन्दसान्द्रोदय" इति पाठभेदः।

किञ्च,—अतिमुक्तमदुग्रथितकेशरावली-
सततधिवाससुभगार्पितस्तनम् ।
अपि कर्णजाहविनिवेशिताननः
प्रियया तदङ्गपरिरब्धिमाप्नुयाम् ॥ (१७)

अथवा,—दूरे तावदेतत्, इदमेव प्रार्थये । (१८)

(१७) "चेष्टाविशेषाः सम्भोगचुम्बनालिङ्गनादयः" इति प्रधानीभूतं चुम्बनालिङ्गनादिकं प्रार्थयते—किञ्चेति। प्रियया मालत्या ( विनिवेशितेनेति क्रियायाः कर्त्तरि तृतीया )। कर्णजाहे मदीयकर्णमूले ( तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचाविति कर्णशब्दात् जाहच् प्रत्ययः। ) विनिवेशित मुखचुम्बनार्थं निहिते आनने स्वकीये मुखं यस्य सः तादृश. अह अतिमुक्तेन माधवीलतया ( अतिमुक्त, पुण्ड्रक, स्याद्वासन्ती माधवीलते"त्यमरः )। तदात्मक-सूत्रेणेत्यर्थं, मदुग्रथिता कामदेवायतनगतेन मया विरचिता ( अथवा मुक्ता मुक्तामाला अति-क्रान्ता अतिमुक्तेत्यपि केशरावलीविशेषणं मद्विरचनादरात् मुक्तामाला विहायापि मालत्या कण्ठे ग्रहीतेति तस्याः मुक्तातिक्रमो युक्त )। या केशरावली बकुलपुष्पमाला तस्याः सततधिवासेन अनवरतावस्थापनेन सुभग रमणीय यथा स्यात्तथा अर्पितौ मदीयोरसि स्थापितौ स्तनौ यस्मिन् तद्यथा स्यात्तथा ( परिरब्धिक्रियाविशेषणं )। तस्या मालत्या अङ्गे परिरब्धिं तदीयाङ्गेन सह मदीयाङ्गस्य विनिमयं परस्पराङ्गाधीनमालिङ्गनमिति यावत्, अपि प्राप्नुयाम् किं लभेय ? तादृशालिङ्गनलाभ एव सर्व्वथा जीवनस्य सार्थकता भवेदिति भाव.। क्वचित् पुस्तके "अविमुक्ते"ति पाठभेदः, तथात्वे न विमुक्ता मद्विरचनादरात् कदाचिदपि न परित्यक्तेत्यर्थं, पर्य्यवसति स न समीचीन., तथाच सति अविमुक्तेनैव सततधिवासपदवैयर्थ्यापत्तेरिति भावुकैर्विभावनीयम् ।

अत्र समेन अङ्गेन अङ्गविनिमयरूपा परिवृत्तिरलङ्कार, तल्लक्षणं यथा दर्पणे—"परिवृत्ति-र्विनिमयः समन्यूनाधिकैर्भवेत्"। मञ्जुभाषिणीवृत्तम् ॥

(१८) तदालिङ्गनस्य सर्व्वथा दुर्लभत्वमाशङ्क्याह—अथवेति। एतत् तदालिङ्गनलाभरूपं

(১৭) প্রিয়তমা তাহার মুখখানি আমার কর্ণমূলে স্থাপন করিলে আমি তাহার অঙ্গের সহিত আমার অঙ্গের বিনিময় ( অর্থাৎ গাঢ় আলিঙ্গন ) লাভ করিতে পারিব কি ? যেই অঙ্গবিনিময়ে মাধবীলতাদ্বারা আমার গ্রথিত বকুল মালার সতত বসতি বশতঃ মধুর ভাবে প্রিয়তমা তাহার স্তনযুগল আমার বক্ষে স্থাপিত করিবে।

(১৮) আমার এতাদৃশ আলিঙ্গন লাভ ত দূরের কথা, ইহাই কেবল আমি প্রার্থনা করি।

सम्भूयेव सुखानि चेतसि परं भूमानमातन्वते,
यत्रालोकपथावतारिणि रतिं प्रस्तौति नेत्रोत्सवः।
यद्वालेन्दुकलोच्चयादवचितैः सारैरिवोत्पादितम्,
तत्पश्येयमनङ्गमङ्गलगृहं भूयोऽपि तस्या मुखम्॥ (१८)

सौभाग्यवत् दूरे आस्तामिति शेषः। मादृशजनदुर्लभस्य तस्य प्रार्थनं सर्वथा निष्फलमेवेति भावः, इदमेव तस्यमास्यसुखावलोकनमात्र, प्रार्थये अन्यत्वा तन्मात्रमेव कामये।

(१८) सम्भूयेति। यत्र प्रियतमायाः मालत्या मुखे आलोकपथावतारिणि दृक्पथवर्त्तिनि सति, सुखानि विश्वस्य सर्व्वं विधानन्दसन्दोहाः, चेतसि मनसि सम्भूयेव राशीभूयेव परं भूमानं परस्पर-मिलनादतीव विशालत्वं आतन्वते विस्तारयन्ति प्राप्नुवन्तीति यावत्। तदा नेत्रयोः नयनयोः उत्सवः, हर्षकारणीभूतव्यापारविशेषः, ("उत्सवे हर्षमित्येष उत्सवः परिकीर्त्तितः" इति भरतः)। रतिं तत्प्रार्थनात्मिका इच्छा ("रतिरिच्छा भवेद्यूनोरुभयप्रार्थनात्मिके"ति च भरतः), प्रस्तौति जनयति। तथा यत् मुखं इन्दीवरदृशः निष्कलङ्कसुधाकरस्येत्यर्थः, (बालेति विशेषण-मेव कलङ्कशून्यावस्थाद्योतनार्थं)। कलोच्चयात् कलासमूहात् अवचितैः, आहृतैः कलोदयादिति पाठे तु ल्यब्लोपे पञ्चमी—तथा च प्रतिपच्चन्द्रकलोदयं आरभ्य अवचितैरित्यर्थः)। सारैः स्थिरांशैः श्रेष्ठांशैरिति यावत्, उत्पादितमिव विरिञ्चिना विरचितमिव। अनङ्गस्य कामदेवस्य मङ्गलगृहं कल्याणालय तदवलम्बनेनैव कामदेवस्य त्रिभुवनविजयरूपमङ्गललाभादिति भावः, तस्याः प्रियतमायाः मालत्याः तन्मुखं भूयः पुनरपि पश्येयं अवलोकयेयम्। अन्यत्तावत्सम्भवात्तद्दर्शन-मात्रमेवास्तु तेनैवाप्नो चरितार्थोऽहं भविष्यामीति भावः।

अत्र सम्भूयेव इत्यत्र उत्पादितमिवेत्यत्र च वाच्यक्रियोत्प्रेक्षा, प्रसिद्धसुखसाधनाभावेऽपि कारणान्तरेण सकलसुखोत्पत्तेर्विभावना, अनङ्गमङ्गलगृहमित्यत्र निरङ्गकेवलरूपकं छेकानु-प्रासश्चालङ्कार इति तेषां परस्परनैरपेक्ष्यात् संसृष्टिः। एवं यद्बालेन्दुकलादौ इदं मुखं नेतर-मुखवद्भौतिकं, किन्तु चन्द्रमण्डलसारांशरूपमस्योपादानमित्यपङ्क्ष, कलङ्कशून्यसारांशरचित-त्वादस्य चन्द्रमण्डलाधिक्यप्रतीतेर्व्यतिरेकश्चोत्प्रेक्षामूलको व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिरिति विभावनीयम्। शार्द्दूलविक्रीडितं वृत्तम्। यद्बालेन्दुकलेत्यादि चरणस्यानुरूपं श्लोकार्द्धं यथा नैषधे—"हृतसारमिवेन्दुमण्डलं दमयन्तीवदनाय वेधसा"।

"प्रेमार्द्रा" इत्यादि श्लोकत्रये आशंसा नाम नाट्यालङ्कारः। यथोक्तं दर्पणे—"आशंसनं स्यादाशंसा"। इति॥

১৯। সেই মুখ দৃষ্টিগোচর হইলেই জগতের সর্ববিধ সুখ চিত্তে মিলিত

यत्सत्यमधुना सन्दर्शनं नेति स्वल्पोऽपि विशेषः * ।

मम हि सम्प्रति सातिशयप्रत्यक्षोपलम्भसम्भावितात्मजन्मनः संस्कारस्यानवरतप्रबोधात्प्रतीयमानस्तद्विसदृशप्रत्ययान्तरैः अतिरस्कृतप्रवाहः, प्रियतमास्मृतिप्रत्ययोत्पत्तिसन्तानः तन्मयमिव करोति अन्तर्वृत्तिसारूप्यतश्चैतन्यम् तथाहि—(२०)

(२०) अथ पूर्व्वविलोकनोद्भूतभावनाप्रकर्षवशादनवरतमीक्ष्यमाणायां मालत्यां किमिति पुनस्तद्दर्शने प्रार्थनं इत्याशङ्क्य भावनाजनितसन्दर्शनात् प्रार्थनीयसन्दर्शनस्य विशेषं प्रतिपादयति—यदिति। यत् अधुना सन्दर्शनं इदानीन्तनप्रियतमाप्रत्यक्षं सत्यं यथार्थं भवतीति शेषः। कल्पनया भ्रमरूपतया प्रतीयमानत्वेऽपि भावनाजन्यत्वेन स्मृतित्वात् पारमार्थिकप्रत्यक्षत्वाभावादिति भावः। इति हेतोः इदानीन्तनसन्दर्शनस्य पारमार्थिकप्रत्यक्षत्वाभावादेतोः स्वल्पोऽपि पारमार्थिकप्रत्यक्षत्वतदभावमात्रकृतोऽपि विशेषः तदानीमिदानीन्तनसन्दर्शनयोर्भेदः अस्तीति शेषः। तथाच विशेषसद्भावादेव प्रियतमागमनादेश पारमार्थिकचाक्षुषप्रत्यक्षं प्रार्थ्यत इत्यर्थः। दर्शितपारमार्थिकप्रत्यक्षत्वतदभावकृतविशेषातिरिक्तविशेषव्यवच्छेदार्थं मालतीस्मृत्यतिशयं प्रदर्शयितुमाह—ममेति। सातिशयः दृढतरसंस्कारोत्पादनसामर्थ्यरूपातिशयेन सहितः उपेक्षानात्मक इति यावत्, (उपेक्षात्मकज्ञानेन संस्कारानुदयात् तद्व्यावृत्त्यर्थं विशेषणमिदम्)। यः प्रत्यक्षः पूर्व्वोत्पन्नः उपलम्भः ज्ञानं मदनोद्यानादिस्थानावधि सम्भावितं आहितः स्वस्य जन्म उत्पत्तिर्यस्य तादृशस्य संस्कारस्य भावनाख्यसंस्कारविशेषस्य अनवरतप्रबोधात् उद्बोधकसमवधानेन निरन्तरोद्बोधात् सम्बन्धात् उद्बोधककार्य्योत्पादनोन्मुखत्वादित्यर्थः। (संस्कारस्य चरमफलनाश्यत्वमित्यतदसुखं

हइयाइ येन विशाल विभूति लाभ करे ও নেত্রোৎসব তাহার প্রার্থনাতিলাষ জন্মায়। এবং সেই নিষ্কলঙ্ক চন্দ্রকলাসমূহ হইতে সমাহৃত সারাংশদ্বারাই যেন বিধাতা নির্ম্মিত করিয়াছেন, কামদেবের মঙ্গলগৃহস্বরূপ প্রিয়তমার সেই মুখখানিই যেন পুনরায় দেখিতে পাই।

(২০) যেহেতু বর্ত্তমান মালতীর প্রত্যক্ষ যথার্থ নহে, অতএব অল্প হইলেও মদনোদ্যানাদিজাত প্রত্যক্ষ ও বর্ত্তমান প্রত্যক্ষে বৈলক্ষণ্য আছে। সম্প্রতি দৃঢ়তর সংস্কারজননসমর্থ পূর্ব্বতন প্রত্যক্ষজন্য সংস্কারের অনবরত উদ্বোধবশতঃ ধারাবাহিকরূপে প্রবর্ত্তমান ও মালতী ভিন্নবিষয়ক প্রত্যয়ান্তরদ্বারা অনন্তরিত

* "यत् सत्यमधुना तत्सन्दर्शनेनातिस्वल्पोऽपि न विशेषः" इति क्वचित् पाठः।

लीनेव प्रतिबिम्बितेव लिखितेवोत्कीर्णरूपेव च ।
प्रत्युप्तेव च वज्रलेपघटितेवान्तर्निखातेव च ।

---

नात एकेन संस्कारेण धारावाहिकस्मरणानुपपत्तिरिति मन्तव्यम्) प्रतायमानः विस्तृति-मापद्यमानः धारावाहिकत्वेन सुदीर्घतया प्रतीयमान इति यावत्, तद्विसदृशप्रत्ययान्तरैः मालती-स्मरणविजातीयैः घटादिज्ञानैः अतिरस्कृतः अनन्तरितः प्रवाहः धारावाहिकत्वं यस्य तादृशः प्रियतमाया मालत्याः स्मृतिप्रत्ययोत्पत्तिसन्तानः स्मरणात्मकज्ञानोत्पादसमूहः (कर्त्ता) अन्त-र्वृत्तेः मालत्याकारपरिणतबुद्धिवृत्तेः तादात्म्यतः अभेदोपचारात् मम चैतन्यं चित्स्वरूप-मात्मानं तन्मयमिव मालतीमयमिव तदाकारापन्नमिवेति यावत् करोति। तथाच पारमार्थिक-प्रत्यक्षत्वाभावातिरिक्तविशेषाभावात् तदभावकृतविशेषसत्त्वाच्च स्वप्नोऽपीति यदुक्तं तद्युक्तमिति मन्तव्यम्।

सांख्यमते प्रत्यक्षादौ सम्बन्धार्थे बुद्धिवृत्तिर्विषयाकारपरिणता भवति, विषयाकारपरिणता-याश्च तस्याश्चिदात्मन्यभेदोपचारो भवति, न तु वस्तुगत्याऽभेदः, "वृत्तिः सम्बन्धार्थं सर्पती"ति सांख्यसूत्रं च "वृत्तिसारूप्यमितरत्रे"ति पातञ्जलसूत्रेण च तथैव प्रतिपादनात्। एवञ्च मालत्या-कारपरिणताया बुद्धिवृत्तेः चिदात्मनः भेदोपचारेऽपि वस्तुगत्या तदभेदाभावात् तन्मयमिवेत्येव-शब्दप्रयोगः।

यथा मदनोद्याने प्रियतमाया मालत्याः प्रत्यक्षं तदाकारतापन्नाया बुद्धिवृत्तेरभेदोपचारेण मम चिदात्मानं मालतीमयमिवाकरोत्, तथा तत्प्रत्यक्षजनितस्य दृढतरभावनाख्यसंस्कारस्या-नवरतोद्बोधकसमवधानेन सञ्जनित इदानीन्तनो मालतीविषयकधारावाहिकस्मरणसमूहोऽपि मालत्याकारतापन्नबुद्धिवृत्तेरभेदोपचारेण मम चिदात्मानं मालतीमयमिव करोतीति मदनोद्यान-सम्बद्धप्रत्यक्षस्य इदानीन्तनदर्शनस्य पारमार्थिकप्रत्यक्षत्वाभावातिरिक्तविशेषाभावेन स्वप्न एव तत्-कृतविशेष इति सरलार्थः।

एतेन भवभूतेर्दर्शनशास्त्राभिज्ञत्वं प्रतिपाद्यते। यदिच नाटकप्रणेतुः सांख्यादिशास्त्रा-भिज्ञत्वं नोपयोगितामावहतीति "यद्वेदाध्ययन"मित्यादि सूत्रधारवचसा भवभूतिना स्वयमेव प्रकटी-कृतमिति तत्प्रतिपादनमफलं, तथापि यस्य यदभिज्ञत्वं वर्त्तते, तत्तत्कार्ये तस्य तदनिच्छयापि स्फुरतीति दर्शनशास्त्रोदधिविलोडनपरायणस्य भवभूतेर्न विरुद्धमिति मन्तव्यम्।

---

রূপে সমুৎপন্ন প্রিয়তমাবিষয়ক স্মরণাত্মক জ্ঞানোৎপত্তিসমূহ আমার চিদাত্মাকে মালত্যাকারে পরিণত বুদ্ধি বৃত্তির অভেদোপচার দ্বারা যেন মালতীময় করিতেছে। তাহার প্রমাণ দেখ—।

( नेपथ्ये कलकलः ) ( २२ )

माध । ( आकर्ण्य ) अहो सम्प्रति इतस्ततः प्रवर्त्तमानकौणपनिकरस्य महतो श्मशानवाटस्य रौद्रता । अत्र हि—( २३ )

पर्य्यन्तप्रतिरोधमेदुरघनस्त्यानं चिताज्योतिषा
मौज्ज्वल्यं परभागतः प्रकटयत्याभोगभीमं तमः ।

---

मालतीविषयिन्याः स्मृतेः सन्ततिः प्रवाहः एव तन्तुजालं सूत्रसमूहः तेन निविड़ं घनं यथा स्यात्तथा स्यूतेव सीवन व्यापादितेव लग्ना निरन्तरानवरतम् सक्ता इति सर्व्वत्रान्वयः । तथाचोक्तं तन्मयत्वं युक्तमेवेति भावः ।

अत्र प्रकृतायां मालत्यां इवशब्देन उत्प्रेक्षाद्यनेकक्रियावत्त्वसम्भावनाद्वाभ्यां क्रियोत्प्रेक्षामाला, विशेषणानां साभिप्रायसूचकत्वात् परिकरः, चिन्तासन्ततितन्तुजालेत्यत्र निरङ्गरूपकं इत्यनुप्रासस्यान्तद्वारा इति तेषामङ्गाङ्गिभावेन सङ्करः । शार्द्दूलविक्रीड़ितं वृत्तम् ।

( २२ ) नेपथ्य इति, कलकलः अव्यक्तशब्दः पिशाचानामुत्पन्न इति शेषः ॥

( २३ ) माध इति, इतस्ततः—चतुर्द्दिक्षु प्रवर्त्तमानः विद्यमानः कौणपनिकरः राक्षसानां समूहः यत्र तादृशस्य श्मशानवाटस्य श्मशानदेशस्य रौद्रता भीषणता महती आतिशय्यं,मास। हि यस्मात् अत्र श्मशानवाटे ।

( २४ ) रौद्रत्वमेव समर्थयितुमाह—पर्य्यन्तेति । पर्य्यन्ते चितानलप्रान्तदेशे प्रतिरोधि-

---

আমার চিত্তে সুদৃঢ়রূপে মালতীকে সংযোজিত করিয়া রাখিয়াছে। অথবা আমার চিত্তমধ্যে তুর্গর্ভে নিহিত ছাব একেবারে পুতিয়া রাখিয়াছে। অথবা কাষ্ঠদ্বয় যেমন তীক্ষ্ণাগ্রে লৌহ বিদ্ধ করিয়া সংযোজিত করে, সেইরূপ কামদেবের পাঁচটি বাণদ্বারা কামদেব মালতীকে আমার চিত্তে বিদ্ধ করিয়া রাখিয়াছে। অথবা চিন্তাসমূহরূপ সূত্রসমূহ দ্বারা মালতীকে আমার চিত্তে সেলাই করিয়া সংলগ্ন রাখিয়াছে।

( ২২ ) ( রঙ্গবহির্ভাগে পিশাচদিগের অব্যক্ত শব্দ )

( ২৩ ) মাধ। ( শ্রবণ করিয়া ) অহো সম্প্রতি এই শ্মশানপ্রদেশে চতুর্দ্দিকে রাক্ষসগণ বিদ্যমান, সুতরাং ইহার অতিশয় ভীষণতা। যে হেতু এই শ্মশানক্ষেত্রে—

( ২৪ ) চিতানলের প্রান্ত দেশে ও দৃষ্টি নিরোধকারি মিগ্ধ গাঢ় ও বৃদ্ধি

संसक्ताकुलकेलयः किलकिलाकोलाहलैः सम्मदा-
दुत्तालाः कटपूतनाः सन्ततयः सांराविणं कुर्व्वते ॥ (२४)

---

इति निरोधयन्तं चितानलप्रान्तभूमिमध्यासीन विद्यमानमित्यर्थः। मेदुरं स्निग्धं (मान्द्रे स्निग्धे च मेदुरं इत्यमरः) घनं सान्द्रं ध्वान्तं इति यत् (विशेषणद्वयोः कर्म्मधारयसमासेऽ-निष्टत्वात्कोलाहलस्य विशेषणविवक्षया क्रमशः इयोरर्थः षष्ठीः कर्म्मधारयः कर्त्तव्यः) एवं ध्वान्तेन विस्तारेण बहुस्थानव्यापितिमिरत्वेनेति यावत्, भीमं भीतिप्रदं तमः अन्धकारः (कर्त्तृ) परभागस्य वर्णोत्कर्षेण चिताज्योतिषां चितानलानां भीष्मत्वं दीप्तिं प्रकटयति अतिशयेन विकाशयति। चितापार्श्ववर्त्तिनां दीप्तेः गाढत्वादन्धकार एव तदातिशय्यं भवतीति स्वभावसिद्धमनुसन्धेयम्। तथा अनवरतं अविच्छेदेन संसक्ताः आकुलाः त्वरायुक्ताः केलयः क्रीडाः येषां ते तथाभूताः, श्मशाने तामसप्रकृतयः येषां ते तादृशाः इति यावत्, ते कटाना शवानां पूतं गन्धिनं मलिनतमाश्च इति यावत्, भावानि खादकाः इति कटपूतनाः (पृषोदरादित्वात् साधुः) पिशाचविशेषाः सन्ततयः समूहाः श्मशानवासिशृगालादयश्च इत्यर्थः, सम्मदात् गाढान्ध-कारोपस्थितिनिबन्धनानन्दात् किलकिलाकोलाहलैः किलकिलेत्याकारकाव्यक्तशब्दैः सांराविणं सर्व्वतो व्याप्तनादं (अभिविधौ भावे इनुण् इतीनुणन्तात् स्वार्थे अण्) कुर्व्वते। अस्मादेव श्मशानस्य अत्यन्तभीषणत्वमिति भावः।

अथ रौद्ररसः, तल्लक्षणं यथा भरते—

"इति रौद्रो रसो दृष्टो रौद्रैश्चेष्टितैः।
शस्त्रप्रहारभूयिष्ठमुग्रकर्म्मक्रियात्मकः इति॥"

तथा तमसः प्रकाशवत्त्वविरुद्धक्रियोत्पादकत्वेऽपि विषमः हतीयचरणे शब्दानुप्रासत्वानुसारः इति तयोः सङ्करः।

अत्र कोलाहलसांराविणयोरुभयोः शब्दमात्रार्थत्वेऽपि विशेषणसामान्यभावेनोपादाना-त्पुनरुक्तवदाभास इति विभावनीयम्। शार्द्दूलविक्रीडितं वृत्तम्॥

---

প্রান্ত এবং বহুস্থানব্যাপিত্বনিবন্ধন অতিভীতিপ্রদ অন্ধকার বর্ণের উৎকর্ষতা-বশতঃ চিতানলের দীপ্তি অতিশয় প্রকাশিত করিতেছে। এবং যাহাদের ত্বরা-যুক্ত ক্রীড়া অবিচ্ছেদেই সংলগ্ন থাকে, তাদৃশ পিশাচগণ ও শ্মশানবাসি শৃগালাদি প্রাণিসমূহ অন্ধকারাগমন জনিত আনন্দে উৎফুল্ল হইয়া কিলকিলাকার কোলা-হল দ্বারা দিগন্তব্যাপী শব্দ করিতেছে। (অতএব এই শ্মশানপ্রদেশ অতি ভীষণ)

तदुच्चैराघोषयामि—भो भोः श्मशाननिकेतनाः कटपूतनाः। (२५)

अशस्त्रपूतमव्याजं पुरुषाङ्गोपकल्पितम्।
विक्रीयते महामांसं गृह्यतां गृह्यतामिदम्॥ (२६)

(नेपथ्ये पुनः कलकलः)

माध। कथमाघोषणानन्तरमेव सर्व्वतः समुच्चलदुत्तालवेताल-

---

(२५) तदिति, तस्मात् पिशाचानां सानन्दागमनात् उच्चैराघोषयामि मांसविक्रयवार्त्तामुच्चैराहूय विज्ञापयामीत्यर्थः, अनुच्चैराघोषणे किलकिला कोलाहलसमाकूलत्वादेव नाकर्णयेयुरिति भावः। भो भो इति ससम्भ्रमामन्त्रणे। श्मशानं निकेतनं निवासस्थानं येषां ते श्मशाननिकेतनाः।

(२६) अशस्त्रेति, शस्त्रेण यद् आघाताघातेन पूतं पवित्रं न भवतीत्यशास्त्रपूतं, (शस्त्रपूतमांसस्य पवित्रत्वेन पिशाचाणामग्राह्यत्वात् तदग्राह्यत्वेन प्रीत्युत्पादनाय विशेषणमिदम्) न विद्यते व्याजः कापट्यं यत्र तदव्याजं (यथार्थविक्रयार्थमेवानीतं न तु तत् प्रलोभनेन समीपमानीय युष्मान् प्रहर्त्तुमानीतमिति भावः) अथवा "इष्टसिद्धिं फलीकृत्य साहसाद्यदुपार्जितं। अशस्त्रपूतं निर्व्याजमेतन्मांसं विदुर्बुधाः" इत्युक्तलक्षणम्, पुरुषाङ्गेन पुंशरीरस्यैवावयवविशेषेण उपकल्पितं सम्पादितं ("स्त्रियश्चतुष्पदे श्रेष्ठाः पुरुषा द्विपदे तथा" इत्यादि शास्त्रात् उत्कृष्टतारता द्योतनाय विशेषणमिदम्) इदं मदीयहस्तस्थितं महामांसं नरमांसं मया विक्रीयते, इष्टविशेषसाधनाङ्गीकाररूपमूल्येनेति शेषः। गृह्यतां गृह्यतां तन्मूल्येन तद्गीयतां नीयताम्। (आन्तरातिशयद्योतनार्था द्विरुक्तिः)।

पुरुषाङ्गपदस्योपस्थपरतया एव लोकव्यवहारसिद्धत्वाद्व्रीडाव्यञ्जकत्वेनात "अश्लीलता"-दोषः, साभिप्रायविशेषणघटितत्वात् परिकरालङ्कारः।

---

(২৫) অতএব আমি উচ্চৈঃস্বরে আহ্বান করিয়া মাংসবিক্রয়ের বার্ত্তা বিজ্ঞাপিত করি। হে শ্মশানবাসি পিশাচগণ!

(২৬) আমি (যৎ কিঞ্চিৎ ইষ্টসাধনাঙ্গীকাররূপ মূল্যে) আমার এই হস্তস্থিত মহামাংস বিক্রয় করিতেছি, তোমরা গ্রহণ কর, গ্রহণ কর। আমি যে মাংস বিক্রয় করিতেছি, তাহা শস্ত্রপূত নহে, এবং কোনরূপ কপটতাপূর্ণ নহে, পরন্তু পুরুষের শরীর সম্পাদিত। (সুতরাং তোমাদের গ্রহণে কোনও আপত্তির কারণ নাই

मुखरतुमुलाव्यक्तकलकलाकुलः प्रचलित इवाविर्भवद्भूतसङ्कटः श्मशानवाटः। आश्चर्यम्। ( २७ )

कर्णाभ्यर्णविदीर्णसृक्कविकटव्यादानदीप्ताग्निभिः
दंष्ट्राकोटिविसङ्कटैरित इतो धावद्भिराकीर्यते।
विद्युत्पुञ्जनिकाशकेशनयनभ्रूश्मश्रुजालैर्नभो
लक्ष्यालक्ष्यविशुष्कदीर्घवपुषामुल्कामुखानां मुखैः॥ (२८)

---

( २७ ) मुखरेति, मुखरेण, शब्दायमानेन; विततेन, अव्यक्तेन; विकराला ये वेताला, भूताधिष्ठितशवाः तेषां तेन मुखरेण तुमुलेनेति यावत्, तुमुलेन सङ्कीर्णेन अव्यक्तेन अस्फुटं कथिताव्यञ्जनेन च कलकलेन कोलाहलेन आकुलः। आविर्भवद्भिः तदानीमेव देशान्तरादुपस्थितैः भूतैः सङ्कटः सङ्कीर्णः श्मशानवाटः श्मशानप्रदेशः प्रचलित इव कम्पमान इव मया सम्भाव्यते इति शेषः।

( २८ ) श्लोकमाश्चर्यं समर्थयितुमाह—कर्णेति, कर्णयोरभ्यर्णं समीपं यावत् विदीर्णाभ्यां विपाटिताभ्यां सृक्कभ्यां ओष्ठप्रान्ताभ्यां यत् विकटव्यादानं भयङ्करमुखकुहरप्रकटनं तेन दीप्ताः प्रकाशिताः अग्नयः यैस्तैः दंष्ट्राणां दन्तानां कोटिभिः अग्रैः विसङ्कटैः भीषणैः इत इतो धावद्भिः समन्ततो भ्रमद्भिः ( मुखगतोल्काविशेषैरिमुं खांशमेव प्रधानतो दर्शनादप्राधान्यमुक्तम् ) तथा विद्युत्पुञ्जनिकाशानि सौदामिनीसमूहतुल्यपिङ्गलवर्णानि केशनयनभ्रूश्मश्रुजालानि यत्र तादृशैः लक्ष्याणि वदनव्यादानकाले वदनमध्यागतोल्काप्रकाशैर्दृश्यानि अलक्ष्याणि, कुक्षसङ्कोचकाले तदुल्काप्रकाशाभावादन्धकारावृतत्वेनादृश्यानि, विशुष्काणि—अतिशयकृशानि, दीर्घाणि च वपूंषि शरीराणि येषां तथाभूतानाम् उल्कामुखानां यथार्थनामकपिशाचविशेषाणां मुखैः वदनैः नभः आकाशं आकीर्यते व्याप्यते। तथाच एवंविधानीकदर्शनमतीवाश्चर्यकरमिति भावः।

---

( রঙ্গের বহির্ভাগে পুনরায় কোলাহল )

( ২৭ ) মাধ। একি আমি আহ্বান করিয়া মাংসবিক্রয়ের কথা বলার পরেই কেন সর্বত্র ধাবমান ভূতাধিষ্ঠিত শবগণের তুমুল ও অব্যক্ত কোলাহলে সমাকুল এবং দেশান্তর হইতে তৎকালোপস্থিত ভূতগণে সমাচ্ছন্ন এই শ্মশান-প্রদেশ যেন কম্পিত বলিয়া মনে হইতেছে। আরও আশ্চর্য্য এই যে—

( ২৮ ) কর্ণ সমীপ পর্য্যন্ত বিপাটিত ওষ্ঠপ্রান্ত দ্বারা বিকট ব্যাদান করিলে যাহাতে অগ্নি প্রদীপ্ত হয়, যাহাদের কেশ,নয়ন,ভ্রূ ও শ্মশ্রুজাল বিদ্যুৎসমূহের ন্যায়

अपिच—

एतत् पूतनचक्रमक्रमकृतग्रासार्द्धमुक्तैर्वृका-
नुत्पुष्यत्परितो नृमांसविघसैराघर्घरं क्रन्दतः ।
खर्ज्जूरद्रुमदघ्नजङ्घमसितत्वङ्नद्धविष्वक्तत-
स्नायुग्रन्थिघनास्थिपञ्जरजरत्कङ्कालमालोक्यते ॥ (२८)

---

अत्र स्वभावोक्तिरलङ्कारः, स च विद्युत्पुञ्जनिकाशेयुपमया प्रथमद्वितीयचरणयोर्मूर्व्वानु-प्रासेन तृतीयचरणस्थच्छेकानुप्रासेन च सङ्कीर्य्यते। शार्द्दूलविक्रीडितं वृत्तम् ॥

(२८) एतदिति, परितः सर्व्वतः आघर्घरं ईषत् घर्घरशब्दाकारं यथा स्यात्तथा क्रन्दतः आक्रन्दनं कुर्व्वतः वृकान् कोकान् (कोक ईहामृगो वृक इत्यमरः) अक्रमेण (अति-बुभुक्षया प्रतिबन्धशङ्कया वा) यौगपद्येन कृतात् ग्रासात् कवलात् अर्द्धमुक्तैः आधिक्येन वदन-विवरे स्थानमप्राप्य भूमौ पतितार्द्धैः नृमांसविघसैः नरमांसस्य भुक्तावशेषैः (विघसो यज्ञशेषभोजनशेषयोरित्यमरः) उत्पुष्यत् पुष्टान् कुर्व्वत्। खर्ज्जूरद्रुमदघ्ना, खर्ज्जूरवृक्षप्रमाणा (एतेन जङ्घाया अस्थिशेषितकर्कशत्वादीनि सूचितानि) जङ्घा यस्य तादृशम्। तथा असितत्वचा-कृष्णवर्णचर्म्मणा नद्धाः बद्धाः आच्छादिता इति यावत्, विष्वक् सर्व्वतो व्याताय ये स्नायुग्रन्थयः शिराबन्धनानि तत्र घनानि निविडानि रक्तमांसाद्यभावतया पुञ्जीभूतानीति यावत्, अस्थि-पञ्जराणि पञ्जरवत्प्रतीयमानानि अस्थीनि येषु तादृशाः जरन्तः दीर्घजीवित्वात् जीर्णाः कङ्कालाः सर्व्वशरीरास्थीनि (स्यात् शरीरास्थिकङ्काल इत्यमरः) यस्य तादृशं एतत् पूतनचक्रं पिशाच-विशेषसमूहः आलोक्यते मया दृश्यते।

---

পিঙ্গলবর্ণ মস্তকমণ্ডলাকুল ও ইতস্ততঃ ভ্রমণশীল উল্কামুখ নামক পিশাচদিগের তাদৃশ মুখমণ্ডলদ্বারা আকাশ পরিব্যাপ্ত হইতেছে। এবং ঐ পিশাচদিগের অতি দৃশ্য ও দীর্ঘ শরীর মুখব্যাদানকালে উল্কালোকে পরিলক্ষিত হইতেছে ও মুখ-সঙ্কোচকালে অন্ধকারে অদৃশ্য হইতেছে।

(২৯) যাহারা ঘর্ঘর ইত্যাকার ক্রন্দনশীল বৃকদিগকে অতি বুভুক্ষা বা প্রতিবন্ধকের আশঙ্কা-বশতঃ এককালীকৃত অনেক গ্রাস হইতে (বদনবিবরে স্থান না পাওয়ায়) ভূমিনিপতিত ভুক্তাবশেষ নরমাংস দ্বারা অর্দ্ধ পরিমাণে পুষ্ট করিতেছে, এবং যাহাদের জঙ্ঘাগুলি খর্জ্জুর গাছের তুল্য ও জীর্ণ শরীরের অস্থি কৃষ্ণচর্ম্মাবৃত ও সর্ব্বতোব্যাপ্ত শিরাবন্ধনে পুঞ্জীভূত অস্থিপঞ্জর

(परिक्रम्यावलोक्य च) हन्त ! अति बीभत्समग्रतो वर्त्तते ॥ (३२

उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूत्सेधभूयांसि मांसा-
न्यंसस्फिक्पृष्ठपीठाद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा ।
आर्त्तः पर्य्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्का-
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥ ( ३३ )

---

सदृशीं द्युतिमवगमयत् पिशाचानां चन्दनद्रवाणाञ्च बिम्बप्रतिबिम्बभावं बोधयतीति असम्भव-द्वस्तुसम्बन्धनिदर्शनालङ्कारः । तल्लक्षणं यथा दर्पणे—

"सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित् ।
यत्र बिम्बानुबिम्बत्वं बोधयेत् सा निदर्शना ॥" इति ।

पुष्पिताग्रा वृत्तम् ॥

( ३२ ) परिक्रम्येति, अतिबीभत्सं अतिघृणाकरं पिशाचानामनुष्ठानमिति शेषः ।

( ३३ ) उत्कृत्येति, आर्त्तः क्षुधादिना पीडितः पर्य्यस्ते अन्यप्रेतागमनानागमनदर्शनाय समन्तात् परिचालिते नेत्रे लोचने यस्य तादृशः ( "आत्तघ्राणान्तनेत्र" इति पाठे तु आत्तानि तदन्तर्गतमांसखण्डग्रहणार्थमाकृष्टानि घ्राणान्तनेत्राणि नासापुटनेत्रकोटराणि येन तथाभूत इत्यर्थः ) तथा प्रकटिताः मुखव्यादानेन विकाशं प्रापिताः दशनाः दन्ताः येन तादृशः प्रेतरङ्कः दीनः कश्चित् पिशाचविशेषः ( रङ्कः कृपणमन्दयोरिति मेदिनी ) प्रथममादौ कृत्तिं कस्यचित् मृतस्य त्वचं उत्कृत्य उत्कृत्य छित्वा छित्वा अथ अनन्तरं पृथुना महता उत्सेधेन शरीरोन्नत्या ( उत्सेधः कायउन्नतिरित्यमरः ) ( "पृथूच्छोफ" इतिपाठे तु महदुत्पन्नशोथरोगेणेत्यर्थः ) भूयांसि प्रचुरतराणि, उग्रा उत्कटा पूतिः दुर्गन्धो येषु तथाभूतानि, अंसौ स्कन्धौ स्फिचौ

---

( ৩২ ) ( পরিক্রমণ ও অবলোকন করিয়া ) আঃ ! অতি ঘৃণাকর অনুষ্ঠান অগ্রে বর্ত্তমান ।

( ৩৩ ) ক্ষুধায় পীড়িত ও ( অন্য প্রেত আসিতেছে কিনা তাহা দেখিবার জন্য ) ইতস্তত বিক্ষিপ্তনেত্র অতি দীনভাবাপন্ন কোন এক পিশাচ দন্ত বিকাশিত করিয়া প্রথমে ( শবদেহের ) চর্ম্ম ছিন্নবিচ্ছিন্ন করিয়া অনন্তর শরীরের উন্নতাবশতঃ অতি প্রচুরতর ও অতি দুর্গন্ধ স্কন্ধটিহ মাংসপিণ্ড ও পীঠাকার পৃষ্ঠ প্রভৃতি মাংসবহুল অবয়বের অনায়াসলভ্য মাংসগুলি খাইয়া নিজের ক্রোড়দেশে আহৃত নরকপাল হইতে আকর্ষণ করিয়া অস্থিলগ্ন ও নিম্নোন্নত স্থানস্থিত মাংসগুলি অব্যগ্রভাবে খাইতেছে ।

( विहस्य ) अहो ! प्रादोषिकः प्रमोदः पिशाचाङ्गनानाम् । तथाहि—(३५)

अन्त्रैः कल्पितमङ्गलप्रतिसराः स्त्रीहस्तरक्तोत्पल-
व्यक्तोत्तंसभृतः पिनह्य सहसा हृत्पुण्डरीकस्रजः ।

---

चितानलस्य मन्दगुलादेन स्त्रियन्ति चरन्मज्जानि अस्थीनि येषां तान्, क्वथनेन पाकविशेषेण परिणतत् सर्व्वतः संभ्रमान् छेदः वसामांसजस्नेहविशेष इति यावत्, येभ्यः तान्, तथा संसक्त भान् दह्यमानलेन संलग्नधूमान् अपि ( न केवलं अस्य लग्नधूमानित्यपेरर्थः ) प्रेतकायान् मृतशरीराणि, कृत्वा आहृत्य, उत्पक्केन अतिशयपाकेन (उत्पूर्व्वात् पचधातोर्भावे क्तः) स्रंसि विगलत् मांसं यस्मात् तत् अयत्नतत्बह्निताद्विनेतत्कम्पमानं तदा उभयत ऊर्द्ध्वाधोभागयोर्यौ सन्धी संयोगस्थाने ताभ्यां निर्मुक्तं विश्लिष्टं, नड्वालकं जङ्घाकाण्डं आरात् समीपे (आराद् दूरसमीपयोरित्यमरः) निष्कृष्य शतृप्रेतकायात् पृथक्कृत्य समानीय उदयिनीः तस्मादेव स्रवन्तीः मज्जधाराः अस्थिमध्यस्थितस्नेहविशेषधाराः पिबन्ति ।

अनेन वर्णनेन तदानीं सर्व्वाङ्गदाहस्य चितानलनिर्वापणस्य च व्यवहारः प्रायो नासीदिति प्रतिभाति, अन्यथा एतादृक्शवकायाकर्षणस्यासम्भवापत्तिकत्वादिति विभावनीयं ।

अत्रापि पूर्व्ववदेव वीभत्सो रसः, दुःश्रवत्वञ्च न दोषः । स्वभावोक्तिरलङ्कारः । स्रग्धरा वृत्तम् ॥

( ३५ ) विहस्येति, अहो इत्याश्चर्य्ये, प्रादोषिकः रजनीमुखसमुत्थः प्रमोदः प्रकृष्टो हर्षः ।

( ३६ ) अन्त्रैरिति, अन्त्रैः नाडीविशेषैः ( अन्त्रं पुरीतदित्यमरः ) कल्पिताः रचिताः मङ्गलप्रतिसराः मङ्गलार्थकदलनद्धविवाहकङ्कणानि तद्वत्करसूत्राणि वा ( कङ्कणे करसूत्रे च भवेत् प्रतिसरोऽस्त्रियामिति मेदिनीकारः ) याभिस्ताः, स्त्रीणां मृतावलानाम् हस्ता एव रक्तोत्पलानि तान्येव व्यक्तान् स्पष्टतया अभिव्यक्तान् उत्तंसान् कर्णभूषणानि ( उत्तंसः कर्णपूरे स्यात् शेखरे च वतंसवदिति विश्वः । ) बिभ्रतीति तथोक्ताः, तथा शोषितपङ्काः घनीभूतमृतशरीररक्तानि

---

( ৩৫ ) ( হাস্য করিয়া ) পিশাচাঙ্গনাদিগের প্রদোষকালীন আমোদ কি আশ্চর্য্যজনক ।

( ৩৬ ) যাহারা পুরীতৎ নাড়ী দ্বারা সৌভাগ্যরূপ মঙ্গলের চিহ্ন করসূত্র বা কঙ্কণ রচনা করিয়াছে, ও মৃত স্ত্রীলোকের হস্তরূপ রক্তপদ্ম স্পষ্টরূপে কর্ণভূষণ

एताः शोणितपङ्ककुङ्कुमजुषः सम्भूय कान्तैः पिब-
न्त्यस्थिस्नेहसुराः कपालचषकैः प्रीताः पिशाचाङ्गनाः ॥ (३६)
( परिक्रम्य पुनरशस्त्रपूतमित्यादि पठित्वा ) कथं नामातिभीषण
बिभीषिकाविकारैः झटित्यपक्रान्तं पिशाचैः। अहो! निःसत्त्वता

---

एव कुङ्कुमानि तानि जुषन्ते सेवन्ते इति तथोक्ताः, एताः दृश्यमानाः पिशाचाङ्गनाः हृत्-पङ्कजाकारान्तर्वर्त्तिमांसविशेषा एव पुण्डरीकाणि श्वेतपद्मानि तेषां स्रजः मालाः पिनह्य कण्ठे धारयित्वा सहसा हठात् अथवा हास्ययुक्ताः सत्यः कान्तैः स्वस्वपतिभिः सम्भूय मिलित्वा प्रीता सन्तुष्टाः सत्यः कपालानि मांसहीननरमस्तकास्थीनि एव चषकाणि पानपात्राणि तैः अस्थिस्नेहाः मज्जानि एव सुराः मद्यानि ताः पिबन्ति।

अन्त्रादीनां मङ्गलप्रतिसराद्यभेदारोपात् रूपकालङ्कारः, एवं प्रीतिनामकस्य सम्भोग-शृङ्गाररसस्य प्रधानीभूतबीभत्सरसाङ्गभावेनावस्थानात् रसवदलङ्कारश्चेति तयोरङ्गाङ्गिभावेन सङ्करः। विरुद्धयोः शृङ्गारबीभत्सयोः कथमत्र समावेश इति तु नाशङ्कनीयं, उभयोस्तुल्य-रूपेणावस्थान एव विरोधाङ्गीकारात् अत्राङ्गाङ्गिभावेनावस्थाने विरोधविरहात्। तथाचोक्तं ध्वनिकृता—

"विवक्षिते रसे लब्धप्रतिष्ठे तु विरोधिनाम्।
बाध्यानामङ्गभावं वा प्राप्तानामुक्तिरच्छला॥"

"यतिः सर्वत्र पादान्ते" इत्यनेन तृतीयचरणेऽपि यतेरावश्यकत्वात् "पिबन्त्यस्थि" इतीय-चतुर्थपादगतत्वेन यतिभङ्गदोषोऽत्र नाशङ्कनीयः "पूर्वान्तवत् स्वरःसन्धौ क्वचिदेव परादिवत्"-इत्यनेन "स्कन्धं विन्ध्याद्रिबुद्ध्या निकषति महिषस्याहितोऽसौ; यथास्य" इत्यादाविव सन्धा-र्णस्य परादिवद्भावेन यतिभङ्गदोषासम्भवादित्यनुसन्धेयम्। शार्दूलविक्रीडितं वृत्तम्॥

(३६) परिक्रम्येति परिक्रम्य विशेषतः पिशाचानवलोकयितुं पादौ विक्षिप्य पुनरशस्त्र-पूतमित्यादेः पठनं प्रथमपठनानन्तरोपगतानामनवधानेनाश्रुतपूर्वाणां वा पिशाचानामवगत्यर्थ-

---

রূপে ধারণ করিয়াছে, এবং যাহারা ঘনীভূত মৃত শরীরের রক্ত কুঙ্কুমরূপে ব্যবহার করিতেছে, তাদৃশ এই পিশাচপত্নীগণ হৃৎপিণ্ডরূপ শ্বেতপদ্মের মালা ধারণ করিয়া সহসা স্ব স্ব পতির সহিত মিলিত হইয়া অতি প্রীতমনে নরকপাল-রূপ পানপাত্রে মজ্জারূপ মদ্যপান করিতেছে।

(৩৭) (পাদবিক্ষেপ করিয়া পুনরায় "অশস্ত্রপূতমিত্যাদি শ্লোক পাঠ

अन्तः शीर्णकरङ्ककर्परपरित्संरोधिकूलङ्कष-
स्रोतोनिर्गमघोरघर्घररवा पारे श्मशानं सरित्॥ (१८)

(नेपथ्ये) हा ताद ! णिक्करुण ! एसो दाणिं दे णरेन्द-
चित्ताराहणोवअरणं जणो विवज्जइ। (क)

(क) हा तात ! निष्करुण ! एष इदानीं ते नरेन्द्रचित्ताराधनोपकरणं जनो
विपद्यते।

शीर्षैः वर्द्धैः तीरप्रदेशैः उपलक्षिता। तथा अन्तरभ्यन्तरे शीर्णानां त्रुटितानां करङ्काणां कपालानां कर्परैः भग्नावयवैः (कर्परो भग्नभाण्डेऽपि हट्टेऽपि खण्डितेऽपि चेति धरणिः) यत् तत्, अतएव सरतां अवतरणशीलानां संरोधि अवरोधकं, तथा कूलं तीरं कषति भनक्तीति कूलङ्कषं (सर्वकूलाभ्रकरीषेषु कष इति खच्प्रत्ययः) यत् स्रोतः (अत्रापि परस्परस्य विशेषणविवक्षया कर्मधारयद्वयं कर्त्तव्यम्) तस्य निर्गमेण तीराभ्यन्तरदेशमतिक्रम्य अपसरणेन घोरः भयङ्करः रवः शब्दः यस्याः सा तथाभूता सरित् श्मशानस्य पारे पर्यन्ते इति पारे श्मशानं (पारे मध्ये षष्ठ्या वेत्यव्ययीभावः) दृश्यत इति शेषः। तथा च पुरत एव नदी वर्त्तमानत्वादतः परं श्मशानं नास्तीति स्पष्टमवगम्यते, अथ च पिशाचो नोपलभ्यते दृश्यमानुषं साहसं कुर्वतोऽपि मम नाभिप्रेतसिद्धिसम्भावनेति भावः।

उत्तररामचरितस्थीभावनगिरिवर्णने अस्य श्लोकस्य प्रथमचरणं प्रायस्तुल्यरूपं दृश्यते, "घुत्कारसंवेल्लित" इत्यत्र "घुत्कारवत्कीचके"ति पाठभेदः।

अत्र श्लोकार्थस्य भयङ्करत्वाद्रसाद्भुतत्वे न दोषः, किन्तु शब्दार्थयोरेकत्वसन्दधानतः शब्दार्थमर्यादावाचकत्वदोषः। एवं काव्यप्रकाशरूपानुप्रासालङ्कारयोः सङ्करः। शार्दूलविक्रीडितं वृत्तम्॥

(क) नेपथ्य इति, नरेन्द्रचित्ताराधनोपकरणं बलिदानसमर्थोपहारभूतः, मत्तु तव-संशाधक इत्यर्थः, एषः मल्लच्छायी जनः विपद्यते म्रियते। (मालत्या उक्तिरियम्)

অভ্যন্তর শীর্ণ নরকপালের ভগ্নাবস্থাদ্বারা অবতরণকারি ব্যক্তিদিগের অবরোধক ও কূলবিদারণকারি স্রোতের নির্গমশব্দে অতি ভীষণ, তাদৃশ এই নদী শ্মশানের সীমায় দেখা যাইতেছে।

(ক) হা পিতঃ! নিষ্করুণ! তোমার রাজচিত্ত সন্তোষসম্পাদনের উপকরণস্বরূপ আমি এই মরিতেছি।

माध (साकूतमाकर्ण्य) ॥ (३९)

नादस्तावद्विकलकुररीकूजितस्निग्धतार-
श्चित्ताकर्षी परिचित इव श्रोत्रसंवादमेति।
अन्तर्भिन्नं भ्रमति हृदयं विह्वलत्वङ्गभावं
गात्रस्तम्भः स्खलयति गतिं * कः प्रकारः किमेतत् ॥(४०)

---

(३९) माधेति, साकूतं साभिप्रायं निरूपणाभिप्रायव्यञ्जकाङ्गभङ्ग्यादिसहितमिति यावत्।

(४०) नाद इति, विकला कुतश्चित्कारणाद्भयविह्वला या कुररी क्रौञ्चवधूः तस्याः कूजित-वत् निनादवत् स्निग्धः स्वरे हृत्तः तार उच्चश्चेति तथोक्तः, अतएव चित्ताकर्षी मनोहारी अयं नादः परिचित इव पूर्व्वमनुभूत इव श्रोत्रयोः कर्णयोः संवादं सम्पर्कं एति प्राप्नोति। शार्द्दूलाक्रमण-समये मकरन्दप्राणसन्देहमरुदान्दोलितमानसाया मालत्या यः सकरुणकण्ठध्वनिर्यथापूर्व्व-माकर्णितस्तद्द्रूपस्तादृशं कण्ठध्वनिः श्रूयत इति भाव.। तत्र चैतत्शब्दश्रवणान्तरं मम हृदयं अन्तर्भिन्नं अभ्यन्तरविदीर्णं सत् भ्रमति अनवस्थितमास्ते, तथा अङ्गं अङ्गं प्रत्यङ्गं हस्तपादाद्यवयव-जातमिति यावत्, विह्वलति व्याकुलं भवति, किञ्च गात्रस्य शरीरस्य स्तम्भः निश्चेष्टत्वं गतिः गमनं स्खलयति लक्ष्यभ्रष्टां करोति। प्रकारः एतदार्त्तनादस्य विशेषः कः? मालतीकृतत्वं मालती-शब्दसादृश्यं वा विशेष इति वितर्कार्थः। एतत् एतदार्त्तनादोत्पादस्य कारणं किं? नहि विचिन्त्यापि अस्य कारणमवधारयितुं शक्यत इति भावः।

वितर्कवाक्यशब्द "इव" नाम गर्भसन्धेरङ्गं। तथाचोक्तं दर्पणे—"इव वाक्यं वितर्कवदिति। अत्र कूजितस्निग्धतारेत्यत्र लुप्तोपमा, परार्द्धवाक्यार्थानां पूर्व्वार्द्धवाक्यार्थहेतु-

---

(৩৯) মাধব। (নিরূপণাভিব্যঞ্জক অঙ্গভঙ্গীর সহিত দেখিয়া)

(৪০) ভয়বিহ্বলা ক্রৌঞ্চবধূর শব্দের ন্যায় স্নিগ্ধ ও উচ্চ মনোহারী এই শব্দ পরিচিত শব্দের ন্যায় আমার কর্ণে সংলগ্ন হইতেছে। (অর্থাৎ শার্দ্দূলাক্রমণ কালে মকরন্দের জীবন সন্দেহে আকুলিত চিত্ত মালতীর যেরূপ করুণ কণ্ঠধ্বনি শুনিয়াছিলাম, এই শব্দও তদ্রূপ শুনা যাইতেছে) অতএব এই শব্দ শ্রবণমাত্রই আমার হৃদয় অন্তর্বিদীর্ণ হইয়া নিতান্ত চঞ্চল হইতেছে, হস্তপদাদি সমস্ত অবয়ব অবসন্ন হইতেছে, এবং শরীরে নিশ্চেষ্টতা গমনের লক্ষ্য ভ্রষ্ট করিতেছে। এই আর্ত্তনাদ মালতীকৃত কি মালতীর মত? এতাদৃশ আর্ত্তনাদের কারণই বা কি?

---

* इङ्गस्तम्भः स्तम्भति च गलितमिति पाठभेदः।

करालायतनाद्यमुच्चरन् करुणध्वनिः ।

विभाव्यते ननु स्थानमनिष्टानां तदीदृशाम् ॥ (४१)

भवतु, पश्यामि । ( इति परिक्रामति ) ( ४२ )

( ततः प्रविशति देवतार्चनव्यग्रहस्ता कपालकुण्डलाघोर-
घण्टौ स्रुतवध्यचिह्ना मालती च ) ( ४३ )

माल । हा ताद ! निकरुण ! एसोदाणिं दे नरेन्दचित्ता-

---

कलेन वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः इत्यनयोरङ्गाङ्गिभावेन सङ्करः । मन्दाक्रान्ता
वृत्तम् ।

(४१) एवं वितर्क्य कुतार्थ्यस्थितस्थानं निनादं इति स्वयमेव निर्द्धारयति—करालेत्यादिना । अयं करुणध्वनिः आर्त्तनादः करालायाः तदाख्यकालिकायाः आयतनात् स्थानात् उच्चरन् उद्गच्छन् *विभाव्यते अनुमीयते मयेति शेषः । अनुमानहेतुं दर्शयति—ननित्यादिना ।*
यतः तत् ननु करालायतनं खलु ईदृशां एताङ्गार्त्तनादोत्थितिहेतुभूतजीवोपहारादिरूपाणामनिष्टानां स्थानं । ईदृशाम्बकारराको तत्र मरुवर्निर्दिष्टस्य वधः भवत्यादिति भावः । तथाच करालायतने बलिदानार्थमानीतस्य व कस्यचिदयमार्त्तरवो भवेदिति सम्भाव्यत इत्यर्थः ।

अत्रापि पूर्ववत् काव्यलिङ्गं तत्कृतविचिन्तिमूलकमनुमानमलङ्कारः । एवं पूर्वार्द्धे-
न्नितस्य "विभाव्यत इत्येकमात्रपदस्य पराङ्गतत्वादद्वीकर्णिकापदत्वदोषः ।

(४२) एवं विचिन्त्य कर्त्तव्यं निर्द्धारयितुमाह—भवत्विति । मया यथा वितर्कितं तथैवास्तिवर्थः । पश्यामि करालायतनं एतदार्त्तनादोत्थितिकारणञ्च प्रत्यक्षीकरोमि ।

(४३) तत इति, देवतार्चनव्यग्रहस्ता करालापूजनव्यापृतकरी । स्रुतवध्यचिह्ना परि-
धापितरक्तमाल्यादिवध्यभूषणा ।

---

( ৪১ ) আমার অনুমান এই যে, করুণধ্বনি:করালাদেবীর-আলয় হইতে উত্থিত হইতেছে, কারণ করালার আয়তনই ঈদৃশ অনিষ্টের ( নরবধাদিরূপ অনিষ্টের ) স্থান ।

( ৪২ ) যাহাই হউক, আমি দেখিতেছি,—( এই কথা বলিয়া তদভিমুখে পাদবিক্ষেপ করিতে লাগিলেন )।

( ৪৩ ) ( তৎপরে দেবার্চ্চনব্যগ্রপাণি কপালকুণ্ডলা অঘোরঘণ্ট ও বধ্যচিহ্নযুক্তা মালতীর প্রবেশ )।

-राहणोवअरणं जणो विवज्जइ। हा अम्ब! सिणेहमअहिअए! तुमं वि हदासि देव्वदुव्विलसिदेण। हा मालदीमअजीविदे! मम कल्लाणसाहणेक्कसुहमअलवावारे! भअवदि! कामन्दइ! चिरस्स जाणाविदासि दुक्खं सिणेहेण। हा पिअसहि! लवङ्गिए! सिविणअवसरमेत्तदंसणा अहं दे संवुत्ता! (ख)

---

(ख) हा तात! निष्करुण! एष इदानीं ते नरेन्द्रचित्ताराधनोपकरणं जनो विपद्यते। हा अम्ब! स्नेहमयहृदये! त्वमपि हतासि दैवदुर्विलसितेन। हा मालतीमय-जीविते! मम कल्याणसाधनैकसुखसकलव्यापारे! भगवति! कामन्दकि! चिरस्य ज्ञापितासि दुःखं स्नेहेन। हा प्रियसखि! लवङ्गिके! स्वप्नावसरमात्रदर्शना अहं ते संवृत्ता।

---

(ख) मात्रेति, नरेन्द्रचित्ताराधनोपकरणमित्यनेन कन्यात्वेन मयि तव स्नेहलेशाभावेन मन्मरणे तव समधिकं दुःखं न भवेदिति सूचितम्। दैवदुर्विलसितेन विधातुर्दुराचरणेन। तथाच मयि बहुस्नेहायास्तव मन्मरणे जीवनधारणमेवाशक्यं भवेदिति भावः। मम कल्याणस्य माधवेन सह विवाहरूपस्य मङ्गलस्य साधनं सम्पादनमेव एकं अद्वितीयं सुखं साध्यतया फलं यस्य तादृशः सकलः व्यापारः क्रिया यस्याः तत्सम्बोधनं। स्नेहेन (मदीयककर्त्ता) (त्वं मदीयकर्त्री) दुःखं क्लेशं चिरस्य ज्ञापितासि अनुभावितासि। (मदीयमङ्गलसाधनमेवैकं सुखत्वेन मन्यमानायास्तत्सम्पादनार्थमेव च सर्व्वं कार्य्यं कुर्व्वन्त्यास्तव मन्मरणे यदसहनीयं दुःखं भवेत् कदाचिदपि तस्यावसानं स्यादिति मयि निष्कारणस्नेह एव तत्रानर्थहेतुरभूत् इत्यर्थः)। स्वप्नावसरमात्रे केवलं स्वप्नसमये दर्शनं प्रत्यक्षं यस्याः सा तादृशी। मात्रशब्देन जाग्रदवस्थाव्यवच्छेदः, मम मरणस्याचिरभावित्वाज्जाग्रदवस्थायां पुनर्दर्शनस्यासम्भवादिति भावः।

अत्राक्रन्दो नाम नाट्यालङ्कारः। "आक्रन्दः प्रलपितं शुचे"ति दर्पणलक्षणात्।

---

(খ) হা তাত নিষ্করুণ! তোমার রাজচিত্তানুরঞ্জনের উপকরণস্বরূপ আমি এই মরিতেছি। হা মাতঃ! স্নেহময়হৃদয়ে! তুমিও বিধাতার দুরাচরণে মৃত হইলে! হা মালতীময়জীবিতে!, ভগবতি!, কামন্দকি!, আমার কল্যাণসাধনাই তোমার সমস্ত ব্যাপারের একমাত্র ফল ছিল! সুতরাং স্নেহ তোমাকে চিরকালের জন্য দুঃখ অনুভব করাইবে। হা প্রিয়সখি লবঙ্গিকে, একমাত্র স্বপ্নকালেই তুমি আমাকে দেখিতে পাইবে।

माध। हन्त ! सम्प्रति निरस्त एव मे सन्देहः। तदपि नाम जीवन्तीमेनां सम्भावयेयम् । ( इति झटिति परिक्रामति ) (४४)

अघोरघण्टकपालकुण्डले। देवि ! चामुण्डे ! भगवति ! नमस्ते। ( ४५ )

सावष्टम्भनिशुम्भनिर्भरनमद्भूगोलनिष्पीडन-
न्यञ्चत्कर्परकूर्म्मकम्पविगलद्ब्रह्माण्डखण्डस्थिति।

---

(४४) माधेति हन्तेति खेदे, खेदकारणञ्च मालत्या एतामवस्थितत्वम्। निरस्तः अपगतः, सन्देहः मालत्येवेयं विपदापन्ना भवतीति संशयः। मालतीकामन्दकीलवङ्गिकाभिः आन्वितेन मकरन्दादिना "मालत्येव केनचिद्दुराभीष्टसिद्धिकामेन करालायतने वध्यार्थमानीतेयं स्वकरुणं व्याहरतीति" निश्चयो मम जात इत्यर्थः। सम्भावयेयमित्याशंसायां लिङ् (सप्तमी) अपिनामेति निपातद्वयं सम्भावनीयमुत्कर्षद्योतकं। तथाच मालत्या मरणे मन्मरणस्यावश्यम्भावित्वात् दुःसाहसमवलम्ब्यापि यदि जीवन्तीं तां मन्दर्शनादिना सम्भावयितुं शक्नोमि, तदेव मम जीवनसार्थकं भवेदित्याशंसा।

(४५) अघोरेति, अघोरघण्टस्य गुरुत्वेनार्चितत्वात् "अभ्यर्हितं पूर्व"मित्यनेनाघोरघण्टपदस्य पूर्व्वनिपातः। पूर्व्वत्र तु काकमयूरमित्यादिवदभिधानस्य पूर्व्वनिपात इति। "कापालिका"विति पाठे तु "पुमान्स्त्रिया"मित्येकशेषः। बलिप्रदानस्य नतिस्तुतिपूर्व्वकं साफल्यमिति प्रथमं वाचनिकनमस्कारं करोति—देवीत्यादिना।

(४६) स्तुवते सावष्टम्भेत्यादिना। सावष्टम्भेन सावलेपेन निशुम्भेन "उद्धृतिता तु भवेत् पार्ष्णिर्यस्योर्द्ध्वं निगद्यते। अङ्गुल्योऽग्राश्रिताः सर्व्वाः पादामलनखान्तरे॥" इति भरतोक्तलक्षणेन नृत्यविशेषेण तत्सम्बन्धिसमुद्धृतपादाघातेनेति यावत्, निर्भरं निरतिशयं नमतः नीचं गच्छतः भूगोलस्य भूमण्डलस्य यन्निष्पीडनं आघातः तेन न्यञ्चन् अवनमन् कर्परः पृष्ठास्थि ( कटाहे च कपाले च पृष्ठास्थनि च कर्परः इति शाश्वतः ) यस्य तथाभूतस्य कूर्म्मस्य पृथिवीमण्डलधारिणः कच्छपस्य कम्पेन अङ्गसञ्चालनेन विगलन्ती पतन्ती स्थानात् स्रंसमाना ब्रह्माण्डखण्डस्य ब्रह्माण्डस्य ( खण्डपदोपादानं निखिलव्यापिन्यास्तस्याः सकाशे ब्रह्माण्डस्यातिक्षुद्रताप्रतिपादनार्थं )

---

( ৪৫ ) ( অঘোরঘণ্ট ও কপালকুণ্ডলা ) দেবি ! ভগবতি চামুণ্ডে ! তোমাকে নমস্কার করি।

( ৪৬ ) তোমার সেই নৃত্যে সগর্ব্ব নৃত্যবিশেষের সমুদ্ধত পদাঘাতদ্বারা অতিশয় অবনত পৃথিবীমণ্ডলের আঘাতে পৃথিবীমণ্ডলধারী মহাকচ্ছপের

पातालप्रतिमल्लगल्लविवरप्रक्षिप्तसप्तार्णवं

वन्दे नन्दितनीलकण्ठपरिषद्व्यक्तं तवाक्रीडितम् ॥ (४६)

प्रचलितकरिकृत्तिपर्य्यन्तचञ्चन्नखाघातभिन्नेन्दुनिष्यन्दमाना-
मृतश्योतजीवत्कपालावलीमुक्तचण्डाट्टहासत्रसद्भूरिभूतप्रवृत्तस्तुति,
प्रसृदमितभुजङ्गभोगाङ्गदग्रन्थिनिष्पीडनस्फारफुल्लत्फणापीठनिर्य्यद्विष-
ज्योतिरुज्जृम्भणोड्डामरव्यस्तविस्तारिदोःखण्डपर्य्यासितक्ष्माधरम् ।

---

स्थितिः अवस्थानं यस्मिन् तत् तथाभूतं । पातालस्य अधोभुवनकुहरस्य प्रतिमल्लयोः प्रतिभटयोः सदृशयोरिति यावत्, गल्लविवरयोः गण्डास्थलरन्ध्रयोः प्रक्षिप्ताः भूमण्डलभ्रामणमनेनार्णवनामनुनीनात् निक्षिप्ताः सप्त अर्णवाः समुद्राः यस्मिन् तत् । तथा नन्दितस्य तादृशनृत्यदर्शनेनानन्दितस्य नीलकण्ठस्य भूतनाथस्य परिषदि प्रमथगणाधिष्ठितगोष्ठ्यां व्यक्तं प्रसिद्धं तव आक्रीडितं नाट्यविलासं वन्दे ।

वाच्यार्थस्य समुद्भतत्वादत्रापि दुःश्रवत्वं न दोषः । निशुम्भपदस्यात्र दैत्यविशेषे प्रसिद्धत्वेऽपि नाट्यशास्त्रे निरुक्तनृत्यविशेषेऽपि प्रसिद्धत्वान्न निहतार्थदोषः । एवं भवभवस्य केवललौकिकमङ्गलसिद्धत्वेन ग्राम्यत्वेऽपि वैदविद्वज्ज्ञानुष्ठाननिरतत्वेनाधमशास्त्रकर्णधारप्रचण्डकपालकुण्डलाभ्यामुक्तत्वान्न ग्राम्यत्वदोषः, परन्तु गुण एव "ग्राम्यत्वमधमोक्तिष्वि"ति दर्पणोक्तेः ।

अत्र पातालप्रतिमल्लेत्यार्थी लुप्तोपमा, एवं भूगोलगमनकूर्मकर्पराधीनमनकूर्मकम्पन-ब्रह्माण्डस्थितिश्च मनगण्डविवरमेतदर्णवप्रक्षेपमानादात सम्बन्धेऽपि तत्सम्बन्धाभिधानात् पञ्चातिशयोक्तयः, छेकानुप्रासश्चालङ्कार इति तेषां संसृष्टिः । शार्दूलविक्रीडितं वृत्तम् ॥

(४७) प्रचलितेति । हे देवि ! प्रचलितायाः अङ्गविक्षेपवशाददिमात्रास्फालितायाः करिकृत्तेः उत्तरीयभूतस्य गजचर्म्मणः पर्य्यन्तेषु प्रान्तदेशेषु चञ्चन्तः चलन्तः ये नखाः तन्तुक्रान्तिसंवरणक्षुराः तेषां आघातेन भिन्नः विदीर्णः यः इन्दुः चन्द्रः तस्मात् निष्यन्दमानस्य स्रवतः

---

পৃষ্ঠাস্থির অবনতি বশতঃ সেই কচ্ছপের কম্পনে ব্রহ্মাণ্ডের অবস্থান সেই পৃষ্ঠদেশ দুষ্ট হয়, এবং তোমার সেই নৃত্যে পাতালকুহরসদৃশ হইতে তোমার গলরন্ধ্রে সপ্তসমুদ্র নিক্ষিপ্ত হয়। নৃত্যদর্শনানন্দিত মহাদেবের পরিষৎপ্রসিদ্ধ তোমার তাদৃশ উদ্ধত নৃত্যকে আমি বন্দনা করি।

(৪৭) হে দেবি! তোমার সেই উদ্ধত নৃত্য অঙ্গসঞ্চালনাস্ফালিত উত্তরীয় গজচর্ম্মের প্রান্ত দেশগত চঞ্চল নখরের আঘাতে বিদীর্ণ চন্দ্র হইতে বিগলিত অমৃতসেকে মালাস্থিত মুণ্ডগণ জীবন লাভ করিয়া (জীবনলাভানন্দে)

दितदटपूतनोत्तालवेतालतालस्फुटत्कर्णसम्भ्रान्तगौरीघनाश्लेषहृष्य-
न्मनस्त्र्यम्बकानन्दि यत्ताण्डवं देवि ! भूयादभीष्टे हृष्टे च नः ॥ ( ४७

तया प्रमुदिताः ताण्डवायर्थेनृत्यदर्शनेनानन्दिताः ये कटपूतनाः पिशाचविशेषाः उत्तालाः प्रचण्डाः वेतालाः पार्षदविशेषाश्च तेषां ताली यथोपयुक्तकालकृतकरतलद्वयास्फालनैः स्फुटन्तौ विदलन्तौ कर्णौ श्रवणौ यस्याः सा तथाभूता अतएव सम्भ्रान्ता निरतिशयत्रस्ता या गौरी पार्श्वोपविष्टा पार्वती तस्याः घनः गाढः यः आश्लेषः आलिङ्गनं तेन हृष्यत् सन्तुष्यत् मनः चित्तं यस्य तं तथाभूतं त्र्यम्बकं त्रिलोचनं आनन्दयितुं पुनः पुनस्तोषयितुं शीलं यस्य तत्तथाभूतं च युष्माकं तव इत्यर्थः ( गौरवाद्बहुवचनं ) ताण्डवं उद्धतनृत्यं ( ताण्डवोऽस्त्रीतृणान्तरे भवेदुद्धतनृत्ये चेति मेदिनी ) नः अस्माकं अभीष्टं अभिलषितसिद्धये ( 'अरिष्टौ' इति पाठे तु रिष्टिः अशुभं "रिष्टिः खड्गेऽशुभे स्त्रीति मेदिनीकारः" तदभावः अरिष्टिः तस्यै इत्यर्थः ) वैर इत्यत्र न भूयादिति चतुर्थचरणार्थः ।

यद्यपि "पुंनृत्यं ताण्डवं प्राहुः स्त्रीनृत्यं लास्यमुच्यते" इत्यनेन पुंनृत्य एव ताण्डवशब्दः तद्वैतशास्त्रसिद्धमथापि नियतमेदिनीकारेणाविशेषेणोद्धतनृत्यमात्रपरत्वाभिधानादत्र स्त्रीकर्तृकोद्धतनृत्ये तत्प्रयोगो न विरुद्ध इति मन्तव्यम् । , अतापि वाच्यार्थयोरुद्धतत्वादुं श्रवणं न दोषः ।

अत्र देकानुप्रासवृत्त्यनुप्रासौ कथापीडेत्यत्र अलातचक्रमितेत्यत्र च लुप्तोपमाद्वयं खड्गाद्युद्भवत्येत्यत्र तु विनिगमनाविरहादुपमारूपकयोः सन्देहसङ्करः, एवं पूर्ववदेतानेकातिशयोक्त्योऽलङ्कारा इति तेषां संसृष्टिः ।

अत्र प्रत्येकचरणे द्वौ नकारौ षोडशरेफाश्च वर्त्तन्ते इति प्रचितो नाम दण्डकच्छन्दः । पिङ्गलेन "शेषः प्रचितः" इति सूत्रेण चण्डवृष्टिप्रपातातिरिक्तदण्डकमात्रस्यैव प्रचितसंज्ञाभिधाना-दित्यनुसन्धेयम् ॥

এবং তোমার যেই উদ্ধত নৃত্যে ললাটনয়নস্থিত প্রজ্বলিত বহ্নির দীপ্তি সমাচ্ছন্ন ভয়ঙ্কর মস্তকের বিঘূর্ণন দ্বারা অলাতচক্রের ( সেই প্রজ্বলিত কাষ্ঠকে ঘুরাইলে চক্রাকারে পরিদৃষ্ট হয়, তাহার নাম অলাতচক্র) প্রকাশাদি ব্যাপারে পরিনির্ম্মিত হয়, ও তদ্দ্বারা দিঙ্মণ্ডল পরিব্যাপ্ত হয়, এবং উন্নত খট্টাঙ্গনামক অস্ত্রের অগ্রভাগরূপ ধ্বজের কম্পনে তারাগণ চতুর্দ্দিকে বিকীর্ণ হয়।

এবং তোমার যেই উদ্ধত নৃত্য হর্ষোন্মত্ত পিশাচবিশেষ ও প্রচণ্ড বেতালগণের করতলদ্বারা বিদলিতকর্ণা ও সম্ভ্রান্ত গৌরীর গাঢ় আলিঙ্গনে সং

( इत्यभिनयतः ) ( ४८ )

माध। ( विलोक्य ) हा धिक् प्रमादम्। ( ४९ )

न्यस्तालक्तकरक्तमाल्यवसना पाषण्डचाण्डालयोः
पापारम्भवतोर्म्मृगीव वृकयोर्म्मध्यं गता गोचरम्।
सेयं भूरिवसोर्व्वरारिव सुता मृत्योर्म्मुखे वर्त्तते
हा धिक् कष्टमनिष्टमस्तकरुणः कोऽयं विधिः प्रक्रमः॥ (५०)

---

(४८) इत्यभिनयत इति अघोरघण्टकपालकुण्डले एवं स्तुत्वा अभिनयेन कायिकनमस्कारं दर्शयत इत्यर्थः।

(४९) माधेति। निशीथ बलिप्रदानाय सज्जिता मालतीं दृष्ट्वा, आहेति शेषः। हाशब्दो विषादे। प्रमादं भूरिवसुकामन्दकादीनामनवधानता धिक् तिरस्करणीमीत्यर्थः। तेषां प्रमादा भावे मालत्या ईदृशपरिणतेः सम्भवैवासम्भवादिति भावः।

(५०) न्यस्तेति। न्यस्तानि चरणादिरूपस्थानेषु यथोक्तमर्पितानि अलक्तकरक्तमाल्यवसनानि रक्तदानकवध्यचिह्नानीत्यर्थः, तस्याः सा तथाभूता वसो रिव अष्टवसन्ततमस्येव अथवा कर्पे रिव ( वसुर्मयूखाग्निधनाधिपेष्विति विश्व ) तादृशनैज्ज्वल्य इत्यर्थः, भूरिवसोः राजामात्यस्य सुता ( या मम जीवनसर्व्वस्वभूता ) सा इयं भीरुः स्वभावतो भयविह्वला मालती वृकयोः व्याघ्रविशेषयोः मृगी हरिणीव पापारम्भवतो. "स्त्रियं न दद्यात्तु बलिं दत्त्वा नरकमाप्नुया"दित्यादिभिर्निषिद्धत्वात् स्त्रीबलिदानरूपपापजनकक्रियाप्रवृत्तयो अत एव पाषण्डौ स्वधर्म्मात् भ्रष्टौ च तौ ( भ्रष्टः स्वधर्म्मात् पाषण्डो विकर्म्मस्थो निषिद्धकृदिति विष्णुपुराणम् ) चाण्डालौ तत्क्रियाकारित्वात् चण्डालसदृशौ चेति तयोः ( पुनोक्तिर्नैर्विवेक्यार्थः ) तथाभूतयो-

---

চিত্ত মহাদেবকে আনন্দিত করে, তেমনি সেই উদ্ধত নৃত্য আমাদের অভিলষিত সিদ্ধি ও হর্ষের নিমিত্ত হউক।

( ৪৮ ) ( এইরূপে স্তব করিয়া কপালকুণ্ডলা ও অঘোরঘণ্ট কায়িক নমস্কার করিলেন। )

( ৪৯ ) মাধ। ( বলিপ্রদানার্থ সজ্জিতা মালতীকে দেখিয়া ) আহা! ভূরিবসু-প্রভৃতির অনবধানতায় ধিক্।

অলক্তক, রক্তমাল্য ও রক্তবসনাদিরূপ বধ্যচিহ্নবিভূষিতা অষ্টবসুর অগ্নতর তুল্য ভূরিবসুর কন্যা এই সেই মালতী পাপকর্ম্মোপক্রমকারী অতিপাষণ্ড

कपाल। तं भद्रे ! स्मर दयितोऽत्र यस्तवाभू-
दद्य त्वां त्वरयति दारुणः कृतान्तः। (५१)

---

रेतयोर्दृश्यमानयोः स्त्रीपुरुषयोरित्यर्थः, गोचरं सम्मुखं गता प्राप्ता मतो मृत्योः यमस्य (मृत्युर्ना-मरणे यमे इति मेदिनी) मुखे वदने वर्त्तते तिष्ठति। अस्या मरणमनिवार्य्यमवश्यम्भावीति भावः। अत एव "हा" इति खेदे, धिगिति मम जीविताशामिति शेषः। कष्टमतीव दुःखं ममापतितमिति शेषः। अनिष्टं रिपूणामप्यनाकाङ्क्षितं व्यसनमस्या उपस्थितमिति शेषः। अतएव अत्रावस्थायां कृपाविरहितः विधेर्दैवस्य प्रक्रमः आरम्भः कः? निर्दयो विधिः किमिदमाचरितुं प्रवृत्त इत्यर्थः। विधेरेवं निर्दयव्यवहारः सर्व्वथैवानुचित इति भावः।

अत्र हा धिक् कष्टमनिष्टमितिपदानां प्रयोगतुल्यार्थत्वेऽपि अनुकम्पातिशयद्योतकत्वान्न पुनरुक्ततादोषः। एवं चतुर्थचरणे हा धिगित्यादिपदोत्तरं "मम जीविताशा"मित्यादि पदानां दर्शितानामनुक्तावपि वक्तुर्मोहवशात् निरतिशयविषादमानत्वात्र न्यूनपदत्वदोषोऽपि, प्रत्युत गुण एव, तथाचोक्तं—

"अनुकम्पाद्यतिशये यदि कश्चिन्निबध्यते।
न दोषः पुनरुक्तादौ प्रत्युतेयमलङ्क्रिया॥"
"हर्षाद्यानन्दमग्नादेः स्यान्न्यूनपदता गुणः॥" इति।

अत्रोपमाद्यं साभिप्रायविशेषणघटितत्वात् परिकरः, वाक्यार्थहेतुकं काव्यलिङ्गं, छेकानुप्रासश्चालङ्कार इति संसृष्टिः। शार्दूलविक्रीडितं वृत्तम्॥

(५१) तमिति। हे भद्रे! यो जनः तव दयितं वल्लभः अभूत् आसीत्, तं जनं अत्र अस्मिन् क्षणे स्मर चिन्तय। कुत इत्यत आह—अद्येति, अद्य अस्मिन्नेव क्षणे इत्यर्थः, दारुणः कृतान्तः यमः त्वां त्वरयति स्वपुरप्रापणाय त्वरायुक्तां करोति। तथाच मदुपहरणीयत्वे नास्मिन्नेव क्षणे तन्मरणकालाव्यवधानादस्मिन् जन्मनि तव तद्वल्लभसमागमो न सम्भवेदिति, अस्मिन् मरण-समये तत्स्मरणेन परजन्मनि पुनस्तल्लाभस्य पन्था अवश्यं त्वया परिष्कारणीय इति भावः। तथाचोक्तं भगवद्गीतायां—"यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरं। तं तमेवैति

---

ও চণ্ডালসদৃশ এই স্ত্রীপুরুষের রুচির গোচরীভূত হইয়া ব্যাঘ্রদ্বয়ের গোচরীভূত হরিণীর ন্যায় কৃতান্তমুখে বর্ত্তমান। হায় (আমার জীবিতাশায়) ধিক্। (আমার অত্যন্ত) কষ্ট (উপনত) (শত্রুরও অনাকাঙ্ক্ষিত) বিপদ (ইহার উপস্থিত) আহা নির্দয় বিধির কি আচরণ।

(৫১) কপাল। হে ভদ্রে! যে ব্যক্তি তোমার অতিশয় প্রিয়তম, তাহাকে

माल। हा दइअ! णाह माहव! परलोअगदोवि सुमरिदव्वो तुम्हेहिं अअं जणो; ण हु सो उवरदो, जस्स वल्लहो जणो सुमरेदि (ग)।

कपाल। हन्त! माधवानुरक्तेयं तपस्विनी। (५२)

अघोर। [ शस्त्रमुद्यम्य। ] यदस्तु, व्यापादयामि। (५३)

---

(ग) हा दयित नाथ माधव। परलोकगतोऽपि स्मर्त्तव्योऽयं जनो युष्माभिः, न खलु स उपरतो यस्य वल्लभः स्मरति।

---

"कौन्तेय सदा तद्भावभावित" इति। प्रकृतिश्लोकनिबद्धमिदं श्लोकार्द्धम्, उत्तरार्द्धन्तु "चामुण्डे" इत्याद्यघोरघण्टपठनीयमित्यवधेयम्।

(ग) माहिति। अयं मल्लक्षणो जनः अहमित्यर्थः, स्मर्त्तव्यतायां हेतुमाह—न खल्विति। वल्लभः यस्य यं (अध्यर्थकर्म्मणीति कर्म्मणि षष्ठी) स्मरति स खलु (खलु निश्चये) न उपरतः न मृतः। यं जनं वल्लभः स्मरति स मृतोऽपि सर्व्वदा तस्मिन् वर्त्तमानतया जीवित इव तिष्ठतीत्यवश्यं युष्माभिरहं मृतोऽपि स्मर्त्तव्य इति मम सनिर्ब्बन्धानुरोध इति मालत्या अभिप्रायः।

(५२) कपालेति। हन्तेति विषादे। इयं वध्या बालिका माधवानुरक्ता, अतएव तपस्विनी अनुकम्पार्हा। कामन्दकीशिष्यत्वेन ममापि माधवो मित्रतुल्य इति तदनुरक्तेयं अनुकम्प्येव, नतु वध्येति मे तामेव वधार्थमुपस्थापितवत्या महान् विषादः समुपस्थित इति भावः।

(५३) अघोरेति। शस्त्रं खड्गं। यदस्तु यद्भवतु इयं माधवानुरक्तैव वा भवत्वित्यर्थः। व्यापादयामि तथाप्येनां निहन्मि। व्यापादनस्यावश्यकर्त्तव्यत्वात् माधवानुरक्तेयमिति कृत्वा नास्या व्यापादनान्निवर्त्तिष्ये इति भावः।

---

এইরূপে স্মরণ কর। দারুণ যম তোমাকে নিজের আলয় পাঠাইতে উৎসুক করিতেছে। (অর্থাৎ অচিরকালমধ্যেই তোমার বধ সাধিত হইবে।

(গ) হা বল্লভ! নাথ মাধব! আমি পরলোকগতা হইলেও তুমি আমাকে স্মরণ করিও। যে হেতু প্রিয়তম ব্যক্তি যাহাকে স্মরণ করে, সে মরিলেও যেন অমৃতপ্রায় থাকে।

(৫২) কপাল! আহা!! এই বধ্য বালিকা মাধবে অনুরক্তা, অতএব দয়ার যোগ্যা।

(৫৩) অঘোর! (খড়্গ উঠাইয়া) যাহা হউক, আমি ইহাকে হনন করিতেছি।

चामुण्डे! भगवति! मन्त्रसाधनादा-
वुद्दिष्टामुपनिहितां भजस्व पूजाम्॥ (५४)

[इति हन्तुमुपक्रान्तः।] (५५)

माध। [सहसोपसृत्य खड्गं प्रकोष्ठेन निरुध्य।]
दुरात्मन्! एष प्रतिहतोऽसि कापालिकापसद! नन्वयं न भवसि। (५६)

माल। [सहसावलोक्य।] परित्ताअदु मं महाणुभावो माहवो। (घ) [इति माधवमालिङ्गति।]

---

(घ) परित्रायतां मां महानुभावो माधवः।

---

(५४) चामुण्डे इति। हे भगवति! चामुण्डे! मन्त्रसाधनादौ पुरश्चरणात्मकमन्त्र-साधनस्य प्रारम्भे उद्दिष्टां स्वीकृतां साधनान्ते स्त्रीरत्नमुपहरिष्यामीति प्रतिज्ञाय विषयीभूतामिति यावत्, उपनिहितां मन्त्रसाधनान्ते इदानीमुपढौकितां पूजां स्त्रीरत्नोपहारात्मिकां सपर्यां भजस्व गृहाण।

(५५) उपक्रान्तः उद्यतः। क्वचिदयं पाठो नास्ति।

(५६) माधेति। सहसा झटिति उपसृत्य पश्चादागतः समीपमागत्य मणिबन्धेन खड्गं अघोरघण्टोद्यतं निरुध्य अपसार्य आहेति शेषः। ("प्रकोष्ठे मालतीं निक्षिपेदि"ति पाठे तु कफोणेरधोभागो मणिबन्धपर्यन्तः प्रकोष्ठः, तत्र मालतीमानीयेत्यर्थः) हे कापालिकापसद! वामाचारिणामधम! एष प्रतिहतोऽसि मालतीवधरोधेन त्वमेव मया व्यापादितोऽसि, नन्वयं न भवसि? अकारणस्त्रीरत्नवधोद्योगकृत्त्वेन वध्यः किं न भवसि? सर्वथा वधार्ह एव त्वमिति भावः।

(घ) सहसावलोक्येति सहसा समागतं माधवं दृष्ट्वेत्यर्थः। आलिङ्गतीति, तस्मिन्

---

(৫৪) হে ভগবতি চামুণ্ডে! মন্ত্রসাধনপ্রারম্ভে স্বীকৃত ও মন্ত্রসাধনান্তে উপঢৌকিত এই স্ত্রীরত্নরূপ পূজা গ্রহণ কর।

(৫৫) (এই বলিয়া হননে উদ্যত)।

(৫৬) মাধ। (সহসা উপস্থিত হইয়া মণিবন্ধদ্বারা অঘোরঘণ্টোদ্যত খড়্গকে অপসারিত করিয়া) দুরাত্মন্! কাপালিকাধম! এই তুমি হত হইতেছ। অকারণে স্ত্রীবধে প্রবৃত্ত তুমি কি বধ্য নহ? অবশ্যই বধ্য।

माध । महाभागे ! न भेतव्यम् न भेतव्यम् ।
मरणसमये त्यक्त्वा शङ्कां प्रलापनिरर्गल-
प्रकटितनिजस्नेहः सोऽयं सखा पुर एव ते ।
सुतनु ! विसृजोत्कम्पं सम्प्रत्यसाविह पाप्मनः
फलमनुभवत्युग्रं पापः प्रतीपविपाकिनः ॥ (५०)

---

जीवनाशसमये चतर्कितोपगतं प्राणवल्लभं माधवं दृष्टवत्या मालत्या जीवनभयेन कृते समालिङ्गने भ्रमादिकं न प्रतिबन्धकं भवितुमर्हतीति तदालिङ्गनं न स्वभावविरुद्धमिति मन्तव्यम् ।

(५०) मरणेति । मरणसमये तवास्मिन् सम्भावितमृत्युकाले प्रलापेन "हा दयित ! नाथ माधव !" इत्यादि सकरुणवाक्येन निरर्गलं निर्भुक्तं यथा तथा प्रकटितः प्रकाशितः निजः स्वकीयः स्नेहः यस्य, तथाभूतः अयं स इष्टपुरुषः इत्यर्थः, ते तव सखा यदा आत्मनो मरणभयं त्यक्त्वा परित्यज्य पुर एव सम्मुखे एव वर्तते इति शेषः । अत एव हे सुतनु ! शोभनाङ्गि ! त्वमुत्कम्पं भेदनत्रासजनितकम्पनं विसृज विमुञ्च । असौ पापः अस्मत्सौभाग्योपक्रमात् पापकारी कापालिकः सम्प्रति अधुनैव इह अस्मिन् स्थाने तव पुरत एवेत्यर्थः, प्रतीपविपाकिनः विपरीतपरिणामशालिनः पाप्मनः त्वद्वधोपक्रमरूपस्य पापस्य उग्रं भीषणं फलं आत्मविनाशरूपं अनुभवति लभते । अधुना त्वत्पुरत एवैनमहं व्यापादयामीति तव मरणभयविगमात्तज्जनितवैवर्ण्यं विजहीहीति भावः ।

अत्र वाक्यार्थहेतुककाव्यलिङ्गालङ्कारयोः सङ्करः । हरिणीवृत्तम् ।

---

(ম) মাল। হে মহানুভব মাধব! তুমি আমাকে পরিত্রাণ কর। (এই কথা বলিয়া মাধবকে আলিঙ্গন করিল)।

(৫০) মাধ। মহাভাগে! তুমি ভয় করিও না, ভয় করিও না, তোমার এই সম্ভাবিত মৃত্যুকালে "হা দয়িত মাধব"! ইত্যাদি সকরুণ বাক্য দ্বারা যাহার প্রতি তুমি নির্বাধ ভাবে নিজের স্নেহ প্রকাশিত করিয়াছ, তোমার সেই প্রিয় সখা মাধব নিজের মৃত্যুভয় পরিত্যাগ করিয়া এই তোমার সম্মুখেই বর্তমান। সুতনু! তুমি মরণভয়জনিত কম্প পরিত্যাগ কর। এই পাপকারী কাপালিক বিপরীত পরিণাম তোমার বধোদ্যমরূপ পাপের ফল এক্ষণেই এখানে (অর্থাৎ তোমার সম্মুখেই) অনুভব করিবে।

अघो। आः क एष पापोऽस्माकमन्तरायः संवृत्तः ? । (५८)

कपा। मालत्या एवायमस्याः स्नेहभूमिः कामन्दकीसुहृत्पुत्रो, महामांसस्य पणयिता, माधवो नाम । (५९)

माध । [ सास्रम् । ] महाभागे ! किमेतत् ? (६०)

माल । [चिराटाखस्य ।] महाभाअ ! अहं ण किम्पि जाणामि, एत्तिअं उण जाणामि, उवरिअलिन्दे पसुत्ता, इह पबुद्धम्हि, तुम्हे उण कहिम् ? (ङ)

---

(ङ) महाभाग ! अहं न किमपि जानामि, एतावदेव पुनर्जानामि, उपर्यलिन्दके प्रसुप्ता इह प्रबुद्धास्मि, यूयं पुनः क्व ?

---

(५८) अघोरेति। पापः देवोपहारपरिपन्थित्वात् पापित्वेनाभिमतः। अन्तरायः बलिदान-प्रत्यूहः।

(५९) कपेति। अयं अस्याः वधार्थमानीतायाः पुरोवर्त्तिन्याः मालत्या एव स्नेहस्य अनुरागस्य भूमिः स्थानं एकमात्रं पात्रमिति यावत्। तथाचायं प्राणव्यपेतायास्या रक्षार्थं यतिष्यत इति भावः। कामन्दक्याः सुहृत् देवरातः तस्य पुत्र इत्यर्थः। तदाचायं महाशौरित्वात् कामन्दक्या सततं सुरक्षित इत्यस्मत्प्रयुक्तमायामन्त्रादिकं नास्मिन् कार्यकरि भवतीत्याशयः। महामांसस्य पणयिता विक्रेता, तथाचायमतिनिर्भीकः स्वरक्षेति न पुनरपकारिणामपि निवारयितुं शक्य इति भावः।

(६०) सास्रमिति अश्रुं च मालतीव्यसनालिङ्गनरूपाभ्यां विषादानन्दाभ्यां जनितेनाश्रुबिन्दुना सहितं यथा स्यात्तथा आह इत्यर्थः। एतत्—अचिन्तनीयं व्यसनं किं किंनिमित्तकं ? कथमेतादृशं व्यसनं तवोपनतमित्यर्थः।

---

( ৫৮ ) অঘোর। আঃ ! এই কোন পাপ আমাদের বলিদানে বিঘ্ন হইল ?

( ৫৯ ) কপা। এই বধ্যা মালতীরই একমাত্র অনুরাগের পাত্র, মহামাংস-বিক্রেতা, কামন্দকীর সুহৃদ্ দেবরাতের পুত্র মাধব ( আমাদের বলিপ্রদানের বিঘ্ন হইয়া দাঁড়াইয়াছে )।

( ৬০ ) মাধ। ( অশ্রু বিসর্জ্জন করিতে করিতে) মহাভাগে ! তোমার এই-রূপ বিপদের কারণ কি ?

माध। [ सलज्जम् ] (६१)

त्वत्पाणिपङ्कजपरिग्रहपुण्यजन्मा
भूयासमित्यभिनिवेशकदर्थ्यमानः।
भ्राम्यन् मांसपणनाय, परेतभूमा-
वाकर्ण्य, भीरु! रुदितानि तवागतोऽस्मि॥ (६२)

(क) मालतीति। अलिन्दस्य बहिर्द्वारप्रकोष्ठस्य "चोटा" इति ख्यातस्य ( प्रघाणप्रघणालिन्दाः बहिर्द्वारप्रकोष्ठके इत्यमरः ) उपरि उपर्यलिन्दं, प्रसुप्ता निद्रिता, इह अस्मिन् श्मशाने प्रबुद्धा विगतनिद्रा अस्मि। अलिन्दस्योपरि निद्रिताहं कथमत्रागतेति न जानामीत्यर्थः। क अस्मिन्निमित्ते इति यूयं पुनः अत्रागता इति शेषः। यूयं केन निमित्तेनात्रागता इत्यर्थः। (मालती तु निद्रितैव मायाप्रभावेण कपालकुण्डलया समानीतेत्यवधेयम्, कपालकुण्डलाकर्तृकत्वाद्घोरघण्टस्येव विप्रलब्धे सूचितत्वात् )।

(६१) सलज्जमिति, पिशाचेभ्यो नरमांसविक्रयरूपस्य स्वावलम्बितकुत्सितकर्म्मणः प्रकाश्यमानीयत्वमेवात्र लज्जाहेतुः।

(६२) त्वदिति। हे भीरु! भयशीले! तव पाणिपङ्कजस्य परिग्रहेण पुण्यं पवित्रं जन्म यस्य तथाभूतः, अहं भूयासं इति अभिनिवेशेन अभिसन्धानेन कदर्थ्यमानः कदर्थं क्रियमाणः ( करोत्यर्थकात् कदर्थशब्दात् कर्म्मणि शानच् ) परेतभूमौ अस्मिन् श्मशानक्षेत्रे नरमांसविक्रयाय भ्रमन् पर्य्यटन् अहं तव रुदितानि "हा तात! निष्करुण!" इत्यादि विलापवाक्यानि आकर्ण्य श्रुत्वा आगतोऽस्मि अस्मिन् करालायतने उपस्थितोऽस्मि। त्वदीयक्रन्दनध्वनिसमाकुलितस्तत्परित्राणार्थमेवाहमत्र समागत इति भावः। अत्र पाणिपङ्कजेति लुप्तोपमालङ्कारः। वसन्ततिलका वृत्तम्।

( ক ) মাল। ( অনেক ক্ষণ পরে আশ্বস্ত হইয়া ) মহাভাগ! আমি কিছুই জানিনা, তবে এই মাত্র জানি যে, ঘরের ওটার উপরে নিদ্রিত ছিলাম এবং এই শ্মশানে জাগিয়াছি। ( সুতরাং আমাকে কিরূপে আনিয়াছে, তাহা আমি কিছুই জানি নাই। তুমি এস্থানে কি নিমিত্ত আসিলে ?

( ৬১ ) ( ৬২ ) মাধ। ( লজ্জার সহিত ) হে ভীরু, আমি তোমার পাণি-পঙ্কজ পরিগ্রহ দ্বারা পবিত্রজন্মা হইব, এই অভিসন্ধানে পিশাচদিগের নিকট নরমাংস বিক্রয়ের জন্য এই শ্মশানক্ষেত্রে পর্য্যটন করিতে করিতে তোমার বিলাপবাক্য শুনিয়া উপস্থিত হইয়াছি।

माल। [स्वगतम्।] ह्द्वी ! कधं मम कारणादो एव्वं एदे अप्पणिरवेक्खा परिक्कामन्दि ! (च)

माध। अहो नु खलु भोः ! तदेतत्काकतालीयं नाम (६३) सम्प्रति हि—

राहोश्चन्द्रकलामिवाननचरीं दैवात् समासाद्य मे,
दस्योरस्य कृपाणपातविषयादाच्छिन्दतः प्रेयसीम्।
आतङ्काद्विकलं, द्रुतं करुणया, विक्षोभितं विस्मयात्,
क्रोधेन ज्वलितं, मुदा विकसितं, चेतः कथं वर्त्तते॥ (६४)

---

(च) हा धिक् ! हा धिक् ! कथं मम कारणादेवमेते आत्मनिरपेक्षाः परिक्रामन्ति।

---

(च) मालेति। कथमिति सम्भावनायाम्। एते माधवाः (गौरवाद्बहुवचनम्) मम कारणात् मत्प्राप्त्यर्थं एवं अनेन मांसपणनादिरूपेण आत्मनि स्वरक्षायां निरपेक्षा अनपेक्षाः सन्तः परिक्रामन्ति, अस्मिन् भीषणश्मशाने भ्रमन्ति। अहञ्च दुःखाकरेऽस्मिन् कृत्ये अहमेवापराधिनीति भावः।

(६३) माधवेति। "अहो नु खलु भोः" इत्येतन्निपातत्रयं, विस्मयविषादहर्षद्योतकम्। तदेतत्प्रियतमासन्दर्शनं काकतालीयं काकागमनसमकालिकतालपतनवदाकस्मिकम्। यदा काकः तालफलं पातयितुं न तरुमागच्छति, किन्तु यदा आगच्छति तदैव दैववशात्तालफलं पतति, तथा अहमपि प्रियतमादर्शनवाञ्छया नात्र समागतः, किन्तु नरमांसविक्रयार्थमेवागतः ईदृग्व्यसनसमुपस्थितेनेति दैवादेव प्रियतमादर्शनं मे सञ्जातमिति तात्पर्यम्।

(६४) राह्वोरिति। राहोर्वदनाभ्यन्तरस्य आनने मुखे चरतीति आननचरी तां ("चरेट्"

---

(চ) মাল। (স্বগত) হা ধিক্!! এই মাধব আমার জন্য আত্মরক্ষায় আগ্রহশূন্য হইয়া এইরূপ ভাবে ভ্রমণ করিতেছে।

(৬৩) মাধ। অহো! এই প্রিয়াসন্দর্শন কাকতালীয়বৎ অর্থাৎ কাক তালফলপাতন উদ্দেশে তরুতে নিপতিত না হইলেও যেমন দৈবাৎ কাক গমনকালেই তালফল নিপতিত হয়, তেমন আমি এই শ্মশানে প্রিয়তমাদর্শনোদ্দেশে না আসিলেও দৈবাৎ আমার আগমনকালেই ইহার এই বিপদ উপস্থিত হওয়ায় এই দর্শন সম্পন্ন হইয়াছে।

माध। दुरात्मन्! पाषण्ड! चाण्डाल!।

असारं संसारं, परिमुषितरत्नं त्रिभुवनम्,
निरालोकं लोकं, मरणशरणं बान्धवजनम्।
अदर्पं कन्दर्पं जननयननिर्माणमफलम्,
जगज्जीर्णारण्यं कथमसि विधातुं व्यवसितः॥ (३०)

---

यदस्य शार्दूलेन शाङ्गसेन तादृशी घन इवेन्दर्क, त्वं हिताहवः सर्वदा हिंसारतायवस्य प्राणिनां घषशास्त्र स्वाङ्गसे: विचमात्यस्य प्रायुपदोकनस्य केवलं शायतनं तथाभूतमितर् कराजदार-तनमित्यर्थः, भुवने सेवते यः तस्य मे मम गोचरं विषयं प्राप्तोऽसि। यथा शार्दूलाक्रान्तहरिणो दयापरवशो हरिणः शार्दूलेन हन्यते, तथैव उपहारार्थमानीतायामस्यां दयापरवशस्त्वमपि मया हन्यत इति भावः। एतद्भावमेव स्पष्टयति—सोऽहमित्यादिना। सः तादृगपि मादृशः तादृश-कपालकुण्डलासेवनस्य अहं खड्गहतः खड्गप्रहारेण छिन्न कण्ठ ग्रीवा यस्य तथाभूतस्य तव एव कबन्धस्य गलावलम्बन बन्धात् दीर्घाच्छिद्रात् प्राग्भारं रक्तधारां निस्यन्दयति यदि तत: सः तथोक्तः भवतैव त्वयैव प्राक् प्रथमं भूताना सकलप्राणिनां जननीं मातरं इमां करालां देवीमित्यर्थः, तर्पयामि प्रीणयामि। पश्चात्त्वामपहनिष्यामीति भावः।

अत्र छिन्नकण्ठकबन्धशब्दयोः न्यायेऽपि छिन्नकण्ठत्वेन प्रयुक्तत्वात् पुनरुक्ततादोषः।

अत्रार्थो उपमा, छेकानुप्रासवृत्त्यनुप्रासौ चालङ्कारौ इति तेषां संसृष्टिः। शार्दूलविक्रीडितं वृत्तम्।

(३०) असारमिति। अरे दुरात्मन्! पाषण्ड! चण्डाल! संसारं त्रिभुवनं कथं क्रियते असारं सारं यतेन मालत्यापरविहीनं विधातुं कर्तुं व्यवसितः प्रवृत्तः असि भवसि

---

দয়াপরবশ মৃগের ন্যায় তুমি সম্প্রতি হিংসাপরায়ণ ও প্রাণিবলির নিকেতন বলিয়া আমার গোচরীভূত হইয়াছ। অর্থাৎ ব্যাঘ্রাক্রান্ত মৃগীতে দয়াযুক্ত মৃগ যেমন ব্যাঘ্রকর্তৃক নিহত হয়, সেইরূপ উপহারার্থ আমার আনীত এই স্ত্রীতে দয়াযুক্ত তুমিও আমা কর্তৃক নিহত হইবে। অতএব সেই হিংসাপরায়ণ ও তাদৃশ কপালকুণ্ডলাসেবী আমি প্রথমে খড়্গাঘাতে ছিন্নগ্রীব অতএব কবন্ধভাবাপন্ন তোমার রন্ধ্র হইতে রক্তপ্রবাহ নিঃসারণকারী তোমা দ্বারাই প্রাণিবর্গের জননী এই করালাদেবীকে সন্তুষ্ট করিব (পরে এই স্ত্রীর রক্ত দ্বারা সন্তুষ্ট করিব)॥

(৩০) মাধ। হে দুরাত্মন্ পাষণ্ড! চণ্ডাল! সংসার অসার, ত্রিভুবন

अपिच। रे रे पाप!

प्रणयिसखीसलीलपरिहासरसाधिगतै-
र्ललितशिरीषपुष्पहननैरपि ताम्यति यत्।
वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः,
पततु शिरस्यकाण्डयमदण्ड इवैष भुजः ॥ (४८)

---

हिमादीनां कुचकलशत्वया "मुक्तयोनिता" जगज्जीर्णारण्यमिति निरङ्कुशपङ्कजापहारात् इति संसृष्टिः। तथाच मालत्या अलौकिकरूपलावण्यशालित्वं व्यज्यत इत्यलङ्कारेण वस्तु ध्वनिरित्यतीव मनोहरोऽयं श्लोकः। शिखरिणीवृत्तम् ॥

(४८) प्रणयीति। यत् मालत्या वपुः प्रणयिनीनां प्रणयास्पदीभूतानां सखीनां सखीभिः लीलया सह वर्त्तमानः यः परिहासः, तत्र रसेन रागेण अधिगतैः लब्धैः ललितस्य अतिसुकुमार-स्यानन्ददायकस्य शिरीषपुष्पस्य हननैः प्रहारैः अपि (किं पुनः खड्गैरितरैः) ताम्यति वेदनामनुभवति। तत्र वपुषि वधाय शस्त्रं खड्गं उपक्षिपतः गृहीतवतः तव शिरसि मस्तके अकाण्डे अकस्मादेव पतनशीलः यमदण्डः कालदण्ड इव एष दृश्यमानः मम भुजः बाहुः पततु। मम बाहुप्रहारेणैवाचिरात् तव शिरश्चूर्णीभविष्यतीति भावः। अत्रापि अनङ्गे "भुजः पततु" इत्यभिधानं रोषकषायितस्वान्तस्य माधवस्य वागाडम्बरातिशयद्योतनार्थमित्यवधेयम्।

यत् तादृशपुष्पहननैरपि ताम्यति, का कथा खड्गप्रहार इत्यर्थापत्तिः। एवं तादृश-हननैः पीडायाः असम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्तिः, यमदण्ड इवेत्युपमा चालङ्कार-स्त्वेषामङ्गाङ्गिभावेन सङ्करः। निष्कारणापतनातिशयोक्तिभ्याञ्च मालतीकलेवरस्यातीव सौकु-मार्यं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः। नर्दटकं वृत्तम् "यदि भवतो नजौ भजजला गुरु नर्दटक"-मिति तल्लक्षणम् ॥

---

সংসার-সর্ব্বোৎকর্ষশালি আলোকশূন্য, রাজগণ মধ্যেস্থ, কন্দর্প দর্পশূন্য, জন-গণের নির্ম্মাণ বিফল ও জীর্ণারণ্য প্রায় হইবে, অতএব তাহা সর্ব্বথা অকর্ত্তব্য)।

(৪৮) রে রে পাপকারিন্! যেই মালতীর শরীর প্রণয়িসখীজনের সহিত পরিহাসানুরাগবশে প্রাপ্ত সুকোমল শিরীষপুষ্পপ্রহার দ্বারাও বেদনা অনুভব করে, সেই শরীরে বধের জন্য খড়্গধারণকারী তোমার মস্তকে অকস্মাৎ পতনশীল যমদণ্ডের ন্যায় আমার এই বাহু নিপতিত হউক।

अघोर। आः दुरात्मन्! प्रहर, नन्वयं न भवसि। (६९)

माल। पसीद णाह साहसिअ! दारुणो क्खु अअं हदासो, परित्ताहि मं पडिणिअत्तोअदु इमादो अणत्थसंसअआदो। (छ)

कपा। भगवन्! अप्रमत्तो भूत्वा, दुरात्मानं व्यापादय। (७०)

माधवाघोरघण्टौ मालतीकपालकुण्डले प्रति। (७१)

---

(छ) प्रसीद नाथ साहसिक, दारुणः खल्वयं हताशः, परित्रायस्व मां प्रतिनिवर्त्तता-त्प्रमादादनर्थसंशयात्।

---

(६९) अघोरेति। प्रहरेति वचनं पश्यामि ते कीदृक्सामर्थ्यमिति सगर्वोपहास-सूचकम्। अयं बलिविघ्नकारित्वाद्दुरात्मा न भवसि किं अपि त्वस्येव भवसीत्यर्थः। तस्मात्त्वमेव मयाऽभिहन्तव्य इति भावः।

(छ) मालतीति। हताशः निर्दयः (हताशो निर्दये पापाद्विते पिशुनेऽपि चेति मेदिनी) अनर्थसंशयात् अनिष्टस्य सन्देहात्। एतत्तीव दारुणोऽयमिदानीमन्यदर्शनावस्थात्वं भवतां प्रत्यपि दयालेशोऽस्य न स्यात्, युद्धे च जयस्य निश्चयाभावात् स्वकीयानिष्टसंशयोऽप्यस्तीति मत्परित्राणाध्यवसायं विहाय पलायनेन त्वं स्वजीवनं रक्ष। तथा च त्वद्गतप्राणाया मम त्वज्जीवनपरित्राणेनैव परित्राणं भवेदिति सरलार्थभावार्थौ।

अत्र विद्रवो नाम मुखसन्ध्यङ्गं। तल्लक्षणं दर्पणे—

"शङ्काभयत्रासकृतः सम्भ्रमो विद्रवो मतः" इति॥

(७०) कपेति। अप्रमत्तः अनवधानतारहितः। अस्यापि बलशालित्वादिति भावः।

(७१) अत्र यथासंख्यान्वयात् माधवो मालतीं प्रति अघोरघण्टः कपालकुण्डलां प्रत्यभिमुखौ लक्ष्यते।

---

(৬৯) অঘোর। আঃ দুরাত্মন্! প্রহার কর (দেখি তোমার কতদূর বীরত্ব) বলিবিঘ্নকারিত্বহেতু তুমি দুরাত্মা নহ কি?

(ছ) মাল। নাথ! প্রসন্ন হও, এই ব্যক্তি অতিদারুণ ও নির্দয়। তুমি আমাকে পরিত্রাণ কর। এই অনিষ্টসংশয় হইতে প্রতিনিবৃত্ত হও।

(৭০) কপা। ভগবন্! সাবধান হইয়া দুরাত্মার বিনাশ কর।

(৭১) (মাধব মালতীর প্রতি ও অঘোরঘণ্ট কপালকুণ্ডলার প্রতি)

अयि भीरु !

धैर्य्यं निधेहि हृदये, हत एव पापः,
किं वा कदाचिदपि केनचिदन्वभावि ।
सारङ्गसङ्गरविधाविभकुम्भकूट-
कुट्टाक-पाणिकुलिशस्य हरेः प्रमादः ॥ (७२)

[ नेपथ्ये कलकलः । सर्वे आकर्णयन्ति । ] (७३)

[ पुनर्नेपथ्ये । ] भो भो मालत्यन्वेषिणः सैनिकाः ! इयम् अमात्यभूरिवसुम् आश्वासयन्ती अप्रतिहतप्रचारगतिः भगवती कामन्दकी वः समादिशति । ( ७४ )

---

(७२) धैर्य्यमिति । अयि भीरु । हे भयविह्वले । हृदये अन्तःकरणे धैर्य्यं एतद्भयजनितकातरताराहित्यं निधेहि समारोपय । ( यतः ) एष पापः दुरात्मा हतः मया व्यापादित एव । ( तदानीमव्यापादनेऽप्युत्कटकोटिकसम्भावनासूचनार्थमतीतनिष्ठाप्रयोगः ) अत्र हेतुमाह—किं वेति । सारङ्गसङ्गरविधौ मृगसंहारव्यापारे इभकुम्भकूटस्य करिकुम्भसङ्घस्य कुट्टाकं विदारणस्वभावं ( "षड्भिचिलुण्टिजल्पिकुट्टां षाक" इति षाकप्रत्ययः ) पाणिकुलिशं पाणिरेव कुलिशं वज्रं कुलिशमिव वा पाणिर्यस्य तथाभूतस्य हरेः सिंहस्य प्रमादः अनवधानता कदाचिदपि केनचिदपि जनेन किं वा अन्वभावि अनुभूतः अपि तु नैवेत्यर्थः । -

अत्र पूर्वार्द्धे व्याख्यार्थहेतुकं काव्यलिङ्गद्वयं पाणिकुलिशमित्यत्र लुप्तोपमारूपकयोः सन्देहसङ्करः, एवमप्रस्तुतात् समात् प्रस्तुतस्य समस्य प्रतीतेरप्रस्तुतप्रशंसा चालङ्कार इति तेषामङ्गाङ्गिभावेन सङ्करः । वसन्ततिलकावृत्तम् ॥

(७३) कलकलः कोलाहलः । सर्व्वे माधवादयः ।

(७४) आश्वासयन्ती—"मालत्यपहर्त्तापि नैव व्यापादयितुं शक्ता अवश्यमेव तां

---

( ৭২ ) অয়ি ভয়শীলে ! তুমি হৃদয়ে ধৈর্য্যধারণ কর, এই দুরাত্মা নিশ্চয় হত হইয়াছে, কারণ যাহার করবজ্র করিকুম্ভ বিদারণশীল, তাদৃশ সিংহের মৃগবধ ব্যাপারে প্রমাদ কেহ কখনও অনুভব করিয়াছে কি ? ( কখনও নহে )।

( ৭৩ ) ( নেপথ্যে কলকলধ্বনি, সকলের শ্রবণ )।

( ৭৪ ) ( পুনরায় নেপথ্যে ) হে মালতীর অন্বেষণকারী সৈন্যগণ।

"पर्य्यवष्टभ्यतामेतत्करालायतनं द्रुतम् ।
नाघोरघण्टादन्यस्य कर्म्मैतद्रोपणाद्भुतम् ।
न करालोपहाराच्च फलमन्यद्विभाव्यते ॥" (৭৫)

कपा । भगवन् ! पर्य्यवष्टब्धाः स्मः । (৭৬)

अघोर । सम्प्रति विशेषतः पौरुषस्यावसरः । (৭৭)

---

माप्नुवती"मेवम्' सान्त्वयन्ती । अप्रतिहता अप्रतिबद्धा प्रभावा विमानस्य गतिर्यस्याः तथा भूता । क्वचित्"दप्रतिहतप्रभावच्"इति पाठभेदः ॥

(৭৫) चाटिप्रकार' दर्शयति—पर्य्येति । एतत्करालायतनं द्रुतं चिप्रं पर्य्यवष्टभ्यत परिवेष्टयताम् । कुत इत्यत आह—नेति । मौपर्थ्यं माधवाभ्याद्यवगा पितादीनां मौतिजनक चद्भुतं, ससुचितरचिपरिचितभयमादपहरणादायर्थकरं एतत् मालत्यपहरणरूपं कर्म अघोरघण्टादन्यस्य अघोरघण्टव्यतिरिक्तजनस्य न सम्भवतीति शेषः । करालोपहारात् बलिलेः करालार्थे प्रदानाच्च अन्यत् अतिरिक्तं फलं एतदपहरणस्य प्रयोजनं न विभाव्यते न सम्भाव्यते तथाचाघोरघण्टेनैव करालायै बलिलेन दातुं मालत्यपहृतेति तस्मिन् करालायतने सर्वं इत्यवतमेतत् परिवेष्टनीयमिति भावः ।

"रहस्यार्थस्य तूद्भेदः क्षिप्तिः स्या"दिति दर्पणोक्तेरयम् "क्षिप्ति"र्नाम गर्भसन्धेरङ्गम् ॥

(৭৬) पर्य्यवष्टब्धाः सैनिकैः परिवृताः । अधीनात् पलायनकर्त्तव्यतावाचिका उभयोरिति द्रिय' । "नृपादिजनिता भीतिरुद्वेगः परिकीर्त्तित" इति दर्पणोक्तेरयम् "उद्वेगो" नाम गर्भसन्धेरङ्गम् ॥

(৭৭) विशेषतः आधिक्येन, पौरुषस्य बलप्रकाशात्मकपुरुषकारस्य, अवसरः अवकाशः सैनिकैः परिवेष्टितोऽपि अयमहमेनं मालतीविग्रहं सन्त्यामि, तदेव मे पराक्रमो विशेषः

---

যাহার বিমানের গতি অপ্রতিবদ্ধ সাদৃশী এই ভগবতী কামন্দকী অমাত্যভূরিবসুকে সান্ত্বনা করিতে করিতে তোমাদিগকে আদেশ করিতেছেন—

(৭৫) "এই করালার গৃহ অতিশীঘ্র পরিবেষ্টিত কর, এই মালতী অপহরণরূপ ভীষণ ও আশ্চর্য্যজনক কর্ম্ম অঘোরঘণ্ট ভিন্ন আর কাহার নহে। করালা উদ্দেশে বলিদান ভিন্ন এই অপহরণের অন্য ফলও সম্ভবপর নহে।

(৭৬) কপা। ভগবন্ আমরা পরিবেষ্টিত হইলাম।

माल। हा ताद! हा भअवदि! (छ)

माध! भवतु, बान्धवसमाजसुस्थितां मालतीं विधाय, तत्-समक्षमेनं दुरात्मानं व्यापादयामि। (७८)

[मालतीमन्यतः कापालिकमन्यतः प्रेरयन् परिक्रामति।] (७९)

माधवाघोरघण्टौ। [अन्योऽन्यमुद्दिश्य] आः पाप! (८०)

कठोरास्थिग्रन्थि-व्यतिकररणत्कारमुखरः,

खरस्नायुच्छेदक्षणविहितवेगव्यपगमः।

---

(छ) हा तात! हा भगवति!

---

प्राणापितो भवेत्, समर्थेष तव भविष्यामीत्यथवा विशेषतः पुरुषकारः कर्त्तव्य इति न भेतव्यं त्वयेत्याश्वासोक्तिरियं।

(छ) "भगवति" इति कामन्दक्याः सम्बोधनं। संशयितजीविता मां मन्निमित्त-विपत्तिकं महाभागं माधवञ्च रक्षस्वेति वाक्यशेषः।

(७८) माधेति। मालतीं बान्धवसमाजे रक्षार्थसमागतपित्रादिस्वजनसमूहमध्ये सुस्थितां भयोपशमेन सुखावस्थितां विधाय सम्पाद्य तत्समक्षं तस्य बान्धवसमाजस्य प्रत्यक्षं यथा स्यात्तथा दुरात्मानं एनं कापालिकं व्यापादयामि विनाशयामि। तथाच मयानुष्ठीयमानं कन्यारक्षणरूपं महोपकारं प्रत्यक्षीकुर्व्वन्नमात्योऽवश्यमेव निष्कारणोपकारिणे मह्यं मालतीं-मर्पयिष्यतीत्याशयः।

(७९) अन्यतः तद्बान्धवावस्थानप्रदेशं प्रति। अन्यतः तद्विपरीतप्रदेशं प्रति।

(८०) अन्योऽन्यमिति माधवः अघोरघण्टमुद्दिश्य अघोरघण्टश्च माधवमुद्दिश्य एकविधमेव आः पापेत्यादिवाक्यमाहेत्यर्थः।

---

(৭৭) অঘোর। সম্প্রতি বিশেষ পুরুষকারের সময়।

(ছ) মাল। হা তাত। হা ভগবতি!

(৭৮) মাধ। হউক, মালতীকে বান্ধবসমাজমধ্যে সুস্থিত করিয়া সেই বান্ধবসমাজসমক্ষে এই দুরাত্মার নাশ করিব।

(৭৯) (মালতীকে তাহার বান্ধবাবস্থানপ্রদেশে ও কাপালিককে তদ্বিপরীত প্রদেশে প্রেরিত করিতে করিতে পরিক্রমণ)।

(৮০) (মাধব অঘোরঘণ্টের প্রতি ও অঘোরঘণ্ট মাধবের প্রতি)।

निरातङ्कः पङ्केष्विव पिशितपिण्डेषु विलस-
न्नसिर्गात्रं गात्रं सपदि लवशस्ते विकिरतु ॥ (८१)

इति निष्क्रान्ताः सर्वे। (८२)

इति मालतीमाधवे श्मशानवर्णनं नाम पञ्चमोऽङ्कः। (८३)

---

(८१) कठोरेति। आ पाप। हे पापात्मन्! कठोराः परिणतत्वात् कठिना ये अस्थिग्रन्थयस्तेषु आतिकरेण अभिघातात्सम्पर्कयोगेन यो रणत्कारः रणदित्याकारोऽव्यक्तशब्दः (रणत्कार इति पाठेऽपि तदाकाराव्यक्तशब्द एवार्थः) तेन मुखरः मुखरीकृतः शब्दायमानः। तथा खराणां कठोराणां स्नायूनां छेदेन कर्तनेन क्षणं क्षणमात्रकालं विहितः उत्पादितः वेगव्याघातः वेगस्यावरोधो यस्य तथाभूतः। तथा पिशितपिण्डेषु अस्थिस्नायुशून्यमांसबहुल-स्थानेषु पङ्केष्विव कर्दमेष्विव निरातङ्कः अस्थ्यादिरहितत्वादप्रतिबन्धः विलसन् स्फुरन् असिः मम खड्गः सपदि शीघ्रं ते तव गात्रं गात्रं प्रत्यङ्गं (गात्रं गजापरजङ्घादौ शरीरेऽङ्गे कलेवरे" इति मेदिनी) लवशः खण्डशः खण्डं खण्डं विधायेति यावत्, विकिरतु इतस्ततो विक्षिपतु।

अत्र बीभत्सोपस्कृतो रौद्रो रसः, "त्रोटकं पुनः संरम्भवाक्" इति दर्पणलक्षणात् "त्रोटक" नाम गर्भसन्ध्यङ्गम्। पङ्केष्विवेति श्रौती उपमालङ्कारः। शिखरिणी वृत्तम् ॥

(८२) निष्क्रान्ता इति, "दूराह्वानं वधं युद्धं राज्यदेशादिविप्लवं। संरोधं भोजनं स्नानं सुरतञ्चानुलेपनं। अम्बरग्रहणादीनि प्रत्यक्षाणि न निर्दिशेत् ॥" इति निषेधेन युद्धस्यादर्शनीयत्वात् तदर्थं रङ्गभूमेर्निर्गता इत्यर्थः।

(८३) अस्मिन्नङ्के श्मशानवर्णनस्यातिविस्तृतत्वादस्य "श्मशानवर्णन"मिति संज्ञा विहिता। अस्मिन् पुस्तके च नायमङ्कः परिच्छेदत इत्यनुसन्धेयम् ॥

इति काव्यतर्कतीर्थोपनामक-श्रीकृष्णविहारितर्कसिद्धान्तभट्टाचार्यविरचितायां तत्त्वबोधिनीसमाख्याया मालतीमाधवव्याख्यायां पञ्चमाङ्क-विवृतिः समाप्ता।

---

(৮১) রে দুরাত্মন্! কঠিন অস্থিগ্রন্থিতে অভিঘাতবশতঃ উৎপদ্যমান "রণৎ" ইত্যাকার অব্যক্ত শব্দ দ্বারা শব্দায়মান কঠোর স্নায়ুচ্ছেদনে ক্ষণমাত্র কাল প্রতিহতবেগ হইয়া কর্দ্দমপ্রায় মাংসবহুল স্থানে অপ্রতিবন্ধ ভাবে বিলসিত আমার অসি অতি শীঘ্র তোমার প্রত্যেক অঙ্গ খণ্ড খণ্ড করিয়া বিকীর্ণ করুক।

(৮২) (সকলে নিষ্ক্রান্ত হইল)।

(৮৩) মালতীমাধবের শ্মশানবর্ণননামক পঞ্চম অঙ্ক সমাপ্ত ॥

# षष्ठोऽङ्कः ।

ततः प्रविशति कपालकुण्डला । (१)

कपा । आः दुरात्मन् ! मालतीनिमित्तं व्यापादितास्मद्गुरो ! माधवहतक ! अहं त्वया तस्मिन्नवसरे निर्दयं निघ्नती अपि स्त्रीति अवज्ञाता । [ सक्रोधम् । ] तदवश्यमनुभविष्यसि कपालकुण्डला-कोपस्य विजृम्भितम् । (२)

शान्तिः कुतस्तस्य भुजङ्गशत्रोर्यस्मिन्ननुक्तानुशया सदैव ।
जागर्त्ति दंशाय निशातदंष्ट्राकोटिर्विषोद्गारगुरुर्भुजङ्गी ॥ (३)

---

(१) तत इति, अन्येषां प्रस्थानात् किञ्चित् परत इत्यर्थः ।

(२) कपेति । मालतीनिमित्तमिति व्यापादितक्रियाविशेषणम्, अतएव तस्य कर्म्मकारकत्वेन तत्सापेक्षेऽपि व्यापादितः अस्मद्गुरुर्येन तादृशेति समासो न विरुध्यते । इति मन्तव्यम् । हत एव हतः ( कुत्सायां कप्रत्ययः ) शोचनीयः, स चासौ माधवश्चेति माधवहतकः तत्सम्बोधनम् ( राजदन्तादित्वात् परनिपातः । तस्मिन्नवसरे अघोरघण्टव्यापादनकाले, निर्द्दयं दयारहितं यथा स्यात्तथा निघ्नत्यपि त्वां प्रहरन्त्यपि अहं त्वया स्त्री इति हेतोः अवज्ञाता अवधीरिता, स्त्रीत्वेनाश्लाघ्या विनिपात्यैव परिमुक्तेत्यर्थः ।

"अधिक्षेपवचःकारी क्षोभः क्रोधः स एव तु" इति दर्पणवचनादत्र "क्षोभो" नाम नाट्यालङ्कारः ॥

(३) शान्तिरिति । यस्मिन् भुजङ्गशत्रौ अनुक्तानुशया यत्र. सर्पस्य विनाशात् अपरित्यक्तदीर्घवैरा ( निबद्धानुशयेति पाठे तु बद्धदीर्घवैरेत्यर्थः ) ( अनुशयः पश्चात्तापे दीर्घवैरानुबन्धयोः-

---

(১) ( তৎপরে কপালকুণ্ডলার প্রবেশ )।

(২) কপা। হে দুরাত্মন্ নীচলোক মাধব ! তুমি মালতীর জন্য আমার গুরুকে ( অঘোরঘণ্টকে ) নিহত করিয়াছ, এবং সেই নিধনকালে আমি তোমাকে নির্দয়ভাবে প্রহার করিলেও তুমি আমাকে স্ত্রীলোক বলিয়া অবজ্ঞা করিয়াছ, ( ক্রোধের সহিত ) অতএব অবশ্যই তুমি কপালকুণ্ডলার ক্রোধের ফল অনুভব করিবে।

[ नेपथ्ये । ] भो राजानयरमवयसामाज्ञया मच्चरध्वम्,
कर्त्तव्येषु, श्रवणसुभगं भूमिदेवाः पठन्तु ।
चित्रं नानावचननिवहैर्यच्छतां मङ्गलेभ्यः,
प्रत्यासन्नस्त्वरयतितरां जन्ययात्राप्रवेशः ॥ (४)

रिति शेषः ) नियतदंष्ट्राकोटिः समतितीव्रुदमनाग्रभागा विषोद्गारगुरुः गरलोद्वमनकठोरा भुजङ्गी फणिनी दंशाय दंशनार्थं सदैव जागर्त्ति सभयका वर्त्तते । तस्य भुजङ्गशत्रोः सर्पनिकृन्तः शान्तिः सुस्थता कुतः काथं ? कथमपि नेत्यर्थः । यथाशीविषविनाशिनो जनस्य तद्विनाशदय-बद्धवैरतनूपवीदंशनाशङ्कया शान्तिर्न स्यात्, तथैवास्मद्गुरुवधकारित्वस्यापि भगकर्त्तुं कापकारा-शङ्कया कदापि शान्तिर्न स्यादिति भावः ।

अत्र विधेयप्रतिपादकस्य तच्छब्दघटितवाक्यस्य पूर्व्वोपन्यासादनुवाद्यत्वप्रतीतिकारित्वेन वाक्यगत"विधेयाविमर्ष"दोषः । एवं समादप्रस्तुतात् समस्य प्रस्तुतस्य बोधादप्रस्तुतप्रशंसा-लङ्कारः । इन्द्रवज्रावृत्तम् ॥

(४) भोः इति । भो राजान ! हे पद्मावतीश्वरनिदेशवर्त्तिनः सामन्तभूपतः ! यूयं चरमवयसां पूर्व्वापरकर्त्तव्याभिज्ञवृद्धानां आज्ञया अनुमत्या कर्त्तव्येषु उद्वाहोपयोगिकृत्येषु सञ्चरध्वं ( समप्रतीभ्यायुक्त इत्यात्मनेपदम् ) प्रवर्त्तध्वं यथाक्रमं तत्तदनुष्ठानेषु यतध्वमिति यावत् । तथा हे भूमिदेवा । ब्राह्मणाः । भवन्तः श्रवणसुभगं श्रुतिसुखकरं यथा स्यात्तथा पठन्तु शान्तिमङ्गलकस्तोत्रं उच्चारयन्तु । तथा नानावचननिवहैः बहुप्रकारवाक्यसमूहैः मङ्गलेभ्यः वरकन्ययोः कुशलार्थं ( तादर्थ्ये चतुर्थी ) चित्रं जनानामाश्चर्यं जनयितुमिति शेषः । चेष्टतां यत्नः क्रियताम् वन्द्यादिभिरिति शेषः । कुत इत्यत आह—प्रत्यासन्न इति । प्रत्यासन्नः अतिसन्निहितः जन्यानां वरस्निग्धजनानां ( जन्याः स्निग्धाः वरस्य ये इत्यमरः ) यात्रायाः वरगृहात् कन्यागृहप्रयाणक्रियायाः प्रवेशः भाविः त्वरयतितरां सर्व्वानतित्वरायुक्तान् करोति । तथाच मालतीमहाराजनन्दनयोर्व्विवाहार्थमचिरादेव वरयात्रिकाः अमात्यगृहं प्रति शोभायात्रां करिष्यन्तीति अथचैव तत्पूर्व्वानुष्ठेयानि सर्व्वाणि सम्पाद्यानीति भावः ।

(৩) যাহার দশনাগ্রভাগ অতিতীক্ষ্ণ গরলোদ্বমনভীষণ, তাদৃশী সর্প-পত্নী পতিনিধনজনিত দীর্ঘদ্বেষ পরিত্যাগ না করিয়া যাহার দংশনের জন্য সর্ব্বদা চেষ্টিত থাকে, তাদৃশ ভুজঙ্গশত্রুর শান্তি কোথায় ?

(৪) (নেপথ্যে) হে সামন্ত রাজগণ। তোমরা পূর্ব্বাপর কর্ত্তব্যাভিজ্ঞ বৃদ্ধদিগের আদেশ অনুসারে উদ্বাহোপযোগি কার্য্যে প্রবৃত্ত হও। হে

यावत् सम्बन्धिनो न परापतन्ति, तावत् वत्सया मालत्या सह नगरदेवतागृहम् अविघ्नमङ्गलाय गन्तव्यम् इति आदिशन्ति भगवतीनिदेशवर्त्तिनोऽमात्यदाराः। तया गृहीतसविशेषमण्डनः प्रतीष्यतामानुयात्रिको जनः। (५)

कपा। भवतु इतो मालतीविवाहपरिकर्मसत्वरप्रतीहारशतसङ्कुलात् प्रदेशादपक्रम्य, माधवापकारं प्रति अभिनिविष्टा भवामि। [ इति निष्क्रान्ता। विष्कम्भकः। ] (६)

---

अत्र कर्त्तृवाच्यानां मज्जत्वभित्यादिक्रियाणां मध्ये तद्भिन्नवाच्यायाः चेष्टतामितिक्रियायाः सन्निवेशात् भग्नप्रक्रमता, जनयितुमित्यादीनामध्याहर्त्तव्यत्वात् न्यूनपदता च दोषः। एवं चतुर्थचरणवाक्यार्थस्य पूर्व्वपूर्व्ववाक्यार्थान् प्रति हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः। मन्दाक्रान्ता वृत्तम्॥

(५) यावदिति। सम्बन्धिनो वरयात्रिकाः, न परापतन्ति नायान्ति, भगवतीनिर्देशवर्त्तिनः कामन्दक्यनुमत्यनुसारिणः अमात्यदाराः अमात्यस्य भूरिवसोर्धर्मपत्नी। तया गृहीतं मालत्यै प्रदानार्थमादत्तं सविशेषं मण्डनं वरगृहानुप्रेषितं विशिष्टवस्त्रालङ्कारादिकं येन तादृशः आनुयात्रिको जनः मालत्यनुचरप्रतीहारी जनः प्रतीष्यतां मालत्या प्रतिपाल्यताम् इति आदिशन्तीत्यर्थः। तथाच वरगृहानुप्रेषितवस्त्रालङ्कारादिवाहकप्रतीहारीजनस्य देवतायतनगमनं यावत्तावत्तत्रैव मालत्या स्थातव्यमिति आदिशन्तीति भावः।

(६) कपेति। इतः अस्मात् मालत्या विवाहपरिकर्म्मणि विवाहसाधकनानाविधक्रियायां

---

ব্রাহ্মণগণ! আপনারা শ্রুতিমধুর যাত্রার শুভশংসি স্তোত্রাদি পাঠ করুন। এবং বন্দিপ্রভৃতিরা বরকন্যার মঙ্গলার্থ নানাবিধ বাক্যসমূহ দ্বারা [illegible] আশ্চর্য্য জন্মাইবার জন্য যত্ন করুক। যে হেতু অতিবিস্মিত [illegible] প্রাপ্তি সকলকে অতি ত্বরাযুক্ত করিতেছে।

(৫) ভগবতী কামন্দকীর আদেশবর্ত্তিনী অমাত্য[illegible] যে, বরপক্ষীয়গণ আসিবার পূর্ব্বেই মঙ্গলকার্য্যে বিঘ্ন [illegible] সহিত নগরদেবতাগৃহে যাইতে হইবে, এবং [illegible] বস্ত্রালঙ্কারাদি লইয়া মালতীর অনুচর [illegible] পর্য্যন্ত দেবতায়তনেই মালতীর অপেক্ষা করিতে হইবে।

[ ततः प्रविशति कलहंसकः । ]

कल । आणत्तोम्हि, णअरदेवदागब्भघरट्ठिदेण मअरन्देण, अज्जमाहवेण, जह जाणाहि दाव अत्ताहिमुहं पउत्ता मालदी ण वेत्ति. ता जाव णं आणन्देम्म (क) ।

[ ततः प्रविशतो माधवमकरन्दौ ।

---

(क) आज्ञप्तोऽस्मि, नगरदेवतागर्भगृहस्थितेन मकरन्देन आर्य्यमाधवेन, यथा जानीहि तावत्, आत्माभिमुखं प्रवृत्ता मालती न वेति, तदावदेनम् आनन्दयिष्यामि ।

---

सम्वरेण ध्येयेन प्रतीहारमन्त्रेन बहुतरद्वारपालेन सङ्कुलात् परिस्थानात् प्रदेशात् भूरिसुवार-दैर्घ्यादिभयं, अपरस्य मध्ये गत्वा माधवस्यापकारो मालत्यपहरणादिरूपम् प्रति अभिनिविष्टा द्रष्टव्येत्ता । अस्य प्रतीहारयन्त्रसङ्कुलप्रदेशस्य साहाय्यकारसाधनप्रतिकूलत्वादन्यतो गत्वैव तदभिनिवेशः करणीय इति भावः । विष्कम्भक इति, मध्यमपात्रभूतकपालकुण्डलामात्र-प्रयुक्तत्वात् शुद्धविष्कम्भकोऽयम् । विष्कम्भकलक्षणस्य "व्यापादितास्मदगुरो" इत्यनेनाघोरघण्ट-वधादिरूपस्यातीतकथांशस्य "वत्समद्य साम्प्रतम्" इत्यादिना साम्प्रतम् नगरदेवतागृहं प्रति गमनस्य माधवापकारं प्रत्यभिनिविष्टा भवत्यमीत्यनेन मालत्यपहरणरूपस्य च भाविकथांशस्य निदर्शनादिति विभावनीयम् ।

(क) माधवमकरन्दयोः प्रवेशमभाह—आणत्त इति । इतो मुखं एतन्नगरदेवतायतन-गृहाभिमुखं प्रवृत्ता आरब्धगमना । एनं माधवं, आनन्दयिष्यामीति "मालती इतोमुखमागच्छति" इति वार्त्तया विज्ञापनेनेति शेषः ।

---

(ঙ) কপা। হউক, মালতীর বিবাহোপলক্ষে নানাবিধ ক্রিয়াসাধন-ব্যগ্র বহু দ্বারপালপরিব্যাপ্ত এই প্রদেশ হইতে অন্যত্র যাইয়া মাধবের অপকারসাধনে অগ্রবর্তী হই। ( কপালকুণ্ডলার প্রস্থান ) ( অতঃপর কল-হংসকের প্রবেশ )।

(ক) কল। মকরন্দের সহিত নগরদেবতার অভ্যন্তরগৃহস্থিত প্রভু মাধব কর্তৃক আমি আজ্ঞাত হইয়াছি—"তুমি জান, এই দেবগৃহাভিমুখে মালতী আসিতেছে কি না? অতএব "মালতী এই অভিমুখে আসিতেছে" ইহা নিবেদন করিয়া তাহাকে আনন্দিত করিতে যাই।

( তাহার পর মাধব ও মকরন্দের প্রবেশ )

माध। मालत्याः प्रथमावलोकनदिनादारभ्य विस्तारिणो-
भूयः स्नेहविचेष्टितैर्न्नगह्यो नीतस्य कोटिं पराम्।
अद्यान्तः खलु सर्व्वथास्य मदनायासप्रबन्धस्य मे,
कल्याणं विदधातु वा भगवतो नीतिर्विपर्य्येतु वा॥ (७)

---

(७) मालत्या इति। मृगदृशः हरिणनयनाया मालत्याः प्रथमावलोकनदिनात् वकुल-वीथ्यां प्रथमदर्शनदिवसादारभ्य विस्तारिणः क्रमशो विवृद्धिमापन्नस्य भूयः पुनरपि स्नेहविचेष्टितैः स्नेहसूचकसाभिप्रायावलोकनादिभिः परां कोटिं परममुत्कर्षं नीतस्य प्रापितस्य अस्य अनुभूयमानस्य मे मम मदनायासप्रबन्धस्य कन्दर्पव्यथापरम्परायाः सर्व्वथा सर्व्वप्रकारेण अद्य खलु अद्यैव अन्तः अवसानं भविष्यतीति शेषः। कथमित्याह—कल्याणमिति। भगवत्याः कामन्दक्या नीतिः नयः अनुष्ठानप्रणालीति यावत्, कल्याणं अत्रैव देवतायतने मालतीपाणि-ग्रहणसम्पादनरूपं मङ्गलं विदधातु करोतु वा, वा अथवा विपर्य्येतु मम दुर्भाग्यवशात् केनचित् प्रतिबद्धा विपरीता भवतु, मालतीपाणिग्रहणरूपं मङ्गलं न विदधातु इत्यर्थः। तथाच भगवती-नीतिप्रभावाद्यदि मालतीपाणिग्रहणाशा मे सफला भवेत्तदा तदुपभोगेनैव मदनायासप्रबन्ध-स्यावसानं भवेत्। यदितु मदीयैकान्तदुर्भाग्यात्तदीयनीत्याऽपि मदीयाशा न सफला भवे-त्तदापि मम मरणस्यावश्यम्भावादाश्रयाभावेनैव मदनायासप्रबन्धस्यावसानं भवेदित्युभयथाप्यद्यैव तदवसानमवश्यम्भावीति तत्त्वमिति भावः।

"तत्त्वार्थकथनान्मार्गः" इति दर्पणलक्षणादत्र "मार्गो" नाम गर्भसन्धेरङ्गम्। एवं "उपाया-पायशङ्काभ्यां प्रत्याशाप्तिसम्भवः" इति दर्पणोक्तेरियं तृतीया प्रत्याशा नाम कार्य्यावस्था। विदधातु विपर्य्येतु इति क्रियायाः भगवतीनीतिरित्येककर्त्तृकारकत्वाद्दीपकः" चतुर्थचरण-वाक्यार्थस्य पूर्व्ववाक्यार्थहेतुत्वात् वाक्यार्थहेतुकं "काव्यलिङ्ग"मलङ्कारः। शार्द्दूलविक्रीडितं वृत्तम्॥

---

(৭) মাধ। আমার যেই কামপীড়া (বকুলবৃক্ষের তলে) মালতীর প্রথম দর্শন দিন হইতেই ক্রমশঃ বৃদ্ধি প্রাপ্ত হইয়া পুনরায় স্নেহসূচক সাভিপ্রায়াবলোকনাদি দ্বারা চরমোৎকর্ষ লাভ করিয়াছে, অদ্যই নিশ্চয় তাহার অবসান হইবে। যেহেতু ভগবতী কামন্দকীর নীতি অদ্যই মালতীর পাণিগ্রহণ-রূপ কল্যাণ বিধান করিবে, অথবা তাহার বিপরীত হইবে,অর্থাৎ আমার দুর্ভাগ্য বশতঃ তাদৃশ কল্যাণ বিধান করিতে পারিবে না। ফলে উভয়থাই পীড়ার অবসান অনিবার্য্য, কেননা মালতীর লাভ ঘটিলে তদুপভোগদ্বারাই পীড়ার

मक । वयस्य ! कथं हि भगवत्याः सुमेधसो नीतिर्विपर्य्यय
मेष्यति । (८)

कल । [उपसृत्य ।] णाह माहव ! दिट्ठिआ वड्ढसि
पउत्ता क्खु इदोमुहं मालदित्ति । (ख)

माध । अपि नाम सत्यम् ? (९)

मक । सखे ! किमश्रद्दधान इव पृच्छसि, न केवलं प्रवृत्त
प्रत्यासन्ना च वर्त्तते । तथाहि—(१०)

अस्माकमेकपद एव मरुद्विकीर्ण-
जीमूतजालरसितानुकृतिर्निनादः ।

---

(ख) नाथ ! माधव ! दिष्ट्या वर्द्धसे, प्रवृत्ता खलु इतोमुखं मालतीति ।

---

(८) सुमेधसः उन्नततीव्रधीसम्पन्नायाः । विपर्य्ययं मालतीमाधवविषयकसम्पाद
वैपरीत्यं ।

(१०) अश्रद्दधान इव कलहंसवचसि अविश्वस्त इव । प्रत्यासन्ना एतद्देवतायतन
सन्निहिता । सन्निधानं समर्थयितुमाह—तथाहीति ।

(११) अस्माकमिति । महता पवनेन विकीर्णस्य विक्षिप्तस्य जीमूतजालस्य मेघसमूह
यत् रसितं गर्जितं तस्य अनुकृतिः अनुकरणं यस्मिन् स तथाभूतः, गम्भीरात् गम्भीरध्व
मङ्गलमर्दलशब्दात् माङ्गलिकमुरजसमूहात् जन्म उत्पादो यस्य तथाभूतः निनादः अ
एकपद एव सद्य एव (तत्क्षणैकपदे तुल्ये सद्यः सपदि च द्रुते इति हलायुधः) अद्य
शब्दान्तरश्रवणशक्तिं अन्यद्दशब्दातिरिक्तशब्दश्रवणसामर्थ्यं अपाकरोति अभिभवति । अः

---

অবসান হইবে, না ঘটিলেও মরণ অবশ্যম্ভাবি বিধায় আশ্রয়াভাবেই পীড়
অবসান হইবে॥

(৮) মক। বয়স্য! অতিতীক্ষ্ণবুদ্ধিসম্পন্না ভগবতী কামন্দকীর নী
কেন বৈপরীত্য লাভ করিবে?

(খ) কল। নাথ মাধব! ভাগ্যবশতঃই তুমি বৃদ্ধি প্রাপ্ত হইতেছ। মাল
এই দেবতাগৃহাভিমুখেই আসিতে আরম্ভ করিয়াছে।

(৯) মাধ। সত্য কি?

(১০) মক। সখে! কলহংসের বাক্যে অবিশ্বস্তের ন্যায় প্রশ্ন করিতে

गम्भीरमञ्जलमृदङ्गसहस्रजन्मा
शब्दान्तरग्रहणशक्तिमपाकरोति ॥ (११)

तदेहि जालमार्गेण पश्यामः । [तथा कुर्व्वन्ति ।](१२)

कल । णाह ! पेक्ख पेक्ख, इमे दाव उप्पडिअराअहंस-विब्भमाहिराम-चामरसमीरणोव्वेल्लकदलिआवलितरङ्गिदुत्ताल-गअण-ङ्गण-सरोवर-णिरन्तरुद्दण्ड-पुण्डरीअविब्भमं वहन्तो, धवलादवत्त-णिवहा दीसन्ति । एदाअ सविलास-कवलिद-तंबूल वीड़िआपूरिद-

---

(ग) नाथ पश्य पश्य, इमे तावदुत्पतितराजहंसविभ्रमाभिरामचामरसमीरणोद्वेल्लक-दलिकावलीतरङ्गितोत्तालगगनाङ्गणसरोवरनिरन्तरोद्दण्डपुण्डरीकविभ्रमं वहन्तो, धवलातपत्र-निवहा दृश्यन्ते । एताश्च सविलासकवलितताम्बूलाभिपूरितकपोलमण्डलाभोग व्यसित्वर-

---

मालत्यागमनं विना ममैतादृशशब्दाकर्णनस्यासम्भवान्मालतीसन्निधाने सन्देहोऽपि न युज्यत इति भावः ।

अत्रोपमालङ्कारः । वसन्ततिलका वृत्तम् ॥

(१२) जालमार्गेण गवाक्षेण । तथा कुर्व्वन्ति जालमार्गेण पश्यन्ति, माधवादय इति शेषः ।

(ग) मालत्याः स्वस्वरागमनं प्रमाणयितुमाह—णाहेति । उत्पतिता उड्डीना ये राजहंसाः तेषां विभ्रमेणेव विलसितेन विलासेन अभिरामाणां मनोज्ञानां चामराणां समीरणै-र्वायुभिः उद्वेल्लितया उच्चालितया कदलिकावल्या पताकाश्रेण्या तरङ्गितं उत्तालतरङ्गं अत एव उत्तालं उत्कटं यत् गगनाङ्गनं नभोभागः तदेव सरः दीर्घिका तत्र निरन्तराणि निरवकाशानि

---

কেন? কেবল যে আসিতে আরম্ভ করিয়াছে, তাহা নহে, অতি নিকটবর্ত্তিনীই হইয়াছে। দেখ—

(১১) বায়ুবিক্ষিপ্ত মেঘসমূহের গর্জ্জনানুকারী গম্ভীর ধ্বনি মাঙ্গলিক মৃদঙ্গসমূহের শব্দ, এই জন্যেই আমাদের শব্দান্তরশ্রবণের শক্তিকে অভিভূত করিতেছে।

(গ) কল। নাথ! দেখ দেখ, এই যে উড্ডীন রাজহংসগণের বিলাসের ন্যায় মনোজ্ঞ চামরসমূহের বায়ুতে সঞ্চালিত পতাকাশ্রেণী দ্বারা তরঙ্গবৎ

कवोल-मण्डलाभोअ-मब्बट्ठर-क्खलिद-महुरमङ्गलगीद-बहलकोलाहलेहिं विविहरअणालङ्कारकिरणावली-विडम्बिदमहिन्दचावखण्ड-विच्छेअविच्छुरिअ णहत्थलेहिं, वारसुन्दरीकदम्बेहिं अज्झासिआ, कणन्त-कणअकिंकिणी-जाल-झणझणाझङ्कारिणीओ करिणीओ। (ग)

माधवमकरन्दौ। सकौतुकं पश्यतः।

मक। रमणीयाः खलु अमात्यभूरिवसोर्विभूतयः। (१२)

---

स्खलित मधुरमङ्गलगीत-बहलकोलाहलैर्विविधरत्नालङ्कार-किरणावलीविडम्बित-महेन्द्रचापविच्छेद-विच्छुरितनभःस्थलैर्वारसुन्दरीकदम्बैरध्यासिताः क्वणत्कनककिङ्किणीजालझणझणाझङ्कारिण्यः करिण्यः।

---

यानि उद्दण्डपुण्डरीकाणि उद्गतनालानि श्वेतपद्मानि तेषां विभ्रमं सौन्दर्यं वहन्तः धारयन्तः नभस्तलसन्निविष्टाः श्वेतच्छत्रसमूहाः दृश्यन्ते अवलोक्यन्ते। सविभ्रमं सलीलं यथा स्यात्तथा आवलितेन चर्वितेन ताम्बूलेन अभिपूरितस्य कपोलमण्डलस्य आभोगेन विस्तारेण यो व्यतिकरः सम्पर्कः तेन स्खलितं भग्नं यत् मधुरमङ्गलोद्गीतं मनोहरमाङ्गलिकगानं तेन बहुः कलः कोलाहलः अव्यक्तमधुरध्वनिः ये, तादृशैः, विविधानां रत्नालङ्काराणां किरणावलीभिः प्रभाश्रेणीभिः विडम्बिताः साम्येन सम्पादिताः ये महेन्द्रचापविच्छेदाः इन्द्रधनुःखण्डाः तैः विच्छुरितं परिव्याप्तं नभःस्थलं गगनमण्डलं यैः तथाभूतैः वारसुन्दरीकदम्बैः वेश्याजनवर्गैः अध्यासिताः अध्यारूढाः, तथा क्वणतां शब्दायमानानां कनककिङ्किणीनां सुवर्णमयक्षुद्रघण्टिकानां जालेन समूहेन झणझणझङ्कारिण्यः "झणझण" इत्याकारकझङ्कारं कुर्वन्त्यः एताः करिण्यः हस्तिन्यः दृश्यन्ते।

(१२) रमणीयाः मनोहराः, विभूतयः धनसम्पत्तयः।

---

উৎকট গগনমণ্ডলরূপ সরোবরে সমসন্নিবিষ্ট উন্নতনাল শ্বেতপদ্মগণের শোভা-ধারী শ্বেতবর্ণ ছত্রসমূহ দেখা যাইতেছে। (আরও দেখ) যাহারা অবলীলা-ক্রমে চর্ব্বিত তাম্বূলপূরিত কপোলমণ্ডলের সম্পর্কে স্খলিত মধুর মাঙ্গলিক গীতি দ্বারা কোলাহল করিতেছে, এবং যাহারা বিবিধরত্নালঙ্কারের কিরণাবলী দ্বারা গগনমণ্ডল পরিব্যাপ্ত করিয়াছে, তাদৃশ গণিকাগণাধিষ্ঠিত ও শব্দায়মান কনক-কিঙ্কিণীসমূহ দ্বারা ঝণঝণাকার ঝঙ্কারকারী এই করিণীসমূহও দেখা যাইতেছে।

तथाहि—

प्रेङ्खद्भूरिमयूरमेचकचयैरुन्मेषिचापच्छद-
च्छायासंवलितैर्विवर्त्तिभिरिव प्रान्तेषु पर्य्यावृताः ।
व्यक्ताखण्डलकार्मुका इव भवन्त्युच्चित्रचीनांशुक-
प्रस्तारस्थगिता इवोन्मुखमणिज्योतिर्वितानैर्दिशः ॥ (१४)

कल । कधं, ससम्भमाणेक्क पडिहार-मण्डलावज्जिदुज्जलकणअ-कलहोअ-पट्टविचित्त-वेत्त-लदापरिक्खित्त-रेहा रइद-मण्डलो दूरदो

---

(५) कथं ससम्भ्रमानेकप्रतिहारमण्डलावर्जितोज्ज्वलकनककलधौतपट्टविचित्रवेत्रलतापरिक्षिप्तरेखारचितमण्डलो दूरत एव संस्थितोऽस्याः परिजनः। एषा च बहुलसिन्दूरनिकरसन्ध्या-

---

(१४) प्रेङ्खदिति। उन्मुखानां ऊर्द्ध्वं प्रसृतानां मणिज्योतिषां नारसुन्दरीशरीरालङ्कार-रत्नरश्मीनां वितानैः विस्तारैः दिशः उन्मेषिणां उड्डीनानां चापानां स्वर्णचातकाख्यपक्षिणां ये छदाः पक्षाः, तेषां छायाभिः कान्तिभिः संवलितैः विमिश्रितैः, विवर्त्तिभिः प्रचलितैः प्रेङ्खतां प्रचलतां भूरीणां बहूनां मयूराणां शिखण्डिनां मेचकचयैः चन्द्रकसमूहैः पुच्छावस्थितचन्द्राकार-नीलादिरागरञ्जितचित्रविशेषैरिति यावत् ( समौ चन्द्रकमेचकौ इत्यमरः ) प्रान्तेषु पर्य्यन्त-भागेषु पर्य्यावृताः समाच्छादिता इव भवन्ति। तथा व्यक्ताखण्डलकार्म्मुकाः स्पष्टलक्ष्यमाणेन्द्र-चापा इव भवन्ति। तथा उच्चित्राणां नीलपीतादिनानारागरञ्जितानां चीनांशुकानां चीन-देशीयवस्त्राणां ( चीनपट्टमतिशुक्लधौतमपि ) प्रस्तारेण स्थगिताः आच्छादिता इव भवन्ति। यः कन्यायाः यात्रोत्सवसम्पादनाय वारनारीजनांस्तावदलङ्कारैरलङ्कर्त्तुं प्रकुर्वन्ति, तस्य सम्पत्तयः कस्य मनो नापहरन्तीति भावः।

अत्र तिसृणां क्रियोत्प्रेक्षाणां परस्परनैरपेक्ष्यात् संसृष्टिरलङ्कारः। शार्दूलविक्रीडितं वृत्तम्।

---

( মাধব ও মকরন্দ কৌতুকের সহিত দেখিতে লাগিলেন )

( ১৩ ) মক। অমাত্য ভূরিবসুর ধনসম্পদ অতীব মনোহর। দেখ—

( ১৪ ) উন্মুখ রত্নালঙ্কাররশ্মির বিস্তার দ্বারা দিক্‌সকল যেন উড্ডীন স্বর্ণ-চাতকপক্ষীর পক্ষকান্তি বিমিশ্রিত ও প্রচলিত বহু ময়ূরগণের মেচকচয় ( পুচ্ছদেশে চন্দ্রাকৃতি নীলাদি রাগরঞ্জিত যে সব চিত্র থাকে তাহা ) দ্বারা

ज्जेव्व से संठ्ठिदो परिअणो। एसा अ बहुलसिन्दूर-णिअर-सञ्झा राओवरत्त-चङ्कल-मुह-घोलन्त-कन्तणक्खत्त-मालाभरण-धारिणिं करेणुरअणिं अलङ्करन्ती, इदो ज्जेव्व कोदूहलुम्मुह-समत्थ लोअ-दोसन्त-मणहरा, पांडुर-परिक्खाम-देहसोहा विहाविआणङ्गवेअणा, पढ़म-चन्द-लेहा-विब्भमं वहन्ती किंचिअन्तरं पसरिदा मालती। (घ)

---

गोपरागपटुलमुखघूर्णत्कान्तनक्षत्रमालाभरणधारिणी करेणुरजनीम् अलङ्कुर्वती, इत एव कौतूहलोन्मुखसमस्तलोकदृश्यमानमनोहरा, पाण्डुरपरिक्षामदेहशोभाविभावितानङ्गवेदनं प्रथम-चन्द्रलेखाविभ्रमं वहन्ती, किञ्चिदन्तरे प्रसृता मालती।

---

(घ) कलेति। कथं सुसम्बन्धनाया अत्यान्तिमायां मनोहरायां हारयानानां मण्डलेन समुद्देन आवर्जिताभिः अवनमिताभिः उज्ज्वलाभिः दीप्तिमतीभिः कनककलधौतयोः सुवर्णरजतयोः (कलधौतं रूप्यहेम्नोरित्यमरः) पङ्केन तरलद्रव्यान्तरसंमिश्रणात् पङ्कभावः लभमानेन तदीयचूर्णेन लिप्ताभिः अतएव चित्राभिः नानारागरञ्जिताभिः वेत्रलताभिः इस्तावस्थितयष्टि-विशेषैः परिचिता "नेयं केनाप्यतिक्रमणीयेति"तुक्त्वा सीमात्वेन भूमौ विन्यस्ता या रेखा तया रचितं स्तावस्थानेन सम्पादितं मण्डलं वर्तुलाकारेणावस्थानविशेष. येन स तथाभूतः अस्याः मालत्याः परिजनः परिचारिकावर्गः दूरत एव आस्था व्यवहितदेश एव अवस्थितः ?

---

প্রান্তভাগে সমাচ্ছাদিত হইতেছে। এবং দিক্‌সকল যেন ইন্দ্রধনু যুক্ত বলিয়া পরিলক্ষিত হইতেছে ও নানারাগরঞ্জিত চীনদেশীয় বস্ত্রসমূহের সংস্তরণ দ্বারা যেন আচ্ছাদিত হইতেছে।

(ঘ) কল। "কেহই এই রেখা অতিক্রম করিও না" এই আদেশপূর্বক স্বরান্বিত দ্বারপালগণকর্তৃক অবনমিত উজ্জ্বল সুবর্ণরজত পঙ্ক লিপ্ত, চিত্রবিচিত্র বেত্রলতা দ্বারা অঙ্কিত সীমারেখা অনুসারে মণ্ডলাকারে পরিবেষ্টিত হইয়া মালতীর পরিজনগণ যেন ব্যবহিত দেশেই অবস্থিত রহিল ? বহুল সিন্দূরনিচয় দ্বারা লোহিতবর্ণ বদনরূপ সিন্দূরবৎ লোহিতবর্ণ প্রথমভাগে (প্রদোষকালে) মনোজ্ঞভাবে ঘূর্ণমান মুক্তামালারূপ তারকাশ্রেণীধারিণী হস্তিনীরূপ রাত্রিকে অলঙ্কৃত করিয়া নবোদিত চন্দ্রকলার শোভাধারিণী মনোহরা এই মালতী ও পরিজনবর্গকে কিঞ্চিৎ ব্যবধানে রাখিয়া এই দিকেই আসিতেছে। পার্শ্বস্থ

मक। वयस्य! पश्य पश्य—

इयमवयवैः पाण्डुच्छामैरलङ्कृतमण्डना
कलितकुसुमा बालेवान्तर्लता परिशोषिणी।
वहति च वरारोहा रम्यां विवाहमहोत्सव-
श्रियमुदयिनीमुद्गाढ़ां च व्यनक्ति मनोरुजम्॥ (१५)

---

अत्र मुखादिरूपश्लिष्टपदघटितत्वात् करेणुरजनीमित्यत्र श्लिष्टाङ्गरूपकोपमयोः सन्देहसङ्करः। एवमन्यविषमस्थानेन धारणासम्भवात् द्वयमचन्द्रलेखाविषम वहन्तीत्यत्र असम्बन्धस्तुसम्बन्धरूपा निदर्शनालङ्कारः।

(१५) इयमिति। पाण्डुच्छामैः विरहवशात् श्वेतकृशैः अवयवैः पाणिपादादिभिः अलङ्कृतानि भूषितानि मण्डनानि स्वधृतभूषणानि यया सा (तदङ्गानां स्वाभाविकातिसौन्दर्यवशान्मण्डनैर्न कश्चिदतिशयः सम्पादितः, परन्तु तद्विभूषणत्वेन मण्डनानामेव शोभातिशयो वर्द्धत इति भावः) कलितकुसुमा :आङ्गनिकत्वाद्विधृतपुष्पा अत एव कलितकुसुमा प्रासकालत्वात् सञ्जातपुष्पा अन्तर्मध्ये परिशोषिणी कीटाद्युपहतत्वात् शुष्कतामापन्ना बाला नवीना लता इव स्थिता इयं वरारोहा वरवर्णिनी (वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनीत्यमरः) मालती रम्यां रमणीयां उदयिनीं वर्द्धमानां विवाहमहोत्सवश्रियं वहति च धारयति च तथा उद्गाढां अतिशयोपचीयमानां मनोरुजं कामपीड़ां व्यनक्ति शरीरपाण्डुत्वकृशत्वादिभिः प्रकटयति च।

तथा एषा च प्रत्यक्षविषयीभूता च बहुलानां सिन्दूराणां निकरेण समूहेन उपरक्तं लोहितं मुखं करिण्या आस्यं एव मुखं आद्यभागः तत्र मधुरं मनोज्ञं यथा स्यात्तथा घूर्णमाना गमनवेगेन चाचल्यमाना नक्षत्रमाला मुक्तामाला एव नक्षत्रमाला तारकापङ्क्तिः तद्रूपमाभरणं धारयति या तां तथोक्तां करेणुं हस्तिनीमिव रजनीं समानवर्णत्वात् रविं रजनीमिव, करेणुमिति वा अलङ्कुर्वती शोभयन्ती अतएव कौतूहलेन कौतुकेन उन्मुखैः दर्शनार्थमुन्नमिताननैः समस्तलोकैः पार्श्वावस्थितसर्वजनैः दृश्यमाना मनोहरा च, तथा पाण्डुरा विरहेण ईषत् शुक्लवर्णा परिक्षीणा कृशा च या देहशोभा शरीरकान्तिः तया विभाविता परिबोधिता अनङ्गवेदना कन्दर्प-

---

লোকসকল উন্নমিতাননে তাহাকে দেখিতেছে এবং ঈষৎ শুভ্র ও কৃশ দেহের কান্তি দ্বারা তাহার কামপীড়া পরিব্যক্ত হইতেছে।

(১৫) মক। বয়স্য! দেখ দেখ সাময়িক পুষ্পধারিণী এই বরবর্ণিনী মালতী ঈষৎ শুক্লবর্ণ ও কৃশ অবয়ব দ্বারা নিজের বিধৃত ভূষণসমূহকে অলঙ্কৃত করিয়া সঞ্জাত পুষ্পার কীটদষ্টতাদি দোষে শুষ্কমধ্যা নবীন লতার ন্যায় রম্য

कथं निषादिता गजवधः ? (१६)

माध। [सानन्दम्।] कथमवतीर्य्य भगवतीलवङ्गिकाभ्यां समम् इत: प्रवृत्तैव। (१७)

ततः प्रविशति कामन्दकी मालती लवङ्गिका च।

काम। [सहर्षमपवार्य्य।]

विधाता भद्रं नो वितरतु मनोज्ञाय विधये,
विधेयासुर्देवाः परमरमणीयां परिणतिम्।

---

नौका पश्चाद्भागभूता प्रथमचन्द्रिकायाः प्रतिपदः कलाया विभ्रमं विलासं वहन्ती धारयन्ती मालती किञ्चिदन्तरं परिजनवर्गात् किञ्चिद्‌व्यवधानं यथा स्यात्तथा इत एव अस्मामिर दिशि प्रवृत्ता आयाता।

अत्र प्रतीवेत्युपमालङ्कारः, एवं "वहति" "व्रजती"त्यनेकक्रियायोः चरमोक्तैकैक कर्तृ-कारकत्वाद्दीपकश्चालङ्कारः इत्यनयोरङ्गाङ्गिभावेन सङ्करः। न चात्र क्रियासमुच्चयः शङ्कनीयः अतिशयोक्त्यभावेन समुच्चयस्य च तन्मूलकत्वेनात्र तदसम्भवादित्यनुसन्धेयम्। हरिणीवृत्तम्॥

(१६) निषादिता उपवेशिता।

(१७) माधेति। भगवती कामन्दकी। प्रवृत्तैव आयातुमारब्धैव मालतीति शेषः।

(१८) स्वकीयप्रयत्नस्य निर्विघ्नसमाप्तये कामन्दकी विधिविधातृन् प्रार्थयते—विधातेति। विधाता विधिः मनोज्ञाय परस्पराभिलषणीयत्वान्मनोहराय विधये मालतीमाधवयो-रुद्वाहविधानाय नः अस्माकं भद्रं विघ्नापहारकत्वं मङ्गलं वितरतु अर्पयतु। देवाः परिणतिं अस्य विवाहस्य परिणामं परमरमणीयां परस्परानुरक्तिसम्पादनादिना सर्व्वमनोहरां विधेयासुः क्रियासुः। ततः क्रियाविशेषणमाह—इतीति। प्रियसुहृद्वर्ग्गयोः परमप्रीति-

---

ও বর্দ্ধমান বিবাহ মহোৎসব শ্রীবারণ করিতেছে এবং অতীতের পাণ্ডুবর্ণতাও কৃশতা দ্বারা কামপীড়া ব্যক্ত করিতেছে।

(১৬) হস্তিনীকে বসাইল কেন?

(১৭) মাধ। (আনন্দের সহিত) কেন অবতীর্ণ হইয়া ভগবতী কামন্দকীও লবঙ্গিকার সহিত (মালতী) এদিকেই আসিতেছে?

(তৎপর কামন্দকী মালতীও লবঙ্গিকার প্রবেশ)

(১৮) কাম। (হর্ষের সহিত অন্যের অশ্রুতভাবে) পরস্পরের অভিলষিত নিবন্ধন অতিমনোহর মালতী ও মাধবের বিবাহবিধানে বিধাতা আমাদিগের

कृतार्थीभूयासं प्रियसुहृदपत्योपयमने,
प्रयत्नः कृत्स्नोऽयं फलतु, शिवदायी च भवतु ॥ (१८)

माल । [ स्वगतम् ] केण उण उवाएण सम्पदं मरणणिव्वाणस्स अन्तरं सम्भाबइस्सं ? मरणम्मि मन्दभाअहेआणं अहिमदंत्ति सुदुल्लहं होदि (ङ) ।

लव । [ स्वगतम् । ] अतिकिलाम्मिदा क्खु पिअसही एदिणा अणुऊलविप्पलम्भेण (च) ।

---

(ङ) केन पुनः उपायेन साम्प्रतं मरणनिर्वाणस्यान्तरं सम्भावयिष्ये ? मरणमपि मन्दभागधेयानामभिमतमिति सुदुर्लभं भवति।

(च) अतिक्लामिता खलु प्रियसखी एतेन अनुकूलविप्रलम्भेन ।

---

भाजनभूरिवसुदेवरातसन्तानयोः मालतीमाधवयोः उपयमने उद्वाहविषये कृतार्थीभूयासम् निर्विघ्नसम्पादनादिना कृतकृत्या भूयासम् । तथा अयं मामकः कृत्स्नः सकलः प्रयत्नः चेष्टा फलतु निष्कलोद्वाहरूपोद्देश्यसम्पादनेन सफलो भवतु, शिवदायी भाविनि मङ्गलविधायकश्च भवतु । ( शिवतातिरिति पाठे तु शिवकर इत्यर्थः "क्षेमङ्करोऽरिष्टतातिः शिवतातिः शिवङ्करः" इत्यमरः "शिवशन्दात् शिवमरिष्टस्य करे इति तातिप्रत्ययः." ) । शिखरिणी वृत्तम् ॥

(ङ) नन्दनेन सह विवाहं स्थिरीकृत्यैव तन्मङ्गलार्थं देवतागृहे माता प्रेषिता मालती अपरिज्ञातकामन्दकीकौशला तदाऽऽत्मनिसम्भावनात् पूर्व्वमेव मरणमुचितं मन्यमाना वितर्कयति—केनेति । मरणनिर्व्वाणस्य जीवनविनाशरूपपरनिर्वृतेः अन्तरं अवसरं सम्भावयिष्ये प्राप्स्यामि ( प्रपूर्व्वकचौरादिकभूधातोरिदं रूपम् ) मन्दभागधेयानां दुरदृष्टजनानां, सर्वाव मन्दभाग्यजनानां यद्यदभिमतं तत्तदेव दुर्लभमिति दुर्भाग्याया ममापि मरणस्य सम्यगभिमतत्वेन दुर्लभत्वमिति भावः ।

---

বিঘ্নবিনাশরূপ মঙ্গলবিধান করুন। দেবগণ এই বিবাহের পরিণাম ( পরস্পর প্রীতিসম্পাদনাদি দ্বারা ) পরম রমণীয় করুণ। প্রিয় সুহৃৎ ভূরিবসুর ও দেবরাতের সন্তান মালতী ও মাধবের বিবাহবিষয়ে আমি কৃতকার্য্য হই, এবং আমার এই সমস্ত প্রযত্ন সফল ও মঙ্গলদায়ী হউক।

(ঙ) মাল। ( স্বগত ) আমি কোন্ উপায়ে সম্প্রতি মৃত্যুরূপ পরম সুখের অবসর প্রাপ্ত হইব ? মন্দভাগ্য লোকদিগের অভিমত মরণও দুর্ল্লভ হয়।

[ प्रविश्य पेटकहस्ता प्रतीहारी । ] अमच्चो भअवदीं विण्णवेदि एदिणा णरिन्दाणुप्पेसिदेण विवाहणेवच्छेण देवदापुरदो अलङ्करिदव्वा मालदित्ति (ङ)।

काम। युक्तमाह अमात्यः, माङ्गलिकमेतत् स्थानम्, अतो दर्शय। (१८)

प्रती। इदं दाव धवलपट्टं सुअचोलअं, इदं च उत्तरीअं रत्तंसुअं इमे अ सव्वङ्गिआ आहरण-सञ्जोआ, अअं च मोत्तिअहारो, एदं चन्दणं कुसुमापीडो अ (ञ)।

---

(ङ) अमात्यो भगवतीं विज्ञापयति, एतेन नरेन्द्रानुप्रेषितेन विवाहनेपथ्येन देवतापुरतोऽलङ्कर्त्तव्या मालती इति।

(ञ) इदं तावद्धवलपट्टांशुकचोलकं, इदमुत्तरीयं रक्तपट्टांशुकम्, इमे च सर्वाङ्गिका आभरणसंयोगाः, अयञ्च मौक्तिकहारः, एतत् चन्दनं कुसुमापीडश्च।

---

(घ) एतेन चतुर्भूमकादिना चतुष्कुण्डविपर्ययेण च अभिमतस्य माधवस्य विरहेण कलिकामिव अतिखिन्नं मालिता।

(ङ) पेटकहस्ता आभरणमञ्जूषाहस्ता, (भूषणपटलकहस्तेति पाठेऽपि सएवार्थः) प्रतिहारी प्रविश्य आहेति शेषः। विवाहनेपथ्येन विवाहोपयुक्तवस्त्रालङ्कारादिना।

(१८) युक्तमाह—देवतापुरत इत्यादि समुचितं कथयति, अत हेतुमाह—माङ्गलिकमिति, तदाच माङ्गलिकस्थान एव माङ्गलिकानुष्ठानं युक्तमिति भावः। "युक्तमाङ्गलिकमेतत्स्थान"-मिति पाठे तु युक्तं माङ्गलिकं यस्मिन्निति विग्रहः। दर्शयेति नरेन्द्रप्रेषितं वस्त्रालङ्कारादिकमिति शेषः।

---

(চ) লব। (স্বগত) অভিমত মাধবের এই বিরহে মালতী অত্যন্ত খেদ-লাভ করিয়াছে।

(ছ) (প্রতিহারী পেটকহস্তে প্রবেশ করিয়া বলিল) অমাত্য আপনাকে জানাইয়াছেন, নরেন্দ্রনন্দন কর্তৃক প্রেরিত এই সকল বিবাহোপযুক্ত বস্ত্রালঙ্কারাদি দ্বারা দেবতার সম্মুখেই মালতীকে অলঙ্কৃত করিতে হইবে।

(১৮) কাম। অমাত্য ঠিকই বলিয়াছে, এই স্থানই মাঙ্গলিক অনুষ্ঠানের উপযুক্ত। অতএব সেই বস্ত্রালঙ্কারাদি আমাকে দেখাও।

काम। [अपवार्य्य।] रमणीयं हि वत्समकरन्दम् अवलोकयिष्यति जनः। [प्रकाशं गृहीत्वा।] भवतु ओम् इति उच्यताममात्यः। (२०)

प्रतिहारी। तहा। इति निष्क्रान्ता। (झ)

काम। वत्से लवङ्गिके! प्रविश त्वम् अभ्यन्तरं वत्सया मालत्या सह। (२१)

लव। अध भअवदी उण कहिम्? (ञ)

---

(झ) तथा।

(ञ) अथ भगवती पुनः क्व?

---

(ञ) प्रतीति। चोलकं स्त्रीणां स्तनादिपिधायकं "कचुली"ति प्रसिद्धम्, क्वचित् दुगुलमिति पाठः। सर्व्वाङ्गिकाः सर्व्वावयवयोग्याः आभरणानां संयोगो येषु ते आभरणसंयोगाः अलङ्काराः। अत्राभरणशब्दमात्रेणैतादृशार्थलाभसम्भवेऽपि संयोगपदोपादानेन वस्त्राभिधानं अलङ्कारसंयोगस्याविरलसम्पादनीयत्वद्योतनार्थमिति मन्तव्यम्। कुसुमापीड़ः शिरोधारणीयपुष्पमाल्यं।

(२०) कामेति। जनः पुरवासिलोकः वत्सं मकरन्दं रमणीयं एभिर्व्वस्त्रालङ्कारैर्म्मालतीरूपधारित्वेनातिमनोहरं अवलोकयिष्यति मालतीबुद्ध्या द्रक्ष्यति। मकरन्दस्य मालतीरूपधारित्वार्थे व्यक्तीभविष्यति। वस्त्रालङ्कारादिकं मया गृहीतमितीदम्।

---

(ञ) प्रति। এই মদনপট্টবস্ত্রনির্ম্মিত চোলক (স্ত্রীলোকের স্তনাচ্ছাদক সেমিজ) এই রক্তবর্ণ উত্তরীয় বস্ত্র, এই সর্ব্বাঙ্গে ব্যবহারের যোগ্য অলঙ্কারসমূহ, এই মুক্তাহার, এই চন্দনও এই মস্তকে ধারণীয় পুষ্পমাল্য।

(২০) অন্যের অশ্রুতভাবে) পুরবাসিসকল এই বস্ত্রালঙ্কারাদি দ্বারা মালতীরূপধারী বৎস মকরন্দকে অতি রমণীয় দেখিবে। (প্রকাশে অলঙ্কারাদি গ্রহণ করিয়া) তাহাই হইবে, "বস্ত্রালঙ্কারাদি আমি গ্রহণ করিলাম" ইহা অমাত্যকে বলিবে।

(ঝ) প্রতি। ("যে আজ্ঞে" বলিয়া প্রতিহারীর প্রস্থান)।

(২১) কাম। বৎসে লবঙ্গিকে! বৎসা মালতীর সহিত তুমি দেবতাগৃহের অভ্যন্তরে প্রবেশ কর।

काम। अहमपि तावद्विविक्ते अलङ्करणरत्नानां प्रायस्त्यं शास्त्रतः परीक्षिष्ये। [इति निष्क्रान्ता।] (२२)

माल। [स्वगतम्]। कधं, लवङ्गिआमेत्तपरिवारह्मि संवुत्ता। (ट)

लव। इदं देवदामन्दिरदुवारं ता पविसह्म। [इति प्रविशतः]। (ठ)

मक। वयस्य! इतः स्तम्भापवारितशरीरौ तिष्ठावः। तथा कुरुतः। (२३)

लव। सहि! अअं अङ्गराओ, इमाओ कुसुममालाओ। (ड)

---

(ट) लवङ्गिकामात्रपरिवारास्मि संवृत्ता।

(ठ) एतद्देवतामन्दिरद्वारं, तत् प्रविशावः।

(ड) सखि! अयमङ्गरागः, इमाः कुसुममालाः।

---

(ञ) क कुत्र, गमिष्यसीति शेषः।

(२२) विविक्ते—जनशून्यस्थाने। लवङ्गिकया सह विस्रम्भालापस्य निःशङ्कीयं देवतायतने माधवकर्णे मात्स्यार्पणस्य इदानीन्तनसामुयोगं मालत्यै दातुं कामन्दक्या निष्क्रमणमिति मन्तव्यम्।

(ट) लवङ्गिकामात्रः परिवारः परिजनः यस्याः तथाभूतास्मि। तथाच कथञ्चिदेनां वशीकृत्य प्राणान्तरकुमर्हामीति भावः।

(२३) तिष्ठाव इति तथाच मालतीलवङ्गिकयोर्विस्रम्भालापं श्रोतुं शक्नुव इति भावः।

(ड) अङ्गरागः—चन्दनकुङ्कुमाद्यङ्गानुलेपनद्रव्यम्।

---

(ঞ) লব। আপনি কোথায় যাইবেন?

(২২) কাম। আমিও নির্জ্জন স্থানে শাস্ত্রানুসারে অলঙ্কাররত্নের প্রশস্ততা পরীক্ষা করিব। (কামন্দকীর প্রস্থান)

(ট) মাল। এই যে একমাত্র লবঙ্গিকাই আমার পরিজন থাকিল?

(ঠ) লব। এই দেবতামন্দিরের দ্বার, অতএব (এস) আমরা প্রবেশ করি। (উভয়ের মন্দিরে প্রবেশ)

(২৩) মাধ। বয়স্য! আমাদের শরীর এই স্তম্ভে অন্তরিত করিয়া থাকি। (মাধব ও মকরন্দ স্তম্ভের অন্তরালে থাকিল)

(ড) লব। এই চন্দনকুঙ্কুমাদি অনুলেপন দ্রব্য, এবং এই কুসুমমালা।

माल । तदो किं ? (ढ)

लव । सहि ! इमस्सिं पाणिग्गहणमङ्गलारम्भे, कल्लाणसम्पत्ति-णिमित्तं देवदाओ पूजेहित्ति, अम्बाए अणुप्पेसिदासि (ण)।

माल । ( स्वगतम् ) किं दाणिं दारुणसमारम्भदेव्वदुव्विलास-परिणामदुःख-णिद्दड्ढ-मानसं पुणो पुणो वि मम्म-च्छेददुःसहं मन्दभाइणीं दुणोसि । (त)

---

(ढ) ततः किम् ?

(ण) सखि । अस्मिन् पाणिग्रहणमङ्गलारम्भे, कल्याणसम्पत्तिनिमित्तं देवताः पूजयेति, अम्बया अनुप्रेषितासि ।

(त) किमिदानीं दारुणसमारम्भदैवदुर्विलासपरिणामदुःखनिर्दग्धमानसां पुनः पुनर्मर्म-च्छेददुःसहां मन्दभागिनीं दुनोषि ।

---

(ढ) ततः किमिति, मरणे कृतनिश्चयाया मम किमेभिः फलमित्यर्थः ।

(ण) कल्याणसम्पत्तिनिमित्तं कुशलप्राप्त्यर्थम् । अनुप्रेषितासीति, तदेभिर्देवता-मर्च्चयेति शेषः ।

(त) मालेति । दारुणः अनभिलषणीयत्वादतिभीषणः समारम्भः नन्दनेन सह विवाह-व्यापारोऽयं यस्मात् तथाभूतस्य दैवस्य यो दुर्व्विलासः दुर्व्यापारस्तस्य परिणामेन फलीभूतेन दुःखेन निर्दग्धं अतिसन्तप्तं मानसं चित्तं यस्यास्तथाभूतां, दुःसहः सोढुमशक्यः मर्म्मच्छेदः पीड़ा यस्यास्तां मर्म्मच्छेददुःसहां ( प्राकृते पूर्व्वनिपातनियमात् दुःसहशब्दस्य परनिपातः ) मन्दभागिनीं अतिदुर्भाग्यां मां दुनोषि एतद्विवाहवार्त्तासंकीर्त्तनेन उपतापयसि ।

---

(ঢ) মাল। ইহা দ্বারা কি প্রয়োজন ?

(ণ) লব। "এই বিবাহে মঙ্গলপ্রারম্ভে মঙ্গললাভের জন্য দেবতাদিগকে অর্চ্চনা কর" এই কথা বলিয়া মা তোমাকে পাঠাইয়াছেন। অতএব ইহা দ্বারা দেবতার অর্চ্চনা কর )।

(ত) মাল। ( স্বগত ) নন্দনের সহিত বিবাহপ্রারম্ভরূপ দারুণ কর্ম্মের উৎপাদক দৈবের দুর্ব্যাপারের পরিণামস্বরূপ দুঃখ দ্বারা যাহার চিত্ত দগ্ধ হইতেছে এবং যাহার যাতনা অতি দুঃসহ, তাদৃশী মন্দভাগিনী আমাকে এখন ( আবার ) পুনঃ পুনঃ সন্তপ্ত করিতেছ কেন ?

लव। अह किं वत्तुकामासि ? (य)

माल। किं दाणिं दुल्लहाहिणिवेसिमणोरहविसंवदन्तभाअधेओ जणो मन्देदि। (द)

मक। सखे! श्रुतम्। (२४)

माध। श्रुतमसन्तोषश्च हृदयस्य। (२५)

माल। [लवङ्गिकां परिष्वज्य।] परमत्थबहिणि पिअसहि लवङ्गिए! एसा दाणिं दे पिअसही अणाहा, मरदि वट्टमाणा

(य) अथ किं त्वं वक्तुकामा ?

(द) किमिदानीं दुर्लभाभिनिवेशिमनोरथविसंवदद्भागधेयो जनो मन्त्रयते।

(ध) परमार्थभगिनि प्रियसखि लवङ्गिके! एषा इदानीं ते प्रियसखी अनाथा, म्रियते

(य) पूर्व्वमनङ्गालीक्षया अथरकम्पादिदर्शनेन विवक्षामनुमाय पृच्छति—अथ किं वक्तुकामासीति।

(द) मालेति। दुर्लभाभिनिवेशिनः मादृशदुर्भाग्यजनदुष्प्रापद्रव्यार्थिनः मनोरथस्य आशायाः विसंवदत् वैपरीत्यमापन्नं भागधेयं भाग्यं यस्य तादृशः जनः अहङ्करूपो लोकः किं मन्त्रयते कथयति ? यस्य भाग्यं मनोरथविपरीतं तस्य मरणमेव श्रेयः, तदपि मे दुर्लभमिति किं वक्तव्यमिति भावः।

(२४) सखे श्रुतमिति, मालतीमनोरथस्य दुर्लभजनार्थित्वं श्रुतं किमिति काकूक्तिरियम्।

(२५) मालतीमनोरथस्य दुर्लभजनार्थित्वं श्रुतमपि तादृशजनत्वं स्वस्मिन् निश्चयाभावात् हृदयासन्तोषे हेतुरिति मन्तव्यम्।

(ध) मालेति। हे परमार्थभगिनि! आबाल्यादेकत्रिवासेनोपकारेणात् भगिनी-स्वरूपे ! अनाथा रक्षकरहिता, (रक्षकस्य पितुर्वर्त्तमानत्वेऽपि राजचित्तानुरञ्जनार्थं सद्वेऽपि

(য) লব। তুমি কি বলিতে ইচ্ছা করিতেছ ?

(দ) মাল। যাহার ভাগ্য দুর্লভবস্তুপ্রার্থি মনোরথের প্রতিকূল সে আর কি বলিবে ?

(২৪) মক। সখে! শুনিলে ?

(২৫) মাধ। শুনিলাম, কিন্তু হৃদয়ের সন্তোষ হইল না।

(ধ) মাল। পরমার্থভগিনি! প্রিয়সখি লবঙ্গিকে! তোমার এই-

आगब्भ--णिग्गम-णिरन्तरोपआर-विरूढ़--वीसम्भ--सरिसं-परिस्सइअ तुमं पत्थेदि, जइ दे अहं अणुवट्टणीआ, तदो मं हिअएण धारअन्ती, समग्गसोभग्गलच्छीपरिग्गहेक्कमङ्गलं माहवसिरिणो मुहारविन्दं आणन्दमसिणं अवलोअइस्ससि। इति रोदिति। (ध)

माध। वयस्य मकरन्द!

म्लानस्य जीवकुसुमस्य विकाशनानि,
सन्तर्पणानि सकलेन्द्रियमोहनानि।

---

वर्त्तमाना, आगर्भनिर्गमनिरन्तरोपकारविरूढविस्रम्भसदृशं परिष्वज्य त्वां प्रार्थयते, यदि ते अहमनुवर्त्तनीया, ततो मां हृदयेन धारयन्ती समग्रसौभाग्यलक्ष्मीपरिग्रहैकमङ्गलं माधवश्रियो मुखारविन्दम् आनन्दमसृणमवलोकयिष्यसि।

---

यस्मिन् दातुमद्युक्तम तस्यारत्नशल्यमेवेति खिद्येऽङ्गिरिग्रम्) मरणे वर्त्तमाना अनन्यगतिकत्वात् मरणमेव शरणं मन्यमाना। आगर्भनिर्गमात् आजन्मत. निरन्तरोपकारविरूढस्य अविच्छिन्नोपकारैरुत्पन्नस्य विस्रम्भस्य त्वां प्रति विश्वासस्य सदृशं अनुरूपं यथा स्यात्तथा परिष्वज्य आलिङ्ग्य प्रार्थयते मयामाधकर्त्तव्यं याचते। तादृशदृढविश्वास विनैतद्प्रार्थनायास्तत्पूरणसम्भावनायाश्चासम्भवादिति भावः। अनुवर्त्तनीया अनुगमनीया उपकर्त्तव्येति यावत्। समग्रस्य समस्तस्य सौभाग्यस्य शुभादृष्टस्य लक्ष्म्या. श्रिय. परिग्रह एव एकं अद्वितीयं मङ्गलं यत्र तथाभूतं आनन्दमसृणं सर्व्वदा प्रमुदितत्वेन स्निग्धं माधवश्रियः श्रीमाधवस्य (प्राकृतत्वात् पूर्व्वनिपातानियमेनापि श्रीशब्दस्य न पूर्व्वनिपातः। क्वचित् माधवस्यैव पाठ.) मुखारविन्दं वदनपद्मं अवलोकयिष्यसि दर्शयिष्यसि। मरणे कृतनिश्चयाया मम नान्यत् किमपि प्रार्थनीयमस्ति, प्रकाते चेत्तदेव त्वयावश्यं सम्पादनीयमिति भावः।

(२५) म्लानस्येति। म्लानस्य मालतीमातिसभावनाविगमेन मालिन्यमापन्नस्य जीव एव कुसुमं तस्य विकाशनानि प्रकाशकानि, सन्तर्पणानि सम्यक्तृप्तिजनकानि, सकलानां इन्द्रियाणां

---

প্রিয়সখী সম্প্রতি অনাথা, সুতরাং মরণে কৃতসঙ্কল্পা, অতএব জন্মাবধি নিরন্তরকৃত উপকার দ্বারা সমুৎপন্ন বিশ্বাসের অনুরূপ আলিঙ্গন করিয়া প্রার্থনা করিতেছে যে, যদি তুমি আমার উপকার কর্ত্তব্য মনে কর, তবে আমাকে হৃদয়ে ধারণ করিয়া সমস্ত শুভাদৃষ্টের পরিগ্রহরূপ মঙ্গলযুক্ত ও আনন্দস্নিগ্ধ মাধবের মুখপদ্মকে দেখাইও। (মালতীর রোদন)

आनन्दनानि हृदयैकरसायनानि,
दिष्ट्या मयाप्यधिगतानि वचोऽमृतानि ॥ (२६)

माल। अहो तस्स जीविदप्पदाइणो जणस्स, अवसिदेत्ति मं सुणिअ सन्तप्पमाणस्स, तं तहाविहं सरीररअणं ण परिहीअदि, जधा अ परलोअगदं पि मं उद्दिसिअ सो जणो संस्सरणकधामित्त-परिसेसं कालन्तरेवि लोअजत्तं न सिढिलेदि तहा करेयि। एवं ज्जेव पिअसहीए पसादादो मालदी किदत्था भोदि। (न)

(न) यथा यस्य जीवितप्रदायिनो जनस्य अवसितेति मां श्रुत्वा सन्ताप्यमानस्य, तत्तथाविधं शरीररत्नं न परिहीयते, यथा च मां परलोकगतामप्युद्दिश्य स जनः संस्मरणकथामात्रपरिशेषां कालान्तरेऽपि लोकयात्रां न शिथिलयति, तथा करिष्यसि, एवमेव प्रियसखीप्रसादात् मालती कृतार्था भवति।

जीवनानि आनन्दजडिमाद्यवस्थानिरोधकानि, आनन्दनानि मनआनन्दसम्पादकानि, तथा हृदयस्य कामज्वराभिभूतस्य मम एकरसायनानि अद्वितीयभेषजानि (यज्जराव्याधिविध्वंसि भेषजं, तद्रसायनमिति चरक.) वचांसि मालत्याभिहितान्येतानि वाक्यान्येव अमृतानि पीयूषाणि दिष्ट्या भाग्येनैव मयापि अधिगतानि प्राप्तानि। एतादृशवचोऽमृतलाभानुगुणगुणादिरहितोऽपि परमसौभाग्यवशादेवैतानि वाक्यानि लब्ध्वा कृतार्थोऽस्मीति भाव.।

अत्र प्रसजन्नपि अर्थगतपुनरुक्ततादोष. परमहृष्टमनसा माधवेनाभिहितत्वात् पूर्व्ववद्-गुणत्वमेव भजते। निरङ्गरूपकालङ्कार.। वसन्ततिलकं वृत्तम्। अयमेव श्लोकः किञ्चि-त्परिष्कृत. उत्तररामचरितप्रथमाङ्के कविना निबद्ध इत्यनुसन्धेयम्।

(न) मालतीति। यथा तद्विरहेणाहं मर्त्तुमुद्युक्तास्मि, तथा मद्विरहेण सोऽपि यदि शरीरं जह्यादित्याशङ्कयाह—यथेति। जीवितदायिन. करालायतने प्राणरक्षिण:, अवसितेति

(२६) माध। বয়স্য মকরন্দ! মালতীপ্রাপ্তি দৈবায়ত্ত পরিম্লান-জীবন-স্বরূপ কুসুমের বিকাশক, পরম তৃপ্তিজনক, আনন্দজড়তাবশতঃ সমস্ত ইন্দ্রিয়-বৃত্তির নিরোধক, পরম আনন্দজনক, ও কামজ্বরসন্তপ্ত হৃদয়ের অদ্বিতীয় ঔষধ এই বাক্যামৃত সৌভাগ্যক্রমেই আমি লাভ করিলাম।

(ন) মাল। আমার জীবনদাতা সেই মাধব আমি মরিয়াছি শুনিয়া যাহাতে সেই অসামান্য রূপলাবণ্যসম্পন্ন তাঁহার সেই শরীররত্ন পরিত্যাগ না

मक। हन्त! अतिकरुणं वर्त्तते। (२७)

माध। नैराश्यकातरधियो हरिणीक्षणायाः
श्रुत्वा निकामकरुणञ्च मनोहरञ्च।
वात्सल्यमोहपरिदेवितमुद्वहामि,
चिन्ताविषादविपदञ्च महोत्सवञ्च॥ (२८)

---

अह स्थितेति मा श्रुत्वा मा मृता परिभावयेत्यर्थः, क्वचित् "दयमिता मा"मित्येव पाठः। तथाविधं अनिर्वचनीयरूपलावण्यादिसम्पन्नं, परिहीयते परित्यज्यते, तथा करिष्यसीत्यन्वयः। स जनः मम जीवितदायी माधवः, स्मरणं परिचिन्तनं तथा मद्विषयकः समालापः तन्मात्रपरिशेषः भूतले अवशेषः यस्यास्तथाभूता परलोकगता मृतामपि मां उद्दिश्य कालान्तरेऽपि का कथा तत्क्षणात् मरणस्य बहुदिनविगमेऽपि लोकयात्रां सांसारिकत्वं न शिथिलयति वैरागीण त्यक्तुं नोद्युङ्क्ते। एवमेव—तथाकृत एव, प्रियसखीप्रसादात्—प्रियसख्याम्भनुग्रहात्। एतेन माधवं प्रति मालत्याः समतीवानुराग प्रकटीकृत इति विभावनीयम्।

(२७) अतिकरुणं निरतिशयशोकं यथा स्यात्तथा वर्त्तते अवतिष्ठते।

(२८) नैराश्यमिति। नैराश्येन नन्दनेन सह विवाहस्य पितुरनुमोदितत्वात् मत्प्राप्त्याशा-विगमेन कातरा अतिदुःखाभिभूता धीर्यस्यास्तथाभूतायाः हरिणीक्षणायाः हरिणनयनतुल्य-नयनायाः मालत्याः निकामकरुणं प्राणत्यागसूचकत्वान्निरतिशयशोकं तथा मनोहरं मद्विषय-कानुरागोत्कर्षप्रदर्शकत्वात् मम मनोज्ञञ्च वात्सल्येन मां प्रति निरतिशयप्रेम्णा (यद्यपि वात्-सल्यशब्दः पुत्रादिविषयकः स्नेहवाचकस्तथाप्यत्र लक्षणया प्रेममात्रबोधकः) यो मोहः चित्त-वैकल्यं, तेन यत् परिदेवितं विलापः तत् श्रुत्वा चिन्तया एतद्दुःखानुचिन्तनभावनया यो विषादः खिन्नत्वं स एव विपत् विपत्तिः ताञ्च, महोत्सवञ्च ईदृगसामान्यलावण्यादिसम्पन्ना मालती मय्येवमनुरक्तेत्यहो मे सौभाग्यमिति परमं हर्षञ्च उद्वहामि धारयामि।

---

করে, এবং আমি পরলোকে গমন করিলে যখন আমার স্মৃতি ও কথাই মাত্র অবশিষ্ট থাকিবে, তখন আমাকে উদ্দেশ করিয়া বহুদিন গত হইলেও যেন সে যাহাতে সংসারযাত্রাকে শিথিল না করে, তাহা করিও। তাহা করিলেই প্রিয়সখীপ্রসাদে মালতী কৃতার্থা হইবে।

(২৭) মক। মালতী নিরতিশয় শোকের সহিত বর্ত্তমান আছে।

(২৮) মাধ। আমার প্রাপ্তিনিরাশার কাতরান্তঃকরণ হরিণেক্ষণা মালতীর অতিশয় কারুণ্যযুক্ত ও মনোহর প্রেমঘটিত চিত্তবৈকল্যপ্রযুক্ত বিলাপ

लव। भद्द। पडिहदं दाणिं दे अमङ्गलं ण अदोवि अधिअदरं सुणिस्सम्। (प)

माल। सहि। पिअं क्खु, तुह्माणं मालदीजीविदं ण उण मालदी। (फ)

लव। किं एव्वं भणिदे भोदि। (ब)

माल। [ आत्मानं निर्दिश्य। ] जेण अण्णजणपत्थाणाणिबन्धणेहिं वअणसंविहाणेहिं जीआविअ इमं ज्जेव्व महाबीभच्छारम्भं

(प) अयि प्रतिहतम् इदानीं तेऽमङ्गलम्। नातोऽप्यधिकतरं श्रोष्यामि।

(फ) सखि। प्रियं खलु युष्माकं मालतीजीवितं न पुनर्मालती।

(ब) किमेवं भणिते भवति।

(भ) येन अन्यजनप्रत्याशानिबन्धनैर्वचनसंविधानैर्जीवयित्वा इममेव महाबीभत्सारम्भमनु-

अत्र विषादार्थकोत्पूर्व्वकवहधातोर्धारणार्थे प्रयोगादवाचकत्वदोष.। अप्रास्तुतयोर्न्विपन्मद्दोत्सवयो"रुद्वहामी"त्येकक्रियया सम्बन्धेनान्वयात्तुल्ययोगिता एवं विरुद्धयोर्व्विपन्महोत्सवयोरेकदा सङ्घटनात् उपमा श्रद्धारूपयनयोः सङ्करः। वसन्ततिलकाछन्दः।

(प) अमङ्गलं मरणाध्यवसायरूपमत्याहितं प्रतिहतं सन्निहितदेवतया विनाशितं भवेदिति शेषः।

(ब) एवं भणिते—"मालतीजीवितमेव युष्माकं प्रियं न पुनर्मालती"त्युक्ते किं भवति? अनेन वाक्येन किं प्रतिपादितं भवतीति प्रश्नार्थः। मालती मालतीजीवितशब्दयोरुभयोरेवैतद्देहावच्छिन्नात्मपरतया मालतीजीवितस्य प्रियत्वे मालत्या अप्रियत्वं व्याहतमिति त्वदीयकथनस्य तात्पर्यं नावगच्छामीति भावः।

শুনিয়া আমি ইহার দুঃখাপনয়নোপায়চিন্তাজনিত বিষাদরূপ বিপত্তি ও পরম আনন্দ ধারণ করিতেছি।

(প) লব। অয়ি সখি! সন্নিহিত দেবতা কর্ত্তৃকই তোমার মরণাধ্যবসায় রূপ অমঙ্গল বিনাশিত হইবে। ইহার অধিক আর শুনিব না।

(ফ) মাল। সখি! মালতীর জীবনই তোমাদের প্রিয়, কিন্তু মালতী তোমাদের প্রিয় নহে।

(ব) তোমার এই কথার কি তাৎপর্য্য হইল? (বুঝিলাম না)।

अणुभाविदह्मि। सम्पदं उण मम मणोरहो एसो जेव्व जं तस्स देवस्स परोक्खगुणकित्तणेण अणवरद्धं अत्ताणं परिच्चइस्सं त्ति, ता, इमस्सिं पओअणे पिअसही मे अपरिपन्थिणी होदु। इति पादयोः पतति। (म)

---

भाविताम्मि। साम्प्रतं पुनर्मम मनोरथ एष एव यत्, तस्य देवस्य परोक्षगुणकीर्त्तनेन अनपराद्धमात्मानं परित्यक्ष्यामीति। तदस्मिन् प्रयोजने प्रियसखी मे अपरिपन्थिनी भवतु।

---

(म) (आत्मानं स्वकीयदेहं निर्दिश्य अङ्गुल्यनिर्देशेनाङ्गुल्या प्रदर्श्य आहेति शेषः) येन हेतुना अन्यप्रत्याख्याननिबन्धनैः माधवप्रत्याशामूलकैः वचनसंविधानैः "सखि ! समाश्वसिहि, अवश्यमेव माधवं प्राप्स्यसी"त्यादि मधुवाक्योपन्यासैः जीवयित्वा माधवप्रत्याशाविरहेण मरणे कृतमहत्त्वो मां मरणाद्वारयित्वा इममेव महाबीभत्समारब्धं नन्दनेन सह विवाहरूपमतिगर्हितमर्थं च: उपक्रमं नवितरणातिदुःखमिति यावत् अनुभाविताम्मि परिबोधितास्मि युष्माभिरिति शेषः। मयाच मालती सुखिनी दुःखिनी वा भवतु, किन्तु जीवतु इत्येव युष्माकमभिलाषः, नतु मालती अदुःखितैव यथा तथा वा भवत्विति युष्माकमभिलाष., अत. साधूक्तं "प्रियं खलु" युष्माकं मालत्या जीवितं नतु मालत्या दुःखाभाव इति। एवञ्च मालतीपदस्य दुःखरहितेतद्देहावच्छिन्नात्मपरत्वात् मालतीजीवितपदस्य च एतद्देहावच्छिन्नात्मप्राणपरत्वान्न महाकार्यौं व्याहत इति भावः। फलितं कथयति—साम्प्रतमित्यादिना। देवस्य माधवस्य, परोक्षगुणकीर्त्तनेन तदसन्निधाने एव तदीयगुणानां वर्णनेन (सन्निधाने गुणवर्णने तु चाटुकत्वापराधो भवेदित्याशयः) अनपराद्धं अपराधरहितं (नन्दनेन सह विवाहे तु महानपराधो भवेदित्यपि व्यज्यते)। "परकीयत्वेनापराद्ध"मिति पाठे तु परकीयत्वेन माधवान्यसम्बन्धिकोटियोगेन अपराद्धं अपगतापराधितामित्यर्थः। तद्वियोगेनैव मे महानपराधः का। कथा तत्सम्पादन इति भावः। अपरिपन्थिनी अविघ्नकारिणी।

---

(ভ) (নিজের দেহ অঙ্গুলি দ্বারা দেখাইয়া) যে হেতু মাধবপ্রাপ্তির প্রত্যাশাসূচক বাক্যবিন্যাস দ্বারা আমাকে জীবিত রাখিয়া নন্দনের সহিত বিবাহোপক্রমরূপ এই অতিগর্হিত অনুষ্ঠান অনুভব করাইতেছ। (অতএব আমি ঠিকই বলিয়াছি, মালতীর জীবনই তোমাদের অভিলষিত, কিন্তু মালতী অর্থাৎ মালতী কিরূপে নির্দুঃখে থাকিবে, তাহা তোমাদের অভিলষিত নহে) সম্প্রতি আমার ইহাই মনোরথ যে পরোক্ষে সেই মহাত্মা মাধবের গুণকীর্তন

मक। सैषा सीमा स्नेहस्य। (२९)

लवङ्गिका। (माधवं संज्ञया समाह्वयति)। (३०)

मक। वयस्य! उपसृत्य लवङ्गिकायाः स्थाने तिष्ठ। (३१)

माध। वयस्य! परवानस्मि साध्वसेन। (३२)

मक। इयमेव नेदीयसी प्रकृतिरभ्युदयानाम्। (३३)

माधवः। (स्वैरं लवङ्गिकास्थाने तिष्ठति)। (३४)

माल। सहि! करेहि अणुऊलदाए पसादं। (म)

---

(म) सखि। कुरु अनुकूलतया प्रसादम्।

---

(२९) सीमा—पराकाष्ठा, नेतोऽधिकः स्नेहः सम्भवतीति भावः।

(३०) माधवं—पूर्वसङ्केतेन स्थिरीकृतस्तम्भान्तरालावस्थानं। संज्ञया—अङ्गुली-सङ्केतेन।

(३१) लवङ्गिकायाः स्थाने लवङ्गिका यत्रास्ति तत्र।

(३२) साध्वसेन भयसन्दर्शनभयेन वा लवावस्थितलवङ्गिकयान्या मालत्याः पश्चादनभयेन वा परवान् मालतीस्थाने यातुं परवशः कृतोऽस्मि, सहसा यातुं भीतोऽस्मीत्यर्थः।

(३३) नेदीयसी अन्तिकतरा (अन्तिक+ईयसुन्, "अन्तिकबाढयोर्नेदसाधौ" इत्यन्तिकशब्दस्य नेदादेशः) अभ्युदयानां अभिलषितस्त्रीलाभादिमङ्गलानां इयमेव प्रकृतिः स्वभावः। एतादृशाभ्युदयलाभकाले अङ्गगात्रकम्पादिसात्त्विकभावोदयात् पराधीनत्वं तत् स्वाभाविकमित्यर्थः।

(३४) स्वैरं मन्दं मालत्या अज्ञातं यथा स्यात्तथेत्यर्थः।

(म) अनुकूलतया मदपराधमतिक्रमानुकूल्येन, प्रसादं अनुग्रहं कुरु।

---

করিয়া অনপরাধী আমাকে পরিত্যাগ করিব। আমার এই বিষয়ে প্রিয়সখী প্রতিকূল হইও না। (এই কথা বলিয়া মালতী লবঙ্গিকার পায়ে পড়িল)

(২৯) মক। ইহাই স্নেহের চরম সীমা।

(৩০) (লবঙ্গিকা অঙ্গুলীসঙ্কেতে মাধবকে আহ্বান করিল)

(৩১) মক। বয়স্য! তুমি যাইয়া লবঙ্গিকার স্থানে দাঁড়াও।

(৩৪) (মাধব অতিসন্তর্পণে যাইয়া লবঙ্গিকার স্থানে দাঁড়াইল)

(ম) মাল। সখি! মরণানুমোদনরূপ আনুকূল্য করিয়া অনুগ্রহ কর।

माध। सरले! साहसरागं परिहर, रम्भोरु! मुञ्च संरम्भम्।
विरसं विरहायासं, सोढुं तव चित्तमसहं मे॥ (७५)
माल। सहि! अलंघणीओ ज्जेव्व दे मालदीप्पणामो। (य)
माध। (सहर्षं) किं वा भणामि विच्छेददारुणायासकारिणि!
कामं कुरु वरारोहे! देहि मे परिरम्भणम्॥ (७६)

---

(य) सखि। अलङ्घनीय एव ते मालतीप्रणामः।

---

(७५) सहसैव लवङ्गिकाभ्रमापनोदनेन स्वतत्त्वज्ञापने मालती निःशङ्कं न स्वमनोगतसन्देशं निवेदयेत् लज्जया वा दूरं गच्छेदिति मत्वा माधवः "तत्समं तद्भवं देशीत्यनेकः प्राकृतक्रम" इति संस्कृतसमेनैव प्राकृतेन लवङ्गिकायाः स्वस्य च साधारणेन शब्देन लवङ्गिकाकथनयोग्यमेव स्ववक्तव्यमाह—सरले इत्यादिना। हे सरले। ऋजुहृदे! साहसे प्राणत्यागरूपे साहसिकव्यापारे रागं अभिलाषं परिहर परित्यज। तथा हे रम्भोरु! कदलीस्तम्भसमोरुदेशे! संरम्भं सत्वरोद्योगमपि मुञ्च परिहर। अत्र हेतुमाह—विरसमित्यादिना। विगतो रसः सांसारिकानुरागो यस्मात्तादृशं तव विरहायासं वियोगदुःखं सोढुं मे मम चित्तं असहं असमर्थम्। तथाच मां प्रत्यनुकम्प्यापि त्वया मरणकामना मरणोद्योगश्च न कर्त्तव्य इति भावः।

अत्र पूर्वार्द्धगतवाक्यार्थद्वयं प्रति परार्द्धगतवाक्यार्थस्य हेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः। नचात्र भाषाश्लेषशङ्का कार्य्या, एतेषां शब्दानां संस्कृतप्राकृतविशेषयोः रूपसाम्येऽपि वाच्यभेदाभावात् श्लेषस्यानुपपत्तेरिति। आर्य्याजातिः।

(य) सरले इत्यादि माधवस्य लवङ्गिकाभिधानभ्रान्त्या स्वमरणस्य लवङ्गिकाया अनभिमतत्वं परिज्ञाय पुनरनुनयति—सहीत्यादिना। अलङ्घनीयः लङ्घनायोग्यः। तथाच मालतीप्रणामगौरवेण तत्रानभिलषितमपि मामन्याभिलषितमिति तन्मरणमनुमोदनीयमिति भावः।

(७६) सहर्षमिति। सखि! इत्याद्युक्त्या माधवत्वेनापरिज्ञानावगमो हर्षहेतुः। माधवः

---

(৭৫) মাধ। অয়ি সরলে! প্রাণত্যাগরূপ সাহসিক ব্যাপারে অভিলাষ পরিত্যাগ কর। হে রম্ভোরু! মরণের উদ্‌যোগও পরিত্যাগ কর। যে হেতু আমার চিত্ত সংসারবিরাগহেতু তোমার বিরহদুঃখ সহ্‌ করিতে অসমর্থ।

(য) মাল। মালতীর প্রণাম তোমার সর্ব্বথাই অলঙ্ঘনীয়।

माल। [सहर्षम्।] कधं अणुग्गहीदह्मि। [उत्थाय।] इम-मालिङ्गामि। दंसणं उण पिअसहीए बाप्फोपीड़ेण णिरुद्धं पच्छिमं ण लम्भाअदि। * [आलिङ्गय सानन्दम्।] सहि! कठोरकमल-गब्भपह्मलो अम्हारिसो जणो ण दे अज्ज णिव्वावेदि मं सन्तप्पमाणं

(१) कथमनुगृहीतास्मि। इममालिङ्गामि। दर्शनं पुनः प्रियसख्या बाष्पोत्पीडेन निरुद्धं पश्चिमं न लभ्यते। सखि। कठोरकमलगर्भपक्ष्मलः अस्मादृश एव ते अद्य निर्वापयति मां सन्तप्यमानां प्रियसख्याः शरीरस्पर्शः। किञ्च मौलिविनिवेशिताञ्जलिर्मम वचनेन विज्ञा-

पूर्व्ववदेव लवङ्गिकैव अन्तर्हितलवङ्गिकैवाह—कि मेति। आध्वरपते हे विच्छेददारुणायास-कारिणि! वर्त्तमानविरहेणातिभीषणक्लेशदायिनि! किंवा भणामि मरणविषये किंवा ब्रवीमि, तस्यात्यन्तानभिलषणीयत्वात् मत्प्राप्ता मरणस्य निष्प्रयोजनत्वाच्च तव न किमपि वक्तव्यमस्तीत्यर्थः। अतएव हे वरारोहे। सुश्रोणि। (आरोहः श्रोणिकारयोरिति धरणिः) कामं कुरु मया सह कामव्यापारं अनुतिष्ठ। "हे विच्छेददारुणायासकारिणि मरणाद-भाविविरहेणातिभीषणकष्टदायिनि। किं भणामि? तव मरणविषये किं कथयामि? अत्यन्तासहनीयत्वात् किमपि वक्तुं असमर्थोऽस्मीत्यर्थः। अतएव वरारोहे। कामं यथाभि-लषितं कुरु" इति लवङ्गिकोक्तिभ्रान्तिशालिन्या मालत्या बोधनीयः अर्थः। अतएव मे मम परिरम्भणं आलिङ्गनं देहि इत्युभयत्र समानम्।

अत्र "माधवं संज्ञया समाह्वयति" इत्यादितत्तदन्ते सन्दर्भे छद्मना माधवाभिलाषपूरणा-भिसन्धानाद्विवरं नाम गर्भसन्धेरङ्गं, दर्पणोक्त तल्लक्षणन्तु—"अभिवनमभिसन्धिस्थान" इति।

(२) "कामं कुरु" इत्यनेन अभिलषिते स्वमरणे लवङ्गिकायाः सम्मतिं मत्वा सानन्द-

(৩৬) মাধ। (হর্ষের সহিত) হে বিচ্ছেদ দ্বারা ভীষণ দুঃখ দানশীলে মালতি! তোমার এই মৃত্যু বিষয়ে আমি কি বলিব? (অত্যন্ত অসহনীয় ও নিষ্প্রয়োজনীয় বিধায় এ বিষয়ে আমি কিছুই বলিতে চাহি না) হে সুশ্রোণি! তুমি আমার সহিত কাম ব্যবহার কর, আমাকে আলিঙ্গন দেও। (লবঙ্গিকার উক্তিভ্রমে মালতীবোধ্য অর্থ—"তোমার এই মৃত্যু বিষয়ে আমি আর কি বলিব, তোমার যাহা ইচ্ছা তাহাই তুমি কর। হে বরারোহে! আমায় আলিঙ্গন দেও")।

(১) মাল। (হর্ষের সহিত) তবে কি আমি মরণানুমোদন দ্বারা অনু-

पिअसहीए सरीरप्फसो । [ सास्रम् । ] किञ्च, मउलिविणिवेसिदञ्जली मम वअणेण विण्णावेसि तं जणं, जधा, ण मए मन्दभाइणीए, विअसन्तपुण्डरीअलच्छीविलासहारिणो संपुण्णचन्दमण्डलाहिरामस्स मुहस्स दे सच्छन्ददंसणेण सम्भाविदो चिरं महूसवो लोअणाणं । सुधामणोरहेहिं अ अविरदविअम्भमाण-

---

पयिष्यसि तं जनं, यथा, न मया मन्दभागया, विकसत्पुण्डरीकलक्ष्मीविलासहारिणः सम्पूर्णचन्द्रमण्डलाभिरामस्य मुखस्य ते स्वच्छन्ददर्शनेन सम्भावितश्चिरं महोत्सवो लोचनानाम् ।

---

माह—कथमिति । अनुगृहीतास्मि मायितमरणाङ्गीकरणेन कृतार्थास्मि । अयिमं मरणस्याचिरसम्पादनीयत्वेन चरमं प्रियसख्यास्तव दर्शनं अवलोकनं वाष्पोत्पीडेन दुःखातिशयोद्गताश्रुप्रवाहेण निरुद्धं प्रतिबद्धं न लभ्यते । ( एतेनोत्थायालिङ्गनकरणेऽपि कथं नाभवत्त्वेन न परिज्ञात इति शङ्का निराकृता ) एवं लवङ्गिकाबुद्ध्यापि माधवे कृतालिङ्गना तावतो अविज्ञाता सती ह्रदे निमग्नेव सन्तापप्रशमनमनुभवन्ती पुनराह—सखीति । कठोरं परिणतं यत् कमलं पद्मं तस्य गर्भवत् बीजकोषवत् पक्ष्मलः रोमाञ्चकञ्चुकितः अस्याङ्गः स्पर्शोऽनुभूतस्निग्धस्पर्शः, निर्वापयति शीतलयति । मरणे कृतनिश्चया माधवं प्रति चरमाभिप्रेतं कथयितुमाह—किञ्चेति । तं जनं माधवं ( मनसा पतित्वेन वृतत्वान्नामानुल्लेख इति तात्पर्यम् ) विकसतां प्रफुल्लानां पुण्डरीकाणां पद्मानां लक्ष्मीविलासं शोभाविलासं हरतीति तथोक्तस्य ततोऽप्यधिकसुन्दरस्येत्यर्थः । स्वच्छन्ददर्शनेन यथाभिमतसमीक्षणेन लोचनानां

---

গৃহীত হইলাম। (উঠিয়া) এই আমি আলিঙ্গন করিতেছি। অশ্রুপ্রবাহের প্রতিরোধ বশতঃ প্রিয়সখীর চরমদর্শনও পাইতেছি না। (আলিঙ্গন করিয়া আনন্দের সহিত) সখি! পরিণত পদ্মের গর্ভকোষের ন্যায় রোমাঞ্চযুক্ত পুলকিত স্পর্শের বিচিত্ররূপ তোমার শরীর স্পর্শ সন্তাপবান আমাকে আজ শীতল করিতেছে। (সাশ্রুনেত্রে) আরও বলি, মস্তকে অঞ্জলি নিহিত করিয়া আমার বাক্যানুসারে তাঁহাকে জানাইও যে "মন্দভাগিনী আমি প্রফুল্ল কমল-শোভাবিলাসহারী ও সম্পূর্ণ চন্দ্রমণ্ডলের ন্যায় মনোজ্ঞ তোমার বদনের স্বচ্ছন্দ দর্শন দ্বারা নয়নের মহোৎসব সম্পাদিত করিতে পারি নাই। অবিচ্ছিন্নরূপে বর্দ্ধমান দুর্দমনীয় কামোদ্বেগের সম্পর্কে যাহার মূলবন্ধন উচ্ছিন্নপ্রায়, তাদৃশ হৃদয়কে বৃথা মনোরথ দ্বারাই (এ পর্যন্ত) ধারণ করিয়াছি। আমার দেহ

दुव्वारव्वे अव्वईकरव्वसमाणजम्मणं धारिअं हिअअम्। गमिआ अ वारंवारं सविसेसदूसहारम्भदुम्मणाइअसहीअणा सरीरसन्दावा, कधंवि अदिवाहिदा चन्दादवमलअमारुदप्पमुहा अणत्थपरम्परा, सम्पदं उण णिरासह्मि संवुत्तेम्हि, तुएवि पिअसहीए सव्वदा सुमरिदव्वह्मि। एसा अ सिरिमाहवसहत्थणिम्माणमणोहरा बउलमाला मालदीजीविदणिव्विसेसं पिअसहीए दट्ठव्वा सव्वधा हिअए धारणीएत्ति। (१)

---

मृणालगौरवं च अविरतविजृम्भमाणदुर्वारोद्दमन्मथविकारोद्दामसम्भवं धारितं हृदयम्। गमिताश्च वारंवारं सविशेषदुःसहारम्भदुर्मनायितसखीजनाः शरीरसन्तापाः, कथमपि अतिवाहिता, चन्द्रातपमलयमारुतप्रमुखा अनर्थपरम्परा, साम्प्रतं पुनर्निराशास्मि संवृत्ता इति। त्वयापि प्रियसख्या सर्वदा स्मर्त्तव्यास्मि। एषा च श्रीमाधवस्वहस्तनिर्माणमनोहरा वकुलमाला मालतीजीवितनिर्विशेषं प्रियसख्या द्रष्टव्या, सर्वथा हृदये धारणीया इति।

---

मम नयनानां ( बहुवचनं दर्शनवाञ्छनातिशय्यद्योतनार्थं, क्वचित् "लोचनयो"रित्येव पाठः ) महोत्सवः परमानन्दः न सम्भावितः न सम्पादितः। सुधा मनोरथैः "पश्चात्तेन समागमेनैव सुखमनुभविष्यामी"ति इत्याभिनिवेशैः, अविरतं अविच्छेदं विजृम्भमाणस्य वर्द्धमानस्य दुर्वारोद्दामस्य दुर्दमनीयकामोद्वेगस्य यो व्यतिकरः सम्पर्कः तेन सहर्संसानं छिद्यमानं भवनं मूलबन्धो यस्य, तथाभूतं हृदयं धारितं एतावत्कालं परिरक्षितं। तथाविधमनोरथो यदि नाश्वासस्तदा तादृशोद्वेगेनैव मम हृदयमुन्मूलितमभविष्यदिति भावः। सविशेषैः सातिशयैः आरम्भैः उशीरानुलेपनशयनीयनलिनीदलशीधवादिव्यापारैः दुर्मनायिताः सखीवारोपायविरामाद्दुश्चिन्तिताः कृताः सखीजना यैः तथाभूताः शरीरसन्तापाः मन्मथोद्दिजत्वराः गमिताः अनुभूताः। चन्द्रकिरणादीनां विरहिजनसन्तापकत्वं प्रसिद्धमेव, अत एतावत्पदोपादानं सार्थकम्। अनर्थपरम्पराः अविच्छिन्नदुःखहेतुप्रवाहाः, कथमपि अतिकष्टेन

---

শরীরসন্তাপ সাতিশয় উশীরানুলেপনও শয়নীয় নলিনীপত্রের শোষণাদি ব্যাপারে সখীদিগকে অত্যন্ত দুশ্চিন্তিত করিয়াছে, তাহাও অনুভব করিয়াছি। চন্দ্রকিরণ ও মলয় মারুত প্রভৃতি অনর্থকারী বস্তু সকল অতি কষ্টেই ( তোমার প্রাপ্তির আশায় ) অতিবাহিত করিয়াছি। কিন্তু সম্প্রতি একেবারে নিরাশ হইয়া পড়িয়াছি।" প্রিয় সখীও সর্বদা আমাকে স্মরণ করিও। শ্রীমাধবের

(सकण्ठादपनीय माधवस्य हृदि विन्यसन्ती सहसा अपसृत्य साध्वसोत्कम्पं नाटयति।) (३७)

माध। [अपवार्य्य।] हन्त! (३८)

एकीकृतस्त्वचि निषिक्त इवावपीड्य निर्भुग्नपीनकुचकुड्मलयानया मे।
कर्पूरहारहरिचन्दनचन्द्रकान्तनिष्यन्दशैवलमृणालहिमादिवर्गः॥

---

अतिवाहिताः, तथैव आशायशा अतिक्रान्ताः। पुनः किन्तु निराशा नन्दनेन सह विवाहस्य पिता स्थिरीकृतत्वात् त्वत्प्राप्तौ हताशास्मि अं कृतेति विज्ञापयिष्यसीत्यन्वयः। श्रीमाधवस्वहस्ते त्वत्र माधवनामोच्चारणमतिशोकसमाकुलत्वेन भ्रान्तिवशादिति मन्तव्यम्। मालतीजीवितनिर्व्विशेषं मालतीजीवितानुरूपं यथा स्यात्तथा द्रष्टव्या नावहेलनीयेत्यर्थः।

(३७) अपनीय उन्मोच्य विन्यस्यन्ती वकुलमालामर्पयन्ती, सहसा अपसृत्य मालार्पणकाले स्तनरहितोरस्कत्वाद्यनुभवात् पुरुषबुद्ध्या विजातीयालिङ्गनसुखस्मरणेन कथञ्चित् प्रत्यक्षेण वा माधवप्रतीत्या च द्रुतं किञ्चिदन्तरं गत्वा (प्रथमालिङ्गनकाले स्वामिन्यपितादपि पुरुषादपसरणं लज्जादिप्रयुक्तं स्त्रीणां स्वाभाविकमिति माधवपरिज्ञानेऽपि मालत्यपसरणं न विरुद्धमिति विभावनीयम्) साध्वसोत्कम्पं भयादिजनितवेपथुं नाटयति अभिनयति। नाट्यनिगतस्थाने पित्राद्यननुमतपुरुषेण सङ्गावस्थानं तदालिङ्गनादितः सात्त्विकभावोदयस्य साध्वसोत्कम्पहेतुरिति।

अनेन सन्दर्भेण समतीव तापप्रतीतेः पश्चात्तापो नाम नाट्यालङ्कारः। तल्लक्षणन्तु—"मोहावधीरितार्थस्य पश्चात्तापः स एव तु" इति।

(३८) अत्र "हन्त"शब्दो हर्षद्योतकः।

(३९) एकीकृत इति। निर्भुग्नौ गाढालिङ्गनवशान्मदीयकर्कशवक्षोऽवपीडनेन किञ्चिदवनताग्रभागौ, अत एव पीनौ पीवरतामापन्नौ कुचौ स्तनौ एव कुड्मलौ मुकुलौ

---

স্বহস্ত-নির্ম্মাণ-মনোহর এই বকুলমালা মালতীর জীবননির্ব্বিশেষে প্রিয় সখীর দ্রষ্টব্য ও সর্ব্বদা হৃদয়ে ধারণীয়।

(এই কথা বলিয়া মালতী নিজের কণ্ঠ হইতে বকুলমালা মাধবের হৃদয়ে বিন্যস্ত করিতে করিতে সহসা অপসৃত হইয়া ভীতিজনিত কম্পের অভিনয় করিতে লাগিল)

(৩৯) মাধ। (অন্যের অশ্রুতভাবে) অহো গাঢ় আলিঙ্গনবশে আমার কর্কশ বক্ষের অবপীড়নে যাহার পীন স্তনমুকুলের অগ্রভাগ কিঞ্চিৎ অবনত

माल। [ स्वगतम्। ] अहो! सर्वाङ्गिमाए मालदी विप्पलद्धा। (ल)

माध। अयि! स्ववेदनामात्रनिवेदिनि! परव्यथानभिज्ञे! इयमुपालभ्यसे। (४०)

उद्दामदेहपरिदाहमहाज्वराणि,
सङ्कल्पसङ्गमविनोदितवेदनानि।
त्वत्स्नेहसंविदवलम्बितजीवितानि,
किं वा मयापि न दिनान्यतिवाहितानि? (४१)

---

(ल) अहो सर्वाङ्गिकया मालती विप्रलब्धा।

---

[illegible] करपूर [illegible] मालत्या अतनौया गां गाढ़मालिङ्ग्य मे मम त्वचि सर्वेन्द्रिये कर्पूर॰ [illegible] मणिद्रवमिव [illegible] परिदाह, शैवालं [illegible] [illegible] निष्पीड्य [illegible] निषिक्तः [illegible] इव। [illegible] भावः।

अत्र निषिक्त इवेति [illegible], [illegible] इवेन [illegible] [illegible]। [illegible]।

(ल) विप्रलब्धा [illegible] [illegible] प्रतारिता। [illegible] [illegible] [illegible], [illegible]।

(४०) अयीति। [illegible] [illegible]। [illegible] [illegible] [illegible] [illegible]। [illegible] [illegible] तिरस्क्रियसे।

(४१) स्ववेदनां प्रकटयितुमाह—उद्दामेति। उद्दामः उत्कटः देहस्य शरीरस्य परि-दाहः [illegible] एव महाज्वरो येषु तथाभूतानि, सङ्कल्पसङ्गमेन काल्पनिकसमागमेन

---

হইয়াছে, এইরূপ মালতী আমায় গাঢ় আলিঙ্গন করিয়া আমার সর্ব্বাঙ্গের কর্পূর, মুক্তাহার, হরিচন্দন ও চন্দ্রকান্ত মণির নির্যাস, শৈবাল, মৃণাল এবং হিমাদিস্রব নিষ্পীড়িত করিয়া যেন আমার হৃদয়ে নিষিক্ত করিতেছে।

(ল) মাল। (স্বগত) অহো সর্ব্বাঙ্গিকা কর্ত্তৃক মালতী প্রতারিতা হইয়াছে।

(৪০) মাধ। অয়ি! স্ববেদনামাত্রনিবেদনকারিণি! পরব্যথানভিজ্ঞে! তোমাকে উক্ত সম্বোধনে তিরস্কার করিতেছি।

लव। सहि! उवालम्भणिज्जेव उवालद्धासि। (व)

कल। अहो! सरसरमणीअदा संविहाणस्स। (श)

मक। महाभागे! एवमेतत्। (४२)

---

(व) सखि! उपालम्भनीयैवोपालब्धासि।

(श) अहो सरसरमणीयता संविधानस्य।

---

विनोदिता कथञ्चिन्निवारिता वेदना विरहव्यथा येषु तानि, त्वत्सङ्गमविदा मयि तवानुरागोऽस्तीति बुद्धा (धीर्धोपलब्धिश्चित् संविदित्यमरः) अवलम्बितं धृतं जीवितं जीवनं येषु तथाभूतानि दिवसानि किं वा मयापि (न केवलं त्वयेत्यपेरर्थः) न अतिवाहितानि नातिक्रान्तानि? अपि तु अतिक्रान्तान्येवेत्यर्थः। तथाच स्ववेदनाभावनिवेदनानुमितेन त्वयि मद्वेदनानभिज्ञानेनासमदर्शितात्मिका तव निन्दा मया क्रियत इति भावः।

परस्परानुरागबीजसमुत्क्षेपादेतत् "आक्षेपो नामाङ्गम्, तथाचोक्तं—गर्भबीजसमुत्क्षेपादाक्षेपः परिकीर्त्तितः" इति।

"आख्यानं पूर्व्ववृत्तोक्ति"रिति दर्पणलक्षणादाख्यानं नाम नाट्यालङ्कारः। एवं परिदाहमहाज्वर इति निरङ्गरूपकालङ्कारः। चतुर्थचरणे अर्थापत्तिः, प्रथमद्वितीयचरणयोरनुप्रासश्च यथायथमूहनीय इति तेषां परस्परनैरपेक्ष्यात् संसृष्टिः। वसन्ततिलकावृत्तम्।

(व) उपालम्भनीयैव स्ववेदनानुमानेन माधववेदनाया अननुमानेन तिरस्कारयोग्यैव। तथाच तव निन्दाकरणेनास्य कश्चिद्दोष इति भावः।

(श) संविधानस्य अनयोर्मिलनरूपस्य विधातृविधानस्य। सरसं सानुरागं अत एव रमणीयं मनोज्ञं तस्य भावस्तथा। दूरान्तरितावलोकनस्य कलहंसस्य स्वगतोक्तिरियम्।

---

(৪১) যে সকল দিনে উৎকট কামজ দেহসন্তাপরূপ মহাজ্বর হইয়াছিল, যাহাতে তোমার মানসিক সঙ্গম দ্বারাই বিরহব্যথা কথঞ্চিৎ নিবারিত করিয়াছি, এবং "আমার প্রতি তোমার অনুরাগ আছে" এই জ্ঞানবশতঃই যে সকল দিনে জীবন ধারণ করিয়াছি, সে সকল দিন কি আমিও অতিবাহিত করি নাই?

(ব) ল। সখি! তুমি তিরস্কারের উপযুক্তা বলিয়াই তিরস্কৃতা হইয়াছ।

(শ) কল। অহো—এইস্থানে ইহাদিগের সম্মেলনরূপ বিধাতার বিধান অত্যন্ত সরস ও রমণীয়।

त्वं वत्सलेति कथमप्यवलम्बितात्मा,
सत्यं जनोऽयमियतो दिवसाननैषीत्।
आबद्धकङ्कणकरग्रहणप्रसाद-
मासाद्य नन्दतु चिराय, फलन्तु कामाः॥ (४२)

लव। महाणुभाव! हिअए वि अपडिहदप्पसराइसाहसी अम्हं जणो, किं दाणिं करुणाइ वि मारेदि। (ध)

(ध) महानुभाव! हृदयेऽपि अप्रतिहतप्रसरसाहसीऽयं जनः किमिदानीं करुणयापि विमारयति?

(४१) महाभागे इति मालत्याः सम्बोधनं, एतन्माधवेन यदुक्तं तत् एवं यथार्थमित्यर्थः।

(४२) यथार्थत्वं समर्थयितुमाह—त्वमिति। त्वं मत्सला अभिमतवत्सला इति हेतोरेव कथमपि अतिकष्टेन अवलम्बितः तव विरहदुःखेऽपि विधृतः आत्मा जीवितं येन तथाभूतः, अयं जनः इयतो दिवसान् तव दर्शनात् एतावद्दिनानि अनैषीत्, स्वप्राप्तिप्रत्याशयैव अतिक्रान्तवानीति सत्यं। तथाच तवानुरागात् मेऽस्य जीवनधारणं सुस्थिरम्; परमपि त्वयैवास्य जीवनरक्षणे सर्वथा यतितव्यमिति भावः। अत एव आबद्धकङ्कणस्य विहितविवाहसूत्रस्य (कङ्कणं करभूषायां सूत्रमङ्गलयोरपीति मेदिनी) करस्य तव पाणेः प्रणयः परिग्रहः स एव प्रसादः अनुग्रहः तमासाद्य माधवः नन्दतु माधवं परमानन्दं लभताम्, कामाः अस्माकं मनोरथाश्च चिराय फलन्तु सफलाः सन्तु।

अत्र चतुर्थचरणे माधवेत्यस्याध्याहारेऽपि सम्बन्धार्थकथकारादेरभावात् न्यूनपददोषः। वसन्ततिलकावृत्तम्॥

(ध) लवेति। हृदयेऽपि स्थितासि यदि (हृदयं वक्षसि स्वान्ते इति हेमः)

(৪২) অর্থ। মহাভাগে! সত্য মাধব যাহা বলিয়াছে, তাহা সত্য।

(৪৩) "তুমি ইহার প্রতি অনুরক্ত" এই কারণেই যে কেবল অতিকষ্টে জীবন ধারণ করিয়া (তোমাকে পাওয়ার আশায়) মাধব এতদিন অতিবাহিত করিয়াছে সত্য। অতএব বিবাহসূত্রধারী তোমার পাণিগ্রহণরূপ অনুগ্রহ লাভ করিয়া মাধব পরম আনন্দ উপভোগ করুক, আমাদের মনোরথ চিরকালের জন্য সফল হউক।

मालती। [स्वगतम्।] हा हद्धी! हद्धी हदम्हि, कण्णआजण-विरुद्धं किम्पि एसा उवण्णसदि। (भ)

प्रविश्य कामन्दकी। पुत्री! कातरे! किमेतत्?। (४४)

मालती। (कम्पमाना कामन्दकीमालिङ्गति) (४५)

---

(भ) हा! हा धिक्! हा धिक्! हतास्मि, कन्यकाजनविरुद्धं किमपि एषा उपन्यस्यति।

---

अप्रतिहतं अप्रतिरुद्धं स्वीकृतमिति यावत्, स्वयं यद्द एव अन्यघटितपूर्व्वचण्डकृतालिङ्गनसमये स्वयं कृतमेतदीयवक्षोधारणमेव साहसं येन तथाभूतोऽयं जनः माधवो इदानीं करग्रहणे एतत्कर्त्तृकस्वपाणिग्रहणे किं विचारयति युक्तायुक्तत्वं वितर्कयति? न किमपीत्यर्थः। या स्वयमेव सनाथपीडमेनमालिङ्गितवती, तस्या माल्त्या इदानीमेतत्कर्त्तृकपाणिग्रहणे न किमपि विचारणीयमस्तीति स्वयमेवायं निःशङ्कमस्याः पाणिं गृह्णात्विति भावः।

(भ) हा धिक् हा धिगिति विषादे द्विरुक्तिः। एषा लवङ्गिका कन्यकाजनविरुद्धं कुल-कन्याविरुद्धं किमपि प्रजल्पति। तथाकृतालिङ्गनस्य कन्यकाजनविरुद्धत्वेऽपि लवङ्गिकाधर्मैर्येन कृतत्वात् कथञ्चित् सुसहत्वं, परन्तु ज्ञात्वैव पित्रोरननुमतमेतदङ्गीकर्त्तुं न प्रभवामीति भावः।

(४४) प्रविश्य कामन्दकीति, आहेति शेषः। पुत्रीत्यनेन तव शुभाशुभपरिचिन्तने प्रदाने च ममाप्यस्त्यधिकार इति व्यज्यते। कातरे! पित्रोरननुमोदितमिदं कथमङ्गीकुर्य्या-मिति शङ्कातङ्कितमानसे! एतत्पाणिग्रहणानुमोदनशैथिल्यं किं कथं करोषीति शेषः। कथञ्चिद्दैवानुकूल्यादुपनतेऽवसरे सत् शैथिल्यं न युक्तमिति भावः।

(४५) (तस्याः मालत्याः चिबुकं धीत्राध.प्रदेशं उन्नमय्य उत्तोल्य)।

---

(ব) লব।. মহানুভব! যে মালতী ক্ষণকাল পূর্ব্বেই নিজবক্ষে স্বয়ং ইহার বক্ষোধারণরূপ সাহস স্বীকার করিয়াছে, সে এখন পাণিগ্রহণ বিষয়ে কি বিচার করিবে? (অতএব নিঃশঙ্কভাবে ইনি নিজেই মালতীর পাণিগ্রহণ করিতে পারেন)।

(ভ) মাল। (স্বগত) হা ধিক্!! হা ধিক্!!! আমি হত হইলাম, (অর্থাৎ আমার মরণই শ্রেয়ঃ) লবঙ্গিকা কুলকন্যাজনের বিরুদ্ধ পিত্রাদি গুরুজনের অননুমোদিত পাণিগ্রহণের কথা বলিতেছে।

(৪৪) কাম। (প্রবেশ করিয়া) বৎসে! কাতরে! এই পাণিগ্রহণা-নুমোদনে শৈথিল্য করিতেছ কেন?

(৪৫) (মালতী কাঁপিতে কাঁপিতে কামন্দকীকে আলিঙ্গন করিল)

काम। (तस्याश्चिबुकम् उन्नमय्य) भवति!

पुरश्चक्षूरागस्तदनु मनसोऽनन्यपरता,
तनुग्लानिर्यस्य त्वयि समभवद्यस्य च तव।
युवा सोऽयं, प्रेयानिह सुवदने! मुञ्च जड़ताम्
विधातुर्वैदग्ध्यं विलसतु, सकामोऽस्तु मदनः॥ (४६)

लव। भअवदि! कसणचउद्दसीरअणीसमाणसञ्चरणणिम्मिद-समव्वअसाअणिट्ठापिदचण्डपासण्डपअण्डदोद्दण्डसाहसो साहसिओ क्खु एसो, अदो मे पिअसही उक्कम्पिदा। (ह)

(ह) भगवति! कृष्णचतुर्दशीरजनीश्मशानसञ्चरणनिर्मितविस्मयव्यवसायनिष्ठापितचण्डपाषण्डप्रचण्डदोर्दण्डसाहसः साहसिकः खलु एषः, अतो मे प्रियसखी उत्कम्पिता।

(४६) पुर इति। यस्य माधवस्य त्वयि यस्य च माधवे तव पुरः प्रथमं चक्षूरागः नयनप्रीतिः, तदनु तदनन्तरं मनसश्चित्तस्य अनन्यपरता अनन्यविषयता एकाग्रतेति यावत्, ततश्च तनुग्लानिः अलाभजन्यात् कामजशरीरसन्तापः समभवत्। अयं स प्रेयान् तव प्रियतमः युवा माधवः इह अत्र स्थाने उपस्थितः इति शेषः। अत एव हे सुवदने! जड़तां कार्य्याकार्य्यविमूढतां मुञ्च परिहर। जड़तां परित्यज्य निःशङ्कमेनं वृणीष्वेति भावः। तेन च विधातुः विश्वस्रष्टुः वैदग्ध्यं युवयोर्निर्म्माणपाण्डित्यं विलसतु परस्परं योग्यसम्बन्धेन विकाशताम्। मदनः कामश्च सकामः युवयोः परस्परसमागमेन पूर्णमनोरथः अस्तु भवतु।

अत्रापि चतुर्थचरणे समाकाङ्क्षितसमुच्चयार्थकचकारादेरभावात् न्यूनपदत्वदोषः।

"अन्योऽन्यमुभयोरेकक्रियायाः करणं मिथः" इति दर्पणलक्षणात् प्रथमार्द्धे अन्योऽन्यालङ्कारः, प्रथमप्रस्तुतानां चक्षूरागादीनां समभवदित्येकक्रियायाः कर्त्तृत्वे तुल्ययोगिता, "सुव

(৪৬) কাম। (মালতীর চিবুক উন্নমিত করিয়া) সেই মাধবের তোমাতে ও সেই মাধবে তোমার প্রথমে নেত্রপ্রীতি তৎপরে চিত্তের একাগ্রতা ও তৎপরে শরীরগ্লানি হইয়াছিল। সেই প্রিয়তম যুবা মাধব এস্থানে উপস্থিত। অতএব হে সুবদনে! তুমি কর্ত্তব্যাকর্ত্তব্য চিন্তা পরিত্যাগ কর। অর্থাৎ নিঃশঙ্কচিত্তে ইহাকে বরণ কর। (পরন্তু তদ্দ্বারা) বিধাতার নির্ম্মাণপাণ্ডিত্য প্রকাশিত হউক ও কামদেব সফলকাম হউক।

मक। [स्वगतम्।] साधु लवङ्गिके! साधु. अवसरे खलु अनुरागोपकारयोर्गरीयसोः उपन्यासः।

माल। हा तात! हा अम्ब! (च)

---

(च) हा तात! हा अम्ब!

---

जडतामिति वाक्यार्थस्य चतुर्थचरणप्रतिपाद्यवाक्यार्थद्वयं प्रति हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गञ्चालङ्कार इति तेषां संसृष्टिः। शिखरिणीवृत्तम्॥

(छ) कृष्णचतुर्द्दशीरजन्या (कृष्णचतुर्द्दशीत्वकीर्त्तनं तस्यामेव साहसिककर्म्मानुष्ठानस्य तन्त्रशास्त्रसिद्धत्वादन्धकारातिशय्याच्चेति मन्तव्यम्) श्मशानसञ्चरणेन कराळायतनान्तिकश्मशानप्रदेशपरिभ्रमणेन निर्व्वर्त्तितः मालतीलाभाशयासम्पादितः विषमव्यवसायः महामांसविक्रयात्मकार्य्यजनानुचितव्यापारः येन सः (अनेन मालत्या माधवस्य निरतिशयानुरागः सूचितः) तथा निष्ठापितं निवारितं चण्डपाषण्डस्य दारुणनिषिद्धक्रियानुष्ठायिनः कापालिकापसदाघोरघण्टस्य प्रचण्डदोर्द्दण्डयोः भीषणबाहुदण्डयोः साहसं मालतीवलिदानात्मकातिसाहसकर्म्म येन स तादृशः। (अनेन मालत्या जीवनरक्षात्मको महान् उपकार उक्तः) (अनयोर्व्विशेषणयोरुत्तरविशेष्यत्वविवक्षया कर्म्मधारयः) एष माधवः साहसिकः खलु। अतः अस्य प्रचण्डसाहसिकत्वाद्धेतोः मे प्रियसखी मालती उत्कम्पिता अनेन पाणिग्रहणे भयात् कम्पमाना। प्रचण्डसाहसिकपुरुषात् सर्व्वेषामेव भयं युक्तमित्याशयः। तथाच श्मशानचेष्टं तादृशप्राणरक्षानिरपेक्षसाहसिकत्वमस्य प्रत्यक्षीकृतवत्या 'मम प्रियसख्याः अनेन पाणिग्रहणे भयविह्वलता सर्व्वथैव युक्तेति माधवं प्रति नर्म्मोक्तिव्याजेन माधवस्य तादृशमनुरागमुपकारञ्च ज्ञापयन्त्या परमचतुरया लवङ्गिकया तादृशानुरक्तेनोपकारकेण च माधवेन पाणिग्रहणे पितृनिदेशाद्यपेक्षापि न कर्त्तव्येति मालत्यै निवेदितमिति मन्तव्यम्।

(४७) अवसरे समुचितसमये, गरीयसोः अतिमहतोः, उपन्यासः उत्थापनम्।

---

(ছ) লব। ভগবতি! ইনি (একমাত্র মালতীলাভের প্রত্যাশায়) কৃষ্ণচতুর্দ্দশী রজনীতে শ্মশানে ভ্রমণ করিয়া মহামাংস বিক্রয়রূপ বিষমব্যাপার সম্পাদিত করিয়াছেন ও প্রচণ্ড পাষণ্ড অঘোরঘণ্টের বাহুদণ্ডের মালতী বলিদানরূপ সাহসিক কর্ম্ম নিবারিত করিয়াছেন; সুতরাং অতিশয় দুঃসাহসী, এই জন্যই (ইহাকে বরণ করিতে) প্রিয়সখী কাঁপিতেছে।

(৪৭) মক। (স্বগত) সাধু লবঙ্গিকে! সাধু। উপযুক্ত সময়েই তাদৃশ মহদনুরাগ ও উপকারের উপন্যাস করিয়াছ।

कामं। वत्स माधव! (४८)

माध। आज्ञापय। (४९)

कामं। इयम् अशेषसामन्तमस्तकोत्तंसपद्मरागरञ्जितचरणाङ्गुलेः अमात्यभूरिवसोः एकम् अपत्यरत्नं मालती, भगवता सदृशसंयोग रसिकेन वेधसा, मन्मथेन, मया च, तुभ्यं प्रदीयते। [इति रोदिति।](५०)

मक। फलितं हि नस्तर्हि भगवतीपादप्रसादेन। (५१)

---

(च) हा तात हा अम्बेति, युवयोः सम्मतिमप्यनपेक्षमाणेयं कुलकन्यकाजनविरुद्ध-माचरन्ती कथं पुनर्मुखं दर्शयिष्यमिति शेषः। तथाच विचारं त्विदानीमेव माधवपाणिग्रहणस्य कर्त्तव्यता स्थिरीकृतेति व्यज्यते।

(५०) कामेति। अशेषाणां निरवशेषाणां सामन्तानां अधिनीकृतनृपतीनां ये मस्त-कोत्तंसाः शिरोऽलङ्कारास्तद्‌गतपद्मरागमणीति यावत्, तेषां पद्मरागैः रञ्जिताः चरणाङ्गुलयो यस्य तथाभूतस्य। (एतेनास्याः परमैश्वर्य्यशालिकन्यात्वं सूचितम्) अपत्यरत्नं अतुलनीयगुणलावण्यसम्पन्नत्वात् रत्नविशेषत्वम्। तथाच परमैश्वर्य्यशालिनोऽपत्यत्वात् पितृ-र्न्नातृत्वस्यैकभाजनत्वात् सौन्दर्य्याद्यनेकगुणसम्पन्नत्वाच्च भवतोऽपि नास्यामनादरस्त्वया करणीय इति भावः। सदृशसंयोगरसिकेन यौग्यसम्मेलनाभिनिवेशशालिना वेधस्य विधिना (तेनैव प्रथमं ललाटपटे लिखितत्वादिति भावः) मन्मथेन कामेन (तेनैव तदनन्तरमकस्मादुभयो-र्निरतिशयासक्तिजननादिति भाव) मया च (तदनुगुणलौकिकप्रयत्नकरणादिति भावः) तुभ्यं प्रदीयते। संप्रदानस्य विश्लेषकरत्वादीनां परिचिन्तनमेव निरतिशयवात्सल्यशालिन्या मातृस्थानीयायाः कामन्दक्याः रोदनहेतुः।

---

(ক) মাগ। হা! তাত! হা! মাতঃ! (তোমাদের অমতে কুল-কন্যাজনবিরুদ্ধ এইরূপ আচরণ করিয়া কিরূপে মুখ দেখাইব)

(৪৮) কাম। বৎস মাধব!

(৪৯) মাধ। আজ্ঞা করুন।

(৫০) কাম। যাহার চরণাঙ্গুলি সমস্ত অধিকৃত নৃপতিগণের মস্তকালঙ্কার পদ্মরাগে রঞ্জিত হয়, তাদৃশ অমাত্য ভূরিবসুর একমাত্র কন্যা মালতীকে প্রথমে বিধাতা তৎপরে কামদেব ও তৎপরে এই আমি তোমায় অর্পণ করিতেছি। (কামন্দকী রোদন করিতে লাগিলেন)

माध। तत्किमिति वाष्पायितं भगवत्या ?। (५२)

काम। [ चीवराञ्चलेन नेत्रे परिमृज्य। ] विज्ञापयामि कल्याणिनम्। (५३

माध। ननु आज्ञापय। (५४)

काम। परिणतिरमणीयाः प्रीतयस्त्वद्विधानाम्
अहमपि तव मान्या हेतुभिस्तैश्च तैश्च।
तदिह सुवदनायां तात! मत्तः परस्तात्
परिचयकरुणायां सर्व्वथा मा विरंसीः॥ (५५)

---

(५१) तर्हि माधवाय मालत्या दाने निष्पन्ने, फलितं सञ्जातफलेन भूतम् ( भावे क्तप्रत्ययः )।

(५२) वाष्पायितमिति "वाष्पादिभ्य उद्वमने" इत्याद्यन्ताद्वाष्पशब्दाद्भावे क्तप्रत्ययेन निष्पन्नम्। तथाच वाष्पोद्गमनं कृतमित्यर्थः।

(५३) कल्याणिनं कुशलास्पदं त्वां विज्ञापयामि वाष्पोद्गमननिमित्तमिति शेषः।

(५५) परिणतीति। हे तात! पुत्र। ( पुत्रे पितरि पूज्ये च तातशब्दः प्रयुज्यते इति शब्दार्णवः ) ( पुत्रत्वेन सम्बोधनं वात्सल्यातिशयद्योतनार्थम् ) त्वद्विधानां त्वादृशानां नानासद्गुणसम्पन्नानां पुरुषाणां प्रीतयः यस्मिन् कस्मिन्नपि अनुरागाः परिणत्या परिपाकेण रमणीयाः मनोहराः क्रमशः एव दृढतामापन्ना इति यावत्, भवन्तीति शेषः। अहमपि तैश्च तैश्च तव पित्रा श्वशुरेण च सहाध्यायित्वादिभिः हेतुभिः निमित्तैः मान्या माननीया अनतिक्रमणीयवचनेति यावत्। ततस्मात् मत्तः परस्तात् परवर्त्तिनि समये मयि परोक्षतां गतायामित्यर्थः, इह अस्यां सुवदनायां मालत्यां परिचयः गाढप्रणय एव करुणा कृपा तस्याः सकाशात् मा विरंसीः

---

(৫১) মক! তবে ভগবতীর পদপ্রসাদে আমাদের পক্ষ সফল হইল।

(৫২) মাধ। তবে ভগবতী অশ্রুমোচন করিতেছেন কেন?

(৫৩) কাম। ( চীবরাঞ্চলে নেত্র মার্জ্জন করিয়া ) কুশলাস্পদকে (তোমাকে) জানাইতেছি।

(৫৪) মাধ। আজ্ঞা করুন।

(৫৫) কাম। হে বৎস! তোমার ন্যায় নানা সদ্গুণসম্পন্ন পুরুষের অনুরাগ পরিণতিতে রমণীয় ( অর্থাৎ ক্রমশঃ দৃঢ় ) হইয়া থাকে। তোমার

इति पादयोः पतितुमिच्छति। (५६)

माध। [ निवारयन्। ] अहो! वात्सल्यादतिक्रामति प्रसङ्गः। (५७)

श्लाघ्यान्वयेति, नयनोत्सवकारिणीति,
निव्यूढ़सौहृदभरेति गुणोज्ज्वलेति।

---

विरतो माभूः। सर्व्वदैव त्वयास्यां गाढप्रणयेन भवितव्यमिति भावः। विरंसीरिति "व्याङ्-परिभ्यो रम" इति परस्मैपदम्।

अत्र द्वितीयार्द्धवाक्यार्थं प्रति प्रथमार्द्धवाक्यार्थद्वयस्य हेतुत्वेनोपन्यासात् वाक्यार्थहेतुकं काव्यलिङ्गं समुच्चयालङ्कारः। एवं "शिक्षा स्यादुपदेशन"मिति लक्षणात् शिक्षानाम नाट्यालङ्कारश्च। मालिनीवृत्तम्।

"अस्मान् साधु विचिन्त्य संयमधनानुच्चैः कुलञ्चात्मन" इत्यादि शाकुन्तलश्लोकस्यावदस्यानुरूप इत्यनुसन्धेयम्।

(५६) अनिर्व्वन्धस्यानुरोधप्रख्यापनं पादपतनेच्छायां हेतुः।

(५७) निवारयन्निति पादौ किञ्चित् पश्चादपसार्य्य हस्तधारणादिनेत्यादिः। वात्सल्यात् स्नेहातिशय्यात् प्रसङ्गः अनुरोधप्रकारः अतिक्रामति औचित्यमतिक्रम्य वर्त्तते। सर्व्वजनाराधनीयचरणायास्ते पुत्रतुल्यस्य मम पादधारणोद्योगः सर्व्वथैवानुचित इति भावः।

(५८) कामन्दक्या अनुरोधमङ्गीकर्त्तुमाह—श्लाघ्येति। इयं मालती श्लाघ्यान्वया प्रशस्तवंशजा इति हेतोः, नयनयोः नेत्रयोः उत्सवकारिणी निरुपमसौन्दर्य्यादानन्दविधायिनी इति

---

পিতা ও শ্বশুরের সহাধ্যায়িত্বাদিকারণে আমিও তোমার মাননীয়া। অতএব আমার পরোক্ষেও এই সুবদনা মালতীর প্রতি সর্ব্বপ্রকারে গাঢ়প্রণয়রূপ করুণায় বিরত হইও না।

(৫৬) (এই কথা বলিয়া পায়ে পড়িতে উদ্যত)

(৫৭) মাধ। (নিবারণ করিতে করিতে) আহা! বাৎসল্যবশতঃ অনুরোধপ্রকার ঔচিত্যকে অতিক্রম করিতেছে।

(৫৮) এই মালতী সদ্বংশজা, নিরুপম সৌন্দর্য্যবশতঃ নয়নের আনন্দদায়িনী,

---

† क्वचित् पुस्तके "भगवति" इत्यधिकं प्रयोज्य मकरन्द एवास्य श्लोकस्य वक्तृत्वेन निर्द्दिष्टः।

एकैकमेव हि वशीकरणं गरीयो
युष्माकमेवमियमित्यथ किं ब्रवीमि ? ॥ (५८) ॥

काम। वत्स माधव। (५९)

माध। आज्ञापय। (६०)

काम। स्वीक्रियतामियम्। (६१)

माध। स्वीकरोमि। (६२)

---

हेतोः, निर्व्यूढः सम्पन्नः सौहृदभरः प्रणयातिशयः यस्याः तथाभूता इति हेतोः, गुणैः लज्जाशील-त्वादिसद्गुणैः उज्ज्वला उद्भासिता इति हेतोश्च, अथ युष्माकं सर्व्वलोकगौरवान्वितायास्तव एवं ईदृग्वात्सल्यानुग्रहभागिनी इति हेतोश्च किं ब्रवीमि, अस्याः विषये वचसा किं प्रकाशयामि, अतःपरमत्र विषये वक्तव्यं नास्तीत्यर्थः। हेतुमि. समर्थयति—एकैकमित्यादिना। हि यस्मात् एकैकमेव निरुक्तश्लाघ्यान्वयत्वादिषु अन्यनिरपेक्षं एकं एकं एव गरीयः गुरुतरं अनुल्लङ्घनीयमिति यावत्, वशीकरणं एतद्वश्यतासम्पादकारणं, तथाच येषामेकैकमेवानुल्लङ्घनीयं तेषां सर्व्वेषामतिक्रमेण कथमपि न सम्भवतीति नास्याः विषये किमपि वक्तव्यमिति भावः।

अत्र मालत्या प्रणयानुबन्धविषये वक्तव्याभावं प्रति श्लाघ्यान्वयत्वादीनां बहूनां हेतूनामुपन्यासात् समुच्चयः, तृतीयचरणार्थेन पुनरुक्तसमर्थनादर्थान्तरन्यासश्चालङ्कारः। एवमाकाङ्क्ष-समुच्चयार्थकचकारादेरनुपन्यासान्न्यूनपदत्वदोषः। तथा "गुणानां कीर्त्तनं यत्तु तदेव गुणकीर्त्तन"मिति दर्पणलक्षणात् गुणकीर्त्तनं नाम नाट्यम्। वसन्ततिलकावृत्तम्।

(६१) इयं मालती स्वीक्रियताम् भार्य्यात्वेनाङ्गीक्रियताम्। तथाच "तुभ्यं प्रदीयते" इत्यनेनैव दानं अनेन च तत्स्वीकरणानुरोध इति मन्तव्यम्। क्वचित् पुस्तके ५९, ६०, ६१, ६२, संख्याचिह्नितांशा न दृश्यन्ते।

---

सम्प्रणानुराग ও লজ্জা শীলতাদি নানাবিধ গুণে উদ্ভাসিতা, বিশেষতঃ আপনার এরূপ বাৎসল্য ও অনুগ্রহের পাত্রী, অতএব ইহার প্রতি প্রণয়াতিশয় বিষয়ে আমি আর কি বলিব ? কেননা পূর্ব্বোক্ত সদ্বংশজাতত্বাদি এক একটিই গুরুতর বশীকরণের হেতু।

(৫৯) কাম। বৎস মাধব! (৬০) মাধ। আজ্ঞা করুন।

(৬১) কাম ইহাকে ভার্য্যা করিয়া গ্রহণ কর।

काम। वत्स माधव!

माध। आज्ञापय। (६४)

काम। वत्से मालति! (६५)

लव। आज्ञापेयदु भअवदी। (क)

काम। प्रेयो मित्रं बन्धुता वा समग्रा,
सर्वे कामाः शेवधिर्जीवितञ्च।
स्त्रीणां भर्त्ता, धर्मदाराश्च पुंसाम्
इत्यन्योऽन्यं वत्सयोर्ज्ञातमस्तु॥ (६६)

---

(क) आज्ञापयतु भगवती।

---

(क) माधवसन्निधौ कामन्दकीवाक्यस्योत्तरप्रदाने मालत्या लज्जया तूष्णीम्भावात्तत्सखि कथा तदुत्तरप्रदानमिवसूचयतापि।

(६६) प्रेय इति। स्त्रीणां भर्त्ता पतिः तथा पुंसां पुरुषाणां धर्मदाराः धर्मपत्नी च प्रेयो मित्रं प्रियतमः सखा, समग्रा सकला बन्धुता बन्धुसमूहश्च (ग्रामजनेत्यादिना समूहार्थे तल्) सर्वे कामाः कामनाविषयाः (काम्यन्त इति कामाः कर्मणि घञ्) तथा शेवधिः (निधिर्ना शेवधिरित्यमरः) किं बहुना जीवितं जीवनञ्च, इति इदं वत्सयोः परस्परानुरक्तभाजनयोर्युवयोः (पुमान्स्त्रिया साकम्ये" इत्येकशेषः, "वर्त्तमानाधिकरणयोः सौत्रे," इति कर्तरि षष्ठी) अन्योऽन्यं परस्परं ज्ञातं विदितं अस्तु भवतु। तथाच इतः प्रभृति त्वया माधवेन प्रियतममित्रभावेन सकलबन्धुसमूहत्वेन सर्वकामनाविषयत्वेन निधित्वेन किं बहुना स्वकीयजीवितरूपेण मालत्यवलोकनीया, तथा समादरणीया च। त्वया च मालत्या तेन तेनैव भावेन माधवः समालोकनीयः समादरणीयश्चेति भावः।

अत्र परस्परगतप्रियमित्रत्वादिविषयकज्ञानस्य पारम्परिकत्वादन्योऽन्यालङ्कारः, तिरङ्कं रूपकञ्चाङ्गित्वमयोरङ्गाङ्गिभावेन सङ्करः।

---

(৬২) মাধ। গ্রহণ করিলাম।

(৬৩) কাম। বৎস মাধব! (৬৪) মাধ। আজ্ঞা করুন।

(৬৫) কাম। বৎসে মালতি! (ক) লব। ভগবতী আজ্ঞা করুন।

(৬৬) কাম। স্ত্রীলোকের স্বামী ও পুরুষের ধর্ম্মপত্নী প্রিয়তম মিত্র, সমস্ত বন্ধুসমূহ, সমস্ত কামনার বিষয়, পরম নিধি ও জীবনস্বরূপ। ইহা তোমাদের পরস্পরের পরিজ্ঞাত হউক। অর্থাৎ ইহা যেন তোমাদের মনে থাকে।

मक। अथ किं। (६७)

लव। भअवदि! जधा तुम्हे आणवेध। (ख)

काम। वत्स मकरन्द! त्वमनेनैव वैवाहिकेन मालतीनेपथ्येन प्रसाधितः, परिणायय आत्मानम् [इति पटलकमर्पयति।] (६८)

मक। यदाज्ञापयति भगवती, यावदिदश्चित्रजवनिकामन्तर्धाय नेपथ्यं धारयामि। [तथा करोति।] (६९)

---

(ख) भगवति! यथा यूयं आज्ञापयथ।

---

"उपदिष्टं मनोहारि वाक्यं शास्त्रानुसारत" इति दर्पणलक्षणादत्रोपदिष्टं नाम नाट्यलक्षणम्। शालिनीवृत्तम्। तल्लक्षणन्तु—"मा त्तौ गौ चेच्छालिनी वेद लोकै"रिति।

"शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने" इत्यादिशाकुन्तलश्लोकोऽस्यानुरूपतां भजते इत्यनुसन्धेयम्।

(६७) लवङ्गया माधवस्य तूष्णीभावं परिलक्ष्य मकरन्द एव तन्मनोगतमङ्गीकरोति, अथ किमिति। भगवत्या यदुच्यते तदनेनाङ्गीकृतमित्यर्थः।

(६८) वैवाहिकेन विवाहसम्बन्धिना विवाहसमये मालतीपरिधानाय राज्ञानुप्रेषितेनेत्यर्थः, मालतीनेपथ्येन मालतीवेशसम्पादकवस्त्रालङ्कारादिना प्रसाधितः मालतीरूपेण सज्जितः गृहीतमालतीवेश इत्यर्थः, आत्मानं परिणायय उद्वाहय, प्रतारणापक्षे नन्दनमिति शेषः, वस्तुतस्तु मालतीवेशेन नन्दनं प्रतार्य्य मदयन्तिकामिति शेषः। पटलकं परिच्छदं (अथ-पटलं पिटके च परिच्छदे इति मेदिनी) ईदृशासदनुष्ठाने मकरन्दसाहसे तु मदयन्तिकालाभलोभ एव प्रधानतः कारणमित्यलमाविदितेन। "व्यापि प्रासङ्गिकं वृत्तं पताकेत्यभिधीयते" इति लक्षणादित आरभ्य मकरन्दविवाहपर्य्यन्तः पताकानामाङ्गम्।

(६९) इतः पश्चात् मन्दिरैकपार्श्वादानीयेति शेषः, चित्रयवनिकां चित्रपटनिर्म्मितां

---

(६७) मक। ইহাতে আর বক্তব্য কি অবশ্যই স্বীকার্য্য।

(খ) লব। ভগবতি! আপনি যাহা আজ্ঞা করিবেন, তাহাই হইবে।

(৬৮) কাম। বৎস মকরন্দ! তুমি এই মালতীর বৈবাহিক বস্ত্রালঙ্কার দ্বারা মালতীরূপে সজ্জিত হইয়া নিজের বিবাহ সম্পাদন কর। (এই কথা বলিয়া পরিচ্ছদ অর্পণ করিলেন)।

माध। भगवति! सुखमपि वञ्चनर्थम् अतिसङ्कटम् इदं वयस्यस्य। (७०)

काम। आः कस्त्वमस्यां चिन्तायाम्?। (७१)

माध। एवं भगवती एव जानाति (७२)

[प्रविश्य मकरन्दः। विहसन्।] वयस्य! मालती अस्मि।

[सर्व्वे सकौतुकं पश्यन्ति।] (७३)

---

तिरस्करिण्यौ अन्तर्धाय भवतीनां मम च मध्ये विलम्बिनीं विधाय तदावरितो भूत्वेत्यर्थः। अन्यथा स्त्रीजनसन्निधौ पुरुषस्थानस्य स्त्रीजनोचितवस्त्रपरिधाने सुखायं असम्भवादिति भावः।

(७०) इदं मालतीवेशेन नन्दनप्रतारणपूर्व्वकमदयन्तिकोपयमनं सुखमपि वञ्चनर्थं अनेकविधविघ्नाकुलं "सुखमवञ्चनर्थं"मिति पाठे तु सुप्राप्यबहुविपत्तिकमित्यर्थः। अतिसङ्कटं अतिदुरवगाहनीयम्। तथा चैतदनुष्ठानं न सुकुतया मह्यं रोचत इति भावः।

(७१) अस्यां इदं वञ्चनर्थं अतिसङ्कटमतः कर्त्तव्यं नवेत्यादिरूपायां चिन्तायां त्वं कः त्वं नैवाधिकारीत्यर्थः। शुभाशुभं भगवानज्ञाततोऽस्मिन्नारम्भे मयैव स्वशिरसि विघ्नवला- विपत्पातसम्भावनानिरोधानोपायपरिकल्पनाच्चेति भावः।

(७२) एवं तच्चिन्तायां ममाधिकारो नास्तीति सत्यं। भगवत्येव मङ्गलहानिमेवार्थं जानातीति, एतादृशानुष्ठाने शुभमशुभं वा भवेदिति शेषः। तथा च भगवत्यै अद्यैव वदेव भवत्विति भावः।

(७३) प्रविश्येति। "स्त्रीवेशधारिणा पुंसा नाट्यं श्लक्ष्णं विमृद्रक"मिति दर्पणलक्षणादेव विमृद्रकं नाम नाट्याङ्गं। तथा "कपटं मायया यत्र रूपमन्यद्विभाव्यते" इति लक्षणात् कपटं नाम नाट्यालङ्कारश्च।

---

(৬৯) মক। ভগবতী যাহা আজ্ঞা করিলেন তাহাই হইবে। তবে মন্দির-পার্শ্ব হইতে বস্ত্রনির্ম্মিত তিরস্করিণী আনিয়া তাহা আপনাদের ও আমার মধ্যে বিলম্বিত করিয়া বস্ত্রাদি পরিধান করি। (তাহাই করিল)

(৭০) মাধ। ভগবতি! মালতীবেশে নন্দনকে বঞ্চিত করিয়া মদয়ন্তিকার পাণিগ্রহণ বয়স্যের পক্ষে শুভ হইলেও বহু বিপত্তিসঙ্কুল ও অতি দুঃসাধ্য।

(৭১) কাম। আঃ এ চিন্তা করিবার তুমি কে?

(৭২) মাধ। তাহা ঠিক। শুভ কি অশুভ হইবে তাহা ভগবতীই জানেন।

माध। [ मकरन्दं परिष्वज्य, सोपहासम्। ] भगवति ! कृतपुण्य एव नन्दनो, यः प्रियामीदृशीं मनसा मुहूर्त्तमपि कामयिष्यते। (७४)

काम। वत्सौ मालतीमाधवौ ! इतो निर्गत्य द्रुमगहनेन गम्यताम् उद्वाहमङ्गलार्थम् अस्मद्विहारिकायाः पश्चादुद्यानवाटः, सुविहितं च तत्रैव वैवाहिकं द्रव्यजातम् अवलोकितया। भूयश्च (७५)

गाढोत्कण्ठकठोरकेरलवधूगण्डाच्छपाण्डुच्छदैः
ताम्बूलीपटलैः पिनद्धफलितव्यानम्रपूगद्रुमाः।

---

(७४) यः ईदृशीं परमसुन्दरीं प्रियां मनसा "न तु कायेन" मुहूर्त्तमपि "न तु बहुक्षणं" कामयिष्यते कामवासनाविषयीकरिष्यते, स नन्दनः कृतपुण्य एव, पुण्यकर्म्मणा विना ईदृक्सुन्दरप्रियायाः स्वयं मनसा कामवासनाविषयीकरणमप्यसम्भवमिति भावः। एतेन मकरन्दकृतवेशविन्यासस्यातीव नैपुण्यं सूचितम्।

(७५) उद्वाहमङ्गलार्थं देशाचारविहितवैवाहिकमङ्गलाचारानुष्ठानार्थं, अस्मद्विहारिकायाः मदीयाश्रमभूमेः ( विहारो बौद्धाश्रमस्य संज्ञा, तस्मात् क्षुद्रार्थे कप्रत्ययेन स्त्रियां विहारिकेति सिद्धम् ) उद्यानवाटः उपवनभागः, तत्रैव उद्यानवाटे वैवाहिकं द्रव्यजातं उद्वाहोत्तरक्रियोपयोगिस्रक्चन्दनादिद्रव्यसमूहः, अवलोकितया तन्नामधेयया कयाचिन्मदीय-शिष्यया सुविहितं सुसज्जितं। तथाच तत्र गत्वा वैवाहिकोत्तरक्रिया सम्पाद्यतामिति भावः। भूयश्च—पुनश्च।

(७६) गाढेति। गाढया सातिशयया उत्कण्ठया प्रियविरहजनितौत्सुक्येन कठोरः प्रौढः यः केरलवधूनां केरलदेशीयस्त्रीणां ( एतेषां पदानामुपादानं पाण्डुतातिशयद्योतनार्थं ) गण्डः

---

(৭৩) ( মকরন্দ প্রবেশ করিয়া হাসিতে হাসিতে ) বয়স্য আমি মালতী হইয়াছি। ( সকলে কৌতূহলের সহিত দেখিতে লাগিল।

(৭৪) মাধব ( মকরন্দকে আলিঙ্গন করিয়া উপহাসের সহিত ) ভগবতি ! যে নন্দন এইরূপ সুন্দরী প্রিয়াকে মুহূর্ত্তের জন্যও মনে মনে কামবাসনার বিষয়ীভূত করিবে, সেই নন্দন অবশ্যই পুণ্যকর্ম্ম করিয়াছে।

(৭৫) কাম। বৎসে মালতি ! ও বৎস মাধব ! তোমরা এস্থান হইতে নির্গত হইয়া বৈবাহিক মঙ্গলাচারসম্পাদনের জন্য বনের মধ্য দিয়া আমার ক্ষুদ্র বৌদ্ধাশ্রমের পশ্চাদবস্থিত উপবনে গমন কর। আমার অন্যতম শিষ্যা অবলোকিতা সেখানেই বৈবাহিক মঙ্গলাচরণের উপযোগি মাল্যচন্দনাদি দ্রব্য-সমূহ সজ্জিত করিয়া রাখিয়াছে। পুনশ্চ—

कक्कोलीफलजग्धिमुग्धविकिरव्याहारिणस्तद्भुवो
भागाः प्रेङ्खितमातुलुङ्गवृतयः प्रेयो विधास्यन्ति वाम् ॥ (৭৬)
गत्वा च तत्रैव मकरन्दमदयन्तिकागमनं यावत् स्थातव्यम् । (৭৭)

---

कपोलवत् पक्वपाण्डराः निर्मलपाण्डुवर्णाः छदाः पर्णानि येषां तैः, ताम्बूलीपटलैः पर्णलता-समूहैः पिनद्धाः आच्छादिताः, फलिताः सञ्जातफलाः अत एव आनम्राः फलभारेण किञ्चिदवनताः पूगद्रुमाः गुवाकवृक्षाः येषु तथाभूताः । कक्कोलीफलानां बदरीफलानां ( "कक्कोली बदरी कोली" इत्यनेकार्थः ) ( कङ्कोलीति पाठे तु कङ्कोलीफलानां कोलफलानामित्यर्थः ) जग्ध्या भक्षणेन मुग्धाः मनोहराः विकिराणां पतत्रिणां ( "नगौको वाजिविकिरविविष्किरपतत्रयः" इत्यमरः ) व्याहाराः कलरवाणि ( "व्याहार उक्तिर्लपितमित्यमरः" ) आतिशय्येन सन्ति एषामिति तथोक्ताः । ( अतिशयार्थे इनुप्रत्ययः, अतएव बहुव्रीहिणा तादृशार्थस्याप्रकाशसम्भवात् "न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकरः" इत्यनुशासनविरोध इति मन्तव्यम् ) तथा प्रेङ्खिता वातेन सञ्चालिता मातुलुङ्गानां बीजपूरकाणां वृतयः वेष्टनं येषु तादृशाः तद्भुवो भागाः उद्यानविहारिका-प्रदेशाः वां युवयोः प्रेयः प्रीतिं विधास्यन्ति जनयिष्यन्ति ।

अत्र सम्भोगसाधनतया प्रसिद्धानां ताम्बूलबदरादीनां ग्रहणं, पक्षिकलरवेण मन्मथप्रबोधनात्मा सूचितः, मातुलुङ्गवेष्टनरूपे मार्गे वां सहसा प्रवेशासम्भवः, परैरात्मनोऽनवलोकनञ्च सम्भवेत् इति भङ्ग्या सूच्यते ।

अत्र प्रथमचरणे समासगतोपमा, एवं यथायथं वृत्त्यनुप्रासच्छेकानुप्रासालङ्कारा इति तेषां संसृष्टिः । शार्दूलविक्रीडितं वृत्तम् ।

(৭৭) स्थातव्यमिति, तथाच मदयन्तिकामकरन्दयोरपि विवाहोत्सवमङ्गलाचारादिकं तत्रैव सम्पादयिष्यत इत्याशयः ।

---

(৭৬) যে স্থানে গুবাকবৃক্ষসকল অতিশয় প্রিয়বিরহজনিত উৎকণ্ঠাবশতঃ প্রৌঢ় কেরল দেশীয় স্ত্রীদিগের কপোলদেশের ন্যায় নির্মল ও পাণ্ডুবর্ণ পর্ণযুক্ত তাম্বূললতায় পরিবেষ্টিত এবং ফলভরে অবনত, যে স্থানে বদরীফল-ভক্ষণে পক্ষিদিগের মনোহর কলরব হইতেছে ও যে স্থানে বায়ুসঞ্চালিত মাতুলুঙ্গ বৃক্ষের বেষ্টন আছে, তাদৃশ সেই উপবন ভূমিভাগ তোমাদের প্রীতি উৎপাদন করিবে।

(৭৭) এবং সে স্থানে যাইয়া মকরন্দ ও মদয়ন্তিকার গমন পর্য্যন্ত থাকিবে।

माध। [ सहर्षम् । ] कल्याणान्तरावर्तमाहि कल्याणसंपदुपरिष्टाद्भवति। (७८)

कल। दिट्ठिआ एदम्पि णो भविस्सदि। (ग)

माध। कथं सन्देह एवात्रभवतः। (७८)

लव। सुदं पिअसहीए। (घ)

काम। वत्स मकरन्द! वत्से लवङ्गिके! इतः प्रतिष्ठामहे। (८०)

---

(ग) दिष्ट्या एवमपि नः भविष्यति।

(घ) श्रुतं प्रियसख्या।

---

(७८) कल्याणसम्पत् मदीयमालतीलाभलक्षणमङ्गलसम्पत्तिः, उपरिष्टात् उत्तरकाले कल्याणान्तरावर्तमा मकरन्दीयमदयन्तिकालाभलक्षणमङ्गलान्तराबन्धा हि निश्चितं भवति। भगवतीप्रयत्नस्यावन्ध्यत्वादिति भावः।

(ग) इदमपि मकरन्दीयमालतीलाभलक्षणमङ्गलमपि।

(७९) भगवतीकौशलस्याप्रतिबध्यत्वादिदमप्यवश्यं भविष्यतीति नात्रभवता सन्देहः कर्त्तव्य इत्यर्थः।

(घ) श्रुतमिति,भगवत्या स्वकीयाश्रमपथादवस्थितीपवन गमनाय मदयन्तिकामकरन्दागमनं यावत्तावदस्थानाय च यदभिहितं, तत् श्रुतं किमित्यर्थः। तदाच तदुक्तेरन्यथाचरणं न कर्त्तव्यमिति भावः।

(८०) भद्रे! साधुशीले! इतः अस्मात् स्थानात् प्रतिष्ठामहे मदयन्तिकामकरन्दविवाहसम्पादनाय गच्छामः। विलम्बे कर्त्तव्यहानिः स्यादिति भावः।

---

(৭৮) মাধ। আমার মালতীলাভরূপ মঙ্গলসম্পত্তি নিশ্চয় উত্তরকালে মকরন্দের মদয়ন্তিকালাভরূপ মঙ্গলান্তরালঙ্কারে ভূষিত হইবে।

(গ) কাম। ইহাও কি আমাদের ভাগ্যে হইবে?

(৭৯) মাধ। এ বিষয়ে তোমার সন্দেহ কেন?

(ঘ) লব। ভগবতী যাহা যাহা বলিলেন, তাহা প্রিয় সখী শুনিলে ত?

(৮০) কাম। বৎস মকরন্দ! বৎসে লবঙ্গিকে (এস) এস্থান হইতে আমরা প্রস্থান করি।

गोवाइदो मअरन्दो। अम्हे अम्हे वि णन्दणावासं उवगदा। तदो भअवदी णन्दणमापुच्छिअ गदा आवसहं। अअं च णववहूघरप्पवेसविरइदाकालकोमुदीमहूसवप्पमत्तपज्जाउलासेसपरिअणो पदोसो अणुकूलइस्सदि त्ति अकाणो ववसिदं। सम्पदं तुवरन्तकामो कामिणिं कामेदुं बहुसो सपादवन्दणं अब्भत्थिअ पुणो वि बलामोडिअ

---

भगवतीवचनसंविधानैः घे तैय गोपायितो मकरन्दः। अथ वयमपि नन्दनावासमुपगताः। ततो भगवती नन्दनमापृच्छ्य गतावसथम्। अयं च नववधूगृहप्रवेशविरचिताकालकौमुदीमहोत्सवप्रमत्तपर्याकुलाशेषपरिजनः प्रदोषोऽनुकूलयिष्यति अतो न व्यवसितम्। साम्प्रतं त्वरमाणकामः कामिनीं कामयितुं बहुशः सपादवन्दनमभ्यर्थ्य पुनर्बलात्कारेणाभिद्रवन्मकरन्देन

---

(क) "अम्हे" इत्यव्ययं हर्षविस्मयद्योतकं। अत्र माधवस्य विवाहनिष्पत्तिर्हर्षहेतुः, मकरन्दस्य तादृग्गोपनं विस्मयहेतुः। सुश्लिष्टं मकरन्दस्य मालतीसमानवयोवर्णत्वात् अजातश्मश्रुत्वात् कृताङ्गरागत्वात् मालत्यर्पितवस्त्रालङ्कारादिभूषितत्वात् अन्यथाशङ्काकारणाभावाच सुसम्बद्धं मालतीनेपथ्यं मालतीवेशस्य विरचनं तस्य छद्मना मिथ्या विप्रलम्भेन प्रतारितेन नन्दनेन कृतः मालतीबुद्ध्या सम्पादितः करग्रहः पाणिग्रहणं यस्य, तथाभूतः मकरन्दः भगवतीवचनसंविधानैः भगवत्याः कामन्दक्याः वचनैः "नगरदेवतागृहात् सम्पादितकृत्या प्रतिनिवृत्ता मालती" त्यादिवाक्यैः संविधानैः विवाहोपरकालीनस्त्रीजनविधानीयकुलाचारसम्पादनैश्च मैव मङ्गलेन विघ्नाभावेनेति यावत्, गोपायितः अन्यावगमात् परिरक्षितः यथा विवाह रात्रौ तद्ग्रहवैर्थ्यो न व्यापाद्यते तथा सम्पादित इत्यर्थः। वयमिति अहं अन्ये च वरयात्रिका इत्यर्थः, नन्दनावासमुपगता विवाहं सम्पाद्य वरकृत्रिमकन्यकाभ्यां सह भूरिवसुगृहात् वरगृहं प्रत्यागता इत्यर्थः। आपृच्छ्य स्वकीयाश्रमगमनविषयकं पर्यनुयोगं कृत्वा स्वकीयगमनाभिलाषं विज्ञाप्य

---

(১) (তৎপরে বুদ্ধরক্ষিতার প্রবেশ)।

(ক) বুদ্ধ। সুসংবদ্ধ মালতী বেশপ্রতারিত নন্দন যাহার পাণিগ্রহণ করিয়াছে, সেই মকরন্দ ভগবতী কামন্দকীর বাক্য ও বিধানবলে মঙ্গল মতেই ভূরিবসুগৃহে পরিরক্ষিত হইয়াছে। অস্ত আমরাও যথাবিহিতকরণ বিবাহ সম্পাদন করিয়া বর ও কৃত্রিম কন্যার সহিত ভূরিবসুর গৃহ হইতে নন্দনালয়ে আসিয়াছি। তৎপরে ভগবতী কামন্দকী নন্দনকে বলিয়া তাহার মতানুসারে নিজের আশ্রমে গিয়াছেন, যাহাতে নববধূর গৃহাগমননিমিত্তক অকালানুষ্ঠিত

अहिद्दवन्तो मअरन्देण णिट्ठुरं पड़िहदो जामादा। तदो सो क्खु अधिअवेलक्खखलन्तअक्खरो सरोसणिब्भरदुःक्खिदो मदप्पप्फुरन्त-णअणो ण मे सम्पदं तुए कोमारबन्धईए पाओअणं त्ति ससवहं पइसं काऊण वासभवणादो णिग्गदो त्ति। एदिणा पसङ्गेण मदअन्तिअं आणोअ मअरन्देण सह संजोजइस्सं॥ (क)

---

निठुरं प्रतिहतो जामाता। ततः स खलु अधिकवैलक्ष्यस्खलदक्षरो सरोषनिर्भरदुःखितो मदप्रस्फुरन्नयनो न मे साम्प्रतं त्वया कौमारबन्धक्या प्रयोजनमिति सशपथं प्रतिज्ञां कृत्वा वासभवनान्निर्गत इति। एतेन प्रसङ्गेन मदयन्तिकामानीय मकरन्देन सह संयोजयिष्ये।

---

सम् सम्प्रति लब्धेत्यर्थः, मानसयं स्वायत्तं। नववध्वा गृहप्रवेशेन विरचितस्य अनुष्ठितस्य अकालकौमुदीमहोत्सवस्य कार्त्तिकपूर्णिमाव्यतिरिक्तकालीनकार्त्तिकपूर्णिमानुष्ठीयमानप्रसिद्ध-महोत्सवस्य प्रवृत्तौ पर्य्याकुलाः व्यापृताः अशेषाः समस्ताः परिजनाः यस्मिन् तथाभूतः अयं प्रदोषः रजनीमुखं अद्य नः अस्माकं व्यवसितं मदयन्तिकामकरन्दयोः प्रच्छन्ननिष्क्रमणव्यवसायं अनुकूलयिष्यति फलसिद्ध्युन्मुखीकरिष्यति। कौमुदीमहोत्सव एव व्यापृततया तन्निष्क्रमणादौ परिजनागमनवधानासम्भवादिति भावः। त्वरमाणः नववधूसन्निध्येन सत्वरः कामः मदनो यस्य स तादृशः नववधूसम्भोगलालसया अत्यन्तीव कन्दर्पाभिभूत इत्यर्थः, बहुशः वारंवारं सपादवन्दनं पादवन्दनेन सहितं यथा स्यात्तथा कामिनीं कामयितुं अभ्यर्थ्य, तया कामिन्या कामवासनां पूरयितुमप्रार्थित्वा तयाप्यलब्धानुमोदन इत्यर्थः, बलात्कारेण बलप्रयोगेन अभिद्रुवन् आक्रामन् जामाता नन्दनः अतिनिष्ठुरं यथा स्यात्तथा मकरन्देन प्रहृतः चरणेनाहतः। ततः चरणाघातानन्तरं स नन्दनः अधिकवैलक्ष्येण निरतिशयलज्जापमानेन स्खलदक्षरः विकल-

---

কৌমুদীমহোৎসবের ( কার্ত্তিক পূর্ণিমায় অনুষ্ঠীয়মান প্রসিদ্ধ মহোৎসবের ) প্রবৃত্তিতে সমস্ত পরিজন ব্যাপৃত আছে, তাদৃশ এই প্রদোষকাল অদ্য আমাদের মদয়ন্তিকা মকরন্দ নিষ্ক্রমণরূপ অধ্যবসায়কে সিদ্ধ্যুন্মুখ করিবে। কিছুকাল হয় জামাতা নন্দন নববধূসম্ভোগলালসায় অত্যন্ত কামাভিভূত হইয়া সপাদ বন্দনে কামাভিলাষ চরিতার্থের প্রার্থনা করিয়াও অনুমোদন না পাওয়ায় বলাৎকারে আক্রমণ করিতে করিতে মকরন্দ কর্ত্তৃক নিষ্ঠুরভাবে প্রহৃত হইয়াছে। তৎপরে সে নিরতিশয় লজ্জাপমাননিবন্ধন শব্দস্খলিত ও অতিশয় দুঃখিত হইয়া ক্রোধোদ্ধত বশতঃ ঘূর্ণিতলোচনে "তুমি অবিবাহিতাবস্থাতেই

इति निष्क्रान्ता। प्रवेशकः। (२)

ततः प्रविशति शय्यागतो मालतीवेशी मकरन्दो लवङ्गिका च। (३)

मक। लवङ्गिके! अपि नाम बुद्धरक्षिताभ्युक्ता भगवती-नीतिः विजेष्यते?। (४)

लव। को संदेहो एत्थ महाणुभावस्स। किं बहुणा जहा

---

शब्दः प्रदीपः सञ्जीभ्यामो निर्भरदुःखितः अतिशयदुःखितश्चेति सः, मदेन क्षीबीभवन्त्यौ प्रस्फुरन्तौ घूर्णन्तौ नयने लोचने यस्य, तथाभूतः सन् कौमारे अविवाहितावस्थायामेव बन्धकी असती तथा (पुंश्चली धर्षिणी बन्धक्यसती कुलटेत्वरीत्यमरः) तथाभूता त्वया न मे साम्प्रतं प्रयोजनम् इति कपटं तिरस्कारं यथा तथा प्रतिज्ञां कृत्वा वासभवनात् सम्भोगार्थपरिकल्पितशयनगृहात् निर्गतः। बन्धकीं विना स्वामिनि पदाघातादिकं अनवकाशादिति भावः। अनेन प्रसङ्गेन मालतीप्रातिकूल्यनिरासप्रयासस्य व्याजप्रकाशनम्।

(२) अनेन कृतकमालतीमन्दनोद्वाहनिष्पत्तिरूपस्य मन्दनस्य अपरिज्ञात स्वगृहे प्रत्यागमनस्य बलात्कारपरायणे तस्मिन् मकरन्दकृतपादप्रहारस्य तदीयकोपस्य च तस्य वासगृहाद्विर्गमनादेर्यातीतकथांशस्य वर्तिष्यमाणस्य च मालतीपरिसान्त्वनव्याजेन मदयन्तिकानयनस्य मकरन्देन सह संयोजनादेः सूचनादस्य प्रवेशकत्वम्। तल्लक्षणन्तु द्वितीयाङ्क एवाभिहित-मनुसन्धेयम्।

(३) ततः इति। शय्यागतः सुरतार्थपरिकल्पितशय्योपविष्टः।

(४) अपि प्रश्ने, नाम सम्भावनायां। बुद्धरक्षिताभ्युक्ता बुद्धरक्षितया भगवती-भाषिता, बुद्धरक्षितां प्रति भगवत्या कथिता इत्यर्थः, विजेष्यते कार्यं साधयिष्यति? मदीयमदयन्तिका-लाभलक्षणकार्यसाधने प्रभविष्यति किमित्यर्थः।

---

নিশ্চয় অসতী, সুতরাং সম্প্রতি তোমা দ্বারা আমার প্রয়োজন নাই" এইরূপ তিরস্কারের সহিত প্রতিজ্ঞা করিয়া বাসভবন হইতে নির্গত হইয়া গিয়াছে। এই প্রসঙ্গ দ্বারা - র্থাৎ ভ্রাতার উপকারার্থ মালতীর প্রতিকূলতাচরণের নিবারণ চেষ্টা তোমার একান্ত কর্ত্তব্য।" এইরূপ কপট প্রস্তাব দ্বারা মদয়ন্তিকাকে আনিয়া মকরন্দের সহিত সংযোজিত করিব। (বুদ্ধরক্ষিতার প্রস্থান)।

(৩) (তদনন্তর শয্যোপবিষ্ট মালতীবেশধারী মকরন্দ ও লবঙ্গিকার প্রবেশ)

(৪) মক। লবঙ্গিকে! বুদ্ধরক্ষিতার প্রতি কথিত ভগবতী কামন্দকীর কৌশল সফল হইবে কি?

एसो मञ्जीरसद्दो सुणीअदि, तहा जाणामि, तेण व्ववदेसेण आणीदा बुद्धरक्खिदाए मदअन्तिआ त्ति। ता उत्तरीआवबारिदो पसुत्तलक्खणो चिट्ठ। (ख) मकरन्दस्तथा करोति।

ततः प्रविशति मदयन्तिका बुद्धरक्षिता च। (ङ)

मद। सहि! सच्चं ज्जेव्व परिकोविदो मे भादा मालदीए ? (ग)

बुद्ध। अध इं ?। (घ)

---

(ख) कः सन्देहोऽत्र महानुभावस्य। किं बहुना यदैव मञ्जीरशब्दः श्रूयते, तदा जानामि, तेन व्यपदेशेन आनीता बुद्धरक्षितया मदयन्तिकेति। तत् उत्तरीयापवारितः प्रसुप्तलक्षणस्तिष्ठ।

(ग) सखि! सत्यमेव परिकोपितो मे भ्राता मालत्या ?।

(घ) अथ किम् ?

---

(ख) एषेति। मञ्जीरशब्दः नूपुरध्वनिः। जानामि तर्कयामि, तेन व्यपदेशेन त्वद्भ्रातृजायायास्तव प्रबोधनच्छलेन। तस्मात् उत्तरीयापवारितः उत्तरीयवसनावृतशरीरः, प्रसुप्तलक्षणः निद्रितवत्प्रतीयमानः।

(ग) परिकोपितः सञ्जातकोपः कृतः। अत्र प्रश्नबोधकशब्दाभावेऽपि स्वरविकृत्या प्रश्नो व्यज्यते।

(घ) अथ किं—परिकोपितैवेत्यर्थः।

---

(খ) মক। এ বিষয়ে মহানুভবের সন্দেহ কেন? অধিক বলিবার প্রয়োজন কি? যে প্রকার নূপুর শব্দ শুনা যাইতেছে, তাহাতে বোধ হয় কৃত্রিম ভ্রাতৃজায়াকে প্রবোধ দেওয়ার ছলে বুদ্ধরক্ষিতা কর্তৃক মদয়ন্তিকা আনীত হইয়াছে। অতএব উত্তরীয়ে শরীর আবৃত করিয়া নিদ্রিতের ন্যায় থাক। (মকরন্দের আবৃত শরীরে নিদ্রিতের ন্যায় অবস্থান)।

(ঙ) (তৎপরে মদয়ন্তিকা ও বুদ্ধরক্ষিতার প্রবেশ)।

(গ) মদ। সখি! সত্যই মালতী আমার ভ্রাতাকে কোপিত করিয়াছে?

(ঘ) বুদ্ধ। নিশ্চয়ই কোপিত করিয়াছে।

मद। अहो! अच्चाहिदं, ता एहि वामसीलं मालदिं णिब्भच्छेम्ह। (ङ) परिक्रामतः।

बुद्ध। इदं वासभवणदुवारं। (च) इति प्रविशतः।

मद। सहि लवङ्गिए! जाणीअदि पसुत्ता दे पिअसही णवेत्ति (छ)।

लव। एहि मा णं पडिबोधेहि जदो एसा चिरं दुम्मणाअन्ती दाणिं ज्जेव्व ईस मण्णुं उज्झिअ पसुत्तेति। तदो सणिअं इध ज्जेव्व सअणुप्पन्ते उवविस (ज)।

---

(ङ) मदी। अत्याहितं, तदेहि वामशीलां मालतीं निर्भर्त्सयाव:।

(च) इदं वासभवनद्वारम्।

(छ) सखि लवङ्गिके! ज्ञायते प्रसुप्ता ते प्रियसखी नवेति।

(ज) एहि नैनां प्रतिबोधय, यत एषा चिरं दुर्मनायमाना इदानीमेवेषन्मन्युमुज्झित्वा प्रसुप्तेति। ततः शनैरिहैव शयनीयोपान्ते उपविश।

---

(ङ) अत्याहितं महीयानमङ्गलकरं ताद्दगाचरणमिति शेष.। भर्त्तारं प्रति ताद्दश-व्यवहार: स्त्रीणां लोकयो धर्मनाशानर्थकर इति भाव:। वामशीला प्रतिकूलस्वभावां, निर्भर्त्सयाव: अन्याय्यतादर्शनेनाकुलयितुं तिरस्कुर्व:।

(छ) ते प्रियसखी मालती, प्रसुप्ता निद्रिता न वेति, ज्ञायते इति स्वैलक्षण्येन ज्ञायते किमित्यर्थकं।

(ज) एनां प्रियसखीं मालतीं मा प्रतिबोधय उच्चै:स्वरेण भग्ननिद्रां मा कुरु। दुर्मनाय-माना समतीव दुःखितचित्ता, मन्युं दैन्यं ईषदुज्झित्वा कथमपि किञ्चित् परित्यज्य प्रसुप्तेति निद्रितेति मन्ये इति शेष:।

---

(ङ) मद। অহো! তাদৃশ আচরণ নিতান্তই অমঙ্গলকর। সুতরাং এস ভর্ত্তার প্রতি প্রতিকূলস্বভাবা মালতীকে তিরস্কার করি। (উভয়ের পরিক্রমণ)

(চ) বুদ্ধ। এই যে বাসগৃহের দ্বার। (উভয়ের প্রবেশ)।

(ছ) মদ। সখি লবঙ্গিকে! তোমার প্রিয় সখী মালতী নিদ্রিতা কি না জান কি?

(জ) লব। এস, (উচ্চ শব্দ করিয়া) ইহাকে জাগাইও না। যে হেতু

मद। [तथा कृत्वा।] सहि! दुम्मणाअदि कधं इअं वाम-सीला (झ)

लव। कहं णाम णववहूविस्सम्भणोवाअजाणुअं लडहं विअड्ढमहुरभासिणं ससिणेहं अरोसणं अ दे भादरं भत्तारं समासादिअ सही ण दुम्मणाइस्सदि (ञ)।

---

(झ) सखि! दुर्मनायते कथमियं वामशीला?

(ञ) कथं नाम नववधूविस्रम्भणोपायज्ञातारं लडहं विदग्धमधुरभाषिणं सस्नेहमरोषणं च ते भ्रातरं भर्त्तारं समासाद्य सखी न दुर्मनायिष्यते।

---

(झ) दुर्मनायते कथमिति स्वयमेव भर्त्तुः प्रातिकूल्यमाचरन्ती कृतापराधा कथमात्मनैव पुनर्दुर्मनस्का भवतीति मन्मार्थः।

(ञ) नववध्वाः विस्रम्भणे विश्वासं उत्पाद्य वशीकरणे ये उपायाः तदिच्छानुवर्त्तनादयः कामशास्त्रोक्ताः तज्ज्ञातारं विपरीतलक्षणया सर्व्वथैव तदनभिज्ञमिति सोल्लुण्ठनोक्तिः। एव-मुत्तरत्रापि। यतोऽसौ बालिकाः ब्रह्मचर्य्यपालनोचितविवाहविरावाभ्यन्तर एव किञ्चिदप्य-मिलितशीलतवशां व्यवहारानभिज्ञां नववधूं प्रातिभावेणैव बलान्निर्द्दयं निष्पीडयितुमारब्धवान्, तेन नववधूवशीकरणोपायलेशमपि न जानातीति भावः। लडहं सुन्दरं अतीव कुत्सित-मित्यर्थः। विदग्धं सुरतकलापण्डितं सर्व्वथैव तद्वार्त्तानभिज्ञमित्याशयः। मधुरभाषिणं नितान्तकर्कशाभिधायिनमित्यर्थः। सस्नेहं स्नेहलेशेनापि विरहितमित्यर्थः। अरोषणं कोपरहितं अत्यतीव क्रुद्धमित्यर्थः। एवम्भूतं ते तव भ्रातरं (भर्त्तृजनोचितसर्व्वगुणविरहित-मित्यर्थः) भर्त्तारं स्वामिनं समासाद्य प्राप्य सखी मालती कथं नाम न दुर्म्मनायिष्यते दुःखितमानसा न भविष्यति? एवम्विधं भर्त्तारं लभमानया दुर्म्मनस्कत्वं स्वाभाविक-मेवेति भावः।

---

এই প্রিয়সখী বহুকাল অতিদুঃখিত চিত্তে থাকিয়া এখানেই কিঞ্চিৎ দৈন্য পরি-ত্যাগ করিয়া নিদ্রিতা হইয়াছে, মনে হইতেছে। অতএব ধীরে ধীরে এই শয্যাপ্রান্তে উপবেশন কর।

(ঝ) মদ। (শয্যাপ্রান্তে উপবেশন) সখি! ভর্ত্তার প্রতি প্রতিকূল-স্বভাবা মালতী আবার দুঃখিতচিত্তা কেন?

(ঞ) লব। নববধূর বিশ্বাসোৎপাদনের উপায়াভিজ্ঞ সুন্দর সুবক্তকার

मद। वुड्ढरक्खिदे! पेक्ख विप्पदीवं अह्मे वि उवालम्भो-आमो (ट)।

बुद्ध। विप्पदीवं ण विप्पदीवं वा। (ठ)

मद। कधं विअ। (ड)

बुद्ध। जं दाव चलणपडिदो वि भत्ता ण बहुमाणिदो अत्र लज्जादोसेण एसो जणो उआलम्भणिज्जो। जं वि पिअसहि!

(ट) वुड्ढरक्षिते! प्रेक्षस्व विप्रतीपं वयमपि उपालभ्यामहे।

(ठ) विप्रतीपं न विप्रतीपं वा।

(ड) कथमिव।

(ढ) यच्चावच्चरणपतितोऽपि भर्त्ता न बहुमानितोऽत्र लज्जादोषेणैव जन उपालम्भनीयः।

---

(ट) विप्रतीपं विपरीतं यथा स्यात्तथा वयमपि उपालभ्यामहे लवङ्गिकया भ्राक्-दोषारोपेण तिरस्क्रियामहे। "क्रीड़ायुक्तापि या योषिदतिहृष्टापि या भवेत्। पादे पतन्तं पुरुषमनुवर्त्तेत सर्व्वदा॥" इत्यनुसारेण मालत्येव सर्व्वथाऽप्यपराधभाजन तस्यामिदोष-लक्ष्यायां तत्पक्षपातिन्या लवङ्गिकया वयमेव तिरस्क्रियामहे इत्यप्यनुचितमिति भावः।

(ठ) विप्रतीपं न विप्रतीपं वा लवङ्गिकाकृतमेतदुपालम्भनं विपरीतमविपरीतं वा वक्तुं युज्यत इत्यर्थः। उभयोरप्याधिकदोष सत्त्वादिति भावः।

(ढ) वुड्ढेति। यच्चरणपतितोऽपि सुरतानुमोदनलाभाय पादयोर्निपतितोऽपि भर्त्ता नन्दनः न बहुमानितः अनुमोदनेन मालत्या न सम्भावितः, अत्र बहुमानाकरणविषये लज्जा-दोषेणैव दोषवशेन (न तु नदतिरिक्तेन दोषेणेत्यर्थः) एष जनः मालती उपालम्भनीयः दोषवत्त्वेन

---

সুপণ্ডিত মধুরভাষী ক্রোধরহিত ও স্নেহযুক্ত (অর্থাৎ উহার বিপরীত ভাবাপন্ন) তোমার ভাইকে ভর্তা লাভ করিয়া সখী কেনই বা দুঃখিতচিত্তা হইবে না?

(ট) মদ। বুদ্ধরক্ষিতে! দেখ বিপরীতভাবে আমরাই লবঙ্গিকা কর্তৃক তিরস্কৃত হইতেছি।

(ঠ) বুদ্ধ। এই লবঙ্গিকার তিরস্কার বিপরীতও বলা যায় অবিপরীতও বলা যায়।

(ড) মদ। মদ। কি প্রকারে?

(ঢ) বুদ্ধ। ভর্তা নন্দন (সুরতানুমোদনার্থ) চরণে নিপতিত হইয়াও যে

यववह्वविरुद्धसाहसोवक्कमक्खलणवेमखविच्छड्डिद-महाणुभावत्तणस्स भादुणो दे वाआगदं किं वि अपरित्ताणं तेण तुम्हे त्ति। किन्तु—

"कुसुमसधर्माणो हि योषितः सुकुमारोपक्रमाः। तास्त्वनधिगतविश्वासैः प्रसभमुपक्रम्यमाणाः सद्यः संप्रयोगविद्वेषिण्यो भवन्ति।" एवं किल कामसुत्तआरा आमणन्ति (ठ)।

---

यद्यपि प्रियसखि ! नववधूविरुद्धसाहसोपक्रमस्खलनवैलक्ष्यविच्छर्दितमहानुभावत्वस्य भ्रातुस्ते वाचागतं किमप्यपरित्राणं तेन यूयमिति। एवं किल कामसूत्रकारा आमनन्ति।

---

गर्हणीयः। तथाचैतदंशे मालत्याभिवोपालम्भनीयायां तत्पक्षपातिन्या लवङ्गिकया कृतं तव भ्रातुरुपलम्भनं विप्रतीपमेवेति भाव.। सखि ! यदपि नववध्वाः नवोढायाः विरुद्धः प्रतिकूलः यः साहसोपक्रमः बलात्कारोद्यमः, तेन यत् स्खलनं तन्निवारणार्थं मालतीकृतं प्रतीपाचरणं तस्माद्वैलक्ष्यं क्रोधादिजनितचित्तविकारः तेन विच्छर्दितं विवर्जितं महानुभावत्वं धैर्यादिरूपमहद्धर्मः येन तथाभूतस्य ते तव भ्रातुर्नन्दनस्य वाचा गतं याकाश्चित ("वष्टि-भागुरिरल्लोपमवाप्योरुपसर्गयोः। टापञ्चापि हलन्तानां यथा वाचा निशागिरा" इत्युक्तेर्वाक्शब्दात् टाप्) अथवा वाचगतं वचसा कृतं अपरित्राणं अनवस्थितिः नानासद्गुणसम्पन्नायाः सहधर्मिण्याः मालत्या मर्यादातिक्रम इति यावत्, तेन यूयमति उपलम्भनीया इत्यर्थः। "तेन ज्ञायते कृतापराधा उपालम्भनीया वयमिति" इत्यर्थकोऽपि क्वचित् पाठः। तथाचास्मिं लवङ्गिकया तव भ्रातुरुपालम्भनमविप्रतीपमेवेति भावः।

अत्रार्थे प्रमाणीभूतं संस्कृतभाषामयं प्राचीनसूत्रं स्वोक्तं समर्थयितुं दर्शयति—कुसुमेति। अत एव संस्कृतोक्तिरत्राविवादा, तदनुकरणार्थत्वात्तस्याः। कुसुमैः समानास्तुल्या धर्माः कोमलत्वादयः यासां तथाभूता योषितः नवोढास्त्रियः सुकुमारः कोमलः मन्दं मन्दं कोमलरूपेण क्रियमाण इति यावत्, उपक्रमः सुरतोद्योगः यासां ताः तथाभूता भवन्ति। तु किन्तु अनधिगतः अचिरदृष्टतया नवोढाभिः सम्यगप्राप्तः विश्वासो येषु तादृशैः भर्तृभिः प्रसभमुपक्रम्यमानाः बलात्क्रियमाणाः ताः नवोढा योषितः सद्यः तत्क्षणात् सम्प्रयोगस्य सुरतस्य विद्वेषिण्यः भवन्ति, विरक्तास्तन्निवारणार्थमीहन्ते इत्यर्थः।

---

মালতী কর্তৃক (অনুমোদন দ্বারা) সম্মানিত হয় নাই, সে বিষয়ে লজ্জাদোষে মালতী অবশ্যই তিরস্কারের যোগ্য। কিন্তু প্রিয় সখি ! নববধূর প্রতিকূল-বলাৎকারোদ্যোগে মালতীর প্রতিকূলাচরণ বশতঃ ক্রোধে ধৈর্য্যচ্যুত তোমার

लव। [ साखम् । ] घरे घरे पुरिसा कमकाओ समुव्वहन्ति, ण क्खु को वि लज्जापराधीणं अणवरद्धं मुद्धललिदसहावं कुल-कुमारीअणं पहवामि त्ति वाआणलेण पज्जालेदि। एदे क्खु दे

(घ) गृहे गृहे पुरुषाः कुलकन्यकाः समुद्वहन्ति, न खलु कोऽपि लज्जापराधीनमनपराद्धं मुग्धसुकुमारस्वभावं कुलकुमारीजनं प्रभवामीति वाचानलेन प्रज्वलयति।- एते खलु ते हृदय

यथा कुसुमानि मन्दं मन्दं निष्पीड्यमानानि मनोहरं सौरभमुद्गिरन्ति, न तु प्रसभं निपीड्य-मानानि, परन्तु तथाभूतानि विरक्तिकरमन्यादृशमेव गन्धमाघ्रापयन्ति, तथैव नवोढा योषितोऽपि कोमलभावेन क्रमानुमोदनमाक्रम्यमाणा सुखमर्पयन्ति, न तु बलादाक्रम्यमाणाः, परन्तु तथाभूताः प्रतीपमेवाचरन्तीति श्लोकार्थः।

कामसूत्रकाराः वात्स्यायनादयः एवं उक्तप्रकारं आमनन्ति कथयन्ति। तथा चेदं नन्दनस्य बलादाक्रमणं समतीव दोषावहमिति भावः।

"उक्तस्यार्थस्य यत्तु स्यादुत्कीर्तनमनेकधा।
उपालम्भस्वरूपेण तत् स्यादर्थविशेषणम्॥"

इति दर्पणलक्षणादर्थविशेषणं नाम नाट्यालङ्कारः।

(ङ) साखमिति, मालतीं प्रति नन्दनकृतस्यातीवासदाचरणस्य सूचनार्थं कपटाश्रुणा सहितं यथा स्यात्तथा ब्रवीतीत्यर्थः। गृहे गृहे प्रतिगृहं, कोऽपि पुरुषः, लज्जापराधीनं लज्जापरवशं मुग्धसुकुमारस्वभावं मनोहरातिकोमलशील, प्रभवामीति प्रभुत्वादहम्‌ प्रभुरस्मीति तथा चैनां प्रति यथेच्छं व्यवहर्त्तुं शक्नोमीति मन्यमानः इत्यर्थः। वाचानलेन अकथ्यकथनरूपदुर्वाक्यानलेन न च प्रज्वलयति, न च परितापयति, किन्तु नन्दनस्तथा कृतवानिति महान्तं दुःखमिति

ভ্রাতার যে বাক্যকৃত মর্য্যাদা লঙ্ঘন তজ্জন্য তোমরাই তিরস্কারের যোগ্য। আরও দেখ—

"কুসুমসুকুমার নবোঢ়াস্ত্রীর প্রতি ধীরে ধীরে কোমলভাবেই সুরতোপক্রম কর্ত্তব্য। কারণ ভর্ত্তার প্রতি ভালরূপ বিশ্বাস না জন্মিতে তাহাদিগকে বল-পূর্ব্বক আক্রমণ করিলে তাহারা সুরতের বিদ্বেষিণীই হইয়া থাকে।" এ কথা বাৎস্যায়ন প্রভৃতি কামসূত্রকারগণও বলিয়াছেন।

লব। (অশ্রু বিসর্জ্জন করিতে করিতে) ঘরে ঘরেই পুরুষগণ কুল-

(ঙ) ঘর। ...বাহ করিয়া থাকে, কিন্তু কেহই প্রভুমন্য হইয়া লজ্জাপরাধীন

(ঢ) বুদ্ধ। ঔৎসুক্য...কোমলস্বভাব কুলকুমারীদিগকে অকথ্য বাক্যানলে

हिअअसल्लणिक्खेवा आमरणं सुमरज्जन्तदूसहा पदिवरणिवासवेरग्गआरिणो महापरिभवा जाणं किदे इत्थिआणं जम्मलाहं जुगुच्छन्ति वान्धवा (ण)।

मद। बुद्धरक्खिदे! अदिदुम्मिदा पिअसही लवङ्गिआ। महन्तो को वि मे भादुणा वाआवराधो से किदो (त)।

बुद्ध। अध इं। सुदं अम्हेहिं जधा "मम ण तुए संपदं कोमारबन्धईए पओअण"ति (थ)।

---

शल्यनिक्षेपा आमरणं स्मर्य्यमाणदुःसहाः पतिगृहनिवासवैराग्यकारिणो महापरिभवा येषां कृते स्त्रीणां जन्मलाभं जुगुप्सन्ते बान्धवाः।

(त) बुद्धरक्षिते! अतिदुर्मनायमाना प्रियसखी लवङ्गिका। महान् कोऽपि मे भ्रात्रा वागपराधोऽस्याः कृतः।

(थ) अथ किम्। श्रुतमस्माभिर्यथा "मम न त्वया साम्प्रतं कौमारबन्धक्या प्रयोजनमिति।

---

भावः। हृदयशल्यनिक्षेपाः वक्षसि शङ्कुसमारोपणवत्क्लेशप्रदाः, स्मर्य्यमाणदुःसहाः स्मर्य्यमाणाः स्मृतिविषयीक्रियमाणा अपि दुःसहाः सोढ़मयोग्याः, का कथा अनुभूयमाना इत्यर्थः। पतिगृहनिवासवैराग्यकारिणः स्वाशङ्कया पतिगृहवसतेर्वैतृष्ण्यसम्पादकं, महापरिभवाः निरतिशयतिरस्काराः। येषां महापरिभवानां बान्धवाः पित्रादयः जुगुप्सन्ते "निरतिशयतिरस्काराङ्गीकरणास्पदं कन्याजन्म धिक्" इति निन्दन्ति।

(त) तस्याः मालत्याः, वागपराधः वाचा कृततिरस्कारः कृतः अभूदिति शेषः। अन्यथा लवङ्गिकाया ईदृशदुर्मनस्कत्वस्यासम्भवादिति भावः।

---

দগ্ধ করে না। হৃদয়ে শেল নিক্ষেপের ন্যায় ক্লেশপ্রদ মরণকাল পর্য্যন্ত স্মরণীয় অতি দুঃসহ এই স্বাতীয় সেই সকল মহাপরিভবই পতিগৃহবাসে বৈতৃষ্ণ্য জন্মাইয়া থাকে। সেই পরিভবের জন্য পিত্রাদি বান্ধবগণ স্ত্রীজন্মলাভের নিন্দা করিয়া থাকেন।

(ত) মদ। বুদ্ধরক্ষিতে। প্রিয় সখী লবঙ্গিকা অত্যন্ত দুর্ম্মনা হইয়াছে, অতএব আমার ভ্রাতা মালতীর প্রতি বাক্যগত কোনও মহা অপরাধ করিয়া থাকিবে।

मद। [कर्णौ पिधाय।] अहो! अदिक्कमो। अहो! पमादो। सहि लवङ्गिए! असमत्थम्हि दे मुहं पि संपदं दंसिदुं तधावि पहवामि त्ति किं पि मन्तइस्सं (ट)।

लव। साधीणो दे अअं जणो (ध)।

मद। चिट्ठदु ज्जेव्व मह भादुणो दुस्सीलदा अवरिद्धाणं अ। तुम्हेहिं ईदिसो वि सम्पदं जधा चित्तमणुवत्तनीओ जेव भत्ता एसो

---

(ट) अहो। अतिक्रमो। अहो। प्रमादः। सखि लवङ्गिके! असमर्थास्मि ते मुखमपि साम्प्रतं दर्शयितुं, तथापि प्रभवामीति किमपि मन्त्रयिष्ये।

(ध) स्वाधीनस्तेऽयं जनः।

---

(घ) अथ किमिति महान् वाचापराधः कृत एवेत्यर्थः। तदपराधस्य स्वरूपं दर्शयितुमाह—पुत्रमिति।

(ट) कर्णौ पिधायेति अश्राव्यश्रवणजनितार्थे हस्ताभ्यां कर्णावाच्छाद्येत्यर्थः। अहो इयं खेदद्योतकम्। अतिक्रमः मद्भ्रातृकृतं मानवतीमर्यादोल्लङ्घनम्। प्रमादः मद्भ्रातुरनवधानता। विग्रहचरितां सदयोत्पन्नां सखीं मालतीं प्रत्येवमत्युत्कटवाक्यप्रयोगादिति भावः। असमर्थास्मीति, भ्रातृकृतमपराधमाकलयन्ती तव स्थाने मुखप्रदर्शनमपि लज्जाकरं मन्ये इत्यर्थः। प्रभवामि परमप्रीतिविशेषेण त्वयि ममप्रभुत्वमस्ति इति हेतोः किमपि मन्त्रयिष्ये सखिभावेन किञ्चित् कथयिष्यामीत्यर्थः।

(ध) अयं मल्लक्षणः जनः ते तव स्वाधीनः सखिभावेन वशीभूतः; तथाच यदीप्सितमभिधातुं शक्नोषीति भावः।

---

(ঘ) বুদ্ধ। আর কি বলিব? "তোমার কুপটা তোমা দ্বারা সম্প্রতি আমার কোনও প্রয়োজন নাই" এই কথা বলিতে আমরাই শুনিয়াছি।

(ট)। মদ। (কর্ণ আচ্ছাদন করিয়া) অহো! (আমার ভ্রাতার) অতিক্রম, অহো! (আমার ভ্রাতার) অনবধানতা। সখি লবঙ্গিকে! সম্প্রতি আমি তোমাকে মুখ দেখাইতেও অসমর্থ, তথাপি পরম প্রীতিবশে তোমার প্রতি আমার প্রভুত্ব আছে বলিয়াই কিছু বলিতেছি।

(ধ) লব। আমি তোমার স্বাধীন (অতএব যাহা ইচ্ছা তাহাই বলিতে পার)।

त्ति। अणं च। तुह्मे दमस्स अणहिजादक्खराहिक्खेवोवालम्भ-दूसणस्स जं मूलं तं ण जाणध (न)।

लव। कधं अम्हे असन्तं जाणीमो। (प)

मद। जं दाणिं नत्थि महाणुभावे माहवे किं पि किल मालदीए तारामित्तअं आसी, तहिं सव्वलोअस्स अदिभूमिं गदो

---

(न) निष्ठलेव मम मातुर्दुःशीलतापरिहानं च युष्माभिरीदृशोऽपि सम्प्रतं यथाचित्तमनुवर्त्तनीयो येन भर्त्तेव इति। अन्यच्च—यूयमस्य अनभिजाताक्षराधिक्षेपोपालम्भदूषणस्य यन्मूलं तन्न जानीथ।

(प) कथं वयमसज्जानीमः।

---

(न) मदेति। ईदृशोऽपि निष्कलदुर्व्वचनादिकृतापराधोऽपि एष मम भ्राता मन्दन, युष्माभिः मालतीतत्पक्षपातिनीभिः यथाचित्त चित्तवृत्तिमनतिक्रम्य अनुवर्त्तनीय, अनुसरणीयः, येन हेतुना एष भर्त्ता पतिः। तथाच "दुःशीलोऽपि भर्त्ता कुलवधूनामवश्यमनुवर्त्तनीय" इति सत्यमपि महान्तमपराधमविगणय्य सर्व्वथैव मालत्या चित्तानुवर्त्तनमस्य कर्त्तव्यमिति भावः। अनभिजाताक्षराणां "मम न त्वया साम्प्रतं कौमारबन्धकया प्रयोजन"मित्यन्याय्यवर्णानां (न्यायेर कुलीनबुधयोरभिजानपदं विदुरिति यादव.) अधिक्षेपेण उपन्यासेन यः उपालम्भः तिरस्कारः स एव दूषणं तस्य यन्मूलं बीजं तत् यूयं न जानीथ इत्यन्वयः।

"हेतुवाक्यं समासोक्तमिष्टकृद्धेतुदर्शना"दिति दर्पणलक्षणात् "येन भर्त्तेव" इति हेतुप्रदर्शनेनात्र हेतुर्नाम नाट्यम्।

(प) असदिति अवर्त्तमानं तन्मूलमित्यर्थः। खपुष्पवदसत्यं कारणं न कोऽपि जानातीति भावः। एतेन मालत्या माधवतिरस्कारकारणं किमपि नास्ति, किन्तु मम भ्राता स्वकीय दुःशीलत्वादेव तादृशतिरस्कारः कृत इति व्यज्यते।

---

(ন) মদ। আমার ভ্রাতার দুঃশীলতা ও বাক্যজনিত মর্য্যাদাতিক্রমে থাকুক তাদৃশ, (অপরাধী) হইলেও তাহার চিত্তবৃত্তি অনুসারে তোমাদের (মালতীর) অনুবর্ত্তন করা উচিত। যে হেতু তিনি ভর্ত্তা। আরও বক্তব্য এই যে, এই "কৌমারবন্ধকী" রূপ অন্যায্যবচনোপন্যাসে তিরস্কাররূপ দোষের যাহা মূল, তাহা তোমরা জান না।

(প) লব। যাহা নাই, তাহা কিরূপে জানিব?

पवादो। तं क्खु एदं विश्रम्भादि। ता पिअसहि! जधा इध भत्तुणो उवेक्खाहिणिवेसो णिरवसेसं हिअआदो उद्धरीअदि तधा करेध। अस्सधा महादोसो त्ति जाणिदं भोदु। णिक्कम्पदारुणा कस्सकाओ दूम्मावेन्ति हिअअं मणुस्साणं ईदिसादो दुरभिसङ्गादो त्ति। सा णं भणिस्सध सदअन्तिआए कधिदं त्ति (फ)।

---

(फ) यदिदानीं तस्मिन्महानुभावे माधवे किमपि किल मालत्याः तारामैत्रकमासीत्, तत्र सर्व्वलोकस्यातिभूमिं गतः प्रवादः। तत् खल्विदं विजृम्भते। तत् प्रियसखि! यथैव भर्तुरुपेक्षाभिनिवेशो निरवशेषं हृदयादुद्धियते, तथा कुरुत। अन्यथा महादोष इति ज्ञातं भवतु। निष्कम्पदारुणाः कन्यका दावयन्ति हृदयं मनुष्याणामीदृशाद्दुरभिसङ्गादिति। एनां भणिष्यथ सदयन्तिकया कथितमिति।

---

(फ) मईति। तारामैत्रकं चक्षुर्नीनिकासम्मेलनजनितं प्रेम। तत्र तस्मिन् तारामैत्रकविषये प्रवादः सर्व्वलोकस्य स्थाने अतिभूमिं गतः अतिशयं प्राप्तः। तत् तारामैत्रकविषयकप्रवादस्वरूपं इदं उपालम्भकारणं विजृम्भते प्रकाशते, तत्तारामैत्रकप्रवादमूलक एव "मम न त्वया कौमारबन्धक्या प्रयोजन"मित्युपालम्भ इत्यर्थः। यथा एव भर्तुर्नन्दनस्य उपेक्षायां अवज्ञाप्रदर्शने अभिनिवेशः बद्धपरिकरता ( भर्तुरुपेक्षाभिनिवेश इति पाठे तु भर्तु-र्नन्दनस्य अपक्षे विपक्षे माधवे अभिनिवेशः अनुराग इत्यर्थः ) निरवशेषं निर्मूलं यथा स्यात्तथा हृदयात् मालत्या मनसः उद्धियते उत्पाट्यते, तथा कुरुत यूयमिति शेषः। अन्यथा तदनुद्धारे, महाननर्थः भवेदिति ज्ञातं युष्माकं विदितं भवतु अस्तु। अधुनापि भर्त्तारं प्रत्यवज्ञाप्रदर्शने तद्दपवादमूलकमाधवानुरागग्रस्तया दारुणानिष्टार्थेनिर्दिष्टे वस्तुभवादिति भावः। निष्कम्पाः स्वाभिविर्द्ध धकारणसम्बधानेऽप्यविचलिताः, अत एव दारुणाः भीषणाः कन्यकाः ईदृशात् दुरभिसङ्गात् दुष्टनिर्बन्धात् दुष्टानुरागाद्वा हेतोः मनुष्याणां पतिभावापन्नपुरुषाणां हृदयं दावयन्ति परितापयन्ति। तथाच भर्तृपरितापस्य कौशामलीयामङ्गलसम्पादकत्वादस्या

---

( ফ ) মর। মহানুভব মাধবে যে মালতীর নেত্রপ্রীতি ছিল, তদ্বিষয়ক প্রবাদ সম্প্রতি সমস্ত লোকের নিকটেই অতিশয় প্রাপ্ত হইয়াছে, ও সেই প্রবাদই এই তিরস্কারের কারণ বলিয়া প্রকাশ পাইতেছে, অতএব হে প্রিয়সখি! যে প্রকারে ভর্ত্তা নন্দনের উপেক্ষার বিষয়ে বদ্ধপরিকরতা মালতীর মন হইতে উৎপাটিত হয়,

लव। अइ असावधाणे! असंवद्धलोअप्पवादमोहिदे अवेहि ण तुए सह जप्पिस्स (व)।

मद। सहि! पसीद पसीद। अहवा ण तुह्मे फुडं भणिदाओ चिट्ठध। किं च। अह्मे सच्चं ज्जेव्व माहवेक्कमअजी-

(व) अयि असावधाने! असम्बद्धलोकप्रवादमोहिते! अपेहि, न त्वया सह जल्पिष्यामि।

(भ) सखि! प्रसीद प्रसीद। अथवा न यूयं स्फुटं भणितास्तिष्ठथ। किञ्च। वयं सत्यमेव माधवैकमयजीवलोकां मालतीं जानीमः। येन या कठोरकेतकगर्भविभ्रमावयवदौर्बल्य-

नन्दनस्य साहाय्यपरितापो न भवति, तथावश्यं मालत्या कर्त्तव्यमिति भावः। मदयन्तिकायाः कथितमिति इदं वृत्तमित्यादिः, एना मालतीं मा भणिष्यथ न कथयिष्यथ। तथा सति मालती मामपि विद्वेषचक्षुषैव पश्येदिति भावः।

(व) अति मालतीश्रवणाद्भये सुभाया अपि मालत्याः सन्निधाने कथनं सर्व्वथैवानवधानता-परिचायकं सहसा निद्रापगमनेन कपटनिद्रयापि तथावस्थानसम्भवेन च स्वत एव तत्श्रवण-सम्भवादित्याशयेन सम्बोधयति—असावधाने इति। तत्प्रवादस्य निर्म्मूलकत्वं सूचयितुं सम्बोध-यति—असंवद्धलोकापवादमोहिते इति। अपे हि—दूरमपसर, जल्पिष्यामि—आलपिष्यामि।

(भ) मदेति। प्रसीद मां प्रति प्रसन्ना भव कोपिता मा भवेत्यर्थः। पक्षान्तर-माह—अथवेति यूयं स्फुटं भणिताः इमां वार्त्तां केनापि सुस्पष्टं कथिता न तिष्ठथ केनापियं वार्त्ता युष्माकंस्थानेन सुस्पष्टं कथिता इत्यर्थः। स्वाभिधेयं वक्तुमारभते—किञ्चेति। कठोरस्य परिणतस्य केतकस्य केतकीपुष्पस्य गर्भवत् अभ्यन्तरदेशवत् विभ्रमः विलासः पाण्डुत्वमिति यावत् येषु तथाभूतानां अवयवानां पाणिपादादीनां दौर्ब्बल्येन

এবংপ্রকার আচরণ কর। তাহা না করিলে মহা অনর্থ হইবে, ইহা তোমাদের পরিজ্ঞাত হউক। স্বামীর বিদ্বেষকারণসমবধানে অবিচলিত ভীষণ কণ্টকাগণ ঈদৃশ দুষ্টাগ্রহাগ দ্বারা মনুষ্যের হৃদয় সন্তাপিত করে। "ইহা মদয়ন্তিকা-বলিয়াছে" এই কথা মালতীকে বলিও না।

(ব) লব। অয়ি অসাবধানে! তুমি অমূলক লোকাপবাদে মোহিত হইয়াছ, অতএব দূরে চলিয়া যাও, তোমার সহিত আলাপ করিব না।

(ভ) মদ। সখি! প্রসন্ন হও, প্রসন্ন হও। অথবা কেহই স্পষ্টরূপে একথা তোমাদিগকে বলে নাই। আরও বলি—সত্যই আমরা মালতীর

वदेसणिम्माविअविअड्‌ढमुद्धमहुरा तुए वि ण णिरूविदा इमाणं दिट्ठिसम्भेदा । किं अ । मम भादुणो दाणवुत्तन्तं सुणिअ तक्खणुच्छलिदगम्भीरावेअव्वदिअरमिलाअन्तदेहसोहाणं उव्वत्तमाण-मूलं विअ ण लक्खिदं हिअअं । किं अ । एदं पि अवरं सुमरिदं मए (अ) । (१८)

---

कारोपदेशनिर्मितविदग्धमुग्धमधुरास्त्वयापि न निरूपिता अनयोर्दृष्टिसम्भेदाः । किं च । मम भ्रातुर्दानवृत्तान्तं श्रुत्वा तत्क्षणोच्छलितगम्भीरावेगव्यतिकरम्लायमानदेहशोभयोरुद्वर्त्तमानमूलमिव न लक्षितं हृदयम् । किं च । एतदप्यपरं स्मृतं मया ।

---

ताभ्यां विराजमानाः दीप्यमानाः विभ्रमाः विलासाः नानाविधसात्त्विकभावा इति यावत्, येषु तादृशाः, तथा अनङ्गः कामदेव एव नाट्याचार्य्यः तस्य सर्व्वाकारोपदेशैः सर्व्वविधशिक्षणैः निर्म्मिताः विरचिताः अत एव विदग्धाः मनोगतभावप्रकाशकुशलाः, मुग्धाः मनोज्ञाः, मधुराः लोभनीयाश्च ते तथोक्ताः अनयोर्मालतीमाधवयोः दृष्टिसम्भेदाः नयनसम्मेलनानि किं त्वयापि ( न केवलं मयेत्यपेरर्थः ) न निरूपिताः लक्षिताः अपितु निरूपिता एवेत्यर्थः । तथाच कथं त्वमपि न जानासीति भावः ।

किञ्चेति । मम भ्रातुर्नन्दनस्य करे इति शेषः, तथाच षष्ठी न विरुध्यते । तत्‌क्षणे मम भ्रात्रे दानवृत्तान्तश्रवणक्षण एव उच्छलितस्य उद्भूतस्य गम्भीरावेगस्य अतिशयदुःखावेगस्य व्यतिकरेण संसर्गेण म्लायमाना मलिनीक्रियमाणा देहशोभा ययोः तथाभूतयोः मालतीमाधवयोः उद्वर्त्तमानं उच्छिन्नं सद्वर्त्तमानं मूलं मूलबन्धनं यस्य तादृशमिव हृदयं किं न लक्षितं अपितु लक्षितमेव त्वयापीत्यन्वयः । तथापि तद्गोपनप्रयासः समतीवाश्चर्य्यकर इति भावः । अपरं अन्यदपि ।

---

করিয়াছে? আরও বলি, সেইদিন মদনোদ্যানগমনপথে মালতী ও মাধবের সম্মেলন হইলে সবিলাসোচ্ছলিত আনন্দোৎফুল্ল ও গন্তব্য স্থানগামি নয়নোৎপলের বহুলবিলাস নির্ম্মাণ সঞ্চারে মনোজ্ঞতাবশতঃ দ্বারা যাহার শোভা বিরাজমান এবং কামদেবরূপ নাট্যাচার্য্যের সর্ব্বপ্রকার শিক্ষাবিরচিত মনোভাব প্রকাশসমর্থ মনোজ্ঞ ও লোভনীয় মালতীমাধবের নয়নসম্মেলন কি তুমিও লক্ষ্য কর নাই? আরও বলি, আমার ভ্রাতার করে প্রদান বৃত্তান্ত শ্রবণ করিয়া তৎক্ষণোদ্ভূত গভীর দুঃখাবেগ সম্পর্কে যাহাদের দেহশোভা মলিনীকৃত

लव। किं दाणिं अवरं (म)।

मद। जं मम तस्स जीविदप्पदाइणो महाणुभावस्स चेअणापडिलम्भपिअणिवेदिआए मालदीए भअवदीविअड्ढवअणोवण्णासबोधिदेण हिअअं जीविदं अ माहवेण पारितोसिअत्तणेण सअंगाहग्गाहेण णिउत्तं। अह अ लवङ्गिए तहिं तुए ज्जेव्व भणिदं पडिच्छिदो क्खु, णो पिअसहीए अअं पसादो त्ति (य)।

---

(म) किमिदानीमपरम्।

(य) यत् खलु मम तस्य जीवितप्रदायिनो महानुभावस्य चेतनाप्रतिलम्भप्रियनिवेदिकाया मालत्या भगवतीविदग्धवचनोपन्यासबोधितेन हृदयं जीवितं च माधवेन पारितोषिकत्वेन स्वयंग्राहग्राहेण नियुक्तम्। अथ च लवङ्गिके तत्र त्वयैव भणितं "प्रतीष्टः खलु नः प्रियसख्या अयं प्रसाद" इति।

---

(म) अपरमिति त्वया स्मृतमिति शेषः। तदाच तदनुहीत्याशयः।

(य) मदेति। जीवितदायिनः शार्दूलाक्रमणात् परित्रातुः। चेतनाप्रतिलम्भः शार्दूलकृतमहाघातजनितमूर्च्छाविगमात् चैतन्यप्राप्तिः, स एव प्रियः प्रीतिजनकस्तस्याः तस्य निवेदिकायाः संवाददायिकायाः। भगवत्याः कामन्दक्या विदग्धवचनोपन्यासेन "वत्स माधव! दिष्ट्या सुहृदनुरक्ता वर्द्धितोऽसि मालत्या, तदयमवसरः प्रतिदानस्ये"ति तात्कालिकस्याभिप्रायस्य कथनेन (कारणभूतेन) बोधितेन समुचितं वक्तुं प्रबोधितेन माधवेन। स्वयंग्राहे चाम नैव दस्यै नियुक्ता "यद्याति"त्यादि चतुर्थाङ्कगतश्लोकेन निर्दिष्टं। अयमत्र भावः।

---

হইয়াছিল, তাদৃশ মালতী ও মাধবের ছিন্নমূলপ্রায় হৃদয় কি তুমি দর্শন কর নাই? আরও বলি অপর ইহাও আমি স্মরণ করিয়াছি।

(ম) লব। সম্প্রতি অপর কি স্মরণ করিয়াছ?

(য) মদ। ভগবতী কামন্দকীর সুনিপুণ বাক্যাদেশানুসারে আমার জীবনদাতা সেই মহানুভবের চৈতন্যপ্রাপ্তিরূপ প্রিয় নিবেদনকারিণী মালতীর স্বয়ংগ্রহণরূপ সাহসে হৃদয় ও জীবন পারিতোষিকরূপে মাধব কর্তৃক নিযুক্ত হইয়াছিল। অথচ লবঙ্গিকে! তুমিও সেই সময়ে বলিয়াছিলে "আপনার এই অনুগ্রহ আমার প্রিয় সখীর অভীষ্ট।"

लव। सहि! कदमो उण सो महाणुहावोत्ति विसुमरिदं मए (र)।

मद। सहि सुमर सुमर जेण तस्सिं दिअसे विअडदुट्ठसावदा- वदेसकालगोअरं गदा असरणा तक्कालसंणिहिदेण जीविदप्पदाइणा पीअरभुअत्थम्भेण णिक्कारणबन्धवेण सअलभुवणेक्कसारणिअदेहोवहार- साहसं कदुअ परिरक्खिदह्मि। जेण अ दिढदाढाविदारिअविअड- मंसलुत्थाणपरिणाहिवक्खत्थलेण जरठजज्जरिदजबापीडहारिणा

---

(र) सखि कतमः पुनः स महानुभाव इति विस्मृतं मया।

(ल) सखि। स्मर स्मर येन तस्मिन् दिवसे विकटदुष्टश्वापदापदेशकालगोचरं गता अशरणा तत्कालसन्निहितेन जीवितप्रदायिना पीवरभुजस्तम्भेन निष्कारणबान्धवेन सकलभुवनैक- सारनिजदेहोपहारसाहसं कृत्वा परिरक्षितास्मि। येन च दृढदंष्ट्राविदारितविकटमांसलोत्थान-

---

(र) मालतीमाधवानुरागसमालोचनं स्थगयितुं प्रकृतं मकरन्दं प्रति मदयन्तिकाया अनुरागप्रकारं तन्मुखादेव परिज्ञातुञ्च स्मृतौ सत्यामपि विस्मृतिं प्रकटयति—सखीत्यादिना।

(ल) मदेति। विकटः भीषणः दुष्टः खलस्वभावः यः श्वापदः हिंस्रः स एव व्यपदेशः छलं यस्य तथाभूतस्य कालस्य यमस्य यमस्वरूपस्याप्रस्येत्यर्थः, गोचरं हिंसाप्रवृत्तिविषयतां गता प्राप्ता, अशरणा तदन्यरक्षकहीना, अहमिति शेषः। तत्कालसन्निहितेन शार्दूलाक्रमण- कालनिकटवर्त्तिना, पीवरः स्थूलः भुजः बाहुः स्तम्भ इव यस्य तथाभूतेन, निष्कारणबान्धवेन निर्निमित्तसुहृदा येन महानुभावेन सकलभुवनेषु त्रिलोकेषु एकः अद्वितीयः सारः सर्व्वकर्म- निदानत्वात् श्रेष्ठः यो निजदेहः, तस्य उपहारे व्याघ्रायार्पणे साहसं कृत्वा निजशरीराक्रमण- सम्भवेऽपि तव मुक्षेपमत्नत्वेत्यर्थः परिरक्षिता व्याघ्राक्रमणादुद्धारिता। दृढदंष्ट्राभिः कठिन- दशनैः विदारितं छिन्नं अत एव विकटं चलसङ्कुलत्वाद्भयङ्करं मांसलं स्थूलं उत्थानं उन्नतं

---

(র) লব। সখি! সেই মহানুভব কে ইহা আমি বিস্মৃত হইয়াছি।

(ল) মদ। সখি! সেই দিনে ভীষণ দুষ্ট হিংস্র জন্তুব্যপদিষ্ট যমের হিংসাবিষয়ীভূত রক্ষকহীন আমাকে তৎকালসন্নিহিত স্থূলবাহুস্তম্ভশালী জীবিতদায়ী সেই নিষ্কারণ বান্ধব সকলভুবনের অদ্বিতীয় সারভূত নিজ দেহের উপহাররূপ সাহসাঙ্গীকার করিয়া রক্ষা করিয়াছেন, কঠিন দন্ত বিদারিত বিকট

कारुणीकमणीए मम किदे विसहिदा अतिदुट्ठसद्दूलणहसिहासज्जप्पहारा मारिदो अ सो दुट्ठसावदमहारक्खसो त्ति (ल)। (२२)

लव। हुं मअरन्दो (व)

मद। [ सानन्दम् । ] पिअसहि ! किं किं भणासि (श)

लव। णं भणामि मअरन्दो त्ति (ष)।

---

परिणाहिवक्षःस्थलेन जरठकर्ज्जरितजपापीड़हारिणा करुणैकमनसा मम कृते विसोढा अतिदुष्टशार्दूलनखशिखावज्रप्रहारा मारितश्च स दुष्टश्वापदमहाराक्षस इति।

(व) हुं मकरन्दः।

(श) प्रियसखि। किं किं भणसि।

(ष) ननु भणामि मकरन्द इति।

---

परिणाहि विशालञ्च वक्षःस्थलं यस्य तथाभूतेन, अत एव जरठं कठिनं जर्ज्जरितं छिन्नं भिन्नं जपापीडं जवाकुसुमशेखरं हरति रक्ताक्तत्वात् समीकरोतीति तथोक्तेन अथवा दयैव एका मनसि यस्य तथाभूतेन ( अन्यथा निःसम्पर्कोयं समीडागर्थमेतावत् कष्टाङ्गीकाराऽसम्भवादिति भावः ) येन अतिदुष्टशार्दूलस्य नखशिखा नखाग्रभागा एव वज्राः तीक्ष्णकठिनत्वात् कुलिशानि तेषां प्रहाराः आघाताः मम कृते मदर्थं विसोढाः। दुष्टश्वापद एव महाराक्षसः स मारितश्च येन, तं महापुरुषं स्मर स्मर इत्यर्थः।

(व) हुमिति स्मृतिद्योतकमव्ययम्। ( हुं स्मृतावप्यपाक्रियावितर्के मेदिनी )

(श) सानन्दमिति, प्रियतमनामश्रवणसमुत्थानन्देनेति। तद्नामश्रुतिपि सुखाया अनितृप्तेः सा पुनः पृच्छति—किं किमिति।

---

স্থূল, উন্নত ও বিশাল বক্ষঃস্থলশালী কঠিন ও ছিন্ন ভিন্ন জবাকুসুম শেখরচূড়া, করুণৈকমনাঃ যেই মহাপুরুষ আমার জন্য অতি দুষ্ট শার্দ্দূলের নখরাগ্রভাগরূপ বজ্রের প্রহার সহ্য করিয়াছেন ও দুষ্ট হিংস্রজন্তুরূপ সেই মহারাক্ষসকে মারিয়াছেন, তাহাকে স্মরণ কর, স্মরণ কর।

(ব) লব। ঐ মকরন্দ।

(শ) মদ। ( আনন্দের সহিত ) প্রিয়সখি। কি কি বলিলে ?

(ষ) লব। "মকরন্দ" এই কথা বলিলাম।

( सस्पृहं शरीरमस्याः स्पृशन्तो संस्कृतमाश्रित्य ) (६)

वयं तथा नाम यदात्थ किं वदाम्ययं त्वकस्मादिकलः कथान्तरे।
कदम्बगोलाकृतिमाश्रितः कथं विशुद्धमुग्धः कुलकान्यकाजनः ? (७)

---

(६) अत्र रोमाञ्चपरीक्षणं संस्पृहशरीरस्पर्शे हेतुः। वैदग्ध्यार्थे मालतीसख्या लवङ्गिकायाः संस्कृताश्रयणम्। तथाचोक्तं दर्पणे—

"योषित्सखीबालवेश्याकितवाप्सरसान्तथा।
वैदग्ध्यार्थं प्रदातव्यं संस्कृतञ्चान्तरान्तरा॥"

(७) वयमिति। यदात्थ "मालती माधवे अनुरक्ते"ति यत् कथयसि वयं तथा नाम माधवे अनुरक्ता नाम, नामशब्दोऽभ्युपगमे, तथाच वयं माधवे अनुरक्ता इति त्वदुक्तं स्वीकुर्म्म इत्यर्थः। ( कुलशीलादिसूचनया मालत्या सममात्मनोऽभिन्नबुद्ध्या चात्र वयमिति निर्देशो मन्तव्यः ) तु किन्तु किं वदामि अहमपि त्वद्विषये किं कथयामि ? विशुद्धः परपुरुषसङ्गल्प-शून्यत्वेन पवित्रः वैपरीत्यलक्षणया मुहुरुत्कलिकया समतीव परपुरुषसङ्कल्पवानित्यर्थः, मुग्धः मन्मथा-वेशलेशपरिशून्यतया समतीव सरलः, तथापि पूर्व्ववत् निरतिशयमन्मथावेशशालितयातीव कपटता-पूर्ण इत्यर्थः, (विशुद्धश्चासौ मुग्धश्चेति विशुद्धमुग्ध इत्युत्तरस्य विशेषत्वविवक्षया कर्म्मधारयसमासः) अयं स्पृश्यमानकुलकन्यकाजनमालतीदोषमावाम्वेषिणीत्वं मदयन्तिकेत्यर्थः, कथान्तरे कस्यचित् पुंसः कथाप्रसङ्गे विकलः कुतश्चिदावेशवशादवशः सन् कथं, केन कारणेन कदम्बगोलकस्य नीप-कुसुमस्य आकृतिमिवाकृतिं आकारं गृहीतवान्। रोमाञ्चितः कथं जात इत्यर्थः। यस्मात् परपुरुषनामश्रवणादेव समुद्भूतः कन्दर्पावेशो रोमाञ्चादिकं जनयति, तस्मात्तादृशदोषाविष्करणेन परनिन्दायां प्रवृत्तिः सर्व्वथैवानुचितेति भावः। सोपहासोक्तिरियम्।

अत्र यदात्थेति यत्पदघटितवाक्यस्य परत उपन्यासात् पूर्व्ववाक्यगतविधेयाविमर्शदोषः। एवं मदयन्तिकाया मकरन्दानुरागस्य इत्थभङ्गीविशेषेण प्रकटनात् पर्य्यायोक्तं, कदम्बगोलाकृति-मिति समासगतोपमा चालङ्कार इति तयोः सङ्करः। एवं "स सौम्यो भण्यते वाक्यं यत्

---

(৬) (স্পৃহার সহিত মালতীর শরীর স্পর্শ করিয়া সংস্কৃতে)

(৭) তুমি যে বলিতেছ "মালতী মাধবে অনুরক্তা" তাহা আমি স্বীকার করিলাম, কিন্তু তোমার বিষয়ে আমি কি বলিব ? বিশুদ্ধ ও মুগ্ধ এই কুলকন্যকা পরপুরুষের কথাপ্রসঙ্গে অকস্মাৎ বিকল হইয়া কদম্বকুসুমের আকৃতির ন্যায় আকৃতি ধারণ করিল কেন ? (অর্থাৎ মালতীর দোষান্বেষিণী বিশুদ্ধাভিমানিনী

मद [सलज्जम् ।] सहि किं मं उवहससि । णं भणामि णिव्वाव-अन्ति मं तारिसस्स अप्पणिरवेक्खब्भमसाहसिणो किदन्तकवलिज्जन्त-जीविद-बलामोडिअपच्चाणअण-गुरुकोपआरिणो जणस्स सहसा सु णामगहणसुमरणाइं । तधा अ सो तुए वि गाढप्पहारवेअणारम्भ-विज्झारिदसरीरसङ्कलिदसेअसलिलुप्पीलो मोहमउलाअन्तणेत्तकन्दोट्टजु-अलो भूमिविलग्गितासिलदाविट्ठम्भधीरधारिदसरीरभारो पच्चक्खीकिदो

(ख) सखि ! किं मामुपहससि । ननु भणामि निर्वापयन्ति मां तादृशस्य आत्मनिर-पेक्षव्यवसायिनः कृतान्तकवल्यमानजीवितबलात्कारप्रत्यानयनगुरुकोपकारिणो जनस्य सहसा नामग्रहणस्मरणानि । तथा च स त्वयापि गाढप्रहारवेदनारम्भविच्छारितशरीरसंगलितस्वेद-

साहससुरस्व"मिति दर्पणलक्षणात् लेशो नाम नाट्यं । वंशस्थविलं वृत्तम्,—"वदन्ति वंशस्थविलं जतौ जरा"विति लक्षणात् ।

(ग) सलज्जमिति, तदङ्गिकासमिधी मोसावादिमकटनमेव सज्जाहेतुः । आत्मनिरपेक्षं आत्मरक्षणापेक्षारहितं यथा स्यात्तथा व्यवसायिनः मत्परित्राणोद्योगिनः कृतान्तेन यमेन कवल्यमानस्य ग्रासीक्रियमाणस्य व्यपदेशेन वर्तमानस्य जीवितस्य मम जीवनस्य बलात्कारेण बल-प्रयोगेण यत् प्रत्यानयनं प्रत्याहारः, तेन गुरुकं अतिमहत् उपकारीतीति तथोक्तस्य, जनस्य प्रत्युरालापेऽपि नामग्रहणस्मरणानि नामोच्चारणपरिचिन्तनानि निर्वापयन्ति सान्त्वयन्ति । तथाच मदुपकारकमकरन्दस्यैव मे नामग्रहणोत्सुकादिकं न तु तदग्रजस्यापि त्वदीयोपहासो न युज्यत इति भावः । स्वीक्तं समर्थयितुमाह—तथाचेति । गाढप्रहारेण दृढदन्तस्राघातेन यो वेदनारम्भः तेन विच्छारितात् अन्यविषयात् ( वृद्धार्थकधातोर्णर्थिच्छलेन सुखार्थमपि क्तः ) संगलितः क्षरितः स्वेदसलिलोत्पीडः घर्मजलधारा यस्य तथाभूतः । मोहेन मूर्च्छया मुकुलाय-

तुमि मकरन्देर कथाप्रसङ्गे अकस्मात् विकल हइया रोमाञ्चिता हइले केन ? )

(ग) मद । ( लज्जार सहित ) सखि ! आमाके उपहास करितेछ केन ? आत्मनिरपेक्षभावे आमार रक्षणोद्योग, यिनि बलप्रयोग द्वारा ( शार्दूला-क्रमणव्यपदेशे ) यम कर्तृक ग्रस्यमान आमार जीवनेर उद्धार करिया महा उपकार करियाछेन, तादृश महापुरुषेर कथाप्रसङ्गे नामग्रहण ओ स्मरण

ज्जेव्व मदअन्तिआणिमित्तमेत्तविच्छड्डिअमहामहग्घजीवलोओ महाभाओ त्ति (ग)। (स्वेदादीन् विकारान् नाटयति)

बुद्ध। (शरीरमस्याः स्पृशन्ती) अस्सत्थसरीरे। किं वा आ, दंसिदं सरीरेण मअरन्दसमाअमोच्छुक्कं। (ह)

---

सलिलोत्पीड़ो मोहमुकुलायमाननेत्रकन्दोटयुगलो भूमिविलग्नासिलताविष्टम्भधैर्यधारितशरीरभारः प्रत्यक्षीकृत एव मदयन्तिकानिमित्तमात्रविच्छर्दितमहामहार्घजीवलोको महाभाग इति।

(ह) अस्वस्थशरीरे। किं वाचा? दर्शितं शरीरेण मकरन्दसमागमोत्सुकम्।

---

मानं मुकुलवदाचरन्तं मुद्रणमापद्यमानमिति यावत्, नेत्रकन्दोटयुगलं नयननीलोत्पलयुग्मं यस्य तथाभूतः। भूमौ विलग्नायाः स्थिरीकृताग्रायाः असिलतायाः विष्टम्भेन आश्रितत्वेन धीरं स्थिरं यथा स्यात्तथा धारितः अवलम्बितः शरीरभारो येन तथाभूतः। मदयन्तिकानिमित्तमात्रेण केवलमदयन्तिकानिमित्तेन विच्छर्दितः तिरस्कृतः परित्यक्तुं आरब्धः (शार्दूलसन्निधौ गमनेन मरणस्यैवातिसम्भवादिति भावः) महार्घः नानाविधसत्कार्यसाधनसम्भवेन महामूल्यः जीवलोको येन तथाभूतः, महाभागः अतीव सौभाग्यशाली (मकरन्दः) त्वयापि प्रत्यक्षीकृत एवेत्यन्वयः। 'तयाचानन्यसाधारणस्तत्कृत उपकारो न तवाप्यगोचर इति भावः।

(ह) अस्वस्थशरीरे! कामपीडाजनितप्रकृतिस्थकारे! वाचा स्वकीयभावगोपनकरवाक्येन किं किं फलं भवेत्, न किमपीत्यर्थः। फलाभावे हेतुमाह—दर्शितमिति। शरीरेण मकरन्दनामश्रवणमात्रेणैव सञ्जातरोमाञ्चादिकगात्रेण, दर्शितं प्रकटीकृतम्।

---

আমাকে সান্ত্বনাযুক্ত করে, এই কথাই আমি বলিয়াছি। সেই—দৃঢ়তর নখরাঘাতজনিত বেদনাবশতঃ স্মরণের অবিষয় যাহার শরীর হইতে ঘর্ম্মজলধারা নিপতিত হইতেছিল, মোহবশতঃ যাহার নয়ন নীলোৎপলযুগল নিমীলিত হইতেছিল, ভূমিবিলগ্ন অসিলতার আশ্রয়ে যিনি ধীরভাবে শরীরভার ধারণ করিতেছিলেন, কেবল মদয়ন্তিকার জন্য যিনি অমূল্য জীবন পরিত্যাগ করিতে আরম্ভ করিয়াছিলেন, তাদৃশ সেই মহাভাগ্যশালী পুরুষকে তুমি প্রত্যক্ষ করিয়াছ। (স্বেদাদিবিকারের অভিনয় করিতে লাগিল।)

(হ) বুদ্ধ। (মদয়ন্তিকার শরীর স্পর্শ করিয়া) অস্বস্থশরীরে! স্বীয়ভাব গোপনকর-বাক্য দ্বারা কি হইবে? (মকরন্দের নামশ্রবণমাত্র-সঞ্জাত রোমাঞ্চ) শরীর দ্বারাই মকরন্দ সমাগমোৎসুক্য প্রকটিত হইতেছে

मद। [सलज्जम्।] पिअसहि अवेहि। उब्भिण्णह्मि सहवासिणीए वीसम्भेण (च)।

लव। सहि मदयन्तिए! अम्भे वि जाणिदव्वं जाणीमो। ता पसीद विरम ववदेसदो। एहि वीसम्भगब्भकधाबन्धसरिसं सुहं चिट्ठम्ह (क)।

बुद्ध। सोहणं लवङ्गिआ भणादि (ख)।

---

(च) प्रियसखि! अपेहि। उद्भिन्नास्मि सहवासिन्या विस्रम्भेण।

(क) सखि मदयन्तिके! वयमपि ज्ञातव्यं जानीमः। तत् प्रसीद विरम व्यपदेशात्। एहि विस्रम्भगर्भकथाबन्धसदृशं सुखं तिष्ठामः।

(ख) शोभनं लवङ्गिका भणति।

---

(च) मदेति। उद्भिन्ना सञ्जातरोमाञ्चा, 'सहवासिन्या' इति सहावस्थायिन्याः प्रियसख्या लवङ्गिकाया इत्यर्थः। तथाच प्रियसख्याएव विस्रम्भालापजनितानन्देनैवाहं रोमाञ्ची न तु मकरन्द-नामश्रवणादित्याशयः। अत एवात्र "व्याजोक्तिर्गोपनं व्याजादुद्भिन्नस्यापि वस्तुनः" इति लक्षणात् व्याजोक्तिरलङ्कारः।

(क) ज्ञातव्यमिति। तव मकरन्दस्य च परस्परानुरागचेष्टितमित्यर्थः। व्यपदेशात् व्याज-भाषणच्छलात्, विस्रम्भः प्रणयः गर्भो यस्य तादृशस्य कथाबन्धस्य परस्परकथोपकथनस्य सदृशं अनुरूपं सुखं यथा स्यात्तथा तिष्ठामः।

(ख) शोभनं युक्तियुक्तं, तथाच तदेवास्माभिः कर्त्तव्यमिति भावः।

---

(চ) মদ। (লজ্জার সহিত) প্রিয় সখি! তুমি দূরে যাও। সহবাসিনী প্রিয়সখী লবঙ্গিকার বিশ্রম্ভালাপজনিতানন্দেই আমি রোমাঞ্চযুক্তা হইয়াছি। (মকরন্দনামশ্রবণে নহে)।

(ক) লব। সখি মদয়ন্তিকে! জ্ঞাতব্যবিষয় আমরাও জানি। অতএব তুমি প্রসন্না হও, ও ছলনা হইতে বিরতা হও। এস আমরা প্রণয়গর্ভ পরস্পর কথোপকথনের অনুরূপ সুখে অবস্থান করি।

(খ) বুদ্ধ। লবঙ্গিকা যুক্তিযুক্ত কথাই বলিয়াছে।

मद। विधेअह्मि सम्पदं पिअसहीओ! (ग)।

लव। जइ एव्वं ता कधेहि, कधं णु दे कालो गच्छदि त्ति(घ)।

मद। णिसामेहि पिअसहि! मम बुद्धरक्खिदापक्खवादपच्चएण पढमं ज्जेव्व तस्सिं जणे अदिभूमिं गदो अणुराओ। अवि अ। तस्सिं जणे भरिदुव्वरन्तकोदूहलुक्कण्ठामणोरहं हिअअं आसी। तदो विहिणिओअणिव्वुत्तदंसणा भविअ दुव्वारदारुणा-

(ग) विधेयास्मि साम्प्रतं प्रियसख्योः।

(घ) यद्येवं तत् कथय कथं नु ते कालो गच्छतीति।

(ङ) निशामय प्रियसखि! मम बुद्धरक्षितापक्षपातप्रत्ययेन प्रथममेव तस्मिन् जनेऽतिभूमिं गतोऽनुरागः। अपि च तस्मिन् जने भृतोद्वृत्तकौतूहलोत्कण्ठामनोरथं हृदयमासीत्। ततो विधिनियोगनिर्वृत्तदर्शना भूत्वा दुर्वारदारुणायासदुःखसन्तापदह्यमानचित्तविघटमानजीविताशा,

(ग) विधेयास्मि सम्प्रति प्रणयवशाद् युवयोर्वचने स्थितास्मि, (विधेयो विनयग्राही वचने स्थित आश्रव इत्यमरः) यथाच यथादिष्टमेवानुतिष्ठाम इति भावः।

(घ) एवं—यथादिष्टमेवानुतिष्ठसि चेत् कालः मकरन्दानुरागावधिकेतावत्समयः, कथं केन प्रकारेण।

(ङ) मदेति। कथ्यमानकथाया बुद्धरक्षितापरिज्ञातत्वाद्रहसिकैव बोद्धव्येति तामेव सम्बोधयति—प्रियसखीति। निशामय शृणु। बुद्धरक्षितायाः पक्षपाते गुणवर्णनादिना तत्-पक्षावलम्बने प्रत्ययेन विश्वासेन। तस्मिन् जने मकरन्दे, (मनसा पतित्वेन वरणादेवातापि मकरन्दनामाग्रहणमिति मन्तव्यम्) अतिभूमिं पराकाष्ठां। भृतोद्वृत्ताः—भृतात् भरणात् हृदयपरिपूरणात् उद्वृत्ताः अतिरिक्तीभवन्तः कौतूहलोत्कण्ठा मनोरथाः तदीयदर्शनालापादि-विषये कौतुकौत्सुक्याभिलाषाः यस्मिन्, तादृशम्, ततस्तदनन्तरं विधिनियोगेन दैवविधानेन निर्वृत्तं शार्दूलाक्रमणकाले सम्पन्नं दर्शनं अभिलषितसाक्षात्कारः यस्याः तथाभूता भूत्वा, दुर्वारस्य अनन्योपशमस्य आयासस्य कामपीडायाः यो दुःखसन्तापो मन्मनितक्लेशपरितापो

(গ) মদ। সম্প্রতি আমি তোমাদেরই বাক্যানুসারে চলিব।

(ঘ) লব। যদি তাহাই হয়, তবে বল কিরূপে তোমার সময় যাইতেছে।

(ঙ) মদ। শুন প্রিয়সখি!, বুদ্ধরক্ষিতার তৎপক্ষাবলম্বনে বিশ্বাস বশতঃ প্রথমেই সেই মহাপুরুষে আমার অনুরাগ পরাকাষ্ঠা লাভ করিয়াছিল। আরও শুন, সেই মহাত্মাতে অর্থাৎ তাহার দর্শনাদি বিষয়ে কৌতূহল, ঔৎসুক্য ও

सङ्कप्पसिविणअन्तरेसु अ मणोरहुम्मादमोहिदा पेक्खामि तं जणं। सो वि पिअसहि सुहुत्तणिव्वूढविह्मअविसंठुलुव्वेल्लविअर-न्तललिदणेत्तपुण्डरीअतण्डवुप्पीलडम्बरपडिरुढमेरेअमदघुम्मिअं विअ चिरं णिज्झाअदि मं (च)।

किं अ। कअलिदारविन्दकेसरकसाअकण्ठकलहंसघोसघग्-घरक्खलिदगम्भीरतारधीरणादभरिदकण्णविवरं "पिए मदअन्तिए!

(च) सङ्कल्पस्वप्नान्तरेषु च मनोरथोन्मादमोहिता प्रेक्षे तं जनम्। सोऽपि प्रियसखि! मुहूर्तनिर्व्यूढविस्मयविसंष्ठलोद्वेल्लद्विसार्यमाणललितनेत्रपुण्डरीकताण्डवोत्पीडडम्बरप्रतिरुद्ध-मैरेयमदघूर्णितमिव चिरं निध्यायति माम्।

(छ) किं च। कवलितारविन्दकेसरकषायकण्ठकलहंसघोषघर्घरस्खलितगम्भीरतारधीर-

(च) सङ्कल्पेति। सङ्कल्पाः—"तेन सह साक्षात्कारे एवं वदिष्यामि एवं करिष्या-मीत्यादिचिन्ताः, स्वप्नाः—अवस्थाविशेषाः, तेषां अन्तरेषु मध्येषु मनोरथेन अभिलाषेण य उन्मादः मदनोन्मत्तत्वं तेन मोहिता सञ्जातमोहा सती तं जनं मकरन्दं प्रेक्षे अवलोकयामि। सोऽपि मकरन्दोऽपि (न केवलमहमेव इत्यपेरर्थः) मुहूर्तनिर्व्यूढेन चणमात्रसम्पन्नेन विस्मयेन दर्शनजनिताश्चर्येण विसंष्ठुलं विषमं यथा स्यात्तथा उद्वेल्लन्ती उन्नमन्ती विसार्यमाणे दर्शनेच्छया विस्तृतिमापद्यमाने ललिते सुन्दरे ये नेत्रपुण्डरीके तयोः यत्ताण्डवोत्पीडः नृत्यसमूहः स एव डम्बरः आडम्बरः तेन प्रतिरुद्धं सञ्जातं मैरेयमदेन मैरेयाभिधसीधुपानोत्पन्नमत्ततया घूर्णितं घूर्णनमिव घूर्णितं यस्मिन् तद्यथा स्यात्तथा मां निध्यायति अवलोकयति। "मैरेयमासवः सीधु"रिति, "निर्व्वर्णनन्तु निध्यानं दर्शनालोकनेक्षण"मिति चामरः।

(छ) किंचेति। कवलितेन ग्रस्तेन अरविन्दकेसरेण पद्मकिञ्जल्केन कषायः सुरभिः

(চ) সঙ্কল্প ও স্বপ্নাবস্থার মধ্যে অভিলাষজনিত মত্ততা দ্বারা মোহিত হইয়া আমি সেই মহাপুরুষকে দেখিয়া থাকি। প্রিয়সখি! সেও মুহূর্তমাত্রে সমুৎপন্ন দর্শনজনিত আশ্চর্য্য বশতঃ বিষমরূপে উন্নমনযুক্ত দর্শনেচ্ছায় বিস্তার্য্যমাণ ও সুন্দর নয়নোৎপলের নৃত্যসমূহরূপ আড়ম্বর দ্বারা সমুৎপন্ন মৈরেয় মদ্য-পানোন্মত্ততাজনিত ঘূর্ণনের ন্যায় ঘূর্ণনশালি যেরূপে হয়, সেইরূপে আমাকে দেখিতে থাকে।

(ছ) আরও শুন, কবলিত পদ্মের কিঞ্জল্ক দ্বারা সুরভিকণ্ঠ কলহংসের

णिज्जन्तपीवरूरुप्पडिसिद्धविप्पदीवगमणं पडिऊलवादिणिं वि मं अच्चाअरपअत्तणिव्वत्तिदमुहुत्तकोवोवराअदुक्खपरुणोकिदहिअअं सिणिद्धपुणरुत्तपहल्लत्थलोअणविभाविदसिसचित्तसारं उवहसदि (ज)।

---

कूलवादिनीमपि माम् अत्यादरप्रयत्ननिर्वर्त्तितमुहूर्त्तकोपोपरागदुःखपरुषीकृतहृदया स्निग्धपुनरुक्त-पर्य्यस्तलोचनविभाविताशेषचित्तसारामुपहसति।

---

अत एव प्रसृता वपार्वशेन प्रस्थातुमुद्यता, विसर्जिताशङ्का चासौ प्रसृता चेति तथोक्ता। (उत्तर-पदस्य विशेषत्वविवक्षया कर्म्मधारयः) तत्क्षणे तस्मिन् प्रस्थानोद्यमसमये कठोराभ्यां परिणताभ्यां कमलदण्डायमानाभ्यां विपुलपुलकोदयादिति पद्मनालवदाचरद्भ्यां बाहुभ्यां भुजाभ्यां बन्धेन गाढतरालिङ्गनेन अपवारितः समाच्छादितः पयोधरयोः स्तनयोः उद्गमः उन्नतिर्यस्यास्तथाभूता। तादृशारम्भस्य स्वाभिप्रायविरुद्धेऽप्यपलायने हेतुं दर्शयति—विकटसानेत्यादिना। विकटसानेन वसनस्खलनवशाद्वसनसमानेन विकटेन विशालेन मेखलावलयेन काञ्चीदाम्ना सन्दान्यमानौ (सन्दानं बन्धनरज्जुरनयोरस्तीति सन्दानौ अर्श्आदित्वादच्, ततः सन्दानौ क्रियमाणाविति करोत्यर्थे तत्करोति सन्दानशब्दात् कर्म्मण्यानश्।) स यन्त्र्यमानौ पीवरौ मकरौ यौ उरू स्थूलोरुयुग्मं ताभ्यां प्रतिषिद्धं अवरुद्धं विप्रतीपगमनं तादृशारम्भप्रतिकूलप्रस्थानं यस्यास्तथाभूताम्। प्रतिकूलवादिनीमपि "मैवं कुरु" इत्यादि प्रतिषेधकवाक्यभाषिणीमपि। अत्यादरेण तदीय-प्रकृष्टचेष्टया च निर्व्वर्त्तिताभ्यां निष्पादिताभ्यां मुहूर्त्ताभ्यां तादृशारम्भेणामुहूर्त्तमुखाभाभ्यां दुर्ग-मावस्थायिभ्यां कोपोपरागदुःखाभ्यां तादृगाचरणजनितरोषसंसर्गक्लेशाभ्यां परुषीकृतं विरूपी-कृतं हृदयं यस्यास्तथाभूताम्। तथा स्निग्धाभ्यां सस्नेहाभ्यां पुनरुक्तं द्विगुणितं यथा स्यात्तथा

---

হওয়া আমি (লজ্জাবশতঃ) প্রস্থানোদ্যতা হইলে তৎক্ষণাৎ পরিণত মৃণাল-দণ্ডতুল্য বাহুযুগল দ্বারা গাঢতর আলিঙ্গনে তৎকর্ত্তৃক আমার স্তনোন্নতি আচ্ছাদিত হইয়াছিল। (বিশেষতঃ তাদৃশাচরণ আমার অভিপ্রায়বিরুদ্ধ হইলেও পলায়ন করিতে না পারার কারণ এই যে) বস্ত্র স্খলনবশতঃ বিগলিত বিশাল কাঞ্চিদাম দ্বারা স্থূলতর উরুযুগল সংযমিত হওয়ায় তাদৃশ আচরণের প্রতিকূল আমার প্রস্থানও অবরুদ্ধ হইয়াছিল। (এবং) তাঁহার নিবৃত্তিপর আদর ও প্রকৃষ্টচেষ্টায় সম্পাদিত মুহূর্ত্তমাত্র স্থায়ী তাদৃশ রূপাচরণজনিত ক্রোধ সংসর্গও ক্লেশ দ্বারা বিকলীকৃত হইয়াছিল। স্নিগ্ধ ও দ্বিগুণিতভাবে আমার অঙ্গে সন্নিবেশিত লোচনযুগল দ্বারা আমার মনের প্রকৃত অভিপ্রায়

दिउणवाहुदण्डावेढणणिअन्तिदं पिअसहि परूढ़सद्दूलकठोर-करुरुहप्पहारविसङ्कपत्तावलीपसाहणुत्ताणवच्छत्थलणिट्ठुरणिवे-सणिसहं मं कदुअ सावेअविहुअमत्थआविहकवरोणिहिदकर-परिग्ग-होअगिदुसमिदणिच्चल-मुहावअव-सच्छन्दविलसिदविअड्ढमअण-

(भ) द्विगुणबाहुदण्डवेष्टननियन्त्रिता प्रियसखि! प्ररूढशार्दूलकठोरकररुहप्रहारविकट-पत्रावलीप्रसाधनोत्तानवक्षःस्थलनिष्ठुरनिवेशनि सहां मां कृत्वा सावेगविधुतमस्तकाविद्धकवरी-निहितकरपरिग्रहपुञ्जीकृतोपशमितनिश्चलमुखावयवस्वच्छन्दविलसितविदग्धवदनकमलो वामगण्ड-

पर्यस्ताभ्यां मदङ्गेषु सन्निवेशिताभ्यां लोचनाभ्यां चक्षुर्भ्यां विभावितः परिस्लानः चित्तस्य मनसः सारः स्थिरांशः मङ्गलाभिप्रायः यस्यास्तथाभूतां मां उपहसति "अयि प्रस्थानोद्यतापि कथं पुनस्तिष्ठसि" इत्यादि वाक्यावलीभिः उपहासं करोति।

(भ) द्विगुणेति। द्विगुणाभ्यां एकैकहस्तेनैव समन्तात्कलनाद्द्विगुणीकृताभ्यां बाहुदण्डाभ्यां आवेष्टनेन सम्यक् परिवेष्टनेन नियन्त्रितां आबद्धां कृतगाढालिङ्गनामिति यावत्। प्ररूढं समुत्पन्नं शार्दूलस्य व्याघ्रस्य कठोरकररुहप्रहारः दृढतरनखराघातजनितचिह्नान्येव विकट-पत्रावली विकचपत्ररचनापंक्तिः सैव प्रसाधनं अलङ्कारः यत्र तादृशं उत्तानं उन्नतञ्च यत् वक्षःस्थलं तत्र निष्ठुरनिवेशेन घनसन्निवेशनेन निःसहां अवशां। सावेगं त्वरान्वितं यथा स्यात्तथा विधुतेन चुम्बनादिप्रतिरोधसमीहया समान्दोलितेन मस्तकेन मदीयशिरसा आविद्धा स्खलिता या कवरी—मदीयकेशसमूहः तस्यां निहितेन केशसंयमनार्थं स्थापितेन करेण हस्तेन यः परिग्रहः मदीयकेशसमूहस्यैव ग्रहणं तेन पुञ्जीकृतैः संयमितैः केशैरिव यैः, उपशमितः किञ्चिदूर्द्धमुखीकृताः निश्चलाः केशाकर्षणजनितदुःखसम्भवेन सुखावाप्तिपारवश्येन

পরিজ্ঞাত হওয়ায় "এইরূপ করিও না" ইত্যাদি প্রতিকূলবাদিনী হইলেও আমাকে "গমনোদ্যতা হইয়াও কেন গেলে না?" ইত্যাদি বাক্য দ্বারা উপহাস করিতেছিল।

(ম) তৎপরে দ্বিগুণীকৃত বাহুবেষ্টনে আবদ্ধ আমাকে ব্যাঘ্রের দৃঢ় নখ-নখরাঘাতজনিত চিহ্নরূপ বিকচপত্ররচনাপংক্তি যাহাতে অলঙ্কাররূপে সমুৎপন্ন তাদৃশ সমুন্নত আমার বক্ষঃস্থলে গাঢ় সন্নিবেশবশতঃ (একেবারে) অবশ করিয়া (চুম্বনাদি প্রতিরোধ বাসনায়) আবেগের সহিত মস্তক সমান্দোলনে স্খলিত আমার কবরীতে বিন্যস্ত তাঁহার হস্ত দ্বারা পরিগ্রহবশতঃ আমার কেশ-

कमलो वामगण्डमूलोवरिणिहिदप्फुरन्तपुञ्जिदाहरसमुग्गमणु-
हरप्फंसणिव्भरुव्भिदसरीरसोहं उल्लसिदसज्झसाणन्दविसमसम्भम-
वलणमोहमन्थरभमन्तलोअणं किं पि दुव्विणीदसाहसाणुरूवव्ववसाओ
मं अणव्भत्थणीअं अव्भत्थेदि (क) ।

---

मूलोपरिनिहितप्रस्फुरत्पुञ्जिताधरसमुद्गतमनोहरस्पर्शनिर्भरोद्भिन्नशरीरशोभां समुल्लसितसाध्व-
सानन्दविषमसंभ्रमवलनमोहमन्थरभ्रमल्लोचनां किमपि दुर्विनीतसाहसानुरूपव्यवसायो मामनभ्यर्थ-
नीयम् अभ्यर्थयति ।

---

च निष्यन्दाः ये सुखाश्रयाः कपोलाधरादयो मदीयवदनैकदेशाः तेषु यत् स्वच्छन्दविलसितं
यथेच्छविलसनं यथाभिलषितचुम्बनादिव्यवहार इति यावत्, तत्र विदग्धं पटुतमं वदनकमलं
मुखारविन्दं यस्य तथाभूतः। दुर्विनीतानां कामापहृतविवेककामुकानां साहसानुरूपो
दुर्घटातुल्यः व्यवसायः दुरध्यवसायः यस्य तथाभूतः सन्। वामगण्डमूलोपरि वामकपोल-
मूलोपरि ( वामपार्श्व एव स्त्रीणामवस्थानस्य व्यवस्थानात् स्वाभिमुखीनां तासां वामाङ्ग एव
सर्वव्यवहारस्य सुलभत्वादमित्युक्तम् ) निहितात् चुम्बनार्थमवस्थापितात् अत एव स्फुरत
औत्सुक्येन स्पन्दमानात् अत एव च पुञ्जितात् पुञ्जवत् प्रतीयमानात् अधरात् तदीयोष्ठात्
समुद्गतेन समुत्पन्नेन मनोहरस्पर्शेन निर्भरं निरतिशयं यथा स्यात्तथा उद्भिन्ना पुलकोद-
गमादिभिः सुप्रकाशमासादिता शरीरशोभा यस्यास्तथाभूतां समुल्लसिताभ्यां साद्वयोदयोगेन
प्रादुर्भूताभ्यां साध्वसानन्दाभ्यां भीतिसुखाभ्यां यद् विषमविभ्रमस्य अमितावेगस्य वलनं उच्छ्रीवनं
तेन यो मोहः कर्त्तव्याकर्त्तव्यविमूढता तेन मन्थरं मन्दं यथा स्यात्तथा भ्रमन्ती इतस्ततः
सञ्चरन्ती लोचने नेत्रे यस्यास्तथाभूतां मां किमपि लज्जया भवतान्यं अनभ्यर्थनीयं मनानुद्गातेन
प्रार्थनायोग्यं सुरतमित्यर्थः अभ्यर्थयति याचते । अनेन स्वप्नसात्त्ववर्णनम् ।

---

समूह সংযমিত হওয়ায় (কেশাকর্ষণে দুঃখ পাওয়ার ভয়ে) কিঞ্চিদূর্দ্ধীকৃত ও
নিশ্চল আমার কপোলাদিমুখাবয়বে যথেচ্ছ চুম্বনাদি ব্যাপারে যাহার বদন-
কমল অত্যন্ত পটু, তাদৃশ সেই মহাপুরুষ অত্যন্ত হতজ্ঞান কামুকের সাহসানুরূপ
অধ্যবসায়শালী হইয়া বাম কপোলমূলের উপরিভাগে বিন্যস্ত স্পন্দমান ও
পুঞ্জবৎ প্রতীয়মান তাহার অধর হইতে সমুৎপন্ন মনোহর স্পর্শ দ্বারা নিরতিশয়
রূপে প্রকাশপ্রাপ্ত শোভাশালিনী এবং তাদৃশোদ্যোগ প্রাদুর্ভূত ভীতি ও
আনন্দ দ্বারা অপরিমিত আবেগের উজ্জীবনে কর্ত্তব্যাকর্ত্তব্য বিমূঢ়তাবশতঃ

एव्वंणाम पिअसहि ! समक्ख' सव्वं अणुभविअ झत्ति पड़िबुद्धा सुण्णारण्णसण्णिहं पुणो वि मन्दभाइणी विभावेमि जीअलोअं त्ति (ञ)।

लव। [ विहस्य। ] सहि मदअन्तिए! फुडं आचक्खेहि। अध तस्सिं अवसरे सिणिद्धविब्भमुम्मोसहासविअसन्तवुद्धरचिदालोअणणिरुविदं परिअणादो गोवणिज्जं दे पिअस्सस मूलं सअणिज्ज पच्छदसडाधारिदं भोदि किं ण वेत्ति (ट)।

---

(ञ) एव नाम प्रियसखि। समक्षं सर्वमनुभूय झटिति प्रतिबुद्धा शून्यारण्यसन्निभं पुनरपि मन्दभाग्या विभावयामि जीवलोकमिति।

(ट) सखि मदयन्तिके। स्फुटमाचक्ष्व। अथ तस्मिन्नवसरे स्नेहविभ्रमोन्मिश्रहासविक-

---

(ञ) एवं स्वप्नावस्थामभिधाय जाग्रदवस्थामाह—एवमिति। एवं नाम अनेन प्रकारेण, सर्व्वं सुरतप्रार्थनादि क्रियाकलाप, समक्ष प्रत्यक्षं, झटिति सहसा, प्रतिबुद्धा जागरिता, मन्दभाग्या हतभागधेया अहं जीवलोकं संसारं पुनरपि शून्यारण्यसन्निभं जागरणसमये चैव तादृशसुखदायि प्रियतमस्यादर्शनात् विजनकान्तारतुल्यं विभावयामि मन्ये। इति शब्दो-वाक्यपरिसमाप्तिसूचकः पूर्व्वोक्तनिशामयेत्यनेनान्वेति।

(ट) अथेति। तस्मिन्नवसरे तस्मिन् स्वप्नसुखलाभावकाशे, स्नेहविभ्रमैः प्रणयविलासैः उन्मिश्रं सवलितं यो हासः त्वदीयाकारेङ्गितदर्शनादिजनितं स्मितं तेन विकसद्भ्यां विस्फारं-मानाभ्यां बुद्धरचिताया (स्वतस्सन्निहितायास्तत्कालप्रतिबुद्धाया इत्यर्थः) लोचनाभ्यां निरूपितं परिचितत्वमनस्खलनात् सम्यक् प्रत्यक्षीकृतं अत एव परिजनात् परिचारिकाजनादपि गोपनीयम् ( स्वप्नसम्भोगजनितधातुक्षरणादिदर्शनलज्जावशादिति भावः ) ते तव प्रियस्य

---

মনমন্দরূপে ইতস্ততঃ বিচরণকারী নেত্রশালিনী আমাকে লজ্জাদিবশতঃ অবরুদ্ধা ও অপ্রার্থনীয় ( অর্থাৎ সুরত প্রার্থনা করিতেছিল। )

(ঞ) প্রিয়সখি! ( স্বপ্নাবস্থায় ) এই প্রকারে সমস্ত প্রত্যক্ষরূপে অনুভব করিয়া মন্দভাগ্যা আমি সহসা জাগরিতা হইয়া পুনরায় সংসারকে ( তাহার অদর্শনবশতঃ ) শূন্য অরণ্যের ন্যায় মনে করিতেছি।

(ট) লব। সখি! মদয়ন্তিকে! স্পষ্ট করিয়া বল দেখি, সেই স্বপ্নসুখ-লাভকালে ( পরিবিহিত বস্ত্রের স্খলনবশতঃ সতত সন্নিহিতা ও তৎকালজাগরিতা )

मद। अइ असंबद्धपरिहाससीले! अवेहि (ठ)।

बुद्ध। सहि मदअन्तिए! मालदीपिअसही क्खु ईदिसाइं ज्जेव्व मन्तिदुं जाणादि (ड)।

मद। सहि! मा क्खु एव्वं मालदिं उवहस (ढ)।

---

मद्बुद्धरक्षितालोचननिरूपितं परिजनाद्गोपनीयं ते नितम्बस्य मूलं शयनीयप्रच्छदपटापवारितं भवति किं न वेति।

(ठ) अयि असंबद्धपरिहासशीले! अपेहि।

(ड) सखि मदयन्तिके! मालतीप्रियसखी खल्वीदृशान्येव मन्त्रयितुं जानाति।

(ढ) सखि! मा खल्वेवं मालतीमुपहस।

---

मूलं (आसनमयूरकमिति पाठे तु आसनार्थं निर्मितं तूलपूरितमयूराकारमासनं आसनमयूरकं। तत्रापि स्वप्रसमागमजनितचरमधातुक्षरणादार्द्रीभावस्य प्रकाश एव गोपनहेतुः) शयनीयप्रच्छदपटेन शय्यास्तरणवस्त्रभागेन अपवारितं आच्छादितं भवति किं नवेति स्फुटमापच्च विस्पष्टं कथय। अयञ्च चेटीजनोचितातिजुगुप्सितप्रश्नः मालत्यपेक्षया मदयन्तिकाया अपकृष्टत्वद्योतनाय कृत इति मन्तव्यम्।

अत्र ईदृशप्रश्ने सत्यामपि परमाश्लीलतायां केवलसखीनां गोष्ठीवशादश्लीलतादोषः, परन्तु गुणत्वमेव भजते। तथाचोक्तं—"सुरतारम्भगोष्ठ्यादावश्लीलत्वं तथा पुन"रित्यादि।

(ठ) अइेति। असम्बद्धः प्रकृतानतुरूपः परिहासः उपहासः शीलं स्वभावो यस्याः तथाभूते! अपेहि—अपसर!

(ड) बुद्धेति। मालत्याः प्रियसखीलवङ्गिका (ननु तत् प्रियसखी मादृशीति भावः) ईदृशान्येव एवमश्लीलतापूर्णान्येव (वाक्यानि) मन्त्रयितुं कथयितुं जानाति। मालत्याश्चाद्यावस्थामालोकितवत्या लवङ्गिकायास्तत्साम्येन त्वां प्रत्यपि एवम्विधः प्रश्नो युज्यत इति भावः, एतेन मालतीं प्रत्युपहासो मदयन्तिकां प्रति पक्षपातश्च बुद्धरक्षितायाः सूचितः।

---

বুদ্ধরক্ষিতার প্রণয়বিলাসোন্মিশ্রহাস্যবিকসিত লোচন দ্বারা প্রত্যক্ষীকৃত তোমার জঘনমূল পরিচারিকাবর্গের নিকট গোপনীয় রাখিবার জন্য শয্যাস্তরণ (বিছানার চাদর) দ্বারা আচ্ছাদিত হইয়াছিল কি না?

(ঠ) মদ। অয়ি অসম্বদ্ধপরিহাসশীলে! তুমি দূরে অপসরণ কর।

(ড) বুদ্ধ। সখি মদয়ন্তিকে! মালতীর প্রিয়সখী লবঙ্গিকা ঈদৃশ অশ্লীলতাপূর্ণ বাক্যই বলিতে জানে।

बुद्ध। सहि मदयन्तिए! भणिस्सं दाणिं दे किं वि जइ ण वीसासभङ्गं करेसि (ण)।

मद। सहि! किं पुणो वि पणअभङ्गेण किदावराहो अअं जणो जेण एव्वं मन्तेसि। पिअसहि! तुमं लवङ्गिआए सह सम्पदं मे हिअअं (त)।

बुद्ध। जइ दे कधं वि मअरन्दो पुणो वि दंसणपहं ओदरदि, तदो किं तुए कादव्वं (थ)।

---

(ण) सखि मदयन्तिके! भणिष्यामि इदानीं ते किमपि यदि न विश्वासभङ्गं करोषि।

(त) सखि किं पुनरपि प्रणयभङ्गेन कृतापराधोऽयं जनो, येनैवं मन्त्रयसि। प्रियसखि! त्वं लवङ्गिकया सह साम्प्रतं मे हृदयम्।

(थ) यदि ते कथमपि मकरन्दः पुनरपि दर्शनपथमवतरति, ततः किं त्वया कर्त्तव्यम्।

---

(ढ) मदेति। एवं अनेन प्रकारेण। मालत्या अपि तथाविधावस्थाया अलीकत्वादिति भावः।

(ण) बुद्धेति। विश्वासभङ्गं आत्माभिप्रायगोपनेन मयि विश्वास विच्युतिम्।

(त) मदेति। प्रणयभङ्गेन विश्वासच्छेदनेन, (प्रणयः प्रेम्णि विश्रम्भे याच्ञाप्रसरयोरपीति विश्वः) अयं—मल्लक्षणः। पुनरपीत्यनेन पूर्वं कदाचिदबुद्धिरचितप्रणयभङ्गो मदयन्तिकया कृत इति मन्यते। हृदयं हृदयतुल्या, तथा च युवयोः सकाशेनास्ति मे किञ्चिदपि गोपनीयमिति निःसन्देहं कथयेति भावः।

(थ) वक्तव्यमभिधातुं भूमिकां करोति—यदीत्यादिना।

---

(ঢ) মদ। সখি! মালতীকে এইরূপে উপহাস করিও না।

(ণ) বুদ্ধ। সখি মদয়ন্তিকে! সম্প্রতি তোমাকে কোন কথা জিজ্ঞাসা করি (যদি আত্মভাব গোপন করিয়া) বিশ্বাস ভঙ্গ না কর।

(ত) মদ। সখি! পুনরায়ও কি বিশ্বাস ভঙ্গ দ্বারা আমি অপরাধ করিয়াছি যে, এরূপ বলিতেছ? লবঙ্গিকার সহিত তুমিই সম্প্রতি আমার হৃদয় তুল্য।

(থ) বুদ্ধ। যদি মকরন্দ কোন প্রকারে পুনরায় তোমার দর্শনপথে অবতরণ করে, তবে তুমি কি কর?

मद। एक्केक्कावअवणिसग्गलग्गणिच्चले चिरं लोअणे णिव्वाव-इस्सं (ट)।

बुद्ध। अथ सो वि मम्महबलक्कारिदो कन्दप्पजणणिं तुमं रुक्मिणिं विअ पुरिसोत्तमो सअंगाहसाहसेण सहधम्मचारिणिं करेदि तदो का पडिवत्ती? (ध)

मद। [निःश्वस्य।] कीस मं एत्तिअं आसासेसि (न)।

---

(ट) एकैकावयवनिसर्गलग्ननिश्चले चिरं लोचने निर्वापयिष्यामि।

(ध) अथ सोऽपि मन्मथबलात्कारितः कन्दर्पजननीं त्वां रुक्मिणीमिव पुरुषोत्तमः स्वयंग्राहसाहसेन सहधर्मचारिणीं करोति, ततः का प्रतिपत्तिः?।

(न) किं मामेतावदाश्वासयसि।

---

(ट) मदेति। एकैकावयवे मुखादौ, निसर्गरूपे तत्तदवयवानां सौन्दर्यादिस्वभावात् स्वभावतः लग्ने निश्चले परमपरितृप्तिवशात् निस्पन्दे लोचने मदीयनेत्रे निर्वापयिष्यामि शीतलयिष्यामि। एतेनोत्कटदर्शनेच्छा सूचिता।

(ध) बुद्धेति। मन्मथस्य कामस्य बलात्कारः बलेन प्रवर्तनं सञ्जातो यस्येति मन्मथ-बलात्कारितः समतीव कामाभिभूत इत्यर्थः, सोऽपि मकरन्दोऽपि। पुरुषोत्तमः श्रीकृष्णः उत्कृष्ट-पुरुषश्च, कन्दर्पजननीं मन्मथोत्पादयित्रीं कामविकारोत्पादिकाञ्च। स्वयंग्रहसाहसेन स्वयं-ग्रहणेन साहसं तेन, बलात्कारेणेति यावत्, सहधर्मचारिणीं धर्मपत्नीं, ततस्तदा का प्रतिपत्तिः किङ्कर्तव्यता? तत्तु अस्मिन् विषये तवाभिमतमस्ति नवेति भावः।

अत्र रुक्मिणीमिवेति पूर्णोपमालङ्कारः, एवं मदयन्तिकाचित्तपरितोषार्थमेव वचसामेतेषा-मुपन्यासात् "दाक्षिण्यं" नाम नाट्यालङ्कारः, तथोक्तं दर्पणे—"दाक्षिण्यं चेष्टया वाचा परचित्तानुवर्तनम्" इति।

---

(ট) মদ। (নিরতিশয় সৌন্দর্য্যবশতঃ) তাহার মুখাদি এক এক অবয়বে স্বভাবতঃ সংলগ্ন আমার নেত্রযুগল শীতল করি।

(ধ) বুদ্ধ। পুরুষোত্তম বিষ্ণু যেমন ভাবি কন্দর্পপ্রসবিত্রী রুক্মিণীকে স্বয়ং-গ্রহসাহসে (অর্থাৎ অপহরণ করিয়া) ধর্ম্মপত্নী করিয়াছিলেন, সেইরূপ মকরন্দও যদি অত্যন্ত কামাভিভূত হইয়া তোমাকে স্বয়ংগ্রহসাহসে ধর্ম্মপত্নী করে, তবে তোমার কি কর্ত্তব্য? (অর্থাৎ সে বিষয়ে তোমার অভিমত আছে কি না)?

बुद्ध। सहि! कहेहि (प)।

लव। कधिदं ज्जेव्व हिअआवेअसूअएहिं दीहणीसासेहिं (फ)।

मद। सहि! का अहं इमस्स तेण ज्जेव्व अत्ताणअं पणीकदुअ दुट्ठसद्दूलकवलादो कड्ढिअस्स तस्स ज्जेव्व केरअस्स अत्तणो सरीरस्स (ब)।

---

(प) सखि। कथय।

(फ) कथितमेव हृदयावेगसूचकैर्दीर्घनिःश्वासैः।

(ब) सखि! काहमस्य तेनैवात्मानं पणीकृत्य दुष्टशार्दूलकवलादाकृष्टस्य तस्यैव केरकस्यात्मनः शरीरस्य।

---

(न) निःश्वसेति। तादृशस्य याहसाहसस्यासम्भवचिन्ताजनितविषादोऽत्र निःश्वासहेतुः। किं किमर्थं। मदीयदुरदृष्टवशेन तदसम्भवादिति भावः। तथाच तव सख्यया सम्मतिरस्तीति व्यज्यते, एवञ्च "मनोरथस्त्वभिप्रायस्योक्तिर्भङ्ग्यन्तरेण च"इति लक्षणादत्र "मनोरथो" नाम नाट्यालङ्कारम्।

(प) कथयेति, स्पष्टीकृत्येति शेषः।

(फ) कथितमेवेति तथाविधापहरणे अस्याः सम्मतिरस्तीति स्पष्टीकृतमेवेत्यर्थः।

(ब) तेनैवेति मकरन्देनैवेत्यर्थः? आत्मानं स्वकीयशरीरं पणीकृत्य मूल्यत्वेनाङ्गीकृत्य, दुष्टशार्दूलकवलात् दुरन्तव्याघ्रग्रासात्, आकृष्टस्य आकृष्य उद्धारितस्य अत एव तस्यैव मकरन्दस्यैव केरकस्य कृत्यकरस्य तदुद्धाररूपमूल्येन स्वकीयतया व्यवस्थापितस्येति यावत् (कृत्यकिङ्करस्येत्यर्थकोऽपि क्वचित् पाठः) आत्मनो मम शरीरस्य देहस्य अहं का? न कापीत्यर्थः। शार्दूलकवलादुद्धारेणैवायं मदीयो देहस्तदीयः संवृत्त इति अस्यापहरणे अनपहरणे वा स एव

---

(न) मद। (নিশ্বাস ত্যাগ করিয়া) কেন আমাকে (বৃথা) এইরূপ আশ্বাসিত করিতেছ?

(প)। বুদ্ধ। সখি। স্পষ্ট করিয়া বল।

(ফ) লব। হৃদয়ের আবেগসূচক দীর্ঘ নিশ্বাস দ্বারাই (সম্মতি) সূচিত হইয়াছে।

(ব) মদ। নিজের শরীর পণ করিয়া দুষ্ট শার্দ্দূলের কবল হইতে উদ্ধার করায় তৎকর্ত্তৃকই আত্মীয়রূপে ব্যবস্থাপিত এই শরীর সম্বন্ধে আমি 'কে?

लव। सरिसं महाणुभावदाए (भ)।

बुद्ध। सुमरेहि एदं वअणं (म)।

मद। कधं दुदीअजामविच्छेदपडहो ताडीअदि। ता जाव

---

(भ) सदृशं महानुभावतायाः।

(म) स्मरैतद्वचनम्।

(य) कथं द्वितीययामविच्छेदपटहस्ताड्यते। तद्यावन्नन्दनं निर्भर्त्स्य तस्य वासभवन-मध्यगं मालत्या उपरि अनुकूलयिष्यामि।

---

प्रभुरिति नास्ति मे तव वचनाधिकारोऽपीति भावः। तथाच शार्दूलादुद्धारकाल एव मदयन्तिकया स्वदेहः मकरन्दाय मनसा प्रदत्त इति ध्वनिः।

(भ) महानुभावतायाः कृतज्ञतायाः सदृशं अनुरूपं उपयुक्तं पूर्व्वोक्तवचनमिति शेषः।

(म) बुद्धेति। एतत्—मकरन्दकर्तृकस्वापहरणाङ्गीकरणव्यञ्जकं वचनं स्मर सर्व्वदा परिचिन्तय। तथाच तादृशप्रसङ्गे समुपस्थिते पुनः कर्त्तव्याकर्त्तव्यचिन्तया समयक्षेपेण कार्य्यहानिर्न कर्त्तव्येति भावः। बुद्धरक्षितामकरन्दसुहृद्भ्यामपि वचनमिदमवोचत्। तथाहि—हे मकरन्द! एतद्वचनं त्वत्कर्तृकस्वापहरणाङ्गीकरणव्यञ्जकं मदयन्तिकाया वाक्यं स्मर चिन्तय। तथाचैतद्विचिन्त्याधुनैवैनामपहर्त्तुं यत्नं समाचरेति भावः।

(य) मदेति। द्वितीययामस्य रात्रेर्द्वितीयप्रहरात्मककालस्य विच्छेदः विश्लेषः अतिपात इति यावत्, तस्य पटहः तत्सूचकध्वनिप्रकाशकढक्काविशेषः ताड्यते वाद्यते। तत्क्षणात् रात्रेर्द्वितीयप्रहरस्याप्यतीतत्वेन कालविलम्बस्यासह्यत्वात् नन्दनं निर्भर्त्स्य "अश्वरितो मालतीं प्रति ताड़नवाक्यप्रयोगस्यातीवासमीचीन इत्यादिना तिरस्कृत्य। मानतीयस्य

---

(অর্থাৎ এই শরীর দেওয়া না দেওয়ায় আমার কোন কর্তৃত্ব নাই, যেহেতু উদ্ধার করিয়া তিনি পূর্ব্বেই নিজের করিয়া লইয়াছেন)।

(ভ) লব। তোমার এই বাক্য (সর্ব্বথাই) কৃতজ্ঞতার উপযুক্ত।

(ম) বুদ্ধ। এই কথা স্মরণ রাখিও।

(য) মদ। এ কি রাত্রির দ্বিতীয় প্রহরাতিপাতের সূচক বাদ্য বাদিত হইতেছে। সুতরাং যাই (ভ্রাতা) নন্দনকে তিরস্কার করিয়া অথবা মপার

चन्दणं णिब्भच्छिअ मे पादपङ्कअं अब्भत्थिअ मालदीए उवरि अणुकूलइस्सं (५)। इति उत्थाय गन्तुमिच्छति।

मकरन्दो मुखमुद्घाट्य हस्तेन गृह्णाति। (७)

मद। सहि मालदि! विप्पबुद्धासि [ विलोक्य सहर्षं ससाध्वसम्] अम्मो अम्हं ज्जेव्व किं पि एदं वट्टदि (२)।

मक। रम्भोरु! संहर भयं चमले विसोढु-
मुत्कम्पितं स्तनभरस्य न मध्यभागः।

---

(२) सखि मालति! विप्रबुद्धासि। अम्मो अस्मदेव किमप्येतद्वर्त्तते।

---

त्रिष्वधातुलिरस्कारपरस्तावुचितत्वादाह—चपादेति। वा अथवा, तत्पादवन्दनं पादवन्दनेन सह यथा स्यात्तथा अभ्यर्थ्य "मालतीं प्रति सदयी भवे"ति याचित्वा, अनुकूलयिष्यामि अनुकूलं करिष्यामि।

(७) गृह्णातीति मदयन्तिकाहस्तमिति शेषः।

(२) मदेति. प्रतिबुद्धासि जागरितासि, किमित्यर्थ.। चिरप्रार्थितस्य मकरन्दस्याचिन्तितोपनतं दर्शनमत्र हर्षहेतुः, तत्समक्षमेव निर्लज्जया मया गुप्तः सर्व्वो मनोभावः प्रकटीकृत इति किमयं मन्यत इति परिचिन्तनं कन्यायाः पुरुषस्पर्शस्यानौचित्यञ्च भयहेतुः। "अम्मो" इति विस्मयद्योतकमव्ययम्। अस्मदेव मदवगताद्वाऽत्यवस्थानाद्भिन्नमेव, किमपि अनिर्व्वचनीयं एतन्ममाश्चर्यं मकरन्दस्यावस्थानं।

(८) रम्भोर्व्विति। हे रम्भोरु! कदलीस्तम्भाकारोरुदेशे! भयं साध्वसं संहर मुञ्च।

---

वन्दনে অভ্যর্থনা করিয়া মালতীর উপরে অনুকূল করিব। (এই কথা বলিয়া উঠিয়া যাইতে ইচ্ছা করিল)।

(৭) (মকরন্দ মুখ উদ্ঘাটিত করিয়া হস্তদ্বারা মদয়ন্তিকার হস্তধারণ করিল)।

(২) মদ। সখি মালতি! জাগরিতা হইয়াছ? (দেখিয়া হর্ষ ও ভয়ের সহিত) অহো আমার জ্ঞানের অতীত অনির্বচনীয় (মকরন্দের অবস্থান-রূপ) ব্যাপার বর্তমান।

(৮) মক। অয়ি! রম্ভোরু! ভয় পরিত্যাগ কর। যেহেতু (অত্যন্ত

इत्थं त्वयैव कथितप्रणयप्रसादः

सङ्कल्पनिर्वृतिषु संस्तुत एष दासः ॥　(८)

वृद्धवनिता मदयन्तिकामुखमुन्नमय्य संस्कृतमाश्रित्य ।　(१)

---

ऽङ्गारकरणे हेतुं दर्शयितुमाह—चमत इति। यस्मात् तव मध्यभागः सुमतीव कृशस्तव शरीरस्य मध्यांशः कटिदेश इति यावत्, स्तनभारस्य कुचभारस्य भारवत्कुचयोरिति यावत्, घतत्कम्पितं साध्वसजनितकम्पनं विषोढुं न चमते न शक्नोति। कियत्कालमेवं पीवरकुचकम्पने कुमालिकृशस्तव कटिदेशः भङ्क्ष्यतीति भावः। हेत्वन्तरं दर्शयति—इत्थमिति, इत्थं पूर्व्वोपवर्णितप्रकारेण त्वयैव कथितः स्वयमेव वर्णितः प्रणयः अनुराग एव प्रसादः अनुग्रहः यस्मिन् तादृशः एष मद्वचणो दासः भृत्यः सङ्कल्पनिर्वृतिषु गाढ़प्रणयवशात् सङ्कल्पजनितसमागमानन्देषु संस्तुतः परिचितः। (संस्तवः स्यात् परिचय इत्यमरः) तथाच दासत्वात् परिचितत्वाच्च नास्ति मत्तस्ते भीतिकारणमिति भयं सर्व्वथा परिहर्त्तव्यमिति भावः।

अत्र प्रथमवाक्यार्थं प्रति द्वितीयतृतीयवाक्यार्थयोर्हेतुत्वेनोपन्यासात् वाक्यार्थहेतुकं काव्यलिङ्गं, एवं कटिदेशस्य स्तनकम्पनसहनायत्तासम्बन्धेऽपि तत्सम्बन्धोत्कीर्त्तनादतिशयोक्तिरलङ्कारः। अपरञ्च दासत्वार्थे मकरन्देनात्मनः प्रयोगात् संचेपो नाम नाट्यालङ्कारो विज्ञेयः। तल्लचणन्तु दर्पणोक्तं यथा—"संचेपो यत्तु संचेपादात्मान्यार्थे प्रयुज्यते" इति। वसन्ततिलकावृत्तम् ॥

(१) अत्र स्नेहातिशयद्योतनार्थं सम्भाषयितुमर्थञ्च मुखोन्नमनं सखीत्वेन वैदग्ध्यार्थञ्च पूर्व्ववत् संस्कृताश्रयणमिति विभावनीयम्।

---

कृশ) তোমার কটিদেশ পীবরস্তনযুগলের উৎকম্পন সহ করিতে পারিবে না। বিশেষতঃ পূর্ব্বোক্তরূপে তুমিই যাহার প্রণয়রূপ অনুগ্রহের কথা বলিতেছিলে, সেই তোমার ভৃত্যভূত এই মদ্রক্ষ সঙ্কল্পজনিত সমাগমানন্দে পরিচিত। (সুতরাং দাসত্বহেতু ও পরিচিতত্ব নিবন্ধন আমা হইতে তোমার কোনও ভয়ের কারণ নাই)।

(১) (বৃদ্ধবনিতা মদয়ন্তিকার মুখ উন্নমিত করিয়া সংস্কৃত ভাষায় বলিতে লাগিল)।

प्रेयान्मनोरथसहस्रवृतः स एष
सुप्तप्रमत्तजनमेतदमात्यवेश्म ।
प्रौढ़ं तमः कुरु कृतज्ञतयैव भद्र-
मुत्क्षिप्तमूकमणिनूपुरमेहि यामः ॥१॥(१०)

---

(१०) प्रेयानिति । यः पूर्व्वं मनोरथसहस्रैः बहुतरमनोऽभिलाषैः त्वयैव वृतः प्रार्थितश्च लोकस्य, स तव प्रेयान् अत्यन्तप्रियतमः मकरन्दः एष अग्रतो वर्त्तमान इति शङ्काव्यतिरेकः । तथाचानेन सह गमने तव परपुरुषानुगमनं न भवेत्, मनोरथसिद्धिश्च भवेदिति भावः । एतत् अमात्यस्य भूरिवसोः वेश्म निकेतनं, सुप्ताः केचिन्निद्रिताः प्रमत्ताः अपरे जागरिता अपि विवाहोत्सवप्रमत्ततया अवधानरहिताश्च जना यस्मिन्, तथाभूतम् वर्त्तत इति शेषः । तथाचाधुनागमने एतद्विलक्षणितानामवलोकनशङ्का नास्तीति भावः । प्रौढं समन्तात् गाढं तमः अन्धकारम् अन्धकारागमनात् पुराद्बहिरपीति शेषः । तथाच गमने पथि गमने सम्प्रति नगरपालकादयोऽपि न पश्येयुरिति भावः । ( अतः सर्व्वथैवाधुनागमने शङ्काभावात् ) कृतज्ञतयैव प्राङ्मकरन्दकृतोपकारस्य प्रत्युपकारबुद्ध्यैव भद्रं भव्य, त्वेवानेन सह गमनरूपं आत्ममङ्गलं कुरु विधेहि । ननु धीरया गिरा मया पुरादवहिर्गमनेऽपि सति नूपुरशब्देनैव सर्व्वे जानीयुरित्याशङ्कयाह—उत्क्षिप्तेति । उत्क्षिप्तौ ऊर्द्ध्वदेशे समुत्तोल्य स्थापितौ अत एव मूकौ शब्दरहितौ मणिनूपुरौ यत्र तद्यथा स्यात्तथा एहि आगच्छ, यामः प्रस्थानं कुर्म्मः । अत्र मकरन्देन सह मदयन्तिकायास्तात्कालिकगमनरूपं महत्त्वं प्रति पञ्चानां प्रतिबन्धकाभावानां कारणत्वेनोपन्यासात् समुच्चयालङ्कारः । वसन्ततिलकावृत्तम् ।

---

(১০) মনোরথসহস্রদ্বারা যাহাকে পতিত্বে বরণ করিয়া আসিতেছিলে, সেই তোমার অত্যন্ত প্রিয়তম মকরন্দ এই তোমার অগ্রে বর্ত্তমান। এই অমাত্যগৃহে সম্প্রতি কেহ নিদ্রিত ও কেহ কেহ জাগরিত থাকিয়াও বিবাহমহোৎসবমত্ততায় অবধানরহিত। ( গৃহের বাহিরেও ) গাঢ় অন্ধকার। অতএব কৃতজ্ঞতাবশতঃই সম্প্রতি ইহার অনুগমনরূপ আত্মমঙ্গল বিধান কর। যেরূপে শব্দ না হয়, এরূপ ভাবে মণিনূপুর উঠাইয়া এস, আমরা যাই।

मद। सहि बुद्धरक्खिदे! कहिं उण अह्मेहिं गन्तव्वं (ल)

बुद्ध। जहिं ज्जेव्व मालदी (व)।

मद। किं णिव्वुत्तसाहसा मालदी? (श)

बुद्ध। अध इं। अण्णं अ तुमं भणासि। ("का अहं इमस्स" इत्यादि पठति) (ष)

---

(ल) सखि बुद्धरक्षिते! क्व पुनरस्माभिर्गन्तव्यम्।

(व) यत्रैव मालती।

(श) किं निर्वृत्तसाहसा मालती?

(ष) अथ किम्। अन्यच्च, त्वं भणसि काहमस्य।

---

(ल) मदयन्त्या गमनानुमोदनं ज्ञापयितुं पृच्छति—सखीत्यादिना।

(व) भीतसाहनाय मालत्या माधवानुसरणं ज्ञापयन्ती सकौतुकमुत्तरयति—यत्रेत्यादिना। अनेनौत्सुक्याद्यवस्थातोऽपि सूचित इति मन्तव्यम्।

(श) मदेति। निर्वृत्तं सम्पन्नं साहसं माधवेन सार्द्धमितो गमनरूपं साहसकर्म्म यस्याः सा तथाभूता।

(ष) अथ किमित्यस्युपगमे। मालती निर्वृत्तसाहसैवेत्यर्थः। तथाच तद्दृष्टान्तेन त्वयापि मकरन्देन सह सम्प्रति गन्तव्यमेवेत्याशयः। अधुना निर्व्विचारं मकरन्देन सह गमनस्यौचित्ये हेत्वन्तरं दर्शयति—अन्यच्चेत्यादिना। भणसि अतीतसामीप्ये वर्त्तमान-प्रयोगात् किञ्चित्पूर्व्वमेव त्वं "का अहं इमस्स" इत्यादि वाक्यमुक्तवत्यसीत्यर्थः। तथाच मकरन्दाभिप्रायानुसारिण्यौदानीं गमने वैमत्यप्रदर्शने तद्वाक्यस्यान्यथाचरणं भवेदिति भावः।

---

(ল) মদ। সখি বুদ্ধরক্ষিতে! এখন আমাদের কোথায় যাইতে হইবে?

(ব) বুদ্ধ।, যেখানে মালতী আছে।

(শ) মদ। মালতীরও কি মাধবের সহিত গমনরূপ সাহসিক কর্ম্ম নিষ্পন্ন হইয়াছে?

(ষ) বুদ্ধ। নিশ্চয়, মালতী মাধবের সহিত গিয়াছে। তুমিও ইতঃপূর্ব্বেই বলিয়াছ যে "এই শরীর সম্বন্ধে আমি কে?" ইত্যাদি (মদয়ন্তিকার পূর্ব্ববাক্য পাঠ)।

मदयन्तिका अश्रूणि पातयति। (११)

बुद्ध। महाभाग! दिष्ट्या खलु अत्ताणं पिअसहीए पडिवज्जसु (घ)।

मक। अद्योर्जितं विजितमेव मया किमन्यत्
अद्योत्सवः फलवतो मम यौवनस्य।
यन्मे प्रसादसुमुखेन समुद्यतेव
देवेन बान्धवधुरा मकरध्वजेन॥ (१२)

(घ) महाभाग! दत्तं खलु आत्मानं प्रियसख्या प्रतिपद्यस्व।

(११) विलापनवेलया आत्मनो हृदयस्य समर्पणं "इत्यदः पुनर्व्यर्थं वैदग्ध्यं मुहुरुपपादय"-मिति परिचिन्तनमात्राश्रुपातने हेतुः।

(घ) निःशब्दाश्रुपातदर्शनेनात्मसमर्पणे सम्मतिमनुमाय बुद्धरक्षिता कथयति—महाभागेति। प्रतिपद्यस्व भार्य्यात्वेन स्वीकुरु।

(१२) अद्येति। अद्य मया ऊर्जितं बलधारणं कृतं, मिथ्यमालाभात् (बलवत्त्रेन भूतमित्यर्थः)। विजितमेव मया लाभेनैव सर्वप्रकारविजयो लब्ध एव। अतएव अन्यत् किं, इतःपरं किमाकाङ्क्षणीयमस्ति? न किमपीत्यर्थः। तथा फलवतः एतल्लाभेनैव सफलस्य मम यौवनस्य अद्य उत्सवः परमो हर्षः जातः इति शेषः। यद्यस्मात् प्रसादसुमुखेन परमानुग्रहादनुकूलेन मकरध्वजेन कन्दर्पेण देवेन इयं मदयन्तिकाया सख्यं प्रदानरूपा बान्धवधुरा (बान्धवस्य धुरिति "धुरगपथस्ये"ति राजादित्वादत्प्रत्यये तदन्तात् स्त्रियामादेति सिद्धम्) बान्धवभारः बन्धुकृत्यमिति यावत्, उद्यता सम्यग्धृता। मकरध्वजेनैव मादे यौवनमिदं सफलमिति-त्याशयः।

अत्र तच्छब्दाभावेऽपि यच्छब्दस्योत्तरवाक्यगतत्वेन तदपेक्षाविरहान्न विधेयाविमर्शदोषः। वसन्ततिलकावृत्तम्।

(১১) মদয়ন্তিকা অশ্রুপাত করিতে লাগিল।

(ঘ) বুদ্ধ। মহাভাগ! প্রিয়সখি আত্মার্পণ করিতেছে, ভার্য্যারূপে গ্রহণ কর।

(১২) মক। প্রিয়তমালাভে আজ আমি বলধারণ করিলাম ও সর্ব-প্রকারে জয়লাভ করিলাম, অতএব ইতঃপর আর আমার আকাঙ্ক্ষণীয় কি

तदनेन पक्षद्वारेण निर्गत्य साधयामः। (१३)

[ निभृतं परिक्रामन्ति। ] (१४)

मक। अहो! निशीथनिःसञ्चाररमणीयता राजमार्गस्य। (१५)

तथा हि सम्प्रति—

प्रासादानामुपरि वलभीतुङ्गवातायनेषु
भ्रान्त्वाप्तः परिणतसुरागन्धसंस्कारगर्भः।

---

(१३) पक्षद्वारेण स्वड्किकया खिड्किद्वारेति प्रसिद्धेनेति यावत्। साधयामः गन्तव्य-देशं गच्छामः। तथाचोक्तं दर्पणे—"प्रायेण छन्नकः साधिर्गमिष्याने प्रयोज्यते इति।

(१४) निभृतं निःशब्दं यथा स्यात्तथा परिक्रामन्ति बहिर्गमनाय पादविक्षेपं कुर्व्वन्ति।

(१५) अहो इति आश्चर्य्ये। निशीथे अर्द्धरात्रे (अर्द्धरात्रनिशीथौ द्वावित्यमरः) निःसञ्चारेण प्राणिमात्रस्यैव गमनागमनादिविगमेन रमणीयता मनोहरता।

(१६) राजमार्गस्य रमणीयतावर्णनच्छलेन यूनामभिमतवधूमानिव्यसूचनं सुमर्थ्य-न्नदर्शयन्निकां पीठमाह्वयति—प्रासादानामित्यादिना। प्रासादानां हर्म्म्याणां उपरि उपरि-भागेषु वलभीनां सौधोर्द्धवेश्मनां (शुद्धान्ते वलभीचन्द्रशाले सौधोर्द्धवेश्मनि इति रभसः) तुङ्गवातायनेषु उच्चगवाक्षेषु भ्रान्त्वा परिभ्रम्य गवाक्षमार्गेण मध्ये प्रविश्येत्यर्थः, आप्तः निर्गतः अतएव परिणतसुरायाः पानार्थसंगृहीतपरिपक्वमदिरायाः गन्धस्य सौरभस्य संस्कारः स्वाश्रय-सुवासमाणुभिः साद्धे संक्रमणं गर्भे अभ्यन्तरे यस्य यथाभूतः। मान्यानां परस्परगन्धदीप्तं दरस्थगर्वितपुष्पस्रजां आमोदः गन्धः अस्यास्तीति तथोक्तः। तथा मुहुर्व्वारं वारं उपचितः आढ्यः क्षीतः उत्कटः कर्पूरस्य वासः गन्धः येन तथाभूतः वायुः पवनः यूना युवकानां अभिमत-

---

আছে? পরন্ত এই প্রিয়তমাগাতে সকল আমার যৌবনের আজ পরম উৎসব, যেহেতু অনুগ্রহবশে পবন অনুকূল কন্দর্পদেবেরই নবরত্নিকার অর্পণরূপ বন্ধুর ভাব ধারণ করিয়াছেন।

(১৩) তবে এস এই খিড়্‌কিদ্বারে বহির্গত হইয়া আমরা যাই।

(১৪) [illegible]

(১৫) মক। অহো এই অর্দ্ধরাত্রে প্রাণিমাত্রের গমনাগমনভাব প্রযুক্ত রাজমার্গের কি রমণীয়তা!

(১৬) প্রাসাদের উপরিভাগে প্রাসাদের সর্ব্বোচ্চ গৃহের উচ্চ গবাক্ষপথে পরিভ্রমণ করিয়া প্রত্যাবৃত্তিবশতঃ যাহার অভ্যন্তর পরিপক্ক মদিরাগন্ধের

माल्यामोदी मुहुरुपचितस्फीतकर्पूरवासो
वायुर्धूमामभिनवबधूसन्निधानं व्यनक्ति ॥ (१६)

( इति निष्क्रान्ताः सर्वे। ) (१७)

( इति मालतीमाधवे नन्दनविप्रलम्भो नाम सप्तमोऽङ्कः। (१८)

---

बधूसन्निधानं अभिनवविवाहयोग्यतां व्यनक्ति सूचयति। अन्यदा वायोः सन्धीरोपकत्वात्
सुरालाद्यवदूरेण गन्धीयस्यसम्भवादिति भावः।

अत्र धूमामभिनवबधूसन्निधानं इति वायोः सुवादियत्वस्य हेतुत्वेनोपन्यासात्
पदार्थहेतुकं काव्यलिङ्गमलङ्कारः। मन्दाक्रान्ता वृत्तम्॥

(१८) इतीति। नन्दनस्य विप्रलम्भः प्रतारणं यस्मिन् स नन्दनविप्रलम्भः। विवाहित-नन्दनपरिणेया मालती तु माधवेनैव परिणीय नीता, परन्तु निपुणमालतीवेशेन माधवमित्रमकरन्देन नन्दनं छलविवाहेन वञ्चयित्वा पुनः तत्पादपद्मं सुरमार्थिनं कन्दर्पाभिभूतं यं पादप्रहारेणाभिभूय मदयन् मदयन्तिकां मदयन्तिकायाश्चेतसः परं किं नाम सम्पादयेत् प्रतारण-मिति यद् वृत्तमस्य नाम "नन्दनविप्रलम्भ" इति मन्तव्यम्॥

इति काव्यसर्वतीर्थोपनामकश्रीकुञ्जविहारितर्कसिद्धान्तविरचितायां सप्तबोधिनीसमाख्यायां मालतीमाधवव्याख्यायां सप्तमाङ्कविवृतिः समाप्ता॥

---

মাল্যগন্ধযুক্ত এবং যে পুষ্পমাল্যের গন্ধযুক্ত ও বারেবারে উৎকট কর্পূরের গন্ধ আদান করিতেছে, তাদৃশ এই বায়ু ধূমকদিগের অভিনবিত জীব সান্নিধ্য সূচনা করিতেছে।

(১৭) ( সকলে নির্গত হইল )।

(১৮) ( মালতীমাধবের "নন্দনবিপ্রলম্ভ" নামক সপ্তমাঙ্ক সমাপ্ত )।

# अष्टमोऽङ्कः ।

ततः प्रविशति अवलोकिता । (१)

अव । वन्दिदा मए णन्दणावासपडिणिउत्ता भअवदी, ता जाव मालदीमाहवसआसं गच्छामि । [ परिक्रम्य । ] एदे दे णिव्वत्तिदगीह्मदिअहावसाणमज्जणा दीहिआतडसिलातलं अलङ्करन्ति मालदीमाहवा ता जाव उवसप्पामि (क) ।

इति निष्क्रान्ता । प्रवेशकः । (२)

---

(क) वन्दिता मया नन्दनावासप्रतिनिवृत्ता भगवती । तद्यावन्मालतीमाधवसकाशं गच्छामि । एतौ तौ निर्वर्त्तितग्रीष्मदिवसावसानमज्जनौ दीर्घिकातटशिलातलमलङ्कुरुतो मालतीमाधवौ । तद्यावदुपसर्पामि ।

---

(१) तत इति मदयन्तिकामादाय मकरन्दादीनां निष्क्रमणानन्तरमित्यर्थः । मालतीमादाय कामन्दकीविहारगतस्य माधवस्य प्रवेशसूचनाद्यवलोकिताप्रवेशः "सुविहितश्च तत्रैव वैवाहिकं द्रव्यजातमवलोकितये"ति षष्ठाङ्गगतकामन्दकीवाक्येनैव सूचित इति मन्तव्यम् ।

(क) अवेति । नन्दनवासात् प्रतिनिवृत्ता कृतकविवाहं सम्पाद्य विहारस्थानमागता भगवती कामन्दकी मया वन्दिता प्रणता । निर्वर्त्तितं अनुष्ठितं ग्रीष्मदिवसावसानस्य मज्जनं स्नानं याभ्यां तथाभूतौ । दीर्घिकातटशिलातलं सरोवरतीरस्थितप्रस्तरासनं अलङ्कुरुतः भूषयतः । उपसर्पामि तयोः समीपं गच्छामि ।

प्रवेशक इति । वन्दितेत्यादिवाक्येन कामन्दक्या गमनादिरूपस्यातीतकथांशस्य तद्याव-दित्यादिवाक्येन च वर्त्तिष्यमाणस्य मालतीमाधववृत्तान्तस्य संक्षेपेण निदर्शकत्वादुक्लिष्टितावलोकितावाक्यपाठोऽयम्प्रवेशक इत्यर्थः । तल्लक्षणमुक्तम् ।

---

(১) ( তৎপরে অবলোকিতার প্রবেশ ) ।

(ক) অব । নন্দনগৃহ হইতে প্রতিনিবৃত্তা ভগবতী কামন্দকীকে আমি প্রণাম করিয়াছি । তবে এখন মালতী ও মাধবের নিকট যাই । ( পরিক্রমণ করিয়া ) এই যে সেই মালতী ও মাধব গ্রীষ্মদিবসীয় সায়ংকালীন স্নান সম্পন্ন করিয়া সরোবরতীরের শীলাতল অলঙ্কৃত করিতেছে ।

ततः प्रविशतः उपविष्टौ मालतीमाधवौ अवलोकिता च । (३)

माध। [ स्वगतं सानन्दम् । ] वर्त्तते हि मन्मथप्रौढ़सुहृदो निशीथस्य यौवनश्रीः । तथाहि—(४)

दलयति परिशुष्यत्प्रौढ़तालीव पाण्डु-
स्तिमिरनिकरमुद्यन्नैन्दवः प्राक्प्रकाशः ।
वियति पवनवेगादुन्मुखः केतकीनाम्
प्रचलित इव सान्द्रो मन्दमन्दं परागः ॥ (५)

---

(४) माधेति । सानन्दमिति, मालत्या सहोपवेशनमेवात्र प्रधानतः आनन्दहेतुः । मन्मथप्रौढसुहृदः कामदेवसुखामहायस्य । निशीथस्य कामदेवसुहत्त्वञ्च तद्व्यापारानुकूल्य-साधनादिति मन्तव्यम् । अत एव निशीथाधिकारे वात्स्यायनेनाप्युक्तम् "सानन्दसाध्वसाः सततव्यवसायिन्यो भवन्ती"ति ।

(५) दलयतीति । परिशुष्यन्ती रौद्रीभावेन नीरसतां लभमाना प्रौढा परिणता च या ताली तालीपत्रं सद्वत् पाण्डुः शुभ्रवर्णः उद्यन् उद्गच्छन् ऐन्दवः इन्दुसम्बन्धी प्राक्प्रकाशः प्रथमविकाशः, अथवा प्राचि पूर्व्वस्यान्दिशि प्रकाशः तिमिरनिकरं अन्धकारनिचयं दलयति निवारयति । तथा पवनवेगात् वायोर्व्वेगात् वियति व्योम्नि उन्मुखः ऊर्द्धमुखः सान्द्र अविरलः मन्दं मन्दं शनैः शनैः प्रचलितः कृतप्रचलनः केतकीनां तत्पुष्पाणां पराग इव मन्यत इति शेषः ।

अत्र प्रथमार्द्धे श्रौतोपमालङ्कारः, द्वितीयार्द्धे तु वाच्या द्रव्योत्प्रेक्षेत्यनयोः परस्परनैर-पेक्ष्येण संसृष्टिः । मालिनीवृत्तम् ।

---

(২) ( অবলোকিতার প্রস্থান ) ( এই অংশের নাম প্রবেশক ) ।

(৩) ( তৎপরে উপবিষ্ট মালতী, মাধব ও অবলোকিতার প্রবেশ ) ।

(৪) মাধ। ( স্বগত আনন্দের সহিত ) কামদেবের মুখ্য সুহৃৎ নিশীথের যৌবনশ্রী বর্ত্তমান। দেখ—

(৫) রৌদ্রোত্তাপে শুষ্ক পরিণত তালীপত্রের ন্যায় পাণ্ডুবর্ণ চন্দ্রের প্রথম প্রকাশ উদ্গত হইতে হইতেই অন্ধকারসমূহের নিবারণ করিতেছে। এবং সেই চন্দ্রপ্রকাশ বায়ুবেগ বশতঃ আকাশে মন্দ মন্দ প্রচলিত উর্দ্ধমুখ অবিরল কেতকীপরাগ বলিয়া প্রতীয়মান হইতেছে ।

तत्कथं वामशीलां मालतीमुपावर्त्तये, भवतु एवं तावत्। [प्रकाशम्।] प्रिये मालति! मत्प्रयासयत्नस्नानविशेषशीतलां भवतीं निदाघसन्तापशान्तये विज्ञापयामि, तत्किमित्यन्यथैव मां सम्भावयसि ?। (६)

निश्चोतन्ते सुतनु ! कबरीबिन्दवो यावदेते,
यावन्मध्यः स्तनयुगलयोर्नार्द्रभावं जहाति।

---

(६) तदिति। वामशीलां मत्प्रतिकूलस्वभावां उपावर्त्तये स्वाभिप्रायानुकूलां करोमि। एवं तावदिति कथयामीति शेषः। मत्प्रयासेन नूतनेन अचिरसम्पादितेनेति यावत्, स्नानस्नानेन सायंकालीनमज्जनेन विशेषशीतलां समधिकशीतलस्वभावां भवतीं त्वां निदाघसन्तापशान्तये मदीयनैसर्गिकदीर्घसन्तापनिवारणाय (न तु कामजवासनापरिहृतार्थमिति सूचनार्थमेतत्) अथवा भवत्याः निदाघसन्तापशान्तये इत्यर्थ इति विवेचनीयम्। अन्यथैव मदुक्तविपरीतेनैव कामवासनापरिहृतिरूपेणैवेति यावत्, सम्भावयसि कल्पयसि। अत्र निदाघसन्तापेति सायंस्नानस्य प्रयत्नजन्यत्वं निदाघप्रशमनप्रयोजनकत्वात् स्नानस्य निर्विषयप्रतीयमानत्वेन कामजवासनया सम्भवाभावेन वा, अतएव न कामवासनाशीतार्द्रत्वात्मसङ्गतिरिति विभावनीयम्।

(७) विज्ञापनीयं विज्ञापयति निश्चोतन्त—इत्यादिना। हे सुतनु ! कमनीयकाये ! एते कबरीबिन्दवः स्नानार्द्रतया शिथिलीकृतकबरीकेशप्रान्तजलकणाः यावत् निश्चोतन्ते मन्दं मन्दं निपतन्ति। यावच्च स्तनयुगलयोः पयोधरयोर्मध्यः मध्यभागः (निबिडतया तत्रैव स्नानजलस्याधिकक्षणावस्थानसम्भवादिति भावः) आर्द्रभावं जलाभिषिक्ततां न जहाति, न त्यजति। यावच्च अङ्गयष्टिः यष्टिरिव तन्वङ्गं सान्द्राणां गाढानामविरलानामिति यावत्, प्रत्यग्राणां पुलकानां स्नानशीतलत्वात्सञ्जातानां रोमाञ्चानां चर्च्चां दधती अनुबध्नाति

---

(৬) তবে কিপ্রকারে আমার অভিপ্রায়ের প্রতিকূলস্বভাবা মালতীকে স্বাভিপ্রায়ের অনুকূল করিব? হউক এইরূপ বলি। (প্রকাশে) প্রিয়ে! মালতি! অচির সম্পাদিত সায়ংকালীন স্নান দ্বারা বিশেষরূপে শীতলতাপ্রাপ্ত তোমাকে আমার নিদাঘ সন্তাপশান্তির জন্যই জানাইতেছি,—তবে আমাকে অন্যরূপ মনে করিতেছ কেন?

(৭) অয়ি কমনীয়কায়ে! যে পর্যন্ত তোমার কবরীর জলবিন্দু মন্দ মন্দ নিপতিত হইবে, যে পর্যন্ত তোমার স্তনযুগলের মধ্যভাগ আর্দ্রভাব পরিত্যাগ না

यावत्सान्द्रप्रतनुपुलकोद्गे दवत्यङ्गयष्टि-
स्तावत् गाढ़ं वितर, सकृदप्यङ्गपालीं प्रसीद ॥ (७)

अयि निरनुक्रोशे !

जीवयन्निव समूढ़साध्वसस्वेदविन्दुरधिकण्ठमर्प्यताम् ।
वाहुरैन्दवमयूखचुम्बितस्यन्दिचन्द्रमणिहारविभ्रमः ॥ (८)

---

वितरेति शेष । तावत् गाढ़ं यथा स्यात्तथा सकृदपि एकवारमपि अङ्गपालीं आलिङ्गनं ( अङ्गपाली परीरम्भे धात्री वेदिकायाः स्त्रियामिति मेदिनी ) वितर अर्पय, प्रसीद अङ्गपाली-प्रदानेनैव प्रसन्ना भव । ईदृशी गौरकान्ति गाढ़ं देहेनैवालिङ्गनप्रदाने समधिकसन्तापनिवारण-सम्भवादिति भाव. ।

अत्र परस्मैपदिनस्तनधातोरात्मनेपदप्रयोगात् च्युतसंस्कृतिदोषः । अङ्गयष्टिरिति लुप्तोपमालङ्कार. । मन्दाक्रान्ता वृत्तम् । एवमित आरभ्य "दग्धं चिरात्"इत्यादि श्लोकान्त— सन्दर्भे अनुनयोनाम नाट्यलक्षणम् । तथाचोक्तम्—"वाक्यै: स्निग्धैरनुनयो भवेदर्थस्य साधन"मिति ।

(८) अयीति । निरनुक्रोशे ! निर्दये ! तया मदनप्रपीड़ितेऽपि यावत्कालं दयाया अप्रदर्शनादेवं सम्बोधनमिति मन्तव्यम् । ननु दयया किं कर्त्तव्यमित्याकाङ्क्षायामाह— जीवयन्निवेति । जीवयन्निव मदनबाधया बहिर्गतप्रायजीवनं मां जीवनं प्रापयन्निव वर्त्तमान., समूढाः सम्यग्भूताः साध्वसस्वेदविन्दवः भीतिभवघर्म्मजलकणाः येन तथाभूत., तथा ऐन्दव-मयूखैः चन्द्रसम्बन्धिकिरणैः चुम्बितः सम्पर्कित अतएव स्यन्दी जलकणकारी ( इन्दुकरस्पर्शे चन्द्रकान्तमणेर्जलक्षरणं भवतीति प्रसिद्धिः ) यः चन्द्रमणिहारः चन्द्रकान्तमणिविरचितहारः तस्य विभ्रवः विलास इव विभ्रमो यस्य तथाभूत. बाहुस्तव भुजः अधिकण्ठं मदीयकण्ठे ( विभक्त्यर्थे अव्ययीभावः ) अर्प्यतां सन्निवेश्यताम् । तत्सन्निवेशेनैव मां प्रति दया प्रदर्शिता भवेदिति भाव. ।

उत्तररामचरितेऽपि "समूढसाध्वसे"त्यत्र "सहाध्वसश्रमे"त्येतावन्मात्रेण भिन्न. अयमेव

---

করিবে, এবং যে পর্য্যন্ত তোমার অঙ্গযষ্টি অবিরল ও সূক্ষ্ম রোমাঞ্চের উৎপাদবতী থাকে, তাবৎকালমধ্যে আমাকে একবারও গাঢ় আলিঙ্গন দেও, এবং এই আলিঙ্গনদানে প্রসন্না হও।

(৮) অয়ি নির্দ্দয়ে! আমাকে জীবনধারণ করাইবার জন্যই যেন বর্ত্তমান ও ভীতিপ্রভব ঘর্ম্মবিন্দুধারী অতএব চন্দ্রকিরণসম্পর্ক বশতঃ জলক্ষরণকারী

अथवा, दूरे तावदेतत्, कथमालापसंविभागस्य अपि अभाजनम् अयं जनो भवत्याः। (९)

दग्धं चिराय मलयानिलचन्द्रपादै-
र्निर्वापितन्तु परिरभ्य वपुर्न नाम।
आमत्तकोकिलरुतव्यथिता तु हृद्या-
मद्य श्रुतिः पिबतु किन्नरकण्ठि! वाचम्॥ (१०)

---

श्लोकः सीतां प्रति रामेण कथितोऽयमर्थ इति श्लोकस्यास्य समतीव चमत्कारित्वं कवेरभिमतमिति मन्तव्यम्।

अत्र लुप्तोपमा, ओजयन्निवेति क्रियोत्प्रेक्षा चालङ्कारः इत्यनयोः संसृष्टिः। रथोद्धतावृत्तम्। तल्लक्षणन्तु—"रात्परैर्नरलगै रथोद्धता" इति।

(९) ननु नवोदया एतादृगनुष्ठानं सर्व्वथैवासम्भवमित्यत आह—अथवेति। एतत्कण्ठे भुजार्पणादिकं तावद्दूरे आस्तामिति शेषः। अयं मल्लक्षणो जनः कथं भवत्या आलापसंविभागस्यापि कथोपकथनस्यापि अभाजनं अनास्पदः। आलापपर्य्यन्ताकरणं सर्व्वथैवानुचितमिति भावः।

(१०) प्रार्थयन्नाह—दग्धमिति। वपुः त्वदर्शनेन कामपीड़ितस्य ममेदं शरीरं मलयानिलचन्द्रपादैः दक्षिणपवनेन्दुकरैः चिराय बहुकालं व्याप्य दग्धं नाम दग्धमिव (नामशब्दोऽत्र इवार्थकः) तु किन्तु परिरभ्य आलिङ्ग्य निर्व्वापितं त्वया निर्वृतिं न प्रापितं; तवानुचितमपि मद्दुर्भाग्यतो मे वरं सह्ये इति भावः। तु किन्तु हे किन्नरकण्ठि! किन्नरस्येव कण्ठस्वरो यस्यास्तादृशि! (स्वरे कण्ठः प्रकीर्त्तित इति रत्नकोषः) आमत्तानां मदप्रमुदितानां कोकिलानां पीकानां रुतेन कुहरवेण व्यथिता पीड़िता श्रुतिः मदीयः कर्णः अद्य अभीष्टां हृद्यां (अभीष्टेऽभीप्सितं हृद्यमित्यमरः) वाचं तव वचनामृतं पिबतु। मदीयतादृशरिरंसायां वचनामृतवर्षणेनापि कार्पण्यं त्वया न कर्त्तव्यमिति भावः।

---

চন্দ্রকান্তমণিনির্ম্মিত হারের শোভায় ন্যায় শোভাযুক্ত তোমার বাহু আমার কণ্ঠে অর্পণ কর।

(৯) অথবা, কণ্ঠে ভুজার্পণাদি দূরেই থাকুক, কিন্তু আমি তোমার কথোপকথনেরও পাত্র হইতেছি না কেন?

(১০) আমার শরীর বহুকাল যাবৎ মলয়ানিল ও চন্দ্রকিরণ দ্বারা দগ্ধপ্রায়

अव। [उपसृत्य।] अइ अणिव्वहणसीले। जं दाणिं मुहुत्तं अदिट्ठमाहवा दुम्मणाअन्ती मम पुरदो भणासि, चिराअदि अज्जउत्तो, अवि णाम केच्चिरेण पेक्खिस्सं, जेण विच्छड्डिआसेससज्झसा विसुमरिदणिमेसविग्घमवलोअअन्ती एव्वं भणिस्सं दिउणावेट्टन-परिरम्भेण सम्भावइस्सं त्ति सम्पदं तस्सिं दे अअं परिणामो। (ख)

(ख) अयि अनिर्वहणशीले! यदिदानीं मुहूर्तमात्रान्तरितमाधवापि दुर्मनायमाना मम पुरतो भणसि, चिरयति आर्यपुत्रः, अपि नाम कियच्चिरेण प्रेक्षिष्ये येन विच्छर्दिताशेषसाध्वसा विस्मृतनिमेषविघ्नमालोकयन्ती एवं भणिष्यामि, द्विगुणावेष्टनपरिरम्भेण सम्भावयिष्यामि इति। साम्प्रतं तस्मिंस्तेऽयं परिणामः।

अत्र ममतीव शीतलैर्मलयानिलचन्द्रपादैर्हा हन्त मधुरतरकोकिलरवैः स्वयस्यायायाथ वर्णनादापाततो विरोधमानेन मलयानिलादीनां कामोद्दीपकतया विरहिजननिपीडकत्वात्‌-परिहारेण च विरोधाभासालङ्कारः। वसन्ततिलकावृत्तम्।

(ख) अयीति। न विद्यते निर्वहणं अभीष्टनिर्व्वाहो यस्मिन् तथाभूतं शीलं स्वभावः यस्यास्तादृशि! चिरादीष्टं माधवं अभिप्रायसम्पादनोत्सुकं माम्प्रापि अभीष्टपूरणे प्रहस्य-दर्शनात्तथा सम्बोधनमिति मन्तव्यम्। मुहूर्त्तमात्रं अत्यल्पकालमात्रं अन्तरितो विप्रकृष्टः माधवो यस्यास्तथाभूता, अतएव दुर्म्मनायमाना विरहेण दुःखितान्तःकरणा, मम समीपवर्त्तिनी वर्त्तमाना! भणितमेव कथयति—चिरयतीत्यादिना इतीत्यन्तेन। चिरयति विलम्बं करोति, अपि नामेति प्रश्ने, कियच्चिरेण कियत्कालविलम्बेन। विच्छर्दितं विवर्जितं अशेष-साध्वसं समस्तभयं यया तथाभूता सती, विस्मृत. अत्यविषयीकृतः निमेष एव विघ्न. प्रतिबन्धकः यस्मिन् तदयथा स्यात्तथा अवलोकयन्ती भोगकाल पश्यन्ती, एवं भणिष्यामि "जीवित-नाथ! अतःपरं त्वया मां विहाय कुत्रापि स्थातव्य"मित्येवं कथयिष्यामि। द्विगुणं द्विगुणी-

हইয়াছে, তথাপিও তুমি আলিঙ্গন করিয়া নির্বৃতি লাভ করাইলে না। কিন্তু হে বিম্বরকণ্ঠি! মরমত্ত কোকিলের শব্দে পীড়িত আমার কর্ণ অন্ত চিরাভীষ্ট তোমার বচনামৃত পান করুক। (অর্থাৎ তুমি আলাপ কর!

(খ) অব। অয়ি অভীষ্টনির্ব্বাহাকরণস্বভাবে! মুহূর্ত্তমাত্র মাধব ব্যবহিত হইলে অত্যন্ত দুঃখিতচিত্তা হইয়া সম্প্রতিই তুমি বলিয়াছিলে যে, "আর্য্য-পুত্র বিলম্ব করিতেছে, কতকাল বিলম্বে (পুনরায় তাহাকে) দেখিব? যে হেতু

मालती। साभूयमिव तां पश्यति। (११)

माध। [स्वगतम्।] अहो! भगवतीप्रधानान्तेवासिन्याः सर्वतोमुखं वैदग्ध्यं, अक्षयश्च सुभाषितरत्नकोषः। [प्रकाशम्।] प्रिये! सत्यमवलोकिता वदति? (१२)

मालती। तिर्यङ्मूर्द्धानं चालयति। (१३)

माध। ग्रापितासि मया लवङ्गिकावलोकितयोर्जीवितेन यदि वाचा न कथयसि। (१४)

---

कृतं आवेष्टनं पृष्ठदेशे भुजयोः परिवेष्टनं यस्मिन् तद्यथा स्यात्तथा (एतेनालिङ्गनस्य गाढत्वं सूचितमन्यथा पृष्ठदेशे बाह्वोर्द्विगुणावेष्टनासम्भवादिति मन्तव्यम्) परिरभ्य आलिङ्गनेन, सम्भावयिष्यामि सम्वर्द्धयिष्यामि। तस्मिन् कथितविषये ते तव अयं आलापनेऽप्यप्रवृत्तिरूपः परिणामः समरव्यवहारः। सर्व्वथैवायं व्यवहारस्ते गर्हित इति भावः।

(११) साभूयमिवेति, अभूयाव्यञ्जकभ्रूविक्षेपादिसहितं यथा स्यात्तथैवेत्यर्थः। अवलोकितया स्वरहस्यस्य प्रकाशनमेवासाभूयाहेतुः। वस्तुतः प्रियतमान्तिके तादृग् रहस्य प्रकटनं न दोषावहमिति वास्तवासूयाविरहद्योतनार्थं इवशब्दप्रयोगः। तां अवलोकिताम्।

(१२) भगवतीप्रधानान्तेवासिन्याः कामन्दकीमुख्यशिष्याया अवलोकितायाः, सर्व्वतोमुखं सर्व्वविषयाप्रतिहतं वैदग्ध्यं नैपुण्यं। सुभाषितानि सुमधुरवचांस्येव रत्नानि तेषां कोषः आधारः अक्षयः क्षयरहितः। अन्यथैतादृशवचोविन्यासासम्भवादिति भावः।

(१३) मालत्यास्तिर्य्यङ्मूर्द्धचालनं अवलोकिताकथितार्थनिषेधद्योतनार्थम्।

---

সমস্ত ভয় পরিত্যাগ করিয়া নির্নিমেষ নেত্রে (প্রাণনাথকে) দেখিতে দেখিতে, "প্রাণনাথ, আর তুমি আমাকে ছাড়িয়া কোথাও থাকিও না" এই প্রকার বলিব, এবং দ্বিগুণিত বাহু বেষ্টনে আলিঙ্গন দ্বারা তাহাকে সম্বর্দ্ধিত করিব। সেই কথিত বিষয়ে সম্প্রতি তোমার এই পরিণাম? অর্থাৎ সম্মুখে পাইয়া তাহার সহিত আলাপেও বিমুখী হইতেছ।

(১১) (মালতী অসূয়াব্যঞ্জকভাবে অবলোকিতাকে দেখিতে লাগিল)

(১২) মাধব। (স্বগত) অহো! ভগবতীর প্রধান শিষ্যা অবলোকিতার নৈপুণ্য সর্ব্ব বিষয়েই অপ্রতিহত, সুভাষিতরূপ রত্নের আধার ও অক্ষয়। (প্রকাশে) প্রিয়ে! অবলোকিতা সত্যই বলিতেছে?

(১৩) (মালতী বক্রভাবে মস্তক চালনা করিল)

माल। नाहं किञ्चि जाणामि। (इत्यर्द्धोक्ते लज्जां नाटयति।) (ग)

माध। अहो! अनवसितार्थमन्थरस्य वचसश्चारुता। [ सहसा निरूप्य। ] अवलोकिते! किमेतत्?। (१५)

वाष्पाम्भसा मृगदृशो विमलः कपोलः
प्रक्षाल्यते सपदि राजत एष यस्मिन्।
गण्डूषपेयमिव कान्त्यमृतं पिपासु-
रिन्दुर्निवेशितमयूखमृणालदण्डः॥ (१६)

---

(ग) नाहं किमपि जानामि।

---

(१४) शापितासि शपथं कारितासि। वाचा सुस्पष्टवचसा न कथयसि न मनोभावं प्रकाशयसि। तथाच मूर्द्धचालनादिना मनोभिप्रायविकाशने न ममानुरोधरक्षा भवेदिति भावः। स्वस्मादपि लवङ्गिकावलोकितयोः प्रियतमत्व द्योतयितुमेव स्वजीवितोपेक्षेति समीचीनम्।

(ग) "तेन च निर्बध्यमाना नाहमेवं तत्त्वनोऽनवसितार्थं वचनं ब्रूया"दिति काम-सूत्रानुसारिणोत्तरयति—नाहं किमपि जानामीति। "येन भवदीयं मानसं विनोदयामी"-त्युत्तरार्द्धस्यानभिधानादाह—इत्यर्द्धोक्ते इति, अर्द्धस्य उक्ते कथने सतीत्यर्थः। लज्जां प्रमादेन त्रिस्पष्टाद्धाभिधानजनितां, नाटयति—मुखावनमनादिना अभिनयति।

(१५) माधेति। अनवसितार्थमन्थरस्य अपरिसमाप्तार्थमन्दोच्चारितस्य वचसः "नाहं"-मित्यादि मालतीवाक्यस्य चारुता मनोज्ञता।

(१६) वाष्पेति। विमलः स्वभावत एव मृगदृशः हरिणनयनायाः अस्याः मालत्याः कपोलः गण्डः सपदि सहसा वाष्पाम्भसा चक्षुर्जलेन प्रक्षाल्यते आप्लाव्यते "एतत् किं" किन्निमित्तक"-मिति गद्यार्थेनान्वयः। यस्मिन् कपोले गण्डूषेण अभ्यङ्गलिना पाणिना पेयं पानार्हं

---

(১৪) আমি লবঙ্গিকা ও অবলোকিতার জীবন দ্বারা তোমাকে শপথ করাইতেছি, যদি বাক্য দ্বারা মনোভাব প্রকাশ না কর।

(গ) মাল। আমি কিছুই জানি না। (এইরূপ অর্দ্ধমাত্র বলিয়া লজ্জার অভিনয় করিতে লাগিল)

(১৫) মাধ। অহো! অপরিসমাপ্তার্থ ও মন্দোচ্চারিত এই বাক্যের কি [illegible] (সহসা নিরূপণ করিয়া)

(১৬) অবলোকিতে! মালতীর নির্ম্মল কপোল দেশ সহসা নেত্রজলে

अव। तह ज्जेव्व सहीवण्णासिणीए एसा लवङ्गिआ ) ताए पउत्तिणिमित्तं उक्कण्ठदि। (च) ) (ख)

माध। ननु इदानीमेव मया कलहंसकः प्रेषितः, प्रच्छन्नं सन्निपत्य नन्दनावासप्रवृत्तिमुपलभस्वेति। [ साशंसं। ] अवलोकिते! अपि नाम बुद्धरक्षिताप्रयत्नः सफलोदर्क एव मदयन्तिकां प्रति स्यात्? (१८)

अव। कुदो सन्देहो महाणुभावस्स? महाभाअ! पढमं ज्जेव्व सद्दूलपरित्तासट्ठिदस्स मकरन्दस्स माहविरामक्खेवं णिवेद-

---

(च) तथैव सखीपयोदन्यासिन्या एषा लवङ्गिका तस्याः प्रवृत्तिनिमित्तमुत्कण्ठते।

(छ) कुतः सन्देहो महानुभावस्य? महाभाग! प्रथममेव शार्दूलपरित्रासकृतस्य

---

(च) सखीपयोदन्यासिना "शापितासी"त्यादि पूर्व्वोक्तमदयन्तिकावचने, लवङ्गिकाया नामाभिधानेन, तस्याः लवङ्गिकायाः, प्रवृत्तिनिमित्तं मकरन्देन सह सङ्गतायास्तस्याः किं वृत्तमिति वृत्तान्तमवाप्तये, उत्कण्ठते उत्कण्ठिता भवति।

(१८) माधवेति। प्रच्छन्नं गुप्तं यथा परैरपरिज्ञातं इति यावत्, सन्निपत्य गत्वा नन्दनावास-प्रवृत्तिं नन्दनवासगृहस्य वृत्तान्तं लभस्व जानीहि। तथाच अल्पकालेनैव कलहंस आगत्य तद्वृत्तान्तं ज्ञापयिष्यतीति भावः। सफलः मकरन्देन सह मदयन्तिकाया निर्गमनरूपेणाभिलषित-फलेन सहित उदर्कः उत्तरफलं यस्य तथाभूतः बुद्धरक्षिताप्रयत्नः मदयन्तिकां प्रति स्यात् भवेत् अपिनाम किं? बुद्धरक्षिताप्रयत्नेन मदयन्तिका मकरन्देन सह पलायिष्यति किमित्यर्थः?

(छ) अवेति। महानुभावस्य भवतः, कुतः सन्देहः मकरन्देन सह मदयन्तिकाया-

---

(চ) অব। তোমারই "শাপিতাসি" ইত্যাদি বাক্যে নামোল্লেখ কারণ বশতঃ লবঙ্গিকাকে স্মরণ করিয়া তাহার সংবাদ পাইবার জন্য মালতী উৎকণ্ঠিতা হইয়াছে।

(১৮) মাধ। সম্প্রতিই আমি কলহংসকে পাঠাইয়াছি যে, গোপনে যাইয়া নন্দনের বাসগৃহের বৃত্তান্ত জানিয়া আস। (আশংসার সহিত) অবলোকিতে! মদয়ন্তিকার প্রতি বুদ্ধরক্ষিতার প্রযত্নের উত্তরফল মকরন্দের সহিত মদয়ন্তিকার আগমনরূপ আমাদের অভিলষিত ফলশালী হইবে ত?

अन्तीए मालदीए भअवदीए णिउत्तेण भवदा समं जीविदेण, हिअअं पसादीकिदं। जइ कोवि तुमं मदअन्तिआलम्भेण सम्पदं वड्ढावेदि, किं तस्स पारिदोसिअं भविस्सदि? (क)

माध। अनयानुयोक्तव्यमनुयुक्तोऽस्मि। [हृदयमवलोक्य] इयमस्ति मालतीप्रथमदर्शनाभिषङ्गसाक्षिणः कामकाननालङ्कारस्य लक्ष्मीवतः केसरतरोः प्रसवमाला। (१८)

---

मकरन्दस्य मोहविराममहोत्सवं निवेदयन्त्यै मालत्यै भगवत्या नियुक्तेन भवता जीवितेन समं हृदयं प्रसादीकृतं, यदि कोऽपि त्वां मदयन्तिकालम्भेन सम्प्रति वर्द्धयति तदा किं तस्य पारितोषिकं भविष्यति।

---

निःसरणे कस्मात् संशयः, कथमपि सन्देहो न कर्त्तव्य इत्यर्थः। सुचतुरमवलोकिता मालत्यै आलापावसरप्रदानस्यानुरूपं प्रत्युत्थापयति—महाभागेत्यादिना। मोहविरामः चैतन्यप्राप्तिः स एव महोत्सवस्तं। भगवत्या नियुक्तेन कामन्दक्या इङ्गितेन, प्रसादीकृतं सानुग्रहमर्पितं। मदयन्तिकालम्भेन मकरन्दस्य मदयन्तिकालाभरूपवार्त्ताया निवेदनेन, वर्द्धयति वृद्धिं प्रापयति। किं तस्य पारितोषिकं भविष्यति? भवान् तस्मै किं पारितोषिकं दास्यतीत्यर्थः।

(१८) अनया लवङ्गिकया, अनुयोक्तव्यं प्रष्टव्यं अनुयुक्तोऽस्मि पृष्टोऽस्मि, मदीयमालतीप्राप्तिवत् मकरन्दीयमदयन्तिकाप्राप्तेरपि परमहर्षहेतुत्वादिति भावः। हृदयमवलोक्येति, पारितोषिकप्रदानयोग्यं हृदये किमस्तीति निरूपणेन हृदयावलोकनहेतुः। मालत्याः प्रथमदर्शनेन यः अभिषङ्गः अनुरागः तस्य साक्षिणः मनोभवस्थानेन साक्षीभूतस्य, कामकाननालङ्कारस्य मदनोद्यानभूषणस्वरूपस्य लक्ष्मीवतः (ईकारान्तत्वेऽपि मोपधत्वाद्वतुः) श्रीमतः केसरतरोः बकुलपादपस्य कुसुममाला पुष्पनिर्म्मिता स्रक्।

---

(ছ) অব। আপনার (এ বিষয়ে) সংশয় কেন? অয়ি মহাভাগ! প্রথমেই আপনি কামন্দকী-প্রেরিত হইয়া শার্দ্দূল নখরাঘাত মকরন্দের মূর্চ্ছা-ভঙ্গরূপ মহোৎসবের নিবেদিকা মালতীকে জীবনের সহিত হৃদয় সানুগ্রহে অর্পণ করিয়াছেন। যদি কেহ সম্প্রতি মকরন্দের মদয়ন্তিকালাভরূপ বৃত্তান্তের নিবেদন দ্বারা আপনাকে বর্দ্ধিত (সন্তুষ্ট) করে, তবে তাহার কি পারিতোষিক হইবে?

(১৮) মাধ। এইয়া বিষয়ই অবলোকিতা জিজ্ঞাসা করিয়াছে। (হৃদয়

प्रेम्णा मद्ग्रथितेति या प्रियसखीहस्तोपनीतानया,
विस्तारिस्तनकुड्मलभरोत्सङ्गेन सम्भाविता ।
सम्प्राप्ते त्वयि पाणिपीडनविधौ मां प्रत्यपेताशया
सा मध्येव लवङ्गिकैव्यवगतं सर्वस्वदायीकृता ॥ (२०)

(२०) मालत्या वैशिष्ट्यं दर्शयति—प्रेम्णेत्यादिना। या बकुलमाला अनया मालत्या मद्ग्रथिता मयैव समुद्गीकृत्य विरचिता इति हेतोः प्रियसख्याः लवङ्गिकायाः हस्तेन उपनीता समानीता प्रेम्णा अनुरागेण विस्तारिस्तनकुड्मलभरोत्सङ्गेन विशालभारवत् कुचकमल-कलिका क्रोडेन सह विधारणात् ऋजुमानतया विशालकुचोपरिसंस्थापनेनेति यावत्, सम्भाविता गौरवं प्रापिता। तु किन्तु अथ अनन्तरं पाणिपीडनविधौ नन्दनेन सह विवाहोद्योगे सम्प्राप्ते नन्दनानुरोधात् उपगते सति मां प्रत्यपेताशया मत्प्राप्ती हताशया तया लवङ्गिकाव्यवगते लवङ्गिकैवानुसरेण तत्तत्परित्यक्तताहीनत्वाने दृश्यमानतया लवङ्गिकाद्वैनैवावधारिते इत्यर्थः (पश्चाद्भवनमालाप्रदानप्रसन्नोऽस्वानुसन्धेयं) मध्येव या बकुलमाला सर्वस्वदायीकृता सर्वस्वदर्पिता। (दीयत इति दायः कर्माधिकारात् कर्मणि घञ्, सर्वस्वमिव दायः सर्वस्वदायः, असर्वस्वदायः सर्वस्वदायः कृत इति सर्वस्वदायीकृता) तथाचेयमेव बकुलमाला मम जीवितादप्यधिकेति मद्यन्तिकालाभसम्पादननिमित्तकाय पारितोषिकत्वेन मया दात्तव इति भावः।

अत्र स्तनयोः कुड्मलेन कुड्मलसादृश्यं वर्हिणुस्था च कुड्मलसादृश्यमिति लुप्तोपमालङ्कारः। शार्दूलविक्रीडितं वृत्तम्।

অবলোকন করিয়া) মালতীর প্রথম দর্শনজনিতানুরাগের সাক্ষীভূত মহনো-ত্থানের অলঙ্কারস্বরূপ ও শ্রীযুক্ত বকুলকুসুম নির্ম্মিত এই মালা আছে।

(২০) সেই বকুলমালা আমার গ্রথিত বলিয়া এই মালতী কর্তৃক প্রিয়-সখী লবঙ্গিকাহস্তে সমানীত হইয়া অনুরাগ বশতঃ বিশালতাবিশিষ্ট স্তনকুড্মল-কুট্টোৎসঙ্গ দ্বারা গৌরবান্বিত হইয়াছিল। কিন্তু অনন্তর নন্দনের সহিত বিবাহের উদ্যোগ উপগত হইলে আমার প্রাপ্তি বিষয়ে হতাশা মালতী কর্তৃক লবঙ্গিকারূপে অবধারিত আমাতেই (আবার) সে বকুলমালা সর্ব্বস্বরূপে অর্পিত হইয়াছিল। (আমার জীবনাধিক সেই বকুলমালাই পারিতোষিক প্রদান করিব)।

लव। सहि मालदि! वल्लहा क्खु दे इअं बउलमाला, तदो अवहिदा भव, मा दाणिं एसा सहसा ज्जेव्व परहत्थगदा भविस्सदित्ति। (ज)

माल। पिअं पिअसही मे उवदिसदि। (झ)

लव। कधं पदसद्दो विअ। (ञ)

माध। [नेपथ्याभिमुखमवलोक्य।] अये! कलहंसकः प्राप्तः। (२१)

माल। दिट्ठिआ वड्ढसि मदअन्तिआलम्भेण! (ट)

---

(ज) सखि! मालति! वल्लभा खलु इयं ते बकुलमाला, ततोऽवहिता भव, मा इदानीमेषा सहसैव परहस्तगता भविष्यतीति।

(झ) प्रियं प्रियसखी मे उपदिशति।

(ञ) कथं पदशब्द इव।

(ट) दिष्ट्या वर्द्धसे मदयन्तिकालाभेन।

---

(ज) अवेति। अवहिता मकरन्दस्य मदयन्तिकालाभवृत्तान्तप्रथमकथनं प्रति सावधाना भव, विदितवृत्तान्ता त्वमादितः विज्ञाय त्वमेव प्रथमं कथयेति भावः। ततः किं फलमित्याह—मेति। अन्यथा मकरन्देन केनचित्तद्वृत्तान्तमभिधाय मालेयं ग्रहीष्यत इत्यर्थः।

(झ) प्रियं अनुकूलं। अथात्र प्रियत्वात्तदुपदेशानुसारेणैव वर्त्तिष्ये इति भावः।

(ञ) पदशब्द इवेति, श्रूयत इति शेषः।

(२१) प्राप्तः नन्दनावासात् प्रतिनिवृत्त्यागतः।

---

(জ) লব। সখি মালতি! এই বকুলমালা তোমার অত্যন্ত প্রিয়, অতএব তুমি সাবহিতা হও, যেন। ইদানীং সহসাই এই মালা পরহস্তগতা না হয়।

(ঝ) মাল। প্রিয়সখী আমাকে প্রিয় উপদেশই করিতেছে।

(ঞ) লব। পদশব্দের ন্যায় শুনা যাইতেছে কেন?

(২১) মাধ। (নেপথ্যাভিমুখে অবলোকন করিয়া) অহো!! কল-হংসক আসিয়াছে।

माध। [ सहर्षं परिष्वज्य। ] प्रियं नः। आत्मनः कण्ठादवतार्य्य बकुलमालां ददाति। (२२)

अव। णिव्वूढो क्खु भअवदीए सम्भावणाभारो बुद्धरक्खिदाए। (ढ)

माल। [ सहर्षं ] अम्महे पिअसही लवङ्गिआवि दीसइ। (ड)

सर्वे उत्तिष्ठन्ति। (२३)

ततः प्रविशन्ति सम्भ्रान्ताः कलहंसमदयन्तिकाबुद्धरक्षितालवङ्गिकाः। (२४)

---

(ढ) निर्व्यूढः खलु भगवत्याः सम्भावनाभारो बुद्धरक्षितया।

(ड) अम्महे प्रियसखी लवङ्गिकापि दृश्यते।

---

(ट) अधुनैव मदयन्तिकालाभवृत्तान्तं निवेद्य कलहंसकं बकुलमालां गृहीत्वाहिततामहर कलहं सा। पृथक्पृथग्विमृश्यमनपेक्षैवानुमानमात्रेण बकुलमालाभिज्ञोत्सुका मालती माधवं प्रत्याह—दिष्ट्येति। मदयन्तिकालाभेन मकरन्दस्य मदयन्तिकाप्राप्त्या।

(२२) परिष्वज्य प्रियनिवेदिकां मालतीं परिरभ्य। प्रियमिति इदं मदयन्तिकालाभ-वृत्तान्तनिवेदनमित्यादि। ददाति प्रियनिवेदनपारितोषिकत्वेन मालतीकण्ठे समर्पयति।

(ढ) अवेति। भगवत्याः कामन्दक्याः सम्भावनाभारः मदयन्तिकालाभसम्पादनगौरवं बुद्धरक्षितया निर्व्यूढः घृतः मदयन्तिकालाभसम्पादनेन सफलतां नीत इति यावत्।

(ड) "अम्महे" इति विस्मयसूचकमव्ययम्।

(२३) सर्वे अवलोकितामालतीमाधवाः उत्तिष्ठन्ति, मदयन्तिकालाभहेतोरानन्दात्-कण्ठ्या दृश्यमाना भवन्ति।

---

(ট) মাল। ভাগ্যক্রমে মকরন্দের মদয়ন্তিকালাভ আমা বৃদ্ধি লাভ করিয়াছেন।

(২২) মাধ। (হর্ষের সহিত মালতীকে আলিঙ্গন করিয়া) এই মদয়ন্তিকালাভবৃত্তান্ত নিবেদন আমার অত্যন্ত প্রিয়। (নিজের কণ্ঠ হইতে উঠাইয়া বকুলমালা অর্পণ করিল)।

(ঠ) অব। ভগবতীর কার্য্য সম্পাদন গৌরব বুদ্ধরক্ষিতা কর্ত্তৃক র[illegible]ত হইয়াছে।

(ড) মাল। অহো! প্রিয়সখী লবঙ্গিকাকেও দেখিব।

(২৩) (সকলের উত্থান)

लवङ्गिका। परित्तायदु परित्तायदु महाभाओ, अद्धमग्गे क्खु णअररक्खिपुरुसाभिजोओ मअरन्दस्स जादो, तदो तक्कालमिलिदेण कलहंसएण सहिदा अह्मे अणुप्पेसिदाओत्ति। (ढ)

कल। जधा इदो मुहागदेहिं अह्मेहिं महन्तो जोधकलकलो सुदो, तधा तक्केमि अण्णम्पि पारक्कं बलं उवगदंत्ति। (ण)

माल। अवलोइदे! हद्धी हद्धी! समआलं ज्जेव्व हरिसुव्वेअसम्भेदो उवगदो। (त)

---

(ढ) परित्रायतां परित्रायतां महाभाग। अर्द्धमार्गे खलु नगररक्षिपुरुषाभियोगो मकरन्दस्य जातस्तत्कालमिलितेन कलहंसकेन समं वयमत्रानुप्रेषिता इति।

(ण) यथा इतो मुखागतैरस्माभिर्महान् युद्धकलकलः श्रुतस्तथा तर्कयामि, अन्यदपि पारक्यं बलमुपगतमिति।

(त) अवलोकिते! हा धिक्! हा धिक्! समकालमेव हर्षोद्वेगसम्भेद उपगतः।

---

(२४) ततः इति। सम्भ्रान्ताः भयविह्वलाः।

(ढ) अर्द्धेति। नगररक्षिपुरुषैः नगररक्षार्थं राजनियुक्तैर्लोकैः अभियोगः सङ्घर्षः। तत्काले तस्मिन् अभियोगसमये मिलितेन सहसा अस्माभिः सह सङ्गतेन। अनुप्रेषिताः तदाश्रयदानार्थं अवरोधनाशङ्कानिवृत्त्यर्थञ्च मकरन्देन तत्सन्निधौ प्रेरिताः।

(ण) पारक्यं बलं परकीयं सैन्यम्, उपगतं नगररक्षिभिः सह सम्मिलितम्।

(त) समेति। समकालमेव एककालमेव यथा स्यात्तथा हर्षो मदयन्तिकालाभनिमित्तकः उद्वेगश्च रक्षिपुरुषाभियोगनिमित्तकः तयोः सम्भेदः सम्मेलनं उपगतः उपस्थितः।

---

(২৪) (তৎপরে ভয়বিহ্বল কলহংস, মদয়ন্তিকা, লবঙ্গিকা ও বুদ্ধরক্ষিতার প্রবেশ)।

(ঢ) লব। মহাভাগ! রক্ষা করুন রক্ষা করুন, অর্দ্ধপথে নগররক্ষী (পাহারা ওয়ালা) পুরুষদিগের সহিত মকরন্দের সঙ্ঘর্ষ হইয়াছে। তৎপরে সেই সঙ্ঘর্ষকালে কলহংসকের সহিত আমরা এস্থানে প্রেরিত হইয়াছি।

(ণ) কল। আমরা এই মুখে আসিতে আসিতে যেরূপ যুদ্ধকলকল শুনিয়াছি, তাহাতে মনে হয়, পরকীয় সৈন্যও নগররক্ষিদের সহিত সম্মিলিত হইয়াছে।

माध। सखि मदयन्तिके! स्वागतमेह्येहि, अनुगृहीतमस्मद्-गृहं भवत्या। ननु स एवासौ, माभूत् परिभवोद्वेगः, किमित्यस्वस्था भवती, एकाकिनो बहुभिरभियोग इति न किञ्चिदेतद्वयस्यस्य। पश्य—(२६)

हरेरतुलविक्रमप्रणयलालसस्याहवे,
स एव भवति क्षणात्कररुहप्रचण्डः सखा।

---

(२५) माधवेति। स्वागत सुखेन आगतं किमिति काकुः। एह्येहीति आदरातिशय-द्योतनार्थं द्विरुक्तिः। अनुगृहीतमिति आगमनेनेत्यादि। असौ मकरन्दः स एव शार्दूला-क्रमणकाले यस्य वीरत्वं प्रत्यक्षीकृतं भवत्या स एवेत्यर्थः। ततः किमित्यत आह—माभूदिति। परिभवोद्वेगः परिभवाशङ्काजनितचित्तचाञ्चल्यं माभूत्, न उत्पद्यताम्। तथापरस्वास्थ्यचिह्न-मालोक्य पृच्छति—किमिति। नन्वेकाकिनमस्य बहुभिराक्रमणं दृष्टवत्या मम कथं सुस्थतेत्यत आह—एकाकिन इति। एकाकिनः सहायपुरुषान्तररहितस्य बहुभिरभियोगः इत्येतत् न किञ्चित् न गणनीयम्। कस्मात् गणनीयमित्यत आह—पश्येति।

(२६) हरेरिति। आहवे युद्धे अतुलविक्रमे अनतिमपराक्रमप्रकाशे यः प्रणयः प्रीतिः तत्र लालसा तृष्णा यस्य तथाभूतस्य हरेः सिंहस्य, क्वणद्भिः गजास्थिसम्पर्केण मन्दं कुर्वद्भिः कररुहैर्नखरैः प्रचण्डः भीषणः, तथा स्फुरतोः कोपेन कम्पमानयोः करटयोर्गण्डयोः (करटो गण्डौ करटावित्यमरः) कोटराद्भ्यन्तरात् स्खलितेन निर्गतेन दानेन मदवारिणा सिक्तं प्रान्तं आननं वदनं यस्य तथाभूतस्य द्विपेश्वरस्य गजश्रेष्ठस्य शिरसः मस्तकस्य स्थिराणि

---

(ত) মাধ। অবলোকিতে। হা ধিক্। হা ধিক্। এক সময়েই হর্ষ ও বিষাদের সম্মেলন উপস্থিত।

(২৫) মাধ। সখি মদয়ন্তিকে! সুখে আসিয়াছ ত? আগমন দ্বারা তুমি আমার গৃহ অনুগৃহীত করিলে। শার্দূলাক্রমণকালে যাঁহার বিক্রম পরীক্ষা করিয়াছ, সেই এই মকরন্দ, অতএব পরিভবাশঙ্কাজনিত উদ্বেগ যেন না হয়। তুমি এত অস্বস্থা হইলে কেন? একাকীর বহুলোকের সহিত অভিযোগ ইহা বয়স্যের পক্ষে অকিঞ্চিৎকর। দেখ—

(২৬) যুদ্ধে অতুলনীয় পরাক্রম প্রকাশবিষয়ক প্রীতিতে সতৃষ্ণ সিংহের গজাস্থিসম্পর্কে শব্দায়মান নখদ্বারা ভীষণ এবং ক্রোধকম্পিত গণ্ডযুগলের

स्फुरत्करटकोटरस्खलितदानसिक्तानन-
द्विपेश्वरशिरःस्थिरास्थिदलनैकवीरः करः ॥ (२६)

तदहमपि विक्रमानुरूपं विलसतः प्रियसुहृदः प्रत्यनन्तरो भवामि । इति विकटं परिक्रामन् कलहंसकेन सह निष्क्रान्तः । (२७)

अवलोकितालवङ्गिकाबुद्धरक्षिताः । अवि णाम अणाहदा पडिणिअत्तिस्सन्ति एदे महाणुभावा ? (ध)

---

(ध) अपि नाम अनाहतौ प्रतिनिवर्त्स्येते एतौ महानुभावौ ।

---

कठिनानि यानि अस्थीनि तेषां दलने विचूर्णने एक अद्वितीय, वीरः सामर्थ्यशाली स प्रसिद्धः करः स्वकीयहस्तः एव सखा सहायः भवति । यथेभदलने हरेः स्वकीयकरस्यैव सामर्थ्यवत्तया न सहायान्तरापेक्षा, तथैव मकरन्दस्य राजकीयसैन्यदमनेऽपि निजभुजयोरेव सामर्थ्यशालितया न सहायान्तरापेक्षेत्यर्थः । तथाच नास्ति ते किञ्चिदपरसाहाय्यकारणमिति भावः ।

अत्राप्रस्तुतात् प्रस्तुतस्य प्रतीतेरप्रस्तुतप्रशंसालङ्कारः । स च मकरन्दस्यातीव बलशालित्वं सूचयतीत्यलङ्कारेण वस्तुध्वनिः । पृथ्वीवृत्तम् ।

(२७) तदिति । विक्रमानुरूपं पराक्रमोपयुक्तं यथा स्यात्तथा विलसतः युध्यमानस्य प्रियसुहृदः मकरन्दस्य प्र अनन्तरः प्रकाश्यमानसन्निहितः साहाय्यकारीत्यर्थः ।

"साहाय्यं सङ्कटे यत् स्यात् सानुकूल्यं परस्य च" इति लक्षणादस्य "साहाय्यं नाम नाट्यालङ्कारः ।

(ध) अनाहतौ अक्षतशरीरौ, महान् अतिशयः अनुभावः प्रभावो ययोस्तथाभूतौ माधवमकरन्दावित्यर्थः ।

---

অত্যন্ত হইতে নির্গত মদবারিদ্বারা যাহার আনন অভিষিক্ত তাদৃশ গজেন্দ্রের মস্তকস্থিত কঠিনাস্থির বিচূর্ণনে অদ্বিতীয় সামর্থ্যশালী প্রসিদ্ধ স্বকীয় হস্তই (একমাত্র) সহায় হইয়া থাকে।

(২৭) অতএব আমিও বিক্রমানুরূপে যুধ্যমান প্রিয় সুহৃৎ মকরন্দের সাহায্যকারী হইতেছি। (বিকট পরিক্রমণ করিতে করিতে কলহংসকের সহিত মাধব নিষ্ক্রান্ত হইল)।

(ধ) অবলোকিতা, লবঙ্গিকা ও বুদ্ধরক্ষিতা। এই মহানুভব মাধব ও মকরন্দ (অবশ্যই) অক্ষত শরীরে প্রতি নিবৃত্ত হইবে।

माल। सहियो अवलोइदाबुद्धरक्खिदाओ! तुरिअं गदुअ भअवदीए इमं वुत्तन्तं णिवेदह, तुमम्पि पिअसहि लवङ्गिए! तुरिदं विण्णवेहि अज्जउत्तं जइ ताव तुह्माणं अह्मे अणुकम्पणीआ तदो अप्पमत्ता परिक्कमेत्ति। निष्क्रान्ता अवलोकितालवङ्गिकाबुद्धरक्षिताः। (द)

माल। हद्धी! हद्धी! ण आणीअदि लवङ्गिआ किं चिराअदि कधं एत्तिआ वेला गमिअदुत्ति, भोदु, पिअसहि मदअन्तिए! पिअसहीए लवङ्गिआए पडिणिउत्तिमग्गमणुगमिस्सं। (परिक्रामति) (सातङ्कं) स्फुरिदं वामदरेण लोअणेण। (उपविशति)। (ध)

---

(द) सख्यौ अवलोकिताबुद्धरक्षिते। त्वरितं गत्वा भगवत्या इमं वृत्तान्तं निवेदयतम्। त्वमपि प्रियसखि लवङ्गिके! त्वरितं विज्ञापय आर्य्यपुत्रं यदि तावद्युष्माकं वयमनुकम्पनीयाः, ततोऽप्रमत्ता परिक्रामतेति।

(ध) हा धिक्! हा धिक्, न ज्ञायते लवङ्गिका किं चिरायति, कथमेतावती वेला गम्यतामिति, भवतु प्रियसखि मदयन्तिके! प्रियसख्या लवङ्गिकायाः प्रतिनिवृत्तिमार्गमनुगमिष्यामि। स्फुरितं वामेतरेण लोचनेन।

---

(द) अनुकम्पनीयाः यथायोग्याः, अप्रमत्ता अनवधानताविरहिताः।

(ध) मालतीति। चिरायति आगन्तुं विलम्बते। एतावती वेला लवङ्गिकाप्रत्यावर्त्तनावधिकः कालः कथं केन प्रकारेण गम्यता तथा अतिपात्यताम्। दुश्चिन्तायाः कमम एव हेतुरिति भावः। प्रतिनिवृत्तिमार्गं प्रत्यागमनवर्त्म अनुगमिष्यामि अनुसरिष्यामि, तथाच तदनुसरणेनैव-कालोऽयं गमनीय इति भावः। परिक्रामति लवङ्गिकाप्रत्यागमनवर्त्म गन्तुं पादविक्षेपं

---

(द) माल। সখি অবলোকিতে! সখি বুদ্ধরক্ষিতে! তোমরা সত্বর যাইয়া ভগবতীর নিকট এই বৃত্তান্ত নিবেদন কর। সখি লবঙ্গিকে! তুমিও সত্বর আর্য্যপুত্রকে জানাও "যদি আমরা আপনার দয়ার যোগ্য হই, তবে সাবধানে পরিক্রমণ করিবেন।" (অবলোকিতা, লবঙ্গিকা ও বুদ্ধরক্ষিতার প্রস্থান)

(ধ) মাল। হা ধিক্! হা ধিক্!! আমি জানি না লবঙ্গিকা বিলম্ব করিতেছে কেন? এতাবৎকাল অতিবাহিত হইবে কি প্রকারে? যাহা হউক, সখি। মদয়ন্তিকে! প্রিয়সখী লবঙ্গিকার প্রত্যাগমনপথের অনুসরণ করি।

[ प्रविश्य कपालकुण्डला। ] आः पापे! तिष्ठ। (२८)

मालती। [ सत्रासम्। ] हा अज्जउत्त! [ इत्यर्द्धोक्ते वाक्स्तम्भं नाटयति ]। (न)

कपा। [ सक्रोधम्। ] नन्वाक्रन्द, नन्वाक्रन्द। (२९)

लवदसल: क्व स तपस्विजनस्य हन्ता,

कान्ताविट: पतिरसौ परिरचतु त्वाम्।

---

(न) हा आर्य्यपुत्र!

---

करोति। सातङ्कमिति, दक्षिणाक्षिस्पन्दनमेवात्रातङ्कहेतु:, स्त्रीणां दक्षिणनयनस्पन्दनस्यानिष्टसूचकत्वात्। स्फुरितं स्पन्दितं वामेतरेण दक्षिणेन। उपविशतीति गमनाभिलाषे सत्यप्यनिष्टाशङ्कया कियद्दूरं गत्वैवोपविष्टा भवतीत्यर्थ:।

(२८) प्रविश्येति। गुरुवधजनितक्रोधपरवशा, सततं मालतीमाधवानिष्टसाधने चेष्टमाना कपालकुण्डला लब्धावसरा समागत्येत्यर्थ:। मालतीं प्रत्याह—"आ: पापे! तिष्ठे"ति। "सस्फोटो रोषभाषण"मिति लचणादव "सस्फोटो"नाम विमर्शसन्धेरङ्गम्।

(न) सत्रासमिति, समतिरोषपरवशाया: कपालकुण्डलाया दर्शनमेवात्र त्रासहेतु:। वाक्स्तम्भं शब्दोच्चारणासामर्थ्यम्।

(२९) नन्विति सम्बोधने। आक्रन्द आत्मानं रचितुं माधवमाह्वय। (क्रन्दने रोदनाह्वाने इत्यमर: ) क्रोधाद्विरुक्ति:। तथाच कथमपि तवात्र परित्राणं न स्यादिति भाव:।

(३०) लवदसलेति। तपस्विजनस्य तपसा कृशस्यास्मदगुरोरघोरघण्टस्य हन्ता विनाशक: (तथाच नासौ वीर: परन्तु तपस्विहन्तृत्वेन महापापाति भाव: ) लवदसल: त्वां प्रति स्नेहपरवश:

---

(পাদবিক্ষেপ করিতে লাগিল) (আতঙ্কের সহিত) আমার দক্ষিণ লোচন স্পন্দিত হইতেছে। (উপবেশন করিল)।

(২৮) কপা। (প্রবেশ করিয়া) আঃ পাপে! থাক।

(ন) মাল। হা আর্য্যপুত্র! (অর্দ্ধোক্তে বাক্যরোধের অভিনয় করিতে লাগিল)।

(২৯) কপা। (ক্রোধের সহিত) (আর্য্যপুত্রকে) আহ্বান কর আহ্বান কর।

(৩০) তপস্বিজনের হন্তা তোমার প্রতি প্রণয়শালী সেই মাধব কোথায়?

श्येनावपातचकिता वनवर्त्तिकेव,
किं चेष्टसे ननु चिरात्कवलीकृतासि ॥ ३० ॥

यावत् श्रीपर्वतमुपनीय लवशो लवश एनां निकृत्य दुःखमरणां करोमि। (इति मालतीमाक्षिप्य निष्क्रान्ता)। (३१)

मद। अहम्मि मालदीं ज्जेव्व अणुगमिस्सम्। [परिक्रम्य] पिअसहि मालदि। (प)

---

(प) अहमपि मालतीमनुगमिष्यामि, प्रियसखि मालति !

---

स माधवः क कुत्र इदानीं वर्त्तत इति शेषः। कन्याविटः कन्याकामुकः (तथाच स्मसतीव शौचमत्तिरिति भावः) असौ पतिः तव स्वामी माधवः त्वां परिरक्षितुं इह समेत्य समुद्धरतु। (कथमपि नोद्धर्त्तुं समर्थः स्यादिति भावः) श्येनः मांसाशी पक्षिविशेषः, तस्य अवःपातेन निपतनेन चकिता भीता वनवर्त्तिकेव वनपक्षिणीव किं किमर्थं चेष्टसे आत्मानं रक्षितुं ईहसे ? श्येनावपातचकितवर्त्तिका इव तवात्मरक्षणचेष्टा सर्वथैव विफला स्यादिति भावः। ननु इह सम्बोधने। हे मालती ! चिरात् बहुदिनात् परं कवलीकृतासि त्वं मया आक्रान्तासि। तदाच कथमपि त्वामहं न परित्यजामीति भावः।

उपमालङ्कारः। वसन्ततिलका वृत्तम्।

(३१) एनां मालतीं लवशो लवशः खण्डशो खण्डशः तिलं तिलं कर्त्तयित्वा, निकृत्य छित्वा, दुःखं पीडादिना मरणादधिकक्लेशजनकं मरणं यस्यास्तथाभूतां। आक्षिप्य बलादादाय।

(प) अनुगमिष्यामि अनुसरिष्यामि, मालत्या निःसहायसम्पन्नस्य ममापि निःसहायावस्था-

---

বস্থাকামুক তোমার পতি এই মাধব (আসিয়া এখন) তোমাকে রক্ষা করুক। শ্যেন পক্ষীর নিপতনে ভীত বন্য পক্ষিণীর ন্যায় কেন বৃথা চেষ্টা করিতেছ ? অয়ি মালতি! বহুদিন পরে আজ তুমি আমার কবলীকৃতা হইয়াছ।

(৩১) শ্রীপর্বতে নিয়া ইহাকে অতি খণ্ড খণ্ড রূপে ছিন্ন করিয়া ইহার অতি দুঃখজনক মৃত্যু সম্পাদন করিব। (বলপূর্ব্বক মালতীকে গ্রহণ করিয়া কপালকুণ্ডলার প্রস্থান)

(প) মদ। আমিও মালতীরই অনুসরণ করি। (পাদবিক্ষেপ করিয়া) প্রিয়সখি মালতি!

[ प्रविश्य लवङ्गिका। ] सहि मदयन्तिए! लवङ्गिआ क्खु अहम्। (फ)

मद। अवि सम्भाविदो तुए महाणुभाओ। (ब)

लव। णहि, णहि, सो क्खु उज्जाणवाडोवणिग्गमादो ज्जेव्व कलकलं सुणिअ, सावक्खेवावविद्धविकटोरुदण्डणिब्भरं पधाविअ,

---

(फ) सखि मदयन्तिके! लवङ्गिका खलु अहम्।

(ब) अपि सम्भावितस्त्वया महानुभावः।

(भ) नहि नहि, स खलु उद्यानवाटोपनिर्गमादेव कलकलं श्रुत्वा, सावक्षेपाविद्ध-विकटोरुदण्डनिर्भरं प्रधाव्य परानीकं प्रविष्टः। ततः प्रतिनिवृत्तास्मि मन्दभागिनी, शृणोमि च गृहे गृहे गुणानुरागकातरस्य पौरलोकस्य "हा महानुभाव माधव! हा मकरन्द! हा

---

मत्स्याग्रुक्तत्वादिति भावः। परिक्रम्य तदनुगमनीयपादविक्षेपं कृत्वा। अन्धकारेणानवलोक्यैव आगच्छन्त्या लवङ्गिकायाः पदशब्देन मालतीं सम्भाव्य सम्बोधयसि—सखि मालतीति।

(फ) मदयन्तिकाया भ्रमं निरसितुमाह—लवङ्गिका खल्वहमिति, नतु मालतीति भावः।

(ब) अपि प्रश्ने, महानुभावो माधवः, त्वया सम्भावितः मालतीवार्त्ताप्रदानाय संप्राप्तः किमित्यर्थः।

(भ) नहि नहीति, सम्भावित इति शेषः। कथमित्याह—स खल्विति। उद्यान-वाटात् उद्यानप्राकारात् उद्यानमार्गाद्वा ( वाटी मार्गे वृतिस्थाने स्यात् कुटीवास्तुनोः स्त्रियामिति मेदिनी ) उपनिर्गमो निःसरणं तस्मादेव ततःपरमेव। कलकलं सैन्यानां कलरवं, सावक्षेपं सावहेलं अपविद्धाभ्यां क्षिप्ताभ्यां विकटाभ्यां परिणाहिभ्यां उरुदण्डाभ्यां निर्भरं नितिशयं यथा स्यात्तथा प्रधाव्य धावित्वा, परानीकं परसैन्यं, ततः परकीयसैन्यप्रवेशानन्तरं। प्रति-

---

(ফ) লব। (প্রবেশ করিয়া) সখি মদয়ন্তিকে! আমি লবঙ্গিকা (মালতী নহি)।

(ব) মদ। মহানুভব মাধবকে তুমি পাইয়াছিলে ত?

(ভ) লব। না না (আমি তাঁহাকে পাই নাই) কারণ তিনি এই উদ্যান-প্রাকার হইতে নির্গমনের পরেই সৈন্যের কলরব শুনিয়া সাবহেলে বিক্ষিপ্ত

पराणीग्रं पविट्ठो, तदो पड़िणिउत्तह्मि मन्दभाइणी, सुणामि अ घरे घरे गुणाणुरामकाअरस्स पौललोअस्स, "हा महाणुभाव ! हा माहव ! हा मअरन्द ! हा साहसिअ ! त्ति परिदेवणाओ, किल एदाणं मन्तिधीआण' विप्पलम्भवुत्तन्तं सुणिअ, सञ्जाअमच्छराधिक्खेवो, तक्खणविसज्जिदपोढ़पाइक्कणिवहो चन्दादवेण सोहसिहरट्ठिदो पेक्खदित्ति मन्तीअदि । (अ)

---

साहसिक !" इति परिदेवना', महाराजोऽपि किन्त्वेतयोर्मन्त्रिदुहित्रोर्विप्रलम्भवृत्तान्तं श्रुत्वा, सञ्जातमत्सराधिक्षेपस्तत्क्षणविसर्जितप्रौढपदातिनिवहश्चन्द्रातपेन सौधशिखरस्थितः प्रेक्षत इति मन्त्र्यते ।

---

निवृत्तास्मि प्रत्यागतास्मि, मन्दभागिनीति अहमिति शेष', मालतीवार्त्ताप्रदानासामर्थ्यमेवाव मन्दभागिनीत्वाभिधाने हेतु' । परिदेवना: खेदोक्ती: । विप्रलम्भवृत्तान्तं प्रवञ्चनावार्त्तां, सञ्जातमत्सराधिक्षेप: समुद्भूतविद्वेषतिरस्कार., तत्क्षणे तद्वार्त्ताकर्णनावसरे विसर्जित: मकरन्दोपरोधार्थं प्रेरित: प्रौढ: दक्ष: पदातिनिवह: पदातिसैन्यसमूहो येन तथाभूत: । चन्द्रातपेन चन्द्रालोकेन ( विरहिजन सन्तापकतया आतपत्वाभिधानम् ) परिशोभित इति शेष:, (तथापाना-हतस्थानावस्थित इति भाव: ) प्रेक्षते माधवमकरन्दाभ्यां सह स्वकीयसैन्यानामाहवं अवलोकयति । इति मन्त्र्यते पुरवासिभि: परस्परमाभाष्यते । इति च प्रवीणोत्यर्थ: ।

---

বিপ্রাণ উদ্ধব ও দ্বারা নিরতিশয়রূপে ধাবিত হইয়া শত্রু-সৈন্যমধ্যে প্রবিষ্ট হইয়াছেন। মন্দভাগিনী আমিও তৎপরে প্রতিনিবৃত্তা হইয়া আসিলাম, এবং (আসিতে আসিতে "হা মহানুভব মাধব ! হা মকরন্দ ! হা সাহসিক ! ইত্যাদিরূপ গুণানুরাগ কাতরপুরবাসিদিগের বিলাপ শুনিলাম। আরও শুনিলাম "মহারাজও এই মন্ত্রী ও দুহিতার প্রতারণা বৃত্তান্ত শুনিয়া বিদ্বেষ ও তিরস্কারের উদ্ভূতিবশতঃ তৎক্ষণাৎ সুদক্ষ সৈন্যসমূহ পাঠাইয়া চন্দ্রালোকে বিভূষিত ও দালানের ছাদের উপরে সংস্থিত হইয়া মাধব ও মকরন্দের সহিত বীয় সৈন্যের যুদ্ধ দেখিতেছেন" এই কথা পুরবাসীরা বলিতেছে।

मद। हा हदम्हि! मन्दभाइनी। (म)

लव। सहि! मालदी उण कहिं?। (य)

मद। सा क्खु परमं जेव्व दे मग्गमवलोइदुं पसरिदा, पच्छादो अहं ण तां पेक्खामि। अवि णाम उज्जाणगहणपविट्ठा भवे? (र)

लव। सहि! तुरिदं अण्णेसह्म। अदिकादरा णो पिअ-

---

(म) हा हतास्मि मन्दभागिनी।

(य) सखि! मालती पुनः क्व?

(र) सा खलु प्रथममेव ते मार्गमवलोकयितुं प्रसृता, पश्चादहं न च तां पश्यामि। अपि नाम उद्यानगहने प्रविष्टा भवेत्?

(ल) सखि। त्वरितमन्विष्यावः। अतिकातरा नः प्रियसखी, अस्मिन्नवसरे न धारयत्यात्मानम्। सखि मालति! ननु भणामि मालतीति।

---

(म) हतास्मीति, स्वयं राज्ञैव क्रोधपरवशेन सैन्यानि प्रेषितानीति तयोः परित्राणासम्भवादिति भावः।

(य) क्व कुत्र वियत इति शेषः।

(र) ते मार्गं तव प्रत्यागमनपथं प्रसृता मत्सकाशात् निर्गता। सम्भावनायां नाम-शब्दः। उद्यानगहने उद्यानस्य निविड़स्थाने।

(ल) अस्मिन्नवसर इति, माधवस्य जीवितसन्देहसमये, आत्मानं प्राणान् न धारयति वियोगाशङ्कया धारयितुं न शक्नोतीति। परिक्रम्येति मालत्यान्वेषणार्थमुभे एव पादविक्षेपं कृत्वा आहतुरित्यर्थः। ननु सम्बोधनानुनये, तथाच अनुनयं कृत्वा सखि मालतीति भणामि तथापि किं नोत्तरं यच्छसीति भावः।

---

(म) मদ। হা মন্দভাগিনী! আমিও হত হইলাম।

(য) লব। সখি! মালতী কোথায়?

(র) মদ। সে প্রথমেই তোমার প্রত্যাগমনপথ দেখিবার জন্য নির্গতা হইয়াছিল, তৎপরে আর আমি তাহাকে দেখিতেছি না। সম্ভবতঃ উদ্যানের নিবিড় স্থানে প্রবিষ্টা হইয়া থাকিবে।

(ল) লব। সখি! সত্বর আমরা অন্বেষণ করি। আমাদের প্রিয়সখী

सही इमस्सिं अवसरे ण धारेदि अप्पाणम्। [त्वरितं परिक्रम्य।] सहि मालदि! णं भणामि सहि मालदित्ति। इतस्ततः परिक्रामतः। (ख)

[प्रविश्य प्रहृष्टः कलहंसकः।] दिट्ठिआ कुसलेण णिग्गदो सङ्कडमग्गादो। हीमाणहे! पेक्खामि णिअ-णिम्मलणिरन्तरुच्छूढ-धोद-तरवारिधारा-पडिफलिद-चन्दकिरणुज्जलभीसणदंसणं, मद-लीलाकलिदकामपालविअडभुअदण्डाविद्ध-हलहेला-विअ भलिदुद्दाम-दुत्तरङ्गकलिन्दतणआसंतसण्णिहं विमद्दुप्पाडिदणिद्दअमन्दम-अरन्दव्वइअरक्खोभविअडपडिबोध-पडिवत्तणगुणग्गदसमत्थगअणङ्गणा-वआसविअसन्तकमलअं पारकबलसमूहम्। (ग)

(ग) दिष्ट्या कुशलेनास्मि निर्गतः सङ्कटमार्गात्। हीमानहे! प्रेक्षे इव निर्मलनिरन्तरोत्क्षिप्त-धौततरवारिधाराप्रतिफलितचन्द्रकिरणोज्ज्वलितभीषणदर्शनं मदलीलाकलितकामपालविकट-भुजदण्डाविद्धहलहेलाविह्वलितोद्दामतरङ्गकालिन्दतनयास्रोतःसन्निभं विमर्द्दोत्पाटितनिर्दया-मन्दमकरन्दव्यतिकरक्षोभविकटप्रतिबोधपरिवर्त्तनोद्गतसमस्तगगनाङ्गनावकाशविकसत्कमलकं पारकबलसमूहम्।

(ग) प्रविश्येति। दिष्ट्या भाग्येन, कुशलेन अनाहतदेहतया सङ्कटेन संघट्टमार्गात् युद्धविमर्दोत्पन्नात् निर्गतः निःसृतः अस्मि। "हीमाणहे" इति शौरसेन्यादिभाषायां महर्ष-सूचकमव्ययम्। निर्मला मालिन्यरहिता निरन्तरोत्क्षिप्ता अस्त्रादिप्रतिघातार्थं सततोत्कम्पिता धौता निशिता च या तरवारिधारा असिपंक्तिः, तस्यां प्रतिफलितैः प्रतिबिम्बितैः चन्द्रकिरणैः उज्ज्वलितं प्रकाशितं भीषणं भयङ्करं दर्शनं यस्य तथाभूतं मदस्य मत्ततायाः लीलया

মালতী অত্যন্ত কাতরা, মাধবের এই জীবনাশঙ্কা সময়ে সে জীবন ধারণ করিতে পারিবে না। সখি মালতি! অনুনয় সহকারে "সখি মালতি" বলিয়া ডাকিতেছি, (তথাপি প্রত্যুত্তর দিতেছ না কেন?) (উভয়ে ইতস্ততঃ পাদবিক্ষেপ করিতে লাগিল)।

(গ) কল। (হর্ষের সহিত প্রবিষ্ট হইয়া) ভাগ্যক্রমেই আমি সেই যুদ্ধ-বিমর্দ পথ হইতে কুশলে নির্গত হইয়াছি। আহা! যাঁহাদের ভীষণদর্শন নির্মল সতত কম্পিত ও নিশিত অসিপংক্তিতে প্রতিফলিত চন্দ্রকিরণ দ্বারা

अविश्र । सुमरामि भीसणभुअवज्जजज्जरिदपञ्जरावसरिद-सुभड़हत्थावलुत्तविविहाउहणिवहघातिदामिस-रिउसेसं हदविअड्डा-पसारपाड्कअसुष्ममग्गसञ्चारणिवत्तिद-विसम-समरसाहसं णाहमा-हवम् । (अ)

---

(अ) अपिच स्मरामि भीषणभुजवज्रजर्जरितपञ्जरापसृतसुभटहस्तावलुप्तविविधायुधनिवह-

---

क्रियया कलितः अवलम्बितः समतीवबलप्रकाशोन्मत्त इति यावत्, यः कामपालः हलायुधः तस्य त्रिकटाभ्यां परिणाहिभ्यां भुजदण्डाभ्यां आविद्धेन आकर्षणार्थं कथञ्चित् परिचालितेन हलेन स्तोयलाङ्गलेन हेलया अवहेलया विह्वलिता आकुलीकृता, अतएव उद्वेलत् तीरोपरि समुच्छलत् तरङ्गं यस्यास्तथाभूता या कलिन्दतनया यमुना तस्याः स्रोतःसन्निभं जलप्रवाहसदृशं, (अवाविच्छिन्नोच्छलितत्वेन नीलवर्णत्वेन च बलस्य तादृशजलप्रवाहसाम्यं बोध्यम्) तथा विश्रङ्खलं श्रृङ्खलारहितं युद्धनियमरहितमिति यावत्, यथा स्यात्तथा उत्पतितः शत्रुसैन्याक्रमणार्थं तदुपरिनिपतितं निर्द्दयो शत्रुहनने दयारहितः अमन्दः युद्धकरणे अनलसश्च यो मकरन्दः तस्य व्यतिकरेण सम्पर्केण आक्रमणेनेति यावत्, यः क्षोभः वैकल्यं तेन विकटपतितद्वयोधाना विशालशत्रुसैन्यानां यत् परिवर्त्तनं पलायनं तेन उद्गतः उत्पन्नः समस्तगगणाङ्गनाकाशे सकलाकाशप्रदेशान्तराले विकाशन् प्रकाशमानः कलकलः कोलाहलो यस्य तथाभूतं पारक्यबल-समूहं परकीयसैनिकनिचयं प्रेक्षे इव पश्यामीव। अपसृत्यापि तद्भीषणदृश्यमधुनापि विस्मर्त्तुं न शक्नोमीति भावः।

(अ) अपिचेति। भीषणाभ्यां वज्रवत्कठिनबाहुभ्यां जर्ज्जरितपञ्जराः विचूर्णीकृत-पार्श्वास्थिनिवहाः अत एव अपसृताः पलायनोद्यताः ये सुभटाः सुनिपुणरिपुसैनिकाः तेषां हस्तेभ्यः अवलुप्तेन बलाद्गृहीतेन विविधानां नानाप्रकाराणां आयुधानां अस्त्राणां निवहेन

---

প্রকাশিত, যাঁহারা অত্যন্ত বলপ্রকাশোন্মত্ত বলরামের বিশাল ভুজদণ্ড পরিচালিত লাঙ্গল দ্বারা আকুলীকৃতা ও তীরোপরি তরঙ্গিত যমুনা নদীর জলপ্রবাহ সদৃশ, এবং বিশৃঙ্খলভাবে আক্রমণার্থ নিপতিত নির্দ্দয় ও যুদ্ধে আলস্য রহিত মকরন্দের আক্রমণজনিত ক্ষোভ বশতঃ শত্রুসৈন্যের পলায়ন দ্বারা সমুৎপন্ন যাহাদের কোলাহল সমস্ত আকাশপ্রদেশে প্রকাশমান হইতেছিল, তাদৃশ পরকীয় সৈন্য-সমূহ যেন এখনও আমি দেখিতেছি।

(অ) যিনি ভীষণ ভুজবজ্র দ্বারা বিচূর্ণীকৃত পঞ্জর পলায়মান সুনিপুণ শত্রুসৈন্যের হস্ত হইতে বলপূর্ব্বক বিবিধ অস্ত্রসমূহ গ্রহণ করিয়া তদ্দ্বারা সমস্ত

अहो गुणाणुराओ णरिन्दस्स। जं दाणिं सोहसिहरावत्तिस्स-पड़िहारविणओपसामपड़िमसिद-विरोहो, सोम्मेक्करसोवणोद-माहव-मअरन्दमुहचन्दे अलोइअ वारंवारं पसारिदसिणिद्धलोअणो, कल-हंसआदो अभिजणं जाणिअ णिवत्तिदमहग्घबहुमाणो, फुरन्त-मच्छरेश्वारवेलक्ख-मसीमलिणिअ-मुहे भूरिवसुपन्दणे महुरवअणो-

वातितायेश्वरिपुसैन्य इतविकटावसारपदातिशून्यमार्गसञ्चारनिवर्तितविषमसमरसाहसं नाथ-माधवम्।

(ख) अहो। गुणानुरागो नरेन्द्रस्य, यदिदानीं सौधशिखरावतीर्णप्रतीहारविनयोपन्यास-प्रतिशमितविरोधो, सौम्यैकरसोपनीतमाधवमकरन्दमुखचन्द्रौ अवलोक्य वारं वारं प्रसारित-स्निग्धलोचन, कलहंसकादभिजनं ज्ञात्वा निर्वर्तितमहार्घबहुमान, स्फुरन्मत्सरेर्ष्यावैलक्ष्यमसीमलि-

घातिता विनाशिता अशेषा रिपुसैन्या येन तथाभूतम्, तथा हताना माधवमकरन्दाहतानां विकटानां विकटस्य सैन्यानामित्यर्थः, अपसारेण अपसरणेन पदातिशून्ये पादचारिसैन्यरहिते मार्गे तस्मिन् राजाध्वनि सञ्चारेण इतस्ततः सञ्चलनेन निर्वर्तितं सम्पादितं विषमं भीषणं समरसाहसं युद्धसाहसं येन तथाभूतं नाथमाधव स्मरामि विक्लितान्तःकरणेन परिचिन्तयामि।

(ख) अहो इति। नरेन्द्रस्य नन्दनपितुः, गुणानुरागः गुणपक्षपातः। गुणानुरागमेव विशदयति—यदित्यादिना। सौधशिखरात् प्रासादोपरिभागात् अवतीर्णस्य स्वकीयानुमत्या-कृतावरोहणस्य प्रतिहारस्य द्वारपालस्य (प्रतिहारो द्वारि द्वाःस्थे द्वाःस्थितायान्तु योषिति इति मेदिनी) विनयोपन्यासेन युद्धविरामाय सविनयवाक्यप्रयोगेन प्रतिशमितः निवारितः विरोधः स्वसैनिकैः सह माधवमकरन्दयोर्युद्धं येन तथाभूतः, सौम्यैकरसेन शान्तैकरसेन शान्तरसप्रधान-वाक्यप्रयोगेनेति यावत्, उपनीतयोः तेन द्वारपालेनैव स्वसमीपं प्रापितयोः माधवमकरन्दयोः मुखचन्द्रौ वदनसुधाकरौ अवलोक्य दृष्ट्वा वारंवारं पुनःपुनः प्रसारिते तन्मुखचन्द्रावलोकनार्थं

শত্রুসৈন্য বিনাশিত করিয়াছেন এবং যিনি আহত ভীষণ শত্রুসৈন্যদিগের পলায়নে পদাতি সৈন্যশূন্য রাজপথে ইতস্ততঃ বিভ্রমণ করিয়া বিষম সমর সাহস সম্পাদিত করিয়াছেন, সেই নাথ মাধবকেও স্মরণ করিতেছি।

(খ) আহা! রাজার কি গুণানুরাগ, যে হেতু সম্প্রতি, যাঁহা সৌধশিখর হইতে অবতীর্ণ দ্বারপালের বিনীত বাক্য দ্বারা স্বকীয় সৈন্যগণের সহিত মাধব ও মকরন্দের বিরোধ প্রশমিত করিয়া শান্তরসপূর্ণ বাক্য দ্বারা সেই

वत्थासेय, किं दाणिं तुम्हाणं भुअणाभोअभूसणेहिं महाणुभावेहिं अभिजणदंसणगुणाहिरामेहिं णवचन्द-दंसणरमणीएहिं जामादुएहिं परितोसोत्ति पडिबोहिअ, गदो अब्भन्तरं राआ। इमेवि माहव-मअरन्दा आअच्छन्ति। अहम्बि भअवदीए एदं वुत्तन्तं णिवे-देमित्ति। निष्क्रान्तः। (४)

---

निपुणको भूरिवसुनन्दनो मधुरवचनोपन्यासेन "किमिदानीं युवयोर्भुवनाभोगभूषणाभ्यां महानुभावाभ्यामभिजनदर्शनगुणाभिरामाभ्यां नवचन्द्रदर्शनरमणीयाभ्यां जामातृभ्यां परितोष" इति प्रतिबोध्य, गतोऽभ्यन्तरं राजा, एतावपि माधवमकरन्दावागच्छत.। अहमपि इमं वृत्तान्तं भगवत्यै निवेदयामीति।

---

विस्फारिते लोचने येन तथाभूतः, कलहं सकाशात् नत अभिजन माधवमकरन्दयो. वंशमर्य्यादा श्वाला विशेषतः परिज्ञाय निर्व्वर्त्तितः सम्पादितः महार्घो महामूल्यः अनन्यलभ्य इत्यर्थः, बहुमानः माधवमकरन्दयोरतिशयसम्मानः येन तथाभूतः स्फुरन्ति प्रकाशमानानि यानि मत्सरेर्ष्या-वैलक्ष्याणि विद्वेषाचमाचिङ्गर्त्तव्यताविमूढत्वानि तान्येव मसः कज्जलानि (मैत्रा मनोजन्यं पवाप्रनश्च थान्मसिद्वयोरिति सिद्धान्तभेद) ताभिर्म्मलिनिते मालिन्यमापादिते मुखे ययो-स्तथाभूतौ भूरिवसुनन्दनौ, (अत्र मत्सरेर्ष्यानन्दनस्य ममीस्थानीये, भूरिवसोस्तु वैलक्ष्यमेव ममीस्थानीयं भूरिवसोर्व्वात्सल्यमत्सरेर्ष्याकारणविरहादिति मन्तव्यम्) भुवनाभोगस्य विश्व-प्रपञ्चस्य भूषणाभ्या अलङ्करणरूपाभ्या महानुभावाभ्यां शौर्य्यवीर्य्यादिना मितप्रभावाभ्यां अभिजनं वंशः दर्शनं शास्त्रज्ञानं गुणाः विनयादयः तैः अभिरामाभ्यां मनोज्ञाभ्यां नवचन्द्रवत् दर्शनेन प्रिया रमणीयाभ्यां आभ्यां जामातृभ्यां युवयोरिदानीं परितोषः सन्तोषः किम्? जात इति शेषः। (ईदृशसर्व्वगुणसम्पन्नजामातृलाभेन सन्तोषोत्पादः सर्व्वथैव स्वाभाविक इति भावः) इति इत्थं प्रतिबोध्य स्वयमेव पतिताङ्गीकरणेन मालतीमदयन्तिकयोरपसरणादप्रतिकार्य्यतया

---

দ্বারপাল কর্ত্তৃক স্বসমীপে সমানীত মাধব ও মকরন্দের মুখচন্দ্র অবলোকন করিয়া দর্শনার্থ বারংবার স্নিগ্ধলোচন প্রসারিত করিতেছিলেন, এবং আমার নিকটে মাধব ও মকরন্দের বংশমর্য্যাদাদিপরিজ্ঞাত হইয়া তাহাদের প্রতি অনন্যলভ্য পরম সম্মান সম্পাদিত করিতেছিলেন। পরন্তু প্রকাশমান বিদ্বেষ ক্রোধ ও কর্ত্তব্যতাবিমূঢ়স্বরূপ কালীমায় মলিনীভূত ভূরিবসু ও নন্দনকে মধুর বচনে দ্বারা "কেমন বিশ্বপ্রপঞ্চের অলঙ্কার স্বরূপ, মহানুভাব,

ततः प्रविशतो माधवमकरन्दौ । (३२)

मक । अहो प्रेयसः सर्वपुरुषातिशायि निर्व्याजमूर्जितं तेजः ।

तथाहि—(३३)

दोर्निष्पेषविशीर्णसन्धयदलत्कङ्कालमुन्मथ्नतः

प्राग्वीरानवपात्य तत्प्रहरणान्याच्छिद्य विक्रामतः ।

---

माधवमकरन्दयो, सर्वगुणसम्पन्नतया च कामात्ताङ्गीकरणेन सान्त्वयित्वा राजा स्वमन्दिरं स्वान्तःपुरं गतः । तथाच राज्ञो गुणानुरागं विना ईदृशापराधिनोः कण्ठविनिग्रहेण बहुमान-सम्पादनं तयोरङ्गीकरणञ्च सर्वथैवासम्भवमिति भावः ।

शक्तिः पुनर्भवेत् । विरोधस्य प्रशमनं इति तत्तत्पादेन शक्तिनाम विमर्शसन्धेरङ्गम् ।

(३३)* अहेति । अहो इत्याश्चर्यं, प्रेयसः प्रियतमस्य माधवस्य निर्व्याजं छलविरहितं ऊर्जितं बलवत् तेजः विक्रमः सर्वपुरुषातिशायि सर्ववीरलोकातिक्रमि । सर्वपुरुषातिशायित्वमेव समर्थयितुमाह—दोरिति ।

(३४) दोरिति । प्राक् रणक्षेत्रागमनस्य प्रथमं वीरान् काँश्चित् प्रधानान् योद्धान् अनुपात्य स्वकौशलक्रमेण क्रमशो भूमौ विनिपात्य दोर्भ्यां बाहुभ्यां निष्पेषेण भूमौ निष्पेषणेन विशीर्णाः विच्छिन्नाः सन्धयः सन्धिस्थानानि येषां तथाभूताः, अतएव दलन्तः दलनं प्राप्नुवन्तः कङ्कालाः शरीरास्थीनि यस्मिन्, तद्यथा स्यात्तथा उन्मथ्नतः विलोडयतः तथा तत्प्रहरणानि तेषामायुधानि आच्छिद्य बलात्कारेण समाहृत्य विक्रामतः अद्भुतौजसः सह समरं कुर्वतः प्रेयसः प्रिय

---

বশে শাস্ত্রজ্ঞান ও বিনয়াদি গুণ দ্বারা মনোহর, এবং নবচন্দ্রের ন্যায় সৌন্দর্য্য দ্বারা রমণীয় এই ভ্রাতৃদ্বয় দ্বারা তোমাদের সন্তোষ হইয়াছে ত ?" ইত্যাদি রূপে বুঝাইয়া অন্তঃপুরে চলিয়া গিয়াছেন। মাধব এবং মকরন্দও আসিতেছেন। আমিও যাইয়া এই বৃত্তান্ত মালতীর নিকট নিবেদন করি। (কলহংস নিষ্ক্রান্ত হইল )।

(৩২) ( তৎপরে মাধব ও মকরন্দের প্রবেশ )।

(৩৩) মক। অহো ! প্রিয় মাধবের সর্ব্বলোকাতিশায়ী ছলনারহিত কি বলবত্তেজ !! কেননা—

(৩৪) রণক্ষেত্রে আসিয়া প্রথমেই কতিপয় বীরকে কৌশলক্রমে ক্রমশঃ ভূমিতে নিপাতিত করিয়া বাহুনিষ্পেষণে বিচ্ছিন্ন সন্ধিবন্ধন শরীরাস্থিসকল

उद्वेलत्वरकण्ठखण्डनिकराकीर्णस्य, संक्षोदधि-
द्वैधास्तम्भितपरिपङ्क्तिविकटः पन्थाः पुरस्तादभूत् ॥ (३४)

माध। ननु अनुशयस्थानमेतत्। पश्य—(३५)

अद्यैवेन्दुमयूखखण्डखचितं पीतं निशीथोत्सवे
यैर्लीलापरिरम्भदायिदयितागण्डूषशेषं मधु।

---

माधवस्येति यथाम्भसान्वयः, पुरस्तात् अग्रतः उद्वेलता ऊर्द्ध्वमन्नता घनेन अविरलेन कण्ठखण्ड-
निकरेण कबन्धखण्डनिचयेन आकीर्णस्य आच्छन्नस्य संक्षोदधेः आहवार्णवस्य द्वैधा द्विप्रकारेण
समरशिरसि सञ्चरतो माधवस्योभयपार्श्वत इत्यर्थः, स्तम्भितया भयादिभिर्निष्पन्दितया पत्तिपङ्क्त्या
पदातिसैन्यश्रेण्या विकटः विशालः पन्था मार्गः अभूत्। तथाच प्रियमाधवनैजय: सर्व्वपुरुषाति-
शायित्वं विना नैतादृक् पयस्य सम्भव इति भावः।

अत्र इत्यनुप्रासच्छेकानुप्रासौ शब्दालङ्कारौ, संक्षोदधेरिति लुप्तोपमा चार्थालङ्कार इति तेषां
सङ्करः। शार्द्दूलविक्रीडितं वृत्तम्।

(३५) माधेति। निश्चयेऽत्र ननुशब्दः। एतत् त्वया कथ्यमानं समरचेष्टं अनुशय-
स्थानं विवेकिनां परिचिन्तनस्थानं। कुत इत्यत आह—पश्येति।

(३६) अद्यैवेति। अद्यैव निशीथोत्सवे अर्द्धरात्रीयकामदेवमहोत्सवे यैर्वीरैः इन्दु-
मयूखखण्डैः चन्द्रगवाक्षरन्ध्रप्रविष्टसुधांशुकिरणांशैः खचितं सम्पर्कितं लीलया परिरम्भ-
दायिनीनां आलिङ्गनार्पणशीलानां दयितानां प्रियाणां गण्डूषशेषं वदनविवरपूरणावशिष्टं मधु

---

যাহাতে বিদলিত হয়, এরূপভাবে তাহাদিগকে মথিত করিতে করিতে এবং তাহাদেরই অস্ত্রসকল আকর্ষণে গ্রহণ করিয়া অন্য বীরগণের সহিত যুদ্ধ করিতে করিতে প্রিয় মাধবের অগ্রভাগে ঊর্দ্ধে স্পন্দমান অবিরল কবন্ধখণ্ড-নিচয়ে পরিব্যাপ্ত যুদ্ধসমুদ্রের দুই প্রকারে (অর্থাৎ সৈন্যচ্ছেদন করিতে করিতে ভ্রমণকারী মাধবের উভয়পার্শ্বে) ভয়ে নিষ্পন্দিত পদাতিসৈন্যশ্রেণী দ্বারা বিশাল পথ নির্ম্মিত হইয়াছিল।

(৩৫) মাধ। তোমার বর্ণ্যমান এই রণক্ষেত্র নিশ্চিতই বিবেকীদিগের চিন্তার স্থল। দেখ—

(৩৬) অর্দ্ধরাত্রির মদনমহোৎসবে যে সকল বীরগণ উন্মুক্ত গবাক্ষরন্ধ্র-প্রবিষ্ট চন্দ্রকিরণে পরিব্যাপ্ত লীলাক্রমে আলিঙ্গনদায়িনী বনিতাদিগের গণ্ডূষা-

सम्प्रत्येव भवद्भुजार्गलगुरुव्यापारभग्नास्थिभि-

र्गात्रैस्ते कथयन्त्यसारविधुरान् प्रायेण संसारिणः ॥ (२६)

स्मर्त्तव्यन्तु सौजन्यमस्य नरपतेः, यत् अपराधिनोरपि अन-पराद्धयोरिव नौ कृतप्रसादमधिष्ठितवान्। तदेहि मालतीसमक्षमधुना मदयन्तिकायाः हरणवृत्तान्तं विस्तरतः कथ्यमानं श्रोतुमिच्छामि। अन्यच्च—(३१)

---

'मद पीत'। ते वीरा, भ्रमरचं व अधुनैव भवती मकरन्दस्य तव सुभार्गलयोः सुभगपार्गलयो-र्गलवद्भुजयोर्यो गुरुव्यापारेण महदाघातरूपक्रियया भग्नानि चूर्णितानि अस्थीनि येषां तथाभूतैः गात्रैः देहैः संसारिणो लोकान् प्रायेण बाहुल्येन असारैव स्थिरांशाभावेन विधुरान् विकलान् ("असारविदुरान्" इति पाठे तु असारान् स्थिरांशवर्जितान् अत एव विदुरान् क्षणभङ्गुरानित्यर्थः) कथयन्ति सूचयन्ति। केषाञ्चित् सौभाग्यशालिना मुखेनैव दीर्घकालातिपातदर्शनात् प्रायेणे-त्युक्तम्। तथाच विवेचका एतत्तुल्यव्यापारमवलोक्य सांसारिकसुखस्यापीत्र क्षणभङ्गुरत्व चिन्तयन्तो विरक्ता भवन्तीति अवश्यमेवानुधावनमिदमिति भावः।

अत्र संसारिणामसारविधुरत्वसूचनक्रियायां तादृशवीराणां कर्त्तृत्वेनान्वयसम्भवात् वीराणां सहसा तादृशभग्नास्थिमद्गात्रवत्त्वस्य संसारिणामसारविधुरत्वस्य च बिम्बप्रतिबिम्बभाव-बोधनाय सम्भवद्वस्तुसम्बन्धरूपनिदर्शनालङ्कारः। एवं भुजार्गलेत्यत्र विनिगमकाभावेन रूपकोपमयोः सन्देहसङ्कर इत्यनयोरङ्गाङ्गिभावेन सङ्करः। "सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित्। यत्र बिम्बानुबिम्बत्वं बोधयेत् सा निदर्शना"इति दर्पणोक्त निदर्शनालक्षणम्। शार्दूलविक्रीडितं वृत्तम्।

(३०) स्मर्त्तव्यमिति। नरपते, नन्दनपितुः, अपराद्धयोरपि मालतीमदयन्तिकयोर-पहरणादिना कृतासार्वनीयापराधयोरपि नौ आवयोः कृतप्रसादं स्वयं सानाथ्यस्वीकारेण

---

বশিষ্ট মধুপান করিতেছিল, সম্প্রতিই তাহারা তোমার ভুজার্গলের গুরু আঘাতে ভগ্নাস্থি শরীর দ্বারা বাহুল্যতঃ সংসারীদিগকে স্থিরাংশাভাবপ্রযুক্ত বিকল সূচনা করিতেছে।

(৩১) এই রাজার সৌজন্য অবশ্য স্মরণীয়, যেহেতু মালতী মদয়ন্তিকা হরণাদি দ্বারা অপরাধী হইলেও অনপরাধীর ন্যায় আমাদের সম্বন্ধে অনুগ্রহ করিয়াই তিনি অধিষ্ঠিত। তবে এস সম্প্রতি মালতীর সমক্ষে কথ্যমান

कथयति त्वयि सस्मितमालतीचलितलोलकटाक्षपराहतम् ।
वदनपङ्कजमुल्लसितत्रपास्तिमितदृष्टि सखी नमयिष्यति ॥ (३८)

[ इति परिक्रामतः । ] अयमसौ उद्यानवाटः । प्रविशतः । (३९)

माध । कथं शून्या एव प्रदेशाः । (४०)

---

मुदितमुग्धमदयन्त्योः शान्तेन च अनानुबन्धं यथा स्यात्तथा भणितवान् निरनुक्रोश स्थितः । कथनानन्तरं, त्वयीत्यादिः । अत्र मालतीमदयन्त्योः कथने फलान्तरम् ।

(३८) किं फलान्तरमित्याकाङ्क्षायामाह—कथयतीति । त्वयि मकरन्दे कथयति मदयन्तिकाहरणवार्त्तां विस्तरतो ब्रुवति सति सखी मदयन्तिका ( परमसुहृन्मकरन्दस्य सखीत्वेन मदयन्तिकाया माधवसखीत्वमिति मन्तव्यम् ) सस्मितया कौतुकोद्दीपकवार्त्ताश्रवणेनेषद्धासयुक्तया मालत्या चलितेन परिचालितेन लोलेन चञ्चलेन कटाक्षेण पराहतं संसक्तं, तथा उल्लसितया समुच्छ्वसितया ख्याकरणस्याकर्णनोद्गतया त्रपया लज्जया स्तिमिता निस्पन्दा दृष्टिर्यत्र तादृशं वदनपङ्कजं पङ्कजवत् स्वकीयमुखं नमयिष्यति अवनतं विधास्यति । तत्तद्वार्त्ताश्रवणात् तदर्शनमेव तत्र तदृत्तान्तकथनस्य फलान्तरमिति भावः ।

अत्र वदनपङ्कजमित्युपमा, उल्लसितत्रपेत्यादिविशेषणस्य नमनं प्रति हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गञ्चालङ्कारः इत्यनयोरङ्गाङ्गिभावेन सङ्करः । एवं "युक्तिरर्थावधारण"मिति लक्षणात् युक्तिर्नाम नाट्यालङ्कारश्चेति । द्रुतविलम्बितं वृत्तम् ।

(३९) इतीति । परिक्रामतः मालत्यादिसमीपगमनाय पादविक्षेपं कुरुतः । असौ यदभ्यन्तरे मालत्यादयस्तिष्ठन्ति सोऽयम् । प्रविशतः उपवनप्रवेशं नाटयतः ।

(४०) साशङ्कमाह—कथमिति । शून्या मालत्यादिविरहिताः ।

---

मदयन্তিকাহরণ বৃত্তান্ত বিস্তারক্রমে শুনিতে ইচ্ছা করিতেছি । তাহার আরও ফল এই যে—

(৩৮) তুমি মদয়ন্তিকাহরণবৃত্তান্ত বলিতে থাকিলে সখী মদয়ন্তিকা ঈষৎ হাস্যযুক্ত মালতী কর্ত্তৃক পরিচালিত চঞ্চল কটাক্ষসংযুক্ত ও উদ্ভূত লজ্জাবশতঃ নিশ্চলদৃষ্টি বদনপঙ্কজ অবনত করিবে ।

(৩৯) ( উদ্যানে প্রবেশের জন্য উভয়ের পরিক্রমণ ) এই সে উদ্যানপ্রাচীর । ( উদ্যানে প্রবেশের অভিনয় )

(৪০) মাধ । এই উদ্যানপ্রদেশ শূন্য কেন ?

मक। नूनं शङ्के आवयोः समरसङ्कटोद्वेगेन व्याकुलत्वादित-स्ततोऽसन्त्यस्ता अत्रैवात्मानं विनोदयन्ति। तदेहि पश्यावः। उभौ परिक्रामतः। (४१)

लवङ्गिका मदयन्तिके। मालदि! [सहसावलोक्य।] दिट्ठिआ पुणोवि एदे महाणुभावा दीसन्ति। (ग)

मकरन्दमाधवौ। भगवति! क्व सा मालती? (४२)

उभे। कुदो मालदी, पदसद्देण, अह्मे विप्पलद्धाओ मन्दभाइणीओ। (ङ)

---

(ग) सखि! मालती। दिष्ट्या पुनरपि एतौ महानुभावौ दृश्येते।

(ङ) कुतो मालती, पदशब्देनावां विप्रलब्धे मन्दभागिन्यौ।

---

(४१) नूनं निश्चित शङ्के मन्ये। समरसङ्कटोद्वेगेन युद्धविपदाशङ्काजनितदुश्चिन्तया, व्याकुलत्वात् विह्वलत्वात्। अत्रैव एतदुद्यानस्य कस्मिंश्चित् स्थान एव, विनोदयन्ति किञ्चिद्दर्शनादि-व्यापारतया कथञ्चिदव्याकुलं कुर्व्वन्ति।

(ग) माधवमकरन्दौ पदशब्देन मालतीविचरणसम्भावनया कथञ्चिदुच्चैस्तत्सम्बोधन कृतम्, "सखि मालति" इति। सहसावलोक्य अकस्मात् सम्मुखे माधवमकरन्दौ दृष्ट्वा।

(४२) कथञ्चिदुच्चैः सम्बोधनमाकर्ण्य आलापमालोक्य च दूरवर्त्तिनं समागत्य मालतीं पृच्छत, क्व सेति।

(ङ) उभे इति। पदशब्देनेति भवतोरेव चरणशब्देनेत्यर्थः। विप्रलब्धे प्रतारिते। भवतोः पदशब्देनैव मालत्यागमनं सम्भाव्य तत्सम्बोधनमावाभ्यां कृतमिति भावः।

---

(৪১) মক। নিশ্চয়ই আমার মনে হয় আমাদের যুদ্ধ বিপদাশঙ্কাজনিত দুশ্চিন্তায় ব্যাকুলতা বশতঃ তাঁহারা ইতস্ততঃ পরিভ্রমণ করিতে করিতে এই উদ্যানেরই কোন স্থানে কথঞ্চিৎ আত্মবিনোদন করিতেছে, সুতরাং এস আমরা অন্বেষণ করিয়া দেখি। (উভয়ের পরিক্রমণ)

(গ) লবঙ্গিকা ও মদয়ন্তিকা। সখি মালতি! (সহসা অবলোকন করিয়া) ভাগ্যক্রমেই পুনর্বার এই মহানুভবদ্বয়কে দেখিলাম।

(৪২) মাধব ও মকরন্দ। অয়ি! সেই মালতী কোথায়?

माध। कथं कथमपि. विध्वंसते मे हृदयं, अतः स्फुटम-
भिधीयताम्। (४२)

मम हि कुवलयाक्षी मत्तनिष्टैकबुद्धे-
रविरतमनुबद्धोत्कम्प एवान्तरात्मा।
स्फुरति च खलु चक्षुः वाममेतच्च कष्टम्
वचनमिह भवत्योः सर्वथा हा हतोऽस्मि॥४४॥

मद। तदोखु इदो निग्गदे महाणुभावे, भअलोहदं मुद्ध-

(ख) तदा खलु इतो निर्गते महानुभावे मुहदविलासकलोविलाय समे भवतीद्दयार्थ

(४२) कथं कथमपि अनिर्वचनीयभावेन, विध्वंसते विदीर्णं भवति।

(४४) ममेति। हि यतः कुवलयाक्षीं नीलोत्पलनेत्रां मालतीं प्रति अनिष्टे विषये
एका मम अविश्रया बुद्धिर्यस्य तथाभूतस्य "स्नेहः पापशङ्की" इति न्यायात् केवलं तदीयानिष्ट-
शङ्किन इत्यर्थः, मम अन्तरात्मा अन्तःकरणं अविरतं अविश्रान्तमेव अनुबद्धः तथा अनिवार्यतया
विधृतः उत्कम्पः कम्पनं येन तथाभूतः। वामं चक्षुश्च खलु स्फुरति स्पन्दते। पुरुषस्य
वामाक्षिस्पन्दनमनिष्टसूचकमिति भावः। भवत्योर्युवयोरपि एतत् "कुतो मालती"त्यादिकं
वचनम् कष्टं, अत्र तस्या अविद्यमानत्वसूचकत्वेनातीव कष्टप्रदं, हा खेदे, अतएव सर्वथा
सर्वप्रकारेण हतः विनाशितप्रायः अस्मि भवामि।

अत्रानिष्टसूचकदेहकार्य्यं प्रति वामनेत्रस्पन्दनस्य एतद्वचनस्य च कारणत्वेनोपन्यासात्
समुच्चयालङ्कारः। मालिनीवृत्तम्।

(ख) गदेति। इतः अस्मात् उद्यानात् महानुभावे भवति। भवभयात् सकालं विष्ठक्ष

(৪২) উভয়ে। কোথায় মালতী, আপনারাবই পরশ্পরে মনশ্চালিনী
আমরা প্রতারিত হইয়াছি।

(৪৩) মাধ। অনির্বচনীয় ভাবে আমার হৃদয় বিদীর্ণ হইতেছে, অতএব
স্পষ্টরূপে বল।

(৪৪) মালতী বিষয়ে কেবল অনিষ্টাশঙ্কাকারী আমার অন্তরাত্মা
(অনিষ্টাশঙ্কায়) অবিশ্রান্ত ভাবে উৎকম্পিত হইতেছে। আমার বাম চক্ষুও
স্পন্দিত হইতেছে, মালতী বিষয়ে তোমাদের কথিত "কোথায় মালতী" এই
বাক্যও কষ্টপ্রদ, অতএব সর্বপ্রকারেই আমি হত হইতেছি।

रक्खिदं भअवदीए सआसं पेसिअ, अप्पमत्तणिमित्तं अज्जउत्तं विण्णवेहि त्ति लवङ्गिआ अणुप्पेसिदा, तदो उत्तम्ममाणाए ताए मग्गं अवलोइदुं अग्गदो परिट्ठिदा, पच्छादो अहं ण अ तं पेक्खामि, तदो अम्हेहिं एत्थ विहरन्तीए किं विडवन्तराणि जाव विचिदाणि ताव तुम्हे दिट्ठे त्ति। (च)

माध। हा प्रिये मालति!।

किमपि किमपि मन्दं मन्दमासत्तियोगा-
विरमतु परिहासश्चण्डि! पर्य्युत्सुकोऽस्मि।

---

विसृज्य, अप्रमत्तनिमित्तं विज्ञापय आर्य्यपुत्रमिति लवङ्गिकानुप्रेषिता उत्ताम्यमानायास्तस्याः मार्गमवलोकयितुमग्रतः प्रस्थिता, पश्चादहं न च तां पश्यामि, तत आवाभ्यामिह विहरन्तीभ्यां यावद्विटपान्तराणि विचितानि तावद्युवां दृष्टाविति।

---

युद्धवार्त्तां निवेदयितुं भगवत्याः कामन्दक्याः समीपं प्रेष्य अप्रमत्तनिमित्तं सावधाननिमित्तं अनुप्रेषितेति मदयन्तिकाया इत्यादिः। उत्ताम्यन्त्या युद्धवार्त्ताश्रवणोत्कण्ठितया तस्या मालत्या एतस्या लवङ्गिकायाः मार्गे प्रत्यावर्त्तनवर्त्मनि, अग्रतो गता। विहरन्तीभ्यां अटव्यां विचरन्तीभ्यां, विटपान्तराणि तरूणां मध्यवर्त्तिस्थानानि विचितानि अन्विष्टानि, अतीतवृत्तान्तवर्णनमनिबन्धनं इति शब्दः, एतावदेव जानामीति भावः। "भूतकार्य्याख्यानमनुकीर्त्तन"मिति लक्षणात् "अनुकीर्त्तनं नाम नाट्यालङ्कारः।

(१२) किमपीति। हे चण्डि! मालतीरूपकोपने! किमपि किमपि—अव्यक्ता-

---

(চ) মদ। আপনি এই উপবন হইতে নির্গত হইয়া গেলে বুদ্ধরক্ষিতা ও অবলোকিতাকে (যুদ্ধবৃত্তান্ত নিবেদন করিবার জন্য) ভগবতী কামন্দকীর নিকট পাঠাইয়া "সাবধানতার নিমিত্ত গিয়া আর্য্যপুত্রকে জানাও" এই বলিয়া লবঙ্গিকাকেও (আপনার নিকট) পাঠাইয়া যুদ্ধবৃত্তান্ত জানিবার জন্য অত্যন্ত উৎকণ্ঠিতা হইয়া এই লবঙ্গিকার প্রত্যাবর্ত্তনপথাভিমুখে মালতী গমন করিয়াছিল। তৎপরে আর আমি তাহাকে দেখি নাই। পরে আমরা (অনুসন্ধানার্থ) এই উপবনে বিচরণ করিতে করিতে যেই এই বৃক্ষসমূহের মধ্যবর্ত্তিস্থান খুঁজিতে ছিলাম, তখনই আপনাদিগকে দেখিলাম। (এই পর্য্যন্তই আমি জানি)

कलयसि कलितोऽहं वल्लभे! देहि वाचम्,
भ्रमति हृदयमन्तर्विह्वलं, निर्दयासि॥ (४५)

उभे। हा पिअसहि! कहिं गदासि। (क)

---

(क) हा प्रियसखि! कुत्र गतासि?

---

निर्व्वचनीयं मङ्गलेभ्यो यदन्यत् अमङ्गलमित्यर्थः (अत्र हातिमत्वादमङ्गलशब्दोच्चारणासामर्थ्येन वक्राभिधानमिति मन्तव्यम्) अहं त्वददर्शनेन सन्देह्मि, त्वमतीव अदर्शनात् कपालकुण्डलाग्रासहरणाशङ्केति भावः। अतएव उत्कण्ठितोऽस्मि तद्दर्शनार्थमतीवोत्कण्ठितोऽस्मि। ननु परिहासेनात्मगोपननिमित्तकमिदमदर्शनं, न तु कपालकुण्डलाकोपनिमित्तकमित्यत आह— विरमत्विति। परिहासः आत्मगोपनेनोपहासः विरमतु निवर्त्ततां नितान्ताकुलितचित्ततया मे तादृशोपहासस्यापि नायमवसर इति भावः। नन्वनुरागपरीक्षार्थमिदमात्मगोपनमित्यत आह—कलयसीति, हे वल्लभे, कलयसि अहं त्वय्यनुरक्तो नवेति यदि परीक्षसे, तदा अहं कलित एव श्मशानक्षेत्रे त्वया परीक्षित एव, तथाच ममानुरागपरीक्षार्थमपि तवेदमात्मगोपनमनावश्यकमिति भावः। अत एव वाचं ममाश्वासनोत्तरम् देहि वितर, यस्मात् मम हृदयं विघ्ने त्वददर्शनेन नितान्तविकलं सत् अन्तर्मध्ये भ्रमति अनवस्थितं वर्त्तते, कथमपि स्थैर्यं न लभत इत्यर्थः। तथा निर्दयासि, तवेदृशीमवस्थामवलोक्यापि दर्शनाप्रदानादिति भावः।

अत्र पदार्थहेतुककाव्यलिङ्गालङ्कारः। मालिनीवृत्तम्।

---

(৪৫) মাধ। হা প্রিয়ে মালতী! অয়ি কোপনে! আমি অনির্ব্বচনীয় অমঙ্গলের আশঙ্কা করিতেছি, সুতরাং তোমাকে দেখিবার জন্যও অত্যন্ত উৎকণ্ঠিত হইয়াছি। অতএব (তুমি যদি পরিহাসের জন্য আত্মগোপন করিয়া থাক, তবে) সেই পরিহাসও এ সময়ে বিরত হউক। আমি তোমার প্রতি অনুরক্ত কি না? যদি ইহার পরীক্ষা করিতেছ, তবে (শ্মশানক্ষেত্রেই) আমি পরীক্ষিত হইয়াছি। অতএব হে বল্লভে! আমার আশ্বাসের উত্তর দেও। আমার হৃদয় (তোমার অদর্শনে) বিকল হইয়া কোনরূপেই মধ্যে স্থিরতা লাভ করিতে পারিতেছে না। তুমি (নিতান্ত) নির্দ্দয়া হইয়াছ, (যেহেতু এ সময়েও দেখা দিতেছ না)।

(ক) উভয়ে। হা প্রিয়সখি! তুমি কোথায় গিয়াছ?

मक। किमित्यविज्ञाय वयस्य! वैक्लव्यमवलम्बसे। (४६)

काम। सखे! किं त्वमपि न जानासि माधवस्नेह-दुःखितायास्तस्याः कातर्य्यचेष्टितानि! (४७)

मक। अस्त्येतत्, किन्तु भगवतीपादमूलगमनमप्याशङ्कते, तदेहि तत्र तावत् पश्यावः। (४८)

उभे। एवमपि सम्भाव्यते। (ख)

माध। एवं नाम भवतु। [ सर्व्वे परिक्रामन्ति। ] (४९)

विचिन्त्य साकूतम्।

मक। याता भवेद्भगवतीभवनं सखी नो
जीवन्त्यथैष्यति, न वेत्यभिशङ्कितोऽस्मि।

---

(ख) एवमपि सम्भाव्यते।

---

(४६) अविज्ञाय प्रियसख्या. किमभवदिति विशेषतोऽनवधार्य्य, वैक्लव्यं कातर्य्यं।

(४७) माधवस्नेहदुःखिताया इति माधवस्नेहक्लिष्टाया इत्यर्थः। कातर्य्यचेष्टितानि वैक्लव्यनिमित्तकाध्यवसायान्। नन्दनेन सह विवाहस्योद्योगे सति मत्प्राप्तिनैराश्येन मालतीमरणमेवाङ्गीकृतवतीति त्वयापि प्रत्यक्षीकृतमित्याह—वैऽपि मम विपत्तिशङ्कया सदैव किमप्यत्याहितं कर्त्तुं व्रजतीति शङ्कैव मे विशेषतः कातरताकारणमिति भावः।

(४८) अस्त्येति। एतत् मालत्या मरणचेष्टितम् अस्ति तथापि तत् परिज्ञायत एवेत्यर्थः।

(४९) एवं नाम मालत्यन्वेषणार्थमस्माकं भगवतीभवने गमनमेव।

(५०) यातेति। नः अस्माकं सखी मालती भगवतीभवनं कामन्दकीनिलयं गता याता भवेत्। तत्र गमनमपि नासम्भवमित्यर्थः। अथ किन्तु जीवन्ती प्राणान् धारयन्ती

---

(৪৬) মক। বয়স্য! না জানিয়াই তুমি এত কাতরতা অবলম্বন করিতেছ কেন?

(৪৭) মাধ। সখে! তুমিও জাননা কি? মাধব-স্নেহদুঃখিতা মালতীর কাতরতার কিরূপ অধ্যবসায়।

(৪৮) মক। তাহা আমি জানি, কিন্তু ভগবতী কামন্দকীর পাদমূলে গমনেরও আমি আশঙ্কা করি। অতএব এস সেই স্থানেই আমরা দেখি।

(৪৯). মাধ। তাহাই হউক। ( সকলে পাদবিক্ষেপ করিতে লাগিল )

प्रायेण बान्धवसुहृत्प्रियसङ्गमादि,
सौदामिनीस्फुरणचञ्चलमेव सौख्यम् ॥ (५०)

इति निष्क्रान्ताः सर्वे।

इति मालतीमाधवे मालत्यपहारो नामाष्टमोऽङ्कः ॥ (५१)

---

एष्यति आयास्यति नवेति अभिशङ्कितः सञ्जातशङ्कः अस्मि। कुत इयं शङ्केत्यत आह—प्रायेणेति बान्धवाः भ्रात्रादयः, सुहृदः मित्राणि, प्रियाः प्रेमोपयुक्ताः दारादयः तेषां सङ्गमः संसर्गनिमित्तकं सुखं आदिर्यस्य यथाभूतं सौख्यं सुखं प्रायेण बाहुल्येन सौदामिनी-स्फुरणवत् चपलप्रभाविकाशवत् चञ्चलमेव क्षणिकमेव। तथाच माधवस्य मालतीसङ्गमजनितं सुखमपि तथा चञ्चलं भवितुमर्हतीति भावः।

अत्र सङ्गमशब्दस्य रूढिप्रयोजनाभावादशक्तिकृतलक्षणया सङ्गमनिमित्तकसुखपरत्वा-श्रयार्थत्वदोषः। एवं लुप्तोपमा, सामान्येन विशेषसमर्थनरूपार्थान्तरन्यासश्चालङ्कार इति तयोः संसृष्टिः। वसन्ततिलकावृत्तम्।

परमनिपुणेन कविना सन्दर्भेणानेन "प्रियसङ्गमादिजनितं सौख्यं पुनरपि माधवे सौदामिन्याः प्रथमाङ्कविष्कम्भकसूचितायाः अग्रिमाङ्कप्रवेक्ष्यमाणायाः कस्याश्चित् कामन्दकीशिष्यायाः स्फुरणेन व्यापारविशेषेण चञ्चलं सञ्चलनवत् भविष्यतीत्यर्थस्यापि सूचितत्वात् "द्वितीयं पताका-स्थानं" प्रकटीकृतम्। तल्लक्षणं यथा दर्पणे—

"यत्रार्थे चिन्तितेऽन्यस्मिन् तल्लिङ्गोऽन्यः प्रयुज्यते।
आगन्तुकेन भावेन पताकास्थानकन्तु तत्।"
"वचः सातिशयश्लिष्टं नानाबन्धसमाश्रयम्।
पताकास्थानकमिदं द्वितीयं परिकीर्त्तितम् ॥"

(५१) कथावस्तुन्यत्रैकं मालत्यपहारस्यैवास्य प्रधानव्यापारत्वात्तन्नाम्नैवाङ्कोऽयं निर्दिष्टः। क्वचित् पुस्तके "मालत्यपहारोनाम"त्यंश एव नास्तीति।

इति काव्यतर्कतीर्थोपनामक-श्रीकृष्णविहारितर्कसिद्धान्तभट्टाचार्यकृतायां तत्त्वबोधिनी-समाख्यायां मालतीमाधवव्याख्यायामष्टमाङ्कविवृतिः समाप्ता।

---

(५०) मक। (চিন্তা করিয়া আগ্রগত) আনাদেব প্রিয়সখী মালতী ভগবতী কামন্দকীর ভবনেও যাইতে পারে। কিন্তু জীবনধারণ করিয়া আসিবে

# नवमोऽङ्कः।

ततः प्रविशति सौदामिनी। (१)

सौदा। एषास्मि सौदामिनी, भगवतः श्रीपर्वतादुत्पत्य पद्मावतीमुपाश्रिता, मालतीविरहिणः संस्तुतप्रदेशदर्शनासहिष्णोः स्थानं परित्यज्य, सह सुहृद्वर्गेण हृहद्रोणोशैलकान्तारप्रदेशं परिभ्रमतो माधवस्याधुनान्तिकमुपयामीति। भोस्तथाहमुत्पतिता, यथा सकल एष गिरिनगरग्रामसरिदरण्यव्यतिकरश्चक्षुषा परिक्षिप्यते। (१)

[ पश्चाद्विलोक्य। ] साधु साधु। (२)

---

(१) तत इति। सौदामिनी नन्नाम्नी लब्धयोगबला काचित् कामन्दकीशिष्या।

(२) स्वयमेव स्वपरिचयं ददाति—एषास्मीति, या खलु कामन्दक्या परमादरेण योगशिक्षामापादिता सा सौदामिन्यस्मीत्यर्थः। तथाच कामन्दकीपरमशिष्यत्वादस्य माधवस्योपकारे मयाप्यवश्यं यतितव्यमिति भावः। सिद्धस्थानत्वेन देवतात्मकतया श्रीपर्वतस्य भगवत इति विशेषणम्। उत्पत्य योगबलेनाकाशे समुत्थाय। पद्मावतीं तदभिधानामीनां राजधानीमुपाश्रिता प्राप्ता। संस्तुतः मालत्या सह विहारेण परिचितः यः प्रदेशः तस्य दर्शनासहिष्णोः

---

কি না এ বিষয়ে আমি শঙ্কিত হইতেছি। কারণ ভ্রাত্রাদিবান্ধব মিত্র ও কলত্রাদি প্রিয়জনের সঙ্গমজনিত সুখ প্রায়শঃই বিদ্যুদ্বিকাশের ন্যায় চঞ্চল হইয়া থাকে।

( সকলের প্রস্থান )

(৫১) মালতীমাধবের "মালত্যপহার"নামক অষ্টম অঙ্ক সমাপ্ত।

---

(১) ( তৎপরে ( কামন্দকীশিষ্যা ) সৌদামিনীর প্রবেশ )

(২) সৌদা। ( কামন্দকী যাহাকে পরম আগ্রহের সহিত যোগশিক্ষা দিয়াছিলেন ) আমি সেই সৌদামিনী। ভগবৎশ্রীপর্ব্বত হইতে যোগবলে

पद्मावती विमलवारिविशालसिन्धु-
पारासरित्परिकरच्छलतो बिभर्त्ति।
उत्तुङ्गसौधसुरमन्दिरगोपुराट्ट-
संघट्टपाटितविमुक्तमिवान्तरीक्षम्॥ (२)

---

विश्लेषक्लेशोद्दीपकतया ईदृशवाचमस्य, स्थानं तत्संस्तुतप्रदेशं, सुहृद्दर्शेव मकरन्दप्रमुखात्मीयसमूहेन, वृहद्द्रोणी नदीविशेषः तया उपलक्षितो यः शैलः पर्वतः तस्य कान्तारो दुर्गमार्गः तदात्मको यः प्रदेशः स्थानं तं। उपयामि—मालतीवृत्तान्तेन परिसान्त्वनाय गच्छामि। भो इति विस्मये। तथा तेन प्रकारेण, उत्पतिता ऊर्द्धं उत्थिता, गिरिः पर्वतः नगरं देवतायतनप्रासादापणादिसङ्कुलं वसतिस्थानं, ग्रामः "तथा शूद्रजनप्रायाः सुसमृद्धकृषीवलाः। क्षेत्रोपयोगभूमध्ये वसति ग्रामसञ्ज्ञिता॥" इत्युक्तलक्षणः, सरित् नदी, अरण्यं वनं, तेषां व्यतिकरः समूहः, परिचिष्यते सुस्पष्टं विलोक्यते, मयेति शेषः। एतेन परिचितोद्देशोत्पतनं सूचितम्। पश्चादवलोक्येत्यनेन कथञ्चित् पद्मावत्यतिक्रमप्रतीतेर्व्यङ्गातिशयो ध्वनितः। साधुसाध्विति पद्मावतीसमुत्कर्षदर्शनजनितहर्षातिशये द्विरुक्तिः।

(२) पद्मावतीति। पद्मावती तदभिधानेयं नगरी, विमलानि निर्मलानि वारीणि जलानि ययोस्तथाभूतयोः विशालयोः विस्तीर्णयोश्च सिन्धुपारासरितोः सिन्धुपारानामकनद्योः व्यतिकरच्छलतः परिवेष्टनरूपसम्पर्कव्याजेन उत्तुङ्गानां उन्नतानां सौधानां राजप्रासादानां सुरमन्दिराणां देवतानिलयानां गोपुराणां पुरद्वाराणां अट्टानां अट्टालिकानां संघट्टेन घर्षणेन पाटितविमुक्तं आदौ पाटितं विदारितं पश्चात् विमुक्तं त्यक्तमित्यर्थः (स्नातानुलिप्तवत् समासः) अन्तरीक्षं गगनमिव बिभर्त्ति धारयति। समुन्नतप्रासादादिभिर्विदार्य निपातितः गगनमेव नदीद्वयरूपेण परिणतं परिलक्ष्यते इति भावः।

अत्र वाच्या सापह्नवा क्रियोत्प्रेक्षालङ्कारः, वसन्ततिलका वृत्तम्।

---

আকাশমার্গে উঠিয়া পদ্মাবতীনামক এই রাজধানী প্রাপ্ত হইয়াছি। মালতী-বিরহী মাধব মালতীর সহিত বিচরণে পরিচিত স্থানের দর্শনে অসহিষ্ণু হইয়া সেই পরিচিত স্থান পরিত্যাগ করতঃ বৃহদ্দ্রোণীনামক নদীসংসৃষ্ট পর্ব্বতের দুর্গম পথপ্রদেশে পরিভ্রমণ করিতেছে (মালতী বৃত্তান্ত দ্বারা শান্ত করিবার জন্য) তাহারই নিকট সম্প্রতি যাইতেছি। অহো!! আমি সেই প্রকার উঠিয়াছি—যে প্রকারে এই সমস্ত পর্ব্বত, নগর, গ্রাম, নদী ও অরণ্যসমূহ চক্ষু দ্বারাই স্পষ্টরূপে দেখিতেছি। (পশ্চাদ্দিকে অবলোকন করিয়া) সাধু সাধু।

यवत्य एष तुमुलो ध्वनिरम्बुगर्भ-
गम्भीरनूतनघनस्तनितप्रचण्डः।
पर्य्यन्तभूधरनिकुञ्जविजृम्भणेन
हेरम्बकण्ठरसितप्रतिमानमेति॥ (६)

एतान्यन्दनाश्वकर्णसरलपाटलप्रायतरुगहनाः परिणतमालूर-सुरभयोऽरण्यगिरिभूमयः स्मारयन्ति खलु नवकदम्बजम्बूवना-वनद्धान्धकारगुरुनिकुञ्जगभीरगह्वरोद्गारगोदावरीरवमुखरितविशाल-मेखलाभुवो दक्षिणारण्यभूधरान्। (७)

---

णाक्रिया: क्षितेः तन्नामकनद्याः, दारितं विपाटितं रसातलं भुवः स्वरूपं येन तथाभूतः ("रसा विश्वम्भरा स्थिरा" इति "अधःस्वरूपयोरस्त्रीतल"मिति च चामरः) तटात् शैलतटप्रदेशात् प्रपातः प्रकृष्टनिपतनं।

(६) यवत्य इति। यवत्यः यत्तटप्रपातजनिताम्बूनि जलानि गर्भे यस्य तथाभूतः अत एव गम्भीरः गभीरमन्द्रध्वानो यो नूतनघनः नवीनजलधरः तस्य स्तनितवत् गर्जनवत् प्रचण्डः विशालः एषः आकर्ण्यमानः तुमुलः सङ्कुलः ध्वनिः शब्दः पर्य्यन्तभूधराणां प्रान्तस्थितशैलानां निकुञ्जेषु लतादिपिहितोदरस्थलेषु विजृम्भणेन प्रतिध्वनिवशाद्वृद्धिलाभेन हेरम्बकण्ठरसितस्य गजाननकण्ठगर्जितस्य प्रतिमानं साम्यं एति लभते।

अत्र प्रथमार्द्धे समासगता श्रौती लुप्तोपमा, चतुर्थचरणे पुनरार्थी समासगतोपमेत्यनयोरङ्गाङ्गिभावेन सङ्करः। वसन्ततिलकावृत्तम्।

(७) एता इति। एताः परिदृश्यमानाः, चन्दनाश्वकर्णसरलपाटलप्रायाः स्वस्वनामप्रसिद्धचन्दनादिवृक्षाः तरवो यत्र तथाभूतं गहनं वनं यासु तथाभूताः, तथा परिणतैः सुपक्वैः मालूरैः बिल्वफलैः सुरभयः सद्गन्धयुक्ताः अरण्यगिरिभूमयः वनशैलप्रदेशाः, नवकदम्ब-

---

(৬) জলপূর্ণতাবশতঃ গম্ভীরনাদী নূতন মেঘের গর্জ্জনের ন্যায় প্রচণ্ড সেই তটপ্রপাতজনিত এই তুমুলধ্বনি প্রান্তস্থিত পর্ব্বতনিকুঞ্জে প্রতিধ্বনি বশতঃ বৃদ্ধিলাভ দ্বারা গজাননের কণ্ঠগর্জ্জনের সাদৃশ্য লাভ করিতেছে।

(৭) চন্দন, অশ্বকর্ণ, সরল ও পাটলপ্রায় বৃক্ষগহন বনশালী ও পরিপক্ব বিল্বফলের গন্ধযুক্ত এই পরিদৃশ্যমান অরণ্যপর্ব্বতভূমিসকল যাহাদের বিশাল নিতম্বপ্রদেশ নূতন কদম্ব ও জম্বুবনসম্বদ্ধ অন্ধকারে বিশালবৎ প্রতীয়মান নিকুঞ্জ

अयञ्च मधुमतीसिन्धुसम्भेदपावनो भगवान् भवानीपतिः अपौरुषेयप्रतिष्ठः सुवर्णबिन्दुः इत्याख्यायते। प्रणम्य—(८)।

जय देव भुवनभावन! जय भगवन्नखिलवरद! निगमनिधे!।
जय रुचिरचन्द्रशेखर! जय मदनान्तक! जय जगदादिगुरो! (९)

(नमनमभिनीय)

---

नवीनेन कदम्बजम्बुवनेन अवनद्धः सूर्य्यादिकिरणावरोधेन संबद्धः यः अन्धकारः तेन गुरुः विशालत्वेन प्रतीयमानः निकुञ्जः लतादिपिहितोदरस्थानं यत्र तथाभूते गभीरगह्वरे दुरवबोध-गुहाया उद्गारः प्रवाहप्रवेशात् समुत्थितनिर्घोषस्य तथाभूतेन गोदावार्य्याः नदभिधानसुप्रसिद्धनद्या रवेण निनादेन मुखरिताः शब्दायमानाः विशाला विस्तीर्णाः मेखलाभुवः नितम्बप्रदेशाः येषां तथोक्तान् दक्षिणारण्यभूधरान् दक्षिणाशावस्थितवनवर्त्तिपर्व्वतान् स्मारयन्ति। एतत्पर्व्वत-प्रदेशदर्शनेन एतत्सदृशदक्षिणारण्यपर्व्वतान् स्मरामीत्यर्थः।

अत्र सदृशवस्तुदर्शनेन सदृशवस्तुस्मरणात् स्मरणालङ्कारः। तल्लक्षणं यथा दर्पणे—"सदृशानुभवाद्वस्तुस्मृतिः स्मरणमुच्यते" इति।

(८) अयञ्चेति। मधुमती सिन्धुश्चेतन्नामकनद्योः सम्भेदं सङ्गमस्थलं पावयति अधिष्ठानेन पूतं करोतीति तथोक्तः, अपौरुषेया पुरुषेणासम्पादिता प्रतिष्ठा यस्य तथोक्तः अनादिप्रतिष्ठ इत्यर्थः, अयं भगवान् भवानीपतिः शिवः सुवर्णानां बिन्दवः यत्र, स सुवर्ण-बिन्दुः इति इत्यनेन आख्यायते अभिधीयते। एतल्लिङ्गोपरि सुवर्णकणानां स्थाने स्थाने विद्यमानत्वात् "सुवर्णबिन्दु"रिति सान्वर्थनाम्नायं प्रसिद्ध इत्यर्थः।

अत्र भवानीपतिशब्देन भवान्याः पत्यन्तरप्रतीतिकारित्वात् "मृतवेऽस्तु भवानीश"इत्यत्रेव विरुद्धमतिकारितादोषः।

(९) शिवं स्तोतुमाह—जयेति। हे भुवनभावन! चतुर्द्दशभुवनोत्पत्तिहेतो! तथाच मदुत्पत्तेरपि हेतुत्वात् मां प्रत्यपि दया वितरेत्यभिप्रायः। अखिलानां समस्तभक्तानाम् वरं

---

যুক্ত গভীর গুহায় সমুত্থিত গোদাবরী নদীর শব্দে মুখরিত, তাদৃশ দক্ষিণারণ্য-বর্ত্তী পর্ব্বতসমূহ স্মরণ করাইতেছে।

(৮) মধুমতী ও সিন্ধুনদীর সঙ্গমস্থানের পবিত্রতাকারী অনাদিপ্রতিষ্ঠ এই ভগবান মহাদেব "সুবর্ণবিন্দু" নামে অভিহিত। (নমস্কার করিয়া)

(৯) হে দেব! চতুর্দ্দশ ভুবনোৎপত্তি হেতো! হে ভগবন্! হে সমস্তাভিলষিতবরদানকারিন্! হে বেদাদিশাস্ত্রনিচয়ের আশ্রয়! হে

अयमभिनवमेघश्यामलोत्तुङ्गसानु-
र्मदमुखरमयूरीमुक्तसंसक्तकेकः।
शकुनिशवलनीड़ानोकहस्निग्धवर्ष्मा,
वितरति बृहदश्मा पर्वतः प्रीतिमक्ष्णोः॥ (१०)

अपिच— दधति कुहरभाजां यत्र भल्लूकयूना-
मनुरसितगुरूणि स्त्यानमम्बूकृतानि।

---

अभिमतमितार्थं ददातीति तथोक्तः। ममाप्यभिमतार्थं मुक्तिं दातुमर्हसीत्याशयः। निगमानां वेदादिशास्त्राणां निधे। आधार। तथाच मम शास्त्रीयज्ञानमपि देहीति भावः। रुचिरः मनोज्ञः चन्द्रः मौलौ चूड़ायां यस्य तथोक्त। मदनान्तक। कामविनाशक। तथाच ममापि कामभावं समूलं विनाशयेत्याशयः। आदिगुरुलञ्च सृष्ट्यादौ ब्रह्मणोऽप्युपदिष्टत्वादिति बोध्यम्। तथाच मामप्युपदिशेत्याशयः।

अत्र साभिप्रायविशेषणानां प्रयुक्तत्वात् परिकरालङ्कारः। आर्य्याजातिः।

(१०) अयमिति। अभिनवैर्नूतनैः मेघैः जलधरैः श्यामलाः कृष्णवर्णाः उत्तुङ्गाः उन्नताः सानवः एकदेशा यस्य तथाभूतः, मदेन मत्ततया मुखराभिः शब्दं कुर्व्वतीभिः मयूरीभिः मुक्ताः परित्यक्ताः कृता इति यावत् संसक्ताः सम्मिलिताः केकाः स्वकीयशब्दाः (केका वाणी मयूरस्य॰ त्यमरः) यत्र तथाभूतः, तथा शकुनिभिः नानावर्णपक्षिभिः शवलितैः कर्व्वुरितैः नीड़ानोकहैः कुलायवद्भिः स्वावासतरुभिरिति यावत्, स्निग्धं वर्ष्म शरीरं यस्य तथाभूतः,एवं बृहन्तो विशालाः अश्मानः शिलाः यस्य तथाभूतः, अयं परिदृश्यमानः पर्व्वतः अक्ष्णोर्नेत्रयोः प्रीतिं सुखं वितरति यच्छति। रमणीयसर्व्वाङ्गत्वादिति भावः। मालिनीवृत्तम्।

(११) दधतीति। यत्र यस्मिन् पर्व्वते कुहरभाजां गह्वरवासिनां भल्लूकयूनां युवक-

---

মনোহর চন্দ্রচূড়! হে কামবিনাশক! হে জগদাদিগুরো! (আমার মনের অভিলাষ পূরণ করিয়া) তুমিই জয়লাভ কর।

(১০) (গমনের অভিনয় করিয়া) যাহার সানু (প্রদেশ) নূতন মেঘের ন্যায় শ্যামবর্ণ ও উন্নত, মদমত্ত ময়ূরীগণ যাহাতে থাকিয়া কেকাধ্বনি করিতেছে, যাহার শরীর নানাবর্ণ পক্ষিকর্ব্বুরিত (পক্ষীর নিবাস বৃক্ষ দ্বারা স্নিগ্ধ) এবং যাহার প্রস্তরসমূহ অত্যন্ত বৃহৎ, তাদৃশ এই পরিদৃশ্যমান পর্ব্বত নেত্রের প্রীতি-বিতরণ করিতেছে।

शिशिरकटुकषायः स्त्यायते शल्लकीना-
मिभदलितविकीर्णग्रन्थिनिष्यन्दगन्धः ॥ (११)

[ ऊर्द्ध्वमवलोक्य । ] कथं मध्याह्नः, तथाहि अत्र सम्प्रति
काश्मर्य्याः कृतमालमुद्गतदलं कौयष्टिकष्टीकते,
तीराश्मन्तकशिम्बिचुम्बितमुखा धावन्त्यपः पूर्णिका: ।

---

भल्लूकाना (बलातिरेकेण यौवन एव ध्वनेर्द्दैर्घ्यसम्भवात्तत्सूचनाय युवशब्दप्रयोग इति नापुष्टत्वदोषः ) अम्बूकृतानि सनिष्ठीवशब्दाः भल्लूकानां स्वाभाविका थुत्कारशब्दा इत्यर्थः, ( अम्बूकृतं सनिष्ठीवमित्यमरः ) अनुरसितेन प्रतिध्वनिना गुरूणि स्थूलानि सन्ति स्त्यानं वृद्धिं दधति धारयन्ति । तथा शल्लकीनां गजप्रियलताविशेषाणां शीतलस्पर्शः कटुः कटुरसः कषायः सुरभिश्च ( कटुतिक्तकषायास्तु सौरभेऽपि प्रकीर्त्तिता इति हलायुधः ) इभैर्गजैः दलिताः खण्डिता विकीर्णाः चतुर्द्दिक्षु विक्षिप्ताश्च ये ग्रन्थयः सन्धिप्रदेशाः तेषां निष्यन्दस्य चरितरसस्य गन्धः स्त्यायते वृद्धिं प्राप्नोति, सर्व्वतः प्रसरतीत्यर्थः । अत्र गन्धे शिशिरत्वादिकमारोप्यमेवेत्यवगन्तव्यम् ।

भल्लूकशब्दस्त्यानं प्रति 'अनुरसितगुरूत्वस्य हेतुत्वेनोपन्यासात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः । मालिनीवृत्तम् ।

अयञ्च श्लोको महावीरचरितोत्तररामचरितयोरप्यविकलः परिलक्ष्यत इति महत्त्वव कवेरास्थेति मन्तव्यम् ।

( १२ ) काश्मर्य्या इति । कौयष्टिकः ( कोड़ा इति प्रसिद्धः ) पक्षिविशेषः, काश्मर्य्याः गम्भारीपादपात् ( गम्भारी सर्व्वतोभद्रा काश्मरी मधुपर्णिकेत्यमरः ) उद्गतानि अचिरप्ररूढानि दलानि पत्राणि यस्य तथाभूतं कृतमालं 'आरग्वधापरपर्य्यायं वृक्षविशेषं 'आरग्वधोऽथ सम्पाकः कृतमालस्तथार्ग्वध इति वैद्यकोषः ) टीकते गच्छति । आतपतप्तच्छायाभावात् विरलपत्रं गाम्भारीवृक्षं परित्यज्य बहुनूतनपत्रावृतं कृतमालवृक्षं गच्छतीति भावः । तीराश्मन्तकानां

---

(১১) এই পর্ব্বতে গহ্বরবাসী ভল্লূক যুবকদিগের সনিষ্ঠীবনশব্দ ( অর্থাৎ স্বাভাবিক থুৎকারশব্দ ) প্রতিধ্বনি দ্বারা স্থূলতর হইয়া বৃদ্ধিলাভ করিতেছে। এবং শীতল কটু ও সুরভি গজকর্ত্তৃক দলিত ও ইতস্ততঃ বিক্ষিপ্ত শল্লকীর সন্ধিস্থানবিগলিত রসের গন্ধ বৃদ্ধি প্রাপ্ত হইতেছে।

(১২) ( ঊর্দ্ধে অবলোকন করিয়া ) এই যে মধ্যাহ্ন কাল উপস্থিত, অতএব সম্প্রতি—

दात्यूहैस्तिनिशस्य कोटरवति स्कन्धे निलीय स्थितम्,
वीरुन्नीडकपोतकूजितमनुक्रन्दन्त्यधः कुक्कुभाः ॥ (१२)

तद्भवतु माधवमकरन्दावन्विष्य, यथाप्रस्तुतं साधयामि। (१३)

इति निष्क्रान्ता (शुद्धविष्कम्भकः।) (१४)

---

तीरस्थितवीरणानां (अभयावदेऽथ्विकाद्यामृणालकं वीरणोऽपि चेति धरणिः) शिम्बिषु शिखासु (शिम्बिः शिखा लतायामिह इति विश्वः) चुम्बितं तदग्रभागे संलग्नं मुखं येषां तथाभूताः पूर्विकाः नासाच्छिद्रीसंज्ञकपक्षिविशेषाः (नासाच्छिद्रान्तु पूर्विकेति विश्वः) अपो वारिणि धावन्ति तीव्रतराः जलपानार्थमतिद्रुतं जलसमीपे गच्छन्तीत्यर्थः। दात्यूहैः कालकण्ठकापरपर्य्यायपक्षिविशेषैः (दात्यूहः कालकण्ठक इत्यमरः) तिनिशस्य अतिमुक्तकाख्यवृक्षविशेषस्य (तिनिशे स्यन्दनो नेमी रथद्रुरतिमुक्तक इत्यमरः) कोटरवति अवस्थानोपयुक्तच्छिद्रशालिनि स्कन्धे प्रकाण्डे (अस्त्री प्रकाण्डः स्कन्धः स्यान्मूलाच्छाखावधिस्तरोरित्यमरः) निलीय विशिष्य कोटरमध्ये लीनीभूत्वा स्थितम्। तथा कुक्कुभाः वनकुक्कुटाकृतिपक्षिविशेषाः अधः अधोदेशे अवतिष्ठमानाः वीरुन्नीडेषु लतावस्थितकुलायेषु ये कपोतास्तेषां कूजितं अव्यक्तरवं अनुक्रन्दन्ति स्वभावादनुकृत्य शब्दं कुर्वन्ति।

अत्र प्रथमार्द्धे छेकानुप्रासः, चतुर्थपादे वृत्त्यनुप्रासः, एतं मध्याह्नातिशायनरूपकार्यं प्रति बहूनां कारणानामुपन्यासात् समुच्चयालङ्कार इत्येषां परस्परनैरपेक्ष्येण संकरः। शार्दूलविक्रीडितं वृत्तम्।

(१३) प्रस्तुतं प्रस्तावितं अनतिक्रम्य वर्त्तमानं यथा प्रस्तुतं परित्राणवनाय माधवान्विक-गमनमित्यर्थः, साधयामि सम्पादयामि।

(१४) विष्कम्भकलक्षणम् "स्नानं परित्यज्य" इत्यादिना इतःपूर्वम् "माधवमकरन्दा

---

কোয়ষ্টিক নামক (কোড়া) পক্ষী (পত্রশূন্য) শাখাশ্রী বৃক্ষ হইতে পত্র-শালী আরগ্বধ বৃক্ষে যাইতেছে। নাসাচ্ছিন্নীনামক পক্ষী বীরণের শিখায় মুখ সংলগ্ন করিয়া জলের দিকে ধাবিত হইতেছে। কালকণ্ঠক নামক পক্ষী তিনিশবৃক্ষের কোটরযুক্ত কাণ্ডে বিলীন হইয়া অবস্থান করিতেছে। এবং কুক্কুভপক্ষী অধোদেশে থাকিয়া লতাবস্থিত নীড়নিবাসী কপোতদিগের অব্যক্ত ধ্বনির অনুসরণ করিয়া শব্দ করিতেছে।

(১৩) ভাল, তবে এখন মাধব ও মকরন্দের অন্বেষণ করিয়া প্রস্তাবিত কার্য্যের সম্পাদন করি, অর্থাৎ সাধনা করিবার জন্য তাহাদের নিকটেই যাই।

ततः प्रविशति माधवो मकरन्दश्च। (१५)

सकरुणं निश्वस्य।

मक। न यत्र प्रत्याशामनुपतति नो वा रहयति,
प्रविचिन्नं चेतः प्रविशति च मोहान्धतमसम्।
अकिञ्चित्कुर्वाणाः पशव इव तस्या वयमहो
विधातुर्वामत्वाद्विपदि परिवर्त्तामह इमे॥ (१६)

---

वन्विष्ये"त्यादिना। भाविकथांशस्य च निदर्शनात् शुद्धत्वञ्च मध्यमैकपात्रप्रयुज्यत्वादिति मन्तव्यम्।

.(१६) न यत्रेति। चेतः अस्माकं मनः (कर्त्तृ) यत्र विपदि प्रत्याशां मालतीप्राप्तिविषयिणीमाशां न अनुपतति न अधिगच्छति, अनेकान्वेषणेनापि तद्वार्त्ताया अप्यनधिगमादिति भावः। नो वा रहयति मालतीप्राप्तिप्रत्याशां न वा परित्यजति, दुरतिक्रमाघोरघण्टाक्रमणादितोऽपि परिक्रमणदर्शनादिति भावः। (परन्तु) प्रविचिन्नं मालतीलाभार्थेनतीव चञ्चलं सत् मोह एव किङ्कर्त्तव्यताविमूढत्वमेव अन्धंतमसं गाढतरान्धकारः तत् प्रविशति। किङ्कर्त्तव्यमित्यवधारयितुं न पारयतीत्यर्थः। (अहो इति खेदे) इमे वयं विधातुर्दैवस्य वामत्वात् प्रातिकूल्यात् पशव इव (आहारनिद्रादिपशुसाधारणधर्म्ममात्रशालित्वादिति भावः) तस्या मालत्याः अकिञ्चित्कुर्वाणाः विपत्प्रतीकारानुरूपं किञ्चिदप्यकुर्वाणा इत्यर्थः, विपदि मालतीसम्बन्धाप्राप्तिरूपविपत्ती परिवर्त्तामहे तिष्ठामः। तथाच दैवप्रातिकूल्यादेव मालत्याः किञ्चित् कर्त्तुं वयमसमर्थाः, न तु पुरुषकारविरहादिति भावः।

अत्र चेत इत्येककर्त्तृकारकेण अनुपतत्यादीनामनेकक्रियाणामन्वयाद्दीपकालङ्कारः, पशव इवेत्युपमालङ्कारश्चैत्यनयोः परस्परनैरपेक्षेण संसृष्टिः। शिखरिणीवृत्तम्।

---

(১৪) সৌদামিনীর প্রস্থান। (এই অংশের নাম বিকম্ভক)

(১৫) তৎপরে মাধব ও মকরন্দের প্রবেশ।

(১৬) মক। (সকরুণ নিশ্বাস ফেলিয়া) যে বিপদে আমাদের মন মালতীর প্রত্যাশা অবলম্বনও করিতে পারিতেছে না, একেবারে পরিত্যাগও করিতে পারিতেছে না, পরন্তু অত্যন্ত চঞ্চল হইয়া কিংকর্তব্যবিমূঢ়তারূপ গাঢ় অন্ধকারে প্রবিষ্ট হইতেছে। অহো! দৈবপ্রতিকূলতাবশতঃ আমরা পশুর ন্যায় মালতীর কোনই উপকার করিতে না পারিয়া এই বিপদে অবস্থিত আছি।

माध। हा प्रिये मालति! क्वासि, कथमविज्ञाततत्त्वम् अद्भुततमं झटिति पर्य्यवसितासि, ननु अकरुणे! प्रसीद सम्भावय माम्। (१७)

प्रियमाधवे! किमसि मय्यवत्सला
ननु सोऽहमेव यमनन्दयत् पुरा।
अयमुद्गृहीतकमनीयकङ्कण-
स्तव मूर्त्तिमानिव महोत्सवः करः॥ (१८)

वयस्य मकरन्द! दुर्लभः पुनर्जगति तावतः स्नेहस्य सम्भवः। (१९)

---

(१७) माधेति। अविज्ञाततत्त्वं अनधिगतयाथार्थ्यं अतएव अद्भुततमं आश्चर्य्यतमं यथा स्यात्तथा पर्य्यवसितासि विनाशितासि।

(१८) प्रियेति। प्रियः माधवो यस्यास्तथाभूते। मालति! मयि किं किमर्थं अवत्सला स्नेहविरहिता असि। निर्निमित्तं तवेदं स्नेहराहित्यमतीवायुक्तमिति भावः। कृतं स्नेहं स्मारयितुमाह—नन्विति। अहं स एव माधवः, पुरा पूर्व्वं नगरदेवतायतनात् कामन्दकीविहारिकोद्यानगमनकाले इत्यर्थः, आगृहीतं सम्यक् विधृतं कमनीयं मनोज्ञं कङ्कणं भूषणविशेषो येन तथाभूतः, मूर्त्तिमान् धृतविग्रहः महोत्सवः आनन्द इव तवायं करः पाणिः यं समनन्दयत् समतोषयत्। तथाचाधुनापि दर्शनदानेन मम हर्षोत्पादनं सर्व्वथैव त्वया कर्त्तव्यमिति भावः।

अत्र मूर्त्तिमान् महोत्सव इव कर इति वाच्योत्प्रेक्षालङ्कारः। मञ्जुभाषिणी वृत्तम्।

अस्य च श्लोकस्य द्वितीयार्द्धमविकलमुत्तररामचरितप्रथमाङ्केऽपि परिदृश्यत इत्यनुसन्धेयम्।

(१९) तावत इति तादृशपरिमितस्येत्यर्थः।

---

(১৭) মাধ। হা প্রিয়ে! মালতি। তুমি কোথায়? সহসা কিরূপে অবিজ্ঞাত ও আশ্চর্য্যভাবে বিনাশিত হইলে?

(১৮) অয়ি প্রিয়মাধবে! মালতি! তুমি আমার প্রতি স্নেহরহিতা হইলে কেন? মনোহর কঙ্কণধারী মূর্ত্তিমান মহোৎসবপ্রায় তোমার এই পাণি পূর্ব্বে যাহাকে আনন্দিত করিয়াছিল, আমি সেই মাধব।

सरसकुसुमधामैरङ्गैरनङ्गमहाज्वर-
श्चिरमविरतोन्माथी सोढ़ः प्रतिक्षणदारुणः ।
तृणमिव ततः प्राणान्मोक्तुं मनो विधृतं तया,
किमपरमतो निर्व्यूढ़ं यत्करार्पणसाहसम् ॥ (२०)

अपिच । मयि विगलितप्रत्याशत्वाद्विवाहविधेः पुरा,
विकलकरणेम र्सर्व्वंक्लेदव्यथाविधुरैरिव ।

---

(२०) स्नेहस्यापरिमितत्व समर्थयितुमाह—सरसेति । तया मालत्या सरसानि समधूनि अभिनवानीति यावत्, यानि कुसुमानि पुष्पाणि तद्वद्धामैः सुकुमारैः अङ्गैः शरीरैः, अविरतोन्माथी अनवरतोन्मथनकारी प्रतिक्षणदारुणः सर्व्वदातिभीषणः न तु साधारणज्वरवत् सविश्राम इत्यर्थः, अनङ्गमहाज्वरः कामजमहासन्तापः चिरं बहुकालं सोढ़ः मद्वाप्तिप्रत्याशया सह्य इत्यर्थः । ततः तदनन्तरं नन्दनेन सह विवाहोद्योगे सति मद्वाप्तिप्रत्याशाविगमानन्तरमित्यर्थः, प्राणान् तृणमिव मोक्तुं परित्यक्तुं मनश्चित्तं विधृतं नियोजितम् । मरणं निश्चितमित्यर्थः । ततश्च यत्करार्पणसाहसं आत्मनैव पाणिदानसाहसं निर्व्यूढं कुलकुमार्य्या तया पित्राद्यनपेक्षया निर्व्वाहितं, अतः अपरं इतोधिकं किं स्नेहनिदर्शनं कथ्यतामीति शेषः । अपरिमितस्नेहं विना पूर्व्वोक्तमेकमपि कुलकुमार्य्या सम्पादयितुं न शक्येत इति सर्व्वथैव जगति तादृशस्नेहस्य सम्भवो दुर्लभ इति भावः ।

अत्र प्रथमपादे लुप्तोपमा, तृतीयपादे च श्रौतोपमालङ्कारः इत्यनयोः परस्परनैरपेक्ष्येण सङ्करः । हरिणीवृत्तम् ।

(२१) मयीति । हे सखे ! मकरन्द ! असौ मालती विवाहविधेः पुरा मया सह गान्धर्व्व-

---

(১৯) বয়স্য মকরন্দ। তাদৃশ অপরিমিত স্নেহের সম্ভব জগতে পুনর্ব্বার দুর্লভ।

(২০) অভিনব কুসুমের স্থায় সুকুমার-অঙ্গবিশিষ্ট এই মালতী (আমার প্রাপ্তি প্রত্যাশায়) অবিরত উন্মথনকারী ও সর্ব্বদা অত্যন্ত ভীষণ কামজ্বর বহুকাল সহ্য করিয়াছিল। তৎপরে আমার প্রাপ্তি প্রত্যাশা তিরোহিত হইলে তৃণের ন্যায় প্রাণ পরিত্যাগ করিতে সংকল্প করিয়াছিল। তৎপরে যে স্বয়ংই পাণিদানরূপ সাহস নির্ব্বাহিত করিয়াছে, ইহা হইতে অধিক স্নেহের নিদর্শন কি বলিব?

स्मरसि रुदितैः स्नेहाकूतं तथा व्यतनोदसा-
वहमपि यथाभूवं पीड़ातरङ्गितमानसः ॥ (२१)

[ सावेगम्। ] अहो नु खलु भोः! (२२)

दलति हृदयं गाढोद्वेगं द्विधा तु न भिद्यते,
वहति विकलः कायो मोहं न मुञ्चति चेतनाम्।
ज्वलयति तनूमन्तर्दाहः करोति न भस्मसात्,
प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम् ॥ (२३)

---

विवाहानुष्ठानात् प्राक् मयि विगलितप्रत्याशत्वात् नन्दनेन सह विवाहावधारणेन मदवाप्तौ हताशत्वात् मर्मच्छेदव्यथया हृदयविदारकपीड़या विधुरैः दुःखितैरिव विकलैः स्वस्वविषयग्रहणविमुखैः करणैः इन्द्रियैः उपलक्षिता सती रुदितैः रोदनैः तदा तत्प्रकारं निरतिशयमित्यर्थः, स्नेहाकूतं मद्विषयकानुरागाभिप्रायं व्यतनोत् विस्तारितवती, यथा येन स्नेहाकूतेन अहमपि पीड़या तदीयव्यथानुभवजनितक्लेशेन तरङ्गितं चञ्चलं मानसं चित्तं यस्य, तथाभूतः अभूवम् इति त्वं स्मरसि किमित्यर्थः। तथाच जगति साहसस्यैव सम्भवः सुदुर्लभ एवैयत् नास्ति वक्तव्यमिति भावः।

अत्र द्वितीयचरणे वाच्यानुमीतदेवालङ्कारः। हरिणीवृत्तम्।

(२२) सावेगमिति, तत्तत्कारणजनिताभिनवशोकावेगेन सहितं यथा स्यात्तथेत्यर्थः। "अहो नु खलु भोः" इत्येकमेवातिविषादसूचकमव्ययम्।

(२३) दलतीति। गाढः दृढ उद्वेगः मालतीवियोगजनितक्लेशः यत्र तथाभूतं हृदयं दलति विच्छिन्नं भवति, तु किन्तु द्विधा न भिद्यते द्विधाविभक्तं न भवति, तदा तु दुःखावसानप्रसङ्गादिति भावः। विकलः तद्विरहविह्वलः कायः शरीरं मोहं मूर्च्छां वहति लभते, किन्तु चेतना चैतन्यं न मुञ्चति चिराय न जहाति। तदालेऽपि पुनर्दुःखानुभवासम्भवादिति भावः। अन्तर्दाहः विरहजनितान्तःशरीरशोकसन्तापः तनुं देहं ज्वलयति सन्तापयति, किन्तु

---

(২১) হে সখে! আরও বলি, আমার সহিত গন্ধর্ববিবাহ নিষ্পন্ন হইবার পূর্ব্বে (নন্দনের সহিত বিবাহাবধারণে) আমার প্রাপ্তিপ্রত্যাশায় বিগতবশতঃ মর্মচ্ছেদ পীড়ায় দুঃখিত হইয়াই যেন স্ব স্ব বিষয় গ্রহণে বিমুখ ইন্দ্রিয়বিশিষ্টা এই মালতী রোদনদ্বারা সেইরূপ স্নেহাভিপ্রায় বিস্তার করিয়াছিল। যদ্দ্বারা আমিও তদীয় ব্যথানুভবপীড়ায় চঞ্চলমনা হইয়াছিলাম, ইহা তোমার স্মরণ আছে কি?

(২৩) গাঢ় উদ্বেগশালী আমার হৃদয় বিচ্ছিন্ন হইতেছে, কিন্তু দুইভাগে বিভক্ত হইতেছে না। তদ্বিরহবিহ্বল শরীর মূর্চ্ছা লাভ করিতেছে, কিন্তু একেবারে

मक। वयस्य माधव! निरवग्रहं दहति दैवमिव दारुणो विवस्वान्, इयञ्च ते, शरीरावस्था, तत् अस्य पद्मसरसः परिसरे मुहूर्त्तमास्यताम्। अत्र हि—(२४)

उद्दामबालकमलाकरमाकरन्द-

निष्यन्दसंवलितमांसलगन्धबन्धुः।

---

भस्मसात् भस्मीभूतां न करोति, तथात्वेऽपि दाह्याभावेन शोकाग्नेर्निर्वाणसम्भवादिति भावः। तथा मर्म्मच्छेदी हृदयविदारणकारी विधिः दैवं प्रहरति प्रहारं करोति, किन्तु जीवितं जीवनं न कृन्तति न विनाशयति, तथात्वेऽपि दुःखोपशमसम्भवादिति भावः। तथाच मरणं विना विरहदुःखनिवारणोपायो नास्ति, तन्मरणमपि मे न सम्पद्यत इत्याशयः।

अत्र विच्छिन्नत्वलोहपात्रिदिद्हज्वलनप्रहारदपकारणानां मध्येऽपि द्विधाविभक्तत्वचैतन्य-परित्यागभस्मीभूतत्वविनाशरूपकार्य्याणामभावात् चत्वारो विशेषोक्त्यलङ्काराः, तेषाञ्च मिथो नैरपेक्ष्येण संसृष्टिः। हरिणीवृत्तम्।

"नसमरसलागः षड्वेदैर्हयैर्हरिणी मता" इति लक्षणात्। "मनसि खेदः शमः स्वेद इति स्मृत" इति दर्पणलक्षणादत्र निर्वेदाख्य विमर्शसन्ध्यङ्गम्।

अयञ्च श्लोकः "गाढोद्वेगं द्विधा तु मे" स्थाने "गाढोद्वेगो द्विधा न भि" इत्येतावन्मात्रेण परिवर्त्तितः उत्तररामचरितेऽपि दृश्यत इत्यनुसन्धेयम्।

(२४) मकेति। दैवं पूर्व्वकर्म्मार्ज्जितदुरदृष्टमिव दारुणः प्रचण्डकिरणत्वात्तीक्ष्णः विवस्वान् माध्याह्निकः सूर्य्यः निरवग्रहं निष्प्रतिबन्धं यथा स्यात्तथा दहति त्वां सन्तापयति। इयं नितान्तं क्लान्तिसमाक्रान्ता। पद्मसरसः पद्मबहुलसरोवरस्य परिसरे तीरे मुहूर्त्तं कियत्समयं व्याप्य आस्यतां उपविश्यताम्। अत्र दैवमिवेति पूर्णोपमालङ्कारः, लिङ्गभेदोऽप्येतादृशस्थले धीमतामुद्वेगाभावान्नोपमादोषः "यत्रोद्वेगो न धीमता"मिति दण्डिवचनात्।

---

চৈতন্য পরিত্যাগ করিতে পারিতেছে না। বিরহজনিতাত্যন্তীব্র শোকসন্তাপ শরীর সন্তাপিত করিতেছে, কিন্তু একেবারে ভস্মীভূত করিতেছে না। এবং হৃদয় বিদারণকারী বিধি প্রহার করিতেছে, কিন্তু একেবারে বিনাশিত করিতেছে না।

(২৪) মক। বয়স্য মাধব! দৈবের ন্যায় দারুণ সূর্য্য ও অপ্রতিবন্ধে (তোমাকে) দগ্ধ করিতেছে। তোমার শরীরাবস্থাও ক্লান্তিযুক্ত, অতএব এই পদ্মবহুল সরোবরের তীরে কিছুকাল উপবেশন কর, এইস্থানে—

त्वां प्रीणयिष्यति पुरःपरिवर्त्तमान-
कल्लोलशीकरतुषारजड़ः समीरः ॥ (२५)

इति परिक्रम्योपविशतः। (२६)

मक। [ स्वगतम्। ] भवतु, एवं तावत् अन्यतः प्रक्षिपामि।
[ प्रकाशम्। ] वयस्य माधव!। (२७)

---

(२५) उपवेशनप्रयोजनमाह—उन्नालेति। उद्गतानि रविकिरणसंशोषणात् जलतया समुत्थितानि नालानि येषां तथाभूता ये शातकमलाकराः अचिरविकचपद्मसमूहाः ( आकरो निधौ तत्पत्तिस्थानश्रेष्ठे तु वाच्यवत् इति मेदिनीकारः ) तेषां मकरन्दनिःस्यन्देन मकरन्दसंस्रवेन रसक्षरणेनेति यावत्, संवलितः विमिश्रितः यो मांसलगन्धः परिपुष्टसौरभं तेन बन्धुः मित्रम्, तथा पुरः अग्रे परिवर्त्तमानाः दोदुल्यमानाः ये कल्लोलाः विशालसरोवरजलतरङ्गाः तेषां शीकरैः जलैः तुषारवत् हिमवत् जड़ः शीतलः ( सुषीमः शिशिरो जड़ः। तुषारः शीतलः शीतो हिमः सप्तान्यलिङ्गका इत्यमरः ) समीरः पवनः त्वां प्रीणयिष्यति क्लान्तिनिवारणेन प्रीतं करिष्यति।

अत्र वृत्त्यनुप्रासच्छेकानुप्रासौ शब्दालङ्कारौ, तथा आरोप्यमाणस्य बन्धुत्वस्य प्रकृतप्रीतकरत्वोपयोगित्वात् परिणामालङ्कारः, तुषारजड़शब्दयोरापातमात्रे च शीतलार्थतया पौनरुक्त्यप्रतिभासनात् पर्यवसाने तु तुषारवत् हिमवत् जड़ः शीतल इत्यर्थत्वाच्च पुनरुक्तवदाभासालङ्कारः इत्यनयोरङ्गाङ्गिभावेन सङ्करः इति संसृष्टिः। परिणामपुनरुक्तवदाभासलक्षणं दर्पणोक्ते यथा—

"विषयात्मतयारोप्ये प्रकृतार्थोपयोगिनि।
परिणामो भवेत्तुल्यातुल्याधिकरणो द्विधा॥"
"आपाततो यदर्थस्य पौनरुक्त्यावभासनम्।
पुनरुक्तवदाभासः स भिन्नाकारशब्दगः॥" इति।

वसन्ततिलकावृत्तम्।

(२७) अन्येति। एवं अनेन प्रकारेण मधुमासपवनाक्षेपन्यासादिनेति यावत्, अन्यतः

---

(২৫) উত্থিত মৃণাল ও অচির প্রস্ফুটিত পদ্মসমূহের রসক্ষরণবিমিশ্রিত পরিপুষ্ট গন্ধদ্বারা বন্ধুস্বরূপ ও অগ্রে দোদুল্যমান কল্লোলকণাদ্বারা হিমের ন্যায় শীতল বায়ু তোমাকে প্রীত করিবে।

(২৬) ( পরিক্রমণানন্তর উভয়ের উপবেশন )

एतस्मिन्मदकलमल्लिकाक्षपक्ष-
व्याधूतस्फुरदुरुदण्डपुण्डरीकाः ।
बाष्पाम्भःपरिपतनोद्गमान्तराले
दृश्यन्तामविरहितश्रियो विभागाः ॥ (२८)

माधवः सोद्वेगमुत्तिष्ठति । (२९)

मक । कथं प्रतिपत्तिशून्यमुत्थाय अन्यतः प्रवृत्तः । [ निःश्वस्योत्थाय च । ] सखे ! प्रसीद । पश्य (३०)

---

मालतीव्यतिरिक्तप्रपञ्चयामि, प्रियवयस्यं सञ्चारयामि। मालतीचिन्तायाः कथञ्चित् प्रमाद्ये प्रियवयस्यमन्यमनस्कं करोमीत्यर्थः।

(२८) एतस्मिन्निति। एतस्मिन् सरोवरे मदकलमल्लिकाक्षाणां मदमत्तहंसविशेषाणां पक्षैः पत्रैः, व्याधूतानि कम्पितानि स्फुरन्ति विकसन्ति उरुदण्डानि विशालमृणालानि पुण्डरीकाणि श्वेतपद्मजानि येषु तथोक्ताः, अतएव अविरहितश्रियः अपरित्यक्तशोभाः विभागाः प्रदेशाः बाष्पाम्भसा अश्रुणा परिपतनोद्गमयोः चरणोत्पादयोः अन्तराले मध्ये एकस्य बाष्पाम्भसः परिपतनं अपरस्य चोद्गमः इत्यनयोर्मध्यसमये इत्यर्थः, ( एतेनाविच्छिन्नाश्रुविसर्जनं ध्वनितम् ) दृश्यन्ताम् कथञ्चिच्चित्तविनोदनायावलोक्यन्ताम्।

अत्र दण्डपुण्डेति व्यञ्जनानामनेकधा सकृत्साम्ये च छेकानुप्रासालङ्कारः। प्रहर्षिणी वृत्तम्।

अयमपि श्लोकः "सन्दृश्याः कुवलयिनो भुवो विभागाः" इति चतुर्थचरणमात्रेण कृतवैषम्य उत्तररामचरितप्रथमाङ्के विन्यस्त इत्यनुसन्धेयम्।

(२९) सोद्वेगमिति, मकरन्दोक्तविनोदनोपदेश एवात्रोद्वेगहेतुः।

(३०) कथमिति। प्रतिपत्त्या मदभिहितार्थस्यावबोधेन शून्यं अनवधानवशाद्विरहितं

---

(২৭) মক। হউক, এইপ্রকার প্রিয় বয়স্যকে অন্য বিষয়ে সঞ্চালিত করি। বয়স্য মাধব।

(২৮) এই সরোবরে মদমত্ত হংসবিশেষের পাখাদ্বারা বিকম্পিত বিকসিত ও বৃহন্মৃণাল শ্বেতপদ্মশালী এবং শোভাদ্বারা অবিরহিত প্রদেশসকল অশ্রুজলের নিপতন ও উদ্গমের মধ্যসময়ে অবলোকন কর।

(২৯) ( উদ্বেগের সহিত মাধবের উত্থান )

वानीरप्रसवैर्निकुञ्जसरितामासक्तवासं पयः,
पर्य्यन्तेषु च यूथिकासुमनसामुज्जृम्भितं जालकैः।
उन्मीलत्कुटजप्रहासिषु गिरेरालम्ब्य सानूनिह,
प्राग्भागेषु शिखण्डिताण्डवविधौ मेघैर्वितानाय्यते॥ (३१)

---

यदा स्यात्तदा तत्याय अन्यतः प्रवृत्तः अन्यस्मिन् गन्तुमारब्धः। प्रसीद मां प्रति प्रसन्नो भव। तावच्छिरः मदुक्तमाकर्णयेत्यर्थः।

(३१) वानीरेति। इह अस्मिन् स्थाने निकुञ्जैः लतादिपिहितोदरस्थानैः समन्विताः सरितो नद्यः निकुञ्जसरितः (शाकपार्थिवादित्वान्मध्यपदलोपी समासः) तासां पयो जलं वानीरप्रसवैः वेतसकुसुमैः (करणभूतैः) आसक्तः संलग्नः वासः सौरभं यस्मिन् तथाभूतं सत् वर्त्तत इति शेषः। पर्य्यन्तेषु च तासां नदीनां तटप्रान्तेषु च यूथिकासुमनसां जालकैः कोरकैः (चारकौ जालकं क्लीवे कलिका कोरकः पुमानित्यमरः) उज्जृम्भितं विकसितं (भावे क्तः)। तथा मेघैः उन्मीलत्कुटजानां विकसत्कुटजकुसुमानां प्रहासिषु प्रकृष्टहासशालिषु गिरेरद्रेः प्राग्भागेषु ऊर्द्ध्वप्रदेशेषु (प्राग्भारेष्विति पाठे तु शिखरेष्वित्यर्थः) सानून् एकदेशान् आलम्ब्य आश्रयीकृत्य शिखण्डिताण्डवविधौ मयूरनृत्यव्यापारे वितानायते उपरिविस्तृतेन चन्द्रातपवदाचर्य्यते। एतत् सर्व्वं चित्तविनोदनार्थं पश्येत्यर्थः।

अत्र कार्य्येण प्रकृते मेघे प्रकृष्टयुवकानां छायादिविशिष्टे सभास्थले नर्त्तकनृत्यानुष्ठाने उपरि विस्तारितस्य चन्द्रातपस्य व्यवहारसमारोपात् समासोक्तिरलङ्कारः, स च वितानायत इति क्यङ्गतोपमया सन्दीप्यते। शार्दूलविक्रीडितं वृत्तम्।

---

(৩০) যক্ষ। আমার কথিত বিষয়ে জ্ঞান না হইতেই উঠিয়া অন্যত্র গমন করিতে আরম্ভ করিলে কেন? (নিশ্বাস ফেলিয়া ও উঠিয়া) সখে! প্রসন্ন হও, দেখ—

(৩১) এই স্থানে নিকুঞ্জসমন্বিত নদীর জল বেতসপুষ্পের গন্ধযুক্ত হইয়া বর্ত্তমান আছে। নদীর তটপ্রদেশে যূথিকাফুলের কলিকাসকল বিকসিত হইয়াছে, এবং মেঘসকল বিকসিত কুটজপুষ্পের প্রকৃষ্ট হাস্যবিশিষ্ট পর্ব্বতের ঊর্দ্ধভাগে সানু অবলম্বন করিয়া ময়ূরদিগের নৃত্যানুষ্ঠানে চন্দ্রাতপের ন্যায় আচরণ করিতেছে।

अपि च।

> जृम्भाजर्जरडिम्बडम्बरघनश्रीमत्कदम्बद्रुमा
> शैलाभोगभुवो भवन्ति, ककुभः कादम्बिनीश्यामलाः।
> उद्यत्कन्दलकान्तकेतकभृतः कच्छाः सरित्स्रोतसा-
> माविर्भूतशिलीन्ध्रलोध्रकुसुमस्मेरा वनानां ततिः॥ (३२)

माध। सखे! पश्यामि, किन्तु दुरालोकरमणीयाः सम्प्रति अरण्यभूमयः तत्किमेतत्। [ सास्रम् ] अथवा किमन्यत्। (३३)

---

(३२) जृम्भेति। शैलाभोगभुवः पर्व्वतप्रान्तवर्त्तिविस्तृतभूमिभागाः जृम्भया विकासेन (जृम्भा विकासजृम्भयोरिति विश्वः) जर्जरस्य शिथिलदलस्य डिम्बस्य कुसुमगोलकस्य (डिम्बो-ऽण्डेऽपि च गोलके इति धरणिः) डम्बरेण समारम्भेण (डम्बरोऽस्त्री समारम्भ इति विश्वः) घनश्रीमन्तः निविडशोभाशालिनः कदम्बद्रुमाः नीपपादपाः यासु तथाभूताः भवन्ति। ककुभः दिशः कादम्बिन्या मेघमालया (कादम्बिनी मेघमाला कादम्बकौ च कथ्यत इति शाश्वतः) श्यामलाः श्यामवर्णाः भवन्ति। सरित् स्रोतसां नदीप्रवाहाणां कच्छाः अनूपप्रदेशाः (जलप्रायमनूपं स्यात् पुंसि कच्छस्तथाविध इत्यमरः) उद्यद्भिः उत्पद्यमानैः कन्दलैः नवाङ्कुरैः (कन्दलः कलहे कन्दे नवाङ्कुरसङ्घयोरिति मेदिनीकारः) कान्तान् मनोहरान् केतकान् केतकीवृक्षान् बिभ्रति धारयन्तीति तथोक्ताः भवन्ति। तथा वनानां ततिः श्रेणी आविर्भूतैः उद्गतैः शिलीन्ध्रलोध्रकुसुमैः कदलीपुष्पलोध्रपुष्पैः (शिलीन्ध्रः कदलीपुष्पे करकाकवकयो-रिति विश्वः) स्मेरा सहासा भवति। आत्मविनोदनार्थमेतान्यपि सर्व्वाणि पश्येत्यर्थः।

अत्र वर्षाकालवर्णनोपयुक्तेन प्रस्तुतानां शैलाभोगभूप्रभृतीनामेकभवनक्रियाभिसम्बन्धा-त्तुल्ययोगितालङ्कारः। तस्य च स्वभावोक्त्यलङ्कारेण संसृष्टिः। शार्दूलविक्रीडितं वृत्तम्।

(३३) पश्यामीति, त्वदुक्तानि सर्व्वाण्येव नवाङ्कुरोत्पादवर्णीकयामीत्यर्थः। सम्प्रति

---

(৩২) আরও দেখ। পর্ব্বতপ্রান্তবর্ত্তী বিস্তৃত ভূমিভাগ বিকাস শিথিলদল কুসুমগোলোকের সমারম্ভে নিবিড় শোভাশালী কদম্ববৃক্ষ যুক্ত হইতেছে। দিক্-সকল মেঘমালায় শ্যামবর্ণ হইতেছে। নদীপ্রবাহের জলপ্রায়প্রদেশ উৎপদ্যমান নবাঙ্কুরে রমণীয় কেতকীবৃক্ষ সকল ধারণ করিতেছে, এবং বনশ্রেণী সমুদ্গত কদলী ও লোধ্রপুষ্পদ্বারা হাস্যযুক্তা হইতেছে।

(৩৩) মাধ। সখে! তোমার কথিত সমস্তই আমি দেখিতেছি। কিন্তু

उत्फुल्लार्जुनसर्जवासितवहत्पौरस्त्यझञ्झानिल-
प्रेङ्खोलस्खलितेन्द्रनीलशकलस्निग्धाम्बुदश्रेणयः।
धारासिक्तवसुन्धरासुरभयः प्राप्तास्त एवाधुना
घर्माम्भोविगमागमव्यतिकरश्रीवाहिनो वासराः॥ (२४)

---

मालतीविरहानुभवकाले, दुरालोकाश्च ताः रमणीयाश्चेति तथोक्ताः रमणीया अपि कामोद्दीपकतया विरहिणा मादृशा दुःखेनैवावलोकनीया इत्यर्थः। तस्मात् एतत् अस्मान्तिकवर्त्तिनामेव पदार्थानामत्यन्तविनोदनीयत्वेनोदाहरणं किम्? किमर्थम्? सर्व्वाभिमतस्य स्निग्धरुद्रदश्यतानुचितमेवेति भावः। अनुपन्यासेऽपि दुःखकरपदार्थानामेतेषां मदीयदुर्भाग्यत एव मनोपवर्त्तित्वाद्धृदयदुःखानुभवो दुर्निवारणीय एवेति शोकोदयात् सापमाह—अथवेति। अन्यत् ममाशान्तिकरादपरं किं? किञ्चिदपि नास्तीत्यर्थः।

(२४) तदेव समर्थयन्नाह—उत्फुल्लेति। उत्फुल्लैः विकसितैः अर्ज्जुनसर्जैः अर्ज्जुनकुसुमसर्ज्जकुसुमैः वासितः सुरभीकृतः वहन् प्रवान् पौरस्त्यः पूर्व्वदिक्प्रभवः यो झञ्झाख्यविशेषः (झञ्झावृष्टिविशेषे स्यादिति मेदिनीकारः) तदन्वितः अनिलः झञ्झानिलः प्रबलवायुरित्यर्थः, तस्य प्रेङ्खोलेन आन्दोलनेन स्खलिता विचुता इन्द्रनीलशकलवत् मरकतमणिखण्डवत् स्निग्धा अम्बुदश्रेणीवारिदपङ्क्तयो येषु तथोक्ताः। धारया वर्षधारया सिक्ता प्लाविता या वसुन्धरा मेदिनी तया सुरभयः सुगन्धाः। तथा घर्म्माम्भसोः ग्रीष्मवर्षयोर्यौ विगमागमौ अतीतत्व-वर्त्तमानत्वे तयोः, ग्रीष्मविगमस्य अम्भ आगमस्य चेत्यर्थः। व्यतिकरो सम्पर्केण या श्रीः शोभा तां वोढुं शीलं येषां ते तथोक्ताः त एव मालत्या सह विहरणसुखलाभाय ये पूर्व्वपरिकल्पिताः त एव वासराः दिवसाः प्राप्ताः अस्मिन् मालतीविरहसमये लब्धाः। तथाचातःपरं किं ममाशान्तिकरमिति भावः।

अत्र वर्षर्त्तुविशेषे वक्तव्ये अम्भ इति सामान्यवचनात् विशेषे अविशेषाख्यदोषः। द्वितीयपादे लुप्तोपमालङ्कारः। शार्द्दूलविक्रीडितं वृत्तम्।

---

এই বনভূমি বরণীয় হইলেও সম্প্রতি আমার দুরবলোকনীয়, অতএব আশ্রিত্যান্তার্থ এই সকলের উদাহরণ কেন? অথবা আমার অশান্তিকর ভিন্ন কি আছে?

(২৪) যাহাতে বিকসিত অর্জ্জুন এবং শালকুসুমে সুগন্ধীকৃত ও প্রবহমান পূর্ব্বদিকের ঝঞ্ঝা বায়ুর আন্দোলনে মরকতমণিখণ্ডের ন্যায় মেঘশ্রেণী বিচ্যুত হইতেছে, তাদৃশ ও বর্ষণসিক্ত মেদিনী দ্বারা সুগন্ধীকৃত এবং গ্রীষ্ম-দিবসের ও

हा प्रिये मालति ! ।

तरुणतमालनीलबहुलोन्नमदम्बुधराः,
शिशिरसमीरणावधूतनूतनवारिकणाः ।
कथमवलोकयेयमधुना हरिहेतिमती-
र्मदकलनीलकण्ठकलहैर्मुखराः ककुभः ॥ (३५)

सीत्कारं नाटयति । (३६)

भद्र ! कोऽप्यतिदारुणो दशाविपाकः सम्प्रति वयस्यस्य ।
[ सास्रम् । ] मया पुनर्वञ्चनयेन कोऽपि विनोद आरब्धः ।

---

(३५) तरुणतमालवत् नीलतमालवृक्षवत् नीलाः श्यामवर्णाः, बहुलाः बहवः उन्नमन्तः उद्गच्छन्तश्च अम्बुधराः मेघाः यासु तथोक्ताः, शिशिरसमीरणैः शीतलपवनैः अवधूताः कम्पिताः नूतनवारिकणाः नवजलशीकराः यासु तथोक्ताः, हरिहेतिमतीः इन्द्रचापवतीः, मदा मदकल-नीलकण्ठानां मदमत्तमयूराणां कलहैः कलकलैः ( कलहं कलकलेऽपि चेति विश्वः ) मुखराः शब्दायमानाः ककुभः दिशः अधुना अस्मिन् मालतीविरहोपभोगकाले कथं केन प्रकारेण अवलोकयेयम् पश्येयम् । समतीवोद्दीपकतया कथमपि द्रष्टुं न शक्नोमीति भावः ।

अत्रापि चारुवर्णविशेषे अभिधानाख्ये द्वितीये अलङ्कारः । नर्दटकं नाम वृत्तम् । "यदि भवतो नजौ भजजला गुरु नर्दटकम्" इति तल्लक्षणम् ।

एवं "कदम्बनीपकुटजैः शाद्वलैः इन्द्रगोपकैः । मेघवातैः सुखस्पर्शैः प्रावृट्कालं प्रदर्शयेत्" इति विधानानुसारेण वर्षाकालवर्णनादिष्टं नाम नाट्यलक्षणम् । तथाचोक्तं— देशकालस्वरूपेण वर्णनादिष्टमुच्यते" इति ।

(३६) सीत्कारैः चित्तवैधुर्यजनितां पीडां नाटयति शरीरकम्पादिनाभिनयति ।

---

বর্ষা-মেঘগণের সম্পর্কজনিত শোভাধারণকারী সেই সকল দিবস (অর্থাৎ প্রিয়তমাপত্নীর সহিত বিচরণ করিবার জন্য মনোহারিত্ব সহিতেপিত দিনসকল) এই প্রিয়াবিরহকালে পরিণত হইয়াছে।

(৩৫) হা প্রিয়ে মালতি। যাহাতে তরুণ তমালবৃক্ষের ন্যায় নীলবর্ণ বহুতর উন্নত মেঘ রহিয়াছে, শীতল সমীরণ নবীন জলকণাগুলিকে কম্পিত করিতেছে, ইন্দ্রচাপযুক্ত এবং ময়ূরকোলাহলে মুখরিত তাদৃশ দিকসকল সম্প্রতি আমি কিরূপে অবলোকন করিব?

(৩৬) (শোকজনিত পীড়ার অভিনয়)

[ निःश्वस्य । ] एवं पर्य्यवसितप्रायैव नो माधवं प्रति प्रत्याशा ।
[ सभयं विलोक्य । ] कथं प्रमुग्ध एव ? । [ आकाशे । ] सखि
मालति ! किमपरं । निरनुक्रोशासि । (३७)

अपहस्तितबान्धवे त्वया विहितं साहसमस्य तृष्णया ।
तदिहानपराधिनि प्रिये सखि ! कोऽयं करुणोज्झितक्रमः ॥ (३८)

---

(३७) मकेति । कोऽपि अनिर्व्वचनीयः, अतिदारुणो अतिभीषणः, दशाविपाकः अवस्थापरिणतिः । वज्रमयेन वज्रवत्कठिनहृदयेनेत्यर्थः, वयस्यस्येदृगवस्थाशानस्मरणादिति भावः । कोऽपि अतीवानुचितः विनोदः शोकनिवारणोपायः । ( शोकोद्दीपकपदार्थानामेव शोकनिवारणोपायत्वेन प्रदर्शनादनौचितत्वमिति मन्तव्यम् ) पर्य्यवसितप्रायैव परिसमाप्तप्रायैव । अतःपरं जीवनधारणस्याशक्यत्वादिति भावः । प्रमुग्ध एव अचेतन एव । किमपरमिति कथयामीति शेषः, अतःपरं यद्भवेत् तत् सर्व्वथैवावक्तव्यमिति भावः । निरनुक्रोशासि यः स्वजीवनमेरपेक्षेण श्मशानचैत्ये त्वां रक्षितवान्, तस्यैवमसत्यदशायां समुपस्थितायामप्यनागमनात् सर्व्वथैव निर्द्दयासि । "तत्र नोद्वेजने शोकाद्युत्ति"रिति लक्षणात् "द्युति"-नाम विमर्षसन्धेरङ्गम् ।

(३८) अपेति । अपगतो हस्तः आधिपत्यं येषां ते अपहस्ताः, अपहस्ताः कृताः अपहस्तिताः ( करोत्यर्थण्यन्तादपहस्तशब्दात् कर्म्मणि क्तः ) अपहस्तिताः अनपेक्षयात्मार्पणेनाधिपत्यशून्याः कृताः बान्धवाः पित्रादयो यथा तथाभूते ! सखि ! मालति ! त्वया अस्य माधवस्य तृष्णया प्राप्तिवासनया साहसं विहितं स्वयमेवात्मार्पणात् साहसमनुष्ठितम् । तत्तस्मात् अनपराधिनि अपराधशून्ये इह अस्मिन् प्रिये माधवे करुणया दयया उज्झितः विरहितः अयं अभिनवक्रम-

---

(৩৭) মক। সম্প্রতি বয়স্ত মাধবের অবস্থাপরিণাম অনির্ব্বচনীয় ও অতিভীষণ। ( অশ্রু বিসর্জ্জন করিতে করিতে ) বজ্রের ন্যায় কঠিন হৃদয় আমি আবার অনুচিত শোক নিবারণের উপায় অবলম্বন করিয়াছি। ( নিশ্বাস ত্যাগ করিয়া ) মাধবের প্রতি আমাদের প্রত্যাশা এই প্রকারে পরিসমাপ্তপ্রায়। ( ভয়ের সহিত অবলোকন করিয়া ) একি একেবারে অচেতনই যে হইয়াছে। ( ঊর্দ্ধে অবলোকন করিয়া ) সখি! মালতি! আর কি বলিব? তুমি অত্যন্ত নির্দ্দয়া হইয়াছ।

(৩৮) সখি মালতি! তুমি ইহারই প্রাপ্তিলোভে পিত্রাদি বান্ধবগণের

कष्टं भोः कष्टम्। (४१)

बन्धुताहृदयकौमुदीमहो, मालतीनयनपूर्णचन्द्रमाः।

सोऽयमद्य मकरन्दनन्दनो, जीवलोकतिलकः प्रलीयते॥ (४२)

हा वयस्य माधव!

गात्रेषु चन्दनरसो हृदि शारदेन्दु-

रानन्द एव हृदये, मम यस्त्वमासीः।

---

अत्र शून्यं मन्ये इत्यभावोत्प्रेक्षा, मज्जतीवान्तरात्मेति वाच्याक्रियोत्प्रेक्षा, तथा "मन्दभाग्यः किं करोमी"ति वाक्यार्थं प्रति पूर्ववर्त्तिवाक्यार्थानां हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कार इत्येतेषामङ्गाङ्गिभावेन सङ्करः। मन्दाक्रान्तावृत्तम्।

अयमपि श्लोकः "हा हा देवि! स्फुटति हृदयं स्रंसते देहबन्ध" इति प्रथमचरणेन ज्ञातवैधर्म्य उत्तररामचरिततृतीयाङ्के परिलक्ष्यत इत्यनुसन्धेयम्।

(४१) कष्टं दुःखं "भो" इति तदतिशयद्योतकमव्ययम्। विषादे एव द्विरुक्तिः।

(४२) बन्धुतेति। बन्धुतायाः बन्धुसमूहस्य (ग्रामजनेत्यादिना समूहार्थे तल्) हृदये मनसि कौमुदीमहः समतीव प्रीतिजनकत्वात् ज्योत्स्नोत्सवस्वरूपः, मालतीनयनयोः पूर्णचन्द्रमा समतीवाह्लादकत्वात् पूर्णिमाचन्द्रस्वरूपः, मकरन्दस्य मम नन्दनः आनन्दवर्द्धनः तथा जीवलोकस्य संसारिसमूहस्य तिलकः भूषणविशेषस्वरूपः अयं मत्पुरोवर्त्ती स लौजन्यादिभिः प्रसिद्धः माधवः अद्य प्रलीयते प्रियतमाविरहदुःखेन म्रियते। अहो अतःपरं किं विषादकारणमिति भावः।

अत्र निरङ्गमालारूपकालङ्कारः। एवं "यः सामान्यगुणोद्रेकः सगुणातिशयो मतः" इति लक्षणात् गुणातिशयो नाम नाट्यलक्षणम्। रथोद्धतावृत्तम्।

---

মনে করিতেছি। অবিশ্রান্ত সন্তাপের মধ্যে দগ্ধ হইতেছি। ব্যাকুল অন্তরাত্মা অতিশয় অবসন্ন হইয়া যেন গাঢ় অন্ধকারে নিমজ্জিত হইতেছে, অতএব মন্দভাগ্য আমি কি করিব?

(৪১) অহো কষ্ট অহো কষ্ট!!!

(৪২) বান্ধবগণের হৃদয়ের জ্যোৎস্নার উৎসবস্বরূপ, মালতী নয়নের পূর্ণচন্দ্রস্বরূপ, জীবলোকের তিলকস্বরূপ, ও মকরন্দের (আমার) আনন্দবর্দ্ধন এই পুরোবর্ত্তী সর্বজনপ্রসিদ্ধ মাধব (প্রিয়তমাবিরহে) বিলীন হইতেছে।

तस्यां निकामकमनीयमकाण्ड एव
कालेन जीवितमिवोद्धृतमस्ति हतोऽस्मि ॥ (४३)

स्पृशन्। (४४)

मकरन्द ! वितर स्मितोज्ज्वलां दृशमतिदारुण ! देहि मे गिरम्।
सुहृदमनुरक्तचेतसं प्रियमकरन्द कथं न मन्यसे ॥ (४५)

---

(४३) हा देवीति। हा वत्स माधव ! यस्त्वं (परिष्वज्यमानः) मम गात्रेषु चन्दनरसः सततं द्रवानुलेपस्वरूप आसीः (अतीव शीतस्पर्शत्वादिति भावः) तथा (आलोक्यमानः) दृशि मम नयने शारदेन्दुः शरत्कालीनचन्द्रः आसीः (बहुस्नाह्लादजनकत्वादिति भावः) तथा (परिचिन्त्यमानः) हृदये ममान्तःकरणे आनन्द एवासीः (न हि कदाचिदप्यनानन्द इति सूचनार्थ एवशब्दः, अत एव नातिशयो नियमाद्याद्दोषः) तं तथाभूतं निकामकमनीयं समतीव रमणीयं जीवितमिव मम जीवनमिव स्थितं त्वां अकाण्ड एव सहसा अपहरता कालेन कृतान्तेन हतोऽस्मि अहमपि विनाशितोऽस्मि। माधवविरहितस्य अनिमित्त एव ममापि मरणस्यावश्यम्भावादिति भावः।

अत्रापि मालारूपकालङ्कारः, जीवितमिवेत्युपमा चैतनयोः परस्परनैरपेक्ष्यात् संसृष्टिः। मदनार्त्त कतुचयचीतकचकारस्थानभिधानान्यूनपदत्वदोषः। वसन्ततिलकावृत्तम्।

(४४) स्पृशन्निति माधवकलेवरमिति शेषः।

(४५) मकरन्देति। हे मकरन्द ! दृष्टिनिक्षेपेऽपि कार्पण्याद्दयारहित ! स्मितेन ईषद्धास्येन उज्ज्वलां शोभमानां दृशं दृष्टिं वितर अर्पय, पूर्ववत् स्मितपूर्वकं मामपि दृष्टिनिक्षेपं कुरु इत्यर्थः। हे अतिदारुण ! उत्तरप्रदाने मम जीवनमात्रसम्भावनाया अप्यपरिगमनादतिकठोरस्वभाव, स्मितोज्ज्वलां गिरं प्रतिवचनं मे मह्यं देहि। पूर्ववदेव मया सार्द्धं स्मितपूर्वाभिभाषणं विधेहीत्यर्थः। हे प्रियमकरन्द ! (प्रियः मकरन्दः यस्य

---

(৪৩) হা বৎস মাধব ! যে তুমি আমার গাত্রে চন্দনরসস্বরূপ, নয়নে শারদচন্দ্রস্বরূপ ও হৃদয়ে সর্ব্বদাই আনন্দস্বরূপ ছিলে, পরমরমণীয় আমার জীবনতুল্য সেই তোমাকে হরণ করিয়া কৃতান্ত আমাকেও বিনাশিত করিয়াছে।

(৪৪) ( মাধবের শরীর স্পর্শ করিতে করিতে )

(৪৫) হে মকরন্দ ! ঈষৎ হাস্যশোভিত দৃষ্টি নিক্ষেপ কর। হে অতি

मक । [ सोच्छ्वासम् । ] अयमचिरधौतराजपट्टरुचिरमांसलच्छविर्नवजलधरः तोयशीकरासारेण मे वयस्यं जीवयति, दिष्ट्या जगदुच्छ्वसितं तावत् । (४६)

माध । तत्कथमत्र विपिने प्रियावार्त्ताहरं करोमि । [विलोक्य ।] साधु, साधु । (४७)

---

तथाभूत ! ) सहचरं सखायं मां कथं किमर्थं अनुरक्तचेतसं त्वां प्रति समसीवानुरागयुक्तमानसं न मन्यसे नाङ्गीकरोसि ? तदङ्गीकारे नैवमीदृशानिरुत्तरप्रदानस्य सम्भवेदिति भावः ।

अपरवक्त्रं इत्तम् । तल्लक्षणन्तु—"अयुजिननरलागुरुः समे तदपरवक्त्रमिदं नजौजरा"विति ।

(४६) सोच्छ्वासमिति, उच्छ्वासेन माधवस्य'श्वासाभदर्शनजनितानन्दोदयेन सह यथा स्यात्तथेत्यर्थः । अचिरधौतः सद्यः परिष्कृत. यो राजपट्टः श्यामवर्णमणिविशेषः तद्वत्रुचिरा रमणीया मांसला परिपुष्टा च छविः कान्तिर्यस्य तथाभूतः नवजलधरः, नूतनमेघः तोयशीकरासारेण अम्बुकणधारासम्पातेन, जीवयति चैतन्यमापादितवान्, ( अतीतसामीप्ये वर्त्तमाना) दिष्ट्या मदीयसौभाग्येन, जगत् भुवनं उच्छ्वसितं माधवस्य'श्वासाभेनोच्छ्वासं प्राप्तं । अन्यथा माधवेन सहैव जगत् एवोच्छ्वासविरोऽभविष्यदिति भावः ।

(४७) तत् कथं—केन प्रकारेण, प्रियाया मालत्याः, वार्त्ताहरं दूतं करोमि । बहुकालातिपातात् प्रियायाः सकाशे सम्प्रति मत्कुशलवार्त्ताप्रेषणमावश्यकं किन्त्वस्मिन् विपिने तदुपयुक्तलोकाभावात् कं प्रेषयामीति भावः । विलोक्येति मेघमित्यादिः । तस्यैव दौत्यं मत्वा हृष्यानन्देनाह—साधुसाध्विति ।

---

দারুণ ! আমায় হাস্যবিমিশ্রিত প্রতিবচন প্রদান কর। হে প্রিয় মকরন্দ ! আমাকে অনুরক্তচিত্ত মনে করিতেছ না কেন ?

( মাধবের সংজ্ঞালাভ )

(৪৬) মক। ( আনন্দোদ্রেকের সহিত ) অচিরপরিষ্কৃত রাজপট্টকের ( নীলবর্ণ মণিবিশেষের ) ন্যায় মনোহর ও পরিপুষ্ট কান্তিশালী এই নূতন মেঘ জলবিন্দুধারাসম্পাত দ্বারা আমার প্রিয় বয়স্যকে জীবিত করিয়াছে। আমার সৌভাগ্যক্রমেই জগৎ আনন্দিত হইল।

पौरस्त्यो वा सुखयति मरुत् साधु संवाहनाभिः ?
विष्वग्विभ्रत्सुरपतिधनुर्लक्ष्म लक्ष्मीं तनोति ॥ (५०)

[ आकर्ण्य । ] अयि ! प्रतिरवभरितकन्दरानन्दितोत्कण्ठनील-
कण्ठकेकानुबन्धिना मन्द्रहुङ्कृतेन, मामनुमन्यसे, यावदर्थये ।
ावन् जीमूत ! (५१)

---

थाशयः । विरहित्वादेव प्रथमं प्रियाविप्रलम्भविषयकः प्रश्नः । तथाचैतेन समतीव प्रियाविप्रलम्-
हा व्यज्यते । आविर्भूतेन अभ्यन्तरोत्पन्नेन प्रणयेन प्रीत्या सुमुग्धाः मत्तमत्ताः चातका वा
! भजन्ते सेवन्ते कच्चित् ? किं ? मकरन्दो यथा मां विहाय स्वाभिलाषसिद्धयेऽन्यत्र गत-
।था चातका अपि त्वां विहाय गता वेत्याशयः । एतेन समतीव मकरन्दसन्निधानेच्छा,
म्मुखवर्त्तिनोऽपि मकरन्दस्यादर्शनेनोन्मादावस्था च व्यज्यते । पौरस्त्यः पूर्व्वदिग्भवः ( वर्षाकाले
र्व्वत एव वायोः प्रायश्च वहनात् पौरस्त्य इति स्वरूपविशेषणम् ) मरुत् पवनो वा संवाहनाभिः
सम्यक् प्रेरणाभिः ( हस्तपदमर्द्दनादिभिश्च ) साधु सम्यग् यथा स्यात्तथा सुखयति कच्चित् ?
त्वामानन्दितं करोति किं ? यथा कलहंसः सम्प्रति मां विहायान्यत्र गच्छति, तथा वायुरपि
त्वां परित्यज्य गतो वेत्याशयः । एतेन कलहंसलतागृहगमनेच्छापि व्यज्यते । विष्वक् सर्व्वतः
लक्ष्मीं श्रियं विभ्रत् धारयत् नानारागरञ्जितत्वेनातीव मनोहरमित्यर्थः, सुरपतिधनुरिन्द्रधनुः
लक्ष्म तव चिह्नं तनोति विस्तारयति कच्चित् किम् ? यथा ममाभरणादिकमिदानी-
मयत्नेव निभृतं तिष्ठति, तथा तवाप्याभरणभूतमिन्द्रधनुर्निभृतं तिष्ठति वेत्याशयः । एतेन
आभरणधारणस्पृहापि सूच्यत उन्मादावस्थत्वेन नानाविधेच्छाया एव सम्भव इति विभावनीयम् ।

अत्र मेघविद्युतोर्नायिकाविषयकार्य्ये च नायकनायिकाव्यवहारसमारोपात् भ्रमरच्छ-
कार्य्ये च चातके ... व्यवहारसमारोपात् संवाहनरूपकार्य्ये च पवने भृत्यव्यवहारसमारोपात्
चिह्नविस्ताररूपकार्य्ये चैन्द्रधनुषि भूषणव्यवहारसमारोपाच्च चतस्रः समासोक्तयस्तदाश्रया,
लक्ष्मलक्ष्मीमिति च्छेकानुप्रासश्च शब्दालङ्कारः एतेषां परस्परनैरपेक्ष्यात् संसृष्टिः । मन्दा-
क्रान्ता वृत्तम् ।

(५१) आकर्ण्येति । प्रतिरवभरितासु गर्ज्जनप्रतिध्वनिपूर्णासु कन्दरासु गुहासु (अवस्थितान

---

করে ? পূর্ব্বদিক্প্রভব বায়ু মন্দ পরিচালনা দ্বারা তোমাকে সুখী ক-
রি ? এবং সর্ব্বতোভাবে শ্রীধারী ইন্দ্রধনু তোমার সৌন্দর্য্যচিহ্ন বিস্তা
করে কি ?

दैवात् पश्येर्जगति विचरन्निच्छया मत्प्रियां चेत्
आश्वास्यादौ तदनु कथयेर्माधवीयामवस्थाम् ।
आशातन्तुर्न च कथयतात्यन्तमुच्छेदनीयः,
प्राणत्राणं कथमपि करोत्यायताक्ष्याः स एकः ॥ (५२)

---

निरर्थः ) आनन्दिताया मेघरवाकर्णनेनैव सञ्जातानन्दाया अतएव चातकानां चञ्चद्बोधायाः मौलिकृताया [illegible] कटकेन मन्द्रैराबद्धं अनुवर्त्तं अनुसर्तुं मौनं अमतो यस्य तदानुतेन मन्द्रेण गर्जितेन हुङ्कृतेन हुं इति शब्देन मां अनुमन्तवे मदीयप्रार्थनविषयलाभेऽस्य स्वाभिलषितं कर्तुं मह्यमनुमतिं ददाति। तावदत्यर्थं इदानुकम्पितत्वादेवमेव दौत्यं कर्तुं प्रार्थये। स्वाभिलषितविज्ञापनाय मेघं सम्बोधयति—भगवन् जीमूत! इति।

(५२) कर्त्तव्यं निर्दिशति—दैवादित्यादिना। हे मेघ! इच्छया स्वाभिलाषानुसारेण जगति विचरन् परिभ्रमन् दैवात् मदीयभाग्यवशात् (दैवादित्यनेन इयन्तं कालं सा जीवति नवेति सन्देहः सूचितः) चेत् यदि मत्प्रियां मत्प्राणवल्लभां मालतीं पश्येः, तत् तदा आदौ प्रथमं आश्वास्य मदीयागमनसमाचारादिना वा सान्त्वयित्वा तदनु तत्पश्चात् माधवीयां माधवस्य मम इमां अवस्थां तद्विरहपीडितत्वात्मकीव शोचनीयां दशां कथयेः। (मदीयामित्यनुक्त्वा माधवीयामिति कथनं प्रकृतात् स्वकीयनामनिर्देशादिकं दर्शितमिति मन्तव्यम्) आशावस्थानिवेदने मालत्या मत्प्राणहानिनाशङ्क्याह—आशेति। कथयता मदीयावस्थां निवेदयता त्वया आशातन्तुः मत्प्राप्तिसम्भावनारूपं सूत्रं अत्यन्तं यथा स्यात्तथा न उच्छेदनीयः "मदीयामरणदशावशत्रुप-स्थिते"ति कीर्त्तनेन नोत्कर्त्तनीयः। कुत इत्यत आह—प्राणेति। आयताक्ष्याः विशाल-लोचनायाः तस्याः मालत्याः एकः केवलः स आशातन्तुः कथमपि अतिकष्टेन प्राणत्राणं जीवित-रक्षणं करोति। तदीयविच्छेदेन मदीयजीवनोच्छेदसम्भावनाकीर्त्तने मत्प्राप्तिप्रत्याशा-नाशात् सैव पूर्वं जीवनं त्यक्ष्यतीति भावः।

---

(৫১) (প্রবেশ, হাসিয়া) আহা!! প্রতিশ্রুতিপূর্ণ হর্ষোৎফুল্ল আনন্দিত ও উৎকণ্ঠিত ময়ূরগণের গর্জন কেকাশব্দানুসারী 'হুঁ' ইত্যাকার শব্দ দ্বারা আমার পূর্ব্ব [illegible] শীতল [illegible] মেঘ আমাকে নিজের বক্তব্য বলিবার অনুমতি দিতেছে। অতএব ইহাই প্রার্থনা করি। ভগবন্! বারিদ!

(৫২) তুমি স্বেচ্ছায় জগতে বিচরণ করিতে করিতে যদি দৈবাৎ আমার প্রিয়তমাকে দেখ, তবে প্রথমে আমার অবস্থাদি বৃত্তান্ত দ্বারা তাহাকে আশ্বাস

[ सहर्षम् । ] अहो ! प्रचलितः, तदन्यत्र सञ्चर मि परिक्रामति । (५३)

मक । [ सोद्वेगम् । ] कथमिदानीमुन्मादोपरागो माधवेन्दु-माक्रन्दति, हा तात ! हा अम्ब ! भगवति ! परित्रायस्व, परित्रायस्व । पश्य माधवावस्थाम् । (५४)

---

अत्र तृतीयचरणोक्तकार्य्यस्य चतुर्थचरणोक्तकारणेन समर्थनादर्थान्तरन्यासोऽलङ्कारः । मन्दाक्रान्ता वृत्तम् ।

एतत्श्लोकद्वितीयार्द्धस्यानुरूपश्लोकार्द्धौ यथा मेघदूते —

"आशाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानां
सद्यःपाति प्रणयिहृदयं विप्रयोगे रुणद्धि ॥"

(५३) सहर्षमिति । एतत्प्रार्थनानन्तरमेव मेघस्य सञ्चलनदर्शनेन "मदीयदौत्यं कर्त्तु-मिवायं प्रचलती"ति परिकल्पनमेवात्र हर्षहेतुर्बोध्यः । प्रचलित इति मालत्यै मदवस्थां कथयितु-मिति शेषः । तत्तस्मात् प्रार्थितकार्य्यस्य सम्पादनादिति यावत्, अन्यत्र सञ्चरामि, इतोऽन्यत्र स्थाने गच्छामि । ( परिक्रामति अन्यत्र गमनाय पादविक्षेपं करोति ) ।

(५४) मकेति । उन्मादः विरहजनितोन्मादावस्था एव उपरागः राहुग्रासः माधव एव इन्दुश्चन्द्रः तं आक्रन्दति अभिभवति । अन्यथा अचेतनं मेघमुद्दिश्यैवं दौत्यप्रार्थनस्यासम्भवादिति भावः । विपत्काले पित्रोः सम्बोधनम् स्वाभाविकमिति तत्सम्बोधनम् । विपत्प्रतीकाराय भगवतीति समधिगतमाहात्म्यायाः कामन्दक्याः सम्बोधनम् । परित्रायस्व परित्रायस्वेत्यतिविषादे द्विरुक्तिः, मामिति शेषः, क्वचित् "मां" मित्यपि पाठः । माधवं प्रकृतिस्थं विधाय मां परिरक्षेत्यर्थः । अत्रोन्मादे राहुग्रासारोपादिव माधवे चन्द्रत्वारोप इत्यश्लिष्टपदघटितपरम्परितरूपकालङ्कारः ।

---

যুক্ত করিয়া তৎপরে মাধবের (আমার) এই বিরহাবস্থা বলিও। কিন্তু বলিতে বলিতে আবার প্রাপ্তিপ্রত্যাশারূপ সূত্র একেবারে উচ্ছেদিত করিও না। কারণ কেবল সেই প্রাপ্তিপ্রত্যাশাসূত্রই অতিকষ্টে তাহার জীবন রক্ষা করিতেছে।

(৫৩) (হর্ষের সহিত) অহো!! মালতীকে আমার অবস্থা জানাইবার জন্য যাইতেছে, অতএব আমি অন্যত্র গমন করি। (পরিক্রমণ)

(৫৪) মক। (উদ্বেগের সহিত) কেন সম্প্রতি উন্মাদরূপ রাহুগ্রাস মাধব-

माध। धिक् प्रमादः। (५५)

नवेषु लोध्रप्रसवेषु कान्तिर्दृशः कुरङ्गीषु गतं गजेषु।
लतासु नम्रत्वमिति प्रमथ्य, व्यक्तं विभक्ता विपिने प्रिया मे॥ (५६)

हा प्रिये मालति! [इति मूर्च्छति।] (५७)

---

(५५) माधेति। निजतिरस्कार एवात्र धिक्शब्दः। प्रमादः अनवधानता, अस्माक-मिति शेषः। अस्माकमनवधाने सति वनमाध्यमकारेण मालतीविभागस्यासम्भवादिति भावः।

(५६) अनवधानतायाः फलं दर्शयति—नवेष्विति। नवेषु अचिरविकसितेषु लोध्रप्रसवेषु लोध्रस्य कुसुमेषु कान्तिः तस्याः गौरत्वं दृश्यत इति शेषः। कुरङ्गीषु मृगीषु दृशः, तस्याः चञ्चलावलोकनानि दृश्यन्त इति शेषः। गजेषु हस्तिषु गतं तस्याः मन्थरगमनं, तथा लतासु नीरुत्सु नम्रत्वं तस्याः अवनमनस्वभावत्वं दृश्यत इति शेषः। इति हेतोः विपिने अस्मिन् वने प्रमथ्य भङ्क्त्वा मे मम प्रिया मालती व्यक्तं स्पष्टं यथा स्यात्तथा विभक्ता लोध्रप्रसवादिभिर्विभज्य नीता। अन्यथा लोध्रप्रसवादिषु तत्कान्त्यादिदर्शनासम्भवादिति भावः।

अत्र दृश्यत इत्यादि क्रियापदानां लोध्रप्रसवादिभिरिति कर्तृपदस्य चाभावेऽपि न न्यून-पदत्वदोषः, एतादृशस्थले क्रियापदकर्तृपदाध्याहारस्य सुधियामनुद्वेगकरत्वादिति समालोच-नीयम्।

अत्र प्राप्तोन्मादवस्थेन माधवेन लोध्रप्रसवादिकान्त्यादिषु मालतीकान्त्याद्यभेदावधारणात् सादृश्यार्थं पाभावेन न निदर्शनालङ्कारः, परन्तु व्यक्तशब्दस्योत्प्रेक्षावाचकत्वाद्वाच्योत्प्रेक्षा-लङ्कार इति। उपेन्द्रवज्रेन्द्रवज्रयोः सङ्करेणोपजातिर्वृत्तम्।

(५७) उक्तविभागपरिकल्पनेन मालत्याः मरणावधारणाद्विलपति—"हा प्रिये मालती"ति। इति श्लोकेन, मूर्च्छति मूर्च्छां प्राप्नोति। उक्तरूपेण मरणावधारणमेव मूर्च्छायामपि हेतुः।

---

রূপ চন্দ্রকে অভিভূত করিতেছে? হা পিতঃ! হা মাতঃ! ভগবতি কামন্দকি! আমাকে রক্ষা কর, রক্ষা কর। মাধবের অবস্থা নিবারণ কর।

(৫৫) মাধ। আমাদিগকে ধিক্। আমাদের কি অনবধানতা।

(৫৬) নূতন লোধ্রকুসুমে প্রিয়তমার কান্তি, হরিণীতে প্রিয়তমার চঞ্চল অবলোকন, হস্তীতে প্রিয়তমার মন্থর গমন ও লতাতে প্রিয়তমার নম্রতা পরিদৃষ্ট হইতেছে। অতএব মনে হয়, ইহারাই আমার প্রিয়তমাকে এই অবস্থা ভাঙ্গিয়া বিভাগ করিয়া নিয়াছে।

(৫৭) হা প্রিয়ে! মালতি! (এই কথা বলিয়া মাধবের মূর্চ্ছা)

मक । सुहृदि गुणनिवासे प्रेयसि प्राणनाथे
कथमिव सहपांसुक्रीड़नप्रौढ़सख्ये ।
प्रियजनविरहाधिव्याधिखेदं दधाने,
हतहृदय! विदीर्य्य त्वं द्विधा न प्रयासि ? (५८)

माध । [आश्वस्योत्थाय ।] सुलभानुकारः खलु जगति वेधसो निर्म्माणसविशेषः, भवतु एवं तावत् । [उच्चैः ।] अयमहं भोः, प्रणिपत्य भूधरारण्यचारिणः सत्त्वान् विज्ञापयामि मुहूर्त्तमवधानदानेन मामनुगृह्णन्तु भवन्तः । (५९)

---

(५८) सुहृदीति । गुणनिवासे विद्याविनयादिसर्व्वसद्गुणाश्रये प्रेयसि प्रेयाणां श्रेष्ठे प्राणनाथे प्राणानां नियन्तरि (येन विना प्राणधारणमेवाशक्यं तथाभूते इति भावः) तथा सह, पांसुक्रीड़नात् मिलित्वा धूलिखेलनात् आरभ्य प्रवृद्धिरित्यर्थः, प्रौढं दृढ़भावेन सञ्जातं सख्यं बन्धुता यस्मिन् तथाभूते सुहृदि मित्रे अस्मिन् माधवे प्रियजनस्य प्रियतमाया मालत्या विरहेण विच्छेदेन य आधिः मानसी व्यथा (पुंस्याधिर्म्मानसी व्यथेत्यमरः) स एव व्याधिः पीड़ा तस्य खेदं तज्जनितातिशययातनां दधाने धारयति सति हे हतहृदय! कुत्सितचित्त! त्वं द्विधा विदीर्य्य कथमिव (इवशब्दो वाक्यालङ्कारे) किमर्थं न प्रयासि न गच्छसि । ईदृगवस्थायां मां विहाय तव गमनमेव सर्व्वथानुचितमिति भावः ।

अत्र माधवीयबन्धुताया अनुत्तमत्वप्रतिपादनाभिप्रायेण विशेषणानां प्रयुक्तत्वात् परिकरालङ्कारः । मालिनीवृत्तम् ॥

(५९) माधेति । आत्मनः प्रियतमाविरहं सम्यगेव लक्षयैतस्य माधवस्य उक्तिः । वेधसः प्रजापतेः निर्म्माणसविशेषः सृष्टिप्रकारः सुलभः अकष्टसाध्यः अनुकारः साम्यं येन तादृशः, विधिनिर्म्मितवस्तूनामिवैतेषामपि सादृश्यं प्राप्य एव इत्यर्थः । तथाच लोक-

---

(৫৮) মক। বিদ্যাবিনয়াদিসদ্গুণের আশ্রয় প্রিয়শ্রেষ্ঠ প্রাণের নিয়ন্তা ও মিলিত হইয়া ধূলিখেলা হইতে দৃঢ় সৌহার্দ্দশালী মিত্র মাধব প্রিয়জনের (মালতীর) বিরহজনিত মনোব্যথারূপ ব্যাধির অতিশয় যাতনাভোগ করিলেও হে কুৎসিতচিত্ত! তুমি দ্বিধাবিদীর্ণ হইয়া যাইতেছ না কেন?

(৫৯) মাধ। (আশ্বস্ত হইয়া উঠিয়া) বিধাতার নির্ম্মাণপ্রকার প্রায়শঃই সুলভসাদৃশ্য। সুতরাং লোধ্রকুসুমশাখাদিতে মালতীর কান্ত্যাদির সাদৃশ্যই

भवद्भिः सर्वाङ्गप्रकृतिरमणीया कुलवधू-
र्विहस्थैर्दृष्टा, वा विदितमथवास्याः किमभवत्।
वयोऽवस्थां तस्या शृणुत, सुहृदो ! यत्र मदनः,
प्रगल्भव्यापारश्चरति हृदि मुग्धश्च वपुषि ॥ (६०)

---

कुसुमकान्त्यादिषु मालतीकान्त्यादीनां सादृश्यादेव मे मालतीविभ्रमभ्रमो जात इति भावः। नैव, एवं तावद्भवतु, लोध्रकुसुमकान्त्यादिषु मालतीकान्त्यादिसादृश्यमेव भवतु, तथापि सा जीवत्स्थितः। इत्थं गिरि कथयन्तीति शेषः। भूधरारण्यचारिणः शैलकान्तारविहारिणः सत्त्वान् प्राणिनः। अवधानदानेन मद्वचनाकर्णने चित्तसन्निवेशवितरणेन।

(६०) विज्ञापनीयं कथयति—भवद्भिरिति। इहस्थैः एतत्पर्वतवनावस्थितैः (अनेन विशेषणेन सत्त्वानां मालतीदर्शनज्ञानयोर्योग्यता सूचिता) भवद्भिः सत्त्वैः सर्वाङ्गेषु वदनाद्यवयवेषु प्रकृत्या स्वभावेन रमणीया रम्या (नलङ्कारसम्पादितसौन्दर्येत्याशयः) कुलवधूः काचित् कुलललना (वारनारीसुलभचापल्यादिदोषरहितेत्याशयः) दृष्टा वा? चाक्षुषप्रत्यक्षविषयीकृता किम्? अथवा न दृष्टा चेत्तदा, अस्याः कुलवध्वाः किमभवत् जीवनं मरणं अन्येनापहरणं वा किं वृत्तं तत् विदितं? प्रामाणिकवचनादि परिज्ञातं, ननु तस्याः कीदृशी वयोवस्था इत्याकाङ्क्षायामाह—वय इति। भो सुहृदः! मदीयतादृशार्थविज्ञापनया सञ्जातसौहार्दाः भूधरारण्यचारिणः प्राणिनः! तस्या मदजिज्ञासाविषयीभूतायाः कुलवध्वाः वयोवस्थां शृणुत। यत्र यस्यां वयोवस्थायां मदनः कामः प्रगल्भव्यापारः प्रौढोद्योगः सन् हृदि मनसि चरति, वपुषि शरीरे च मुग्धः हावभावप्रकाशादिना चेतोहरः सन् चरति। एनेन तस्याः प्रथमयौवनावस्था सूचितेति मन्तव्यम्।

"अभ्यर्थनापरैर्ब्रोक्तैः पृच्छार्थोऽन्वेषणं मत"मिति लक्षणादेव पृच्छानाम नाट्यलक्षणम्। एवं यच्छब्दस्योत्तरवाक्यगतत्वेन तच्छब्दापेक्षाविरहात्र वाक्यगतविधेयाविमर्शदोषः। शिखरिणीवृत्तम्।

---

হইবে। (উচ্চৈঃস্বরে) এই আমি প্রণিপাত করিয়া পর্ব্বতারণ্যচারী প্রাণীদিগকে জানাইতেছি যে, আপনারা মুহূর্ত্তকাল আমার বাক্যশ্রবণে মনোযোগ দিয়া আমাকে অনুগৃহীত করুন।

(৬০) এই পর্ব্বতারণ্যাবস্থিত আপনারা সর্ব্বাঙ্গে স্বভাবরমণীয়া কোনও এক কুলবধূ দেখিয়াছেন কি? অথবা তাহার কি হইয়াছে, তাহা জানিয়াছেন কি? হে সুহৃদ্গণ! তাহার বয়োবস্থা শ্রবণ করুন। যে বয়োবস্থায় কাম

कष्टं भो! कष्टम् । (६१)

> केकाभिर्नीलकण्ठस्तिरयति वचनं ताण्डवादुच्छिखण्डः,
> कान्तामन्तःप्रमोदामभिसरति मदभ्रान्ततारश्चकोरः ।
> गोलाङ्गूलः कपोलं कुरयति रजसा कौसुमेन प्रियायाः,
> किं याचे तत्र यत्र ध्रुवमनवसरग्रस्त एवार्थिभावः ॥ (६२)

---

(६१) भो इति विषादद्योतकमव्ययं, कष्टं दुःखं, तस्यैवातिशये द्विरुक्तिः । सर्व्वेसद्वाक्या-श्रवणमेव दुःखहेतुः ।

(६२) सत्त्वानामश्रवणविषयदर्शयितुमाह—केकाभिरिति । नीलकण्ठो मयूरः ताण्डवा-दुद्धतनृत्यादेतोः उच्छिखण्डः उर्द्धीकृतबर्हाभारः सन् केकाभिः स्वजातिप्रसिद्धैः शब्दैः वचनं मदुक्तं वाक्यं तिरयति आच्छादयति । तथाच दीर्घतरेण स्वशब्देनाभिभवान्मद्वाक्यं न प्रणोतीत्यर्थः । मदेन कामभरतया भ्रान्ते घूर्णिते तारे तारके यस्य तादृशश्चकोरः चकोर-नामकः पक्षिविशेषः अन्तःप्रमोदां अन्तःकरणोपचितहर्षां कान्तां स्वभार्यां चकोरीं अभिसरति अभिगच्छति । तथाच तदासक्तचित्ततया नायमपि मद्वाक्यं प्रणोतीति भावः । तथा गोरिव लाङ्गुलं यस्य स गोलाङ्गूलः प्लवङ्गः (प्लवङ्गकीशप्लवगगोलाङ्गूलवलीमुख इत्यमरमाला) कौसुमेन पुष्पसम्बन्धिना रजसा परागेण प्रियायाः स्वकान्तायाः कपोलः गण्डं कुरयति चित्रयति । सुतरामयमपि तन्मनस्कतया मम वचनं नाकर्णयतीति भावः । अतएव किं कथं याचे एतेषां समीपे प्रियसङ्गमङ्गलवार्त्तामर्थये । मद्वचस एवामन्यमनस्कैरेभिरश्रवणादिति भावः । तथाच अर्थिभावः मम याचकत्वं यत्र तत्र अर्थात् सर्व्वत्र ध्रुवं निश्चितं अनवसरग्रस्त एव अनवकाशाक्रान्त एव । सर्व्वेषामेव स्वस्वाभिलषितसाधनव्यग्रत्वात् कुत्रापि मत्प्रार्थनावकाशो नास्तीति भावः ।

अत्र हृत्यनुप्रासच्छेकानुप्रासौ शब्दालङ्कारौ, सामान्येन विशेषसमर्थनरूपार्थान्तरन्यास-श्चार्थालङ्कार इत्येषां मिथोऽपेक्षाविरहात् संसृष्टिः । स्रग्धरावृत्तम् ।

"ईप्सितार्थप्रतीघातः प्रतिषेध इतीष्यते" इति लक्षणादत्र प्रतिषेधो नाम विमर्श-सन्ध्यङ्गम् ।

---

প্রৌঢ়োদ্যোগ হইয়া হৃদয়ে ও মনোহর হইয়া শরীরে বিচরণ করে।

(৬১) আহা কষ্ট, আহা কষ্ট !!

(৬২) ময়ূরগণ উদ্ধত নৃত্যবশতঃ বর্হভার উর্দ্ধীকৃত করিয়া কেকাশব্দ দ্বারা আমার বাক্যকে আচ্ছাদিত করিতেছে। মদাঘূর্ণিততারক চকোর পক্ষী

अयञ्च—दन्तच्छदारुणिमरञ्जितकान्तदन्त-
मुन्नम्य चुम्बति वलीवदनः प्रियायाः ।
काम्पिल्लक-प्रसवपाटलगण्डपालि-
पाकारुणस्फुटितदाड़िमकान्ति वक्त्रम् ॥ (६३)

एषः प्रियतमास्कन्धविश्रान्तकरो रोहिणानोकहस्कन्धविश्रान्त-कन्धरः करी । कथमत्राप्यनवसरः । (६४)

---

(६३) दन्तेति। अयञ्च वलीवदनः वानरः दन्तच्छदयोः ओष्ठाधरयोः अरुणिमा आरुण्येन रक्तवर्णेनेति यावत्, रञ्जिता रक्तीकृता कान्ता मनोरमाः दन्ता दशना यत्र तथाभूतं, काम्पिल्ल एव काम्पिल्लकः (स्वार्थे कः) रोचनी (गुण्डा रोचनीति ख्यातः) काम्पिल्लः कर्कश-चन्द्रो रक्ताङ्गो रोचनीत्यपीत्यमरः) तस्य प्रसववत् फलवत् पाटले गण्डपाली कपोलप्रान्तौ यस्य तत्तथाभूतं, तथा पाकेन पक्वतारूपपरिणामेन अरुणं रक्तवर्णं स्फुटितं बीजोद्गारेण द्विधाभूतं यद्दाड़िमं तन्नामप्रसिद्धं फलं तस्य कान्तिरिव कान्तिर्यस्य तत्तथाभूतं प्रियायाः वानर्याः वक्त्रं वदनं उन्नमय्य हस्ताभ्यां किञ्चिदुत्तोल्य चुम्बति। तथाचास्य सकामोऽपि मदीययाच्ञावसरो नास्तीति भावः।

अत्र छेकानुप्रासवृत्त्यनुप्रासौ लुप्तोपमा चालङ्कार इति तेषां परस्परनैरपेक्ष्येण संसृष्टिः। वसन्ततिलका वृत्तम्॥

(६४) एष इति। प्रियतमायाः स्वकान्तायाः करिण्याः स्कन्धे विश्रान्तः निश्चलावस्थितः करः शुण्डो यस्य तथाभूतः, तथा रोहिणानोकहस्य वटपादपस्य स्कन्धे प्रकाण्डदेशे विश्रान्ता अवस्थिता कन्धरा ग्रीवा यस्य तथाभूतः, एष करी हस्ती वर्त्तते इति शेषः। तथाच निर्वेदेनेद-

---

হর্ষিতান্তঃকরণা কান্তার অভিগমন করিতেছে। বানর পুষ্পপরাগ দ্বারা প্রিয়ার কপোল চিত্রিত করিতেছে। অতএব কিরূপে যাচ্ঞা করিব? নিশ্চয় সর্ব্বত্রই আমার যাচকত্ব অনবসরগ্রস্ত।

(৬৩) এই আর একটি বানর ওষ্ঠ ও অধরের রক্তিমা দ্বারা যাহার মনোহর দন্ত অনুরঞ্জিত। যাহার কপোলপ্রান্ত কাম্পিল্লফলের ন্যায় পাটলবর্ণ এবং যাহার কান্তি পক্বারুণ ও দ্বিধাবিভক্ত দাড়িম্বফলের তুল্য, প্রিয়তমার তাদৃশ বদন উত্তোলিত করিয়া চুম্বন করিতেছে।

(৬৪) যাহার শুণ্ড প্রিয়তমার স্কন্ধে নিশ্চলরূপে অবস্থিত ও যাহার গ্রীবা

कण्डूकुट्मलितेक्षणां सहचरीं दन्तस्य कोट्या लिखन्।
पर्यायच्युतिकीर्णकर्णपवनैराह्लादिभिर्वीजयन् ।
लब्धार्द्धैर्नवशल्लकीकिसलयैरस्याः स्थितिं कल्पयन्,
धन्यो वन्यमतङ्गजः परिचयप्रागल्भ्यमभ्यस्यति ॥ (६५)

(अन्यतो विलोक्य) अयन्तु ।

नान्तर्वर्त्तयति ध्वनत्सु जलदेष्वामन्द्रमुद्गर्जितम्,
नाश्नाति सरसः करोति कवलान् आवर्जितैः शैवलैः ।

---

मध्यर्थेऽपि इत्याशयः । विशेषतो निरूप्याह—कदम्बमिति । अत्रापि अस्मिन् करिण्यपि अवसरः मत्प्रार्थनाया अनवकाशः ।

(६५) अनवसरमेव समर्थयितुमाह—कण्डूति । धन्यः परमसौभाग्यशाली (अन्यथा ईदृक्प्रियानुवर्त्तनासम्भवादिति भावः) अयं वन्यमतङ्गजः आरण्यहस्ती, दन्तस्य कोट्या अग्रभागेन, कण्डूः कण्डूयनेन कुट्मलिते मुकुलिते निमीलिते इति यावत्, ईक्षणे नयने यस्याः तथाभूतां सहचरीं प्रियतमां करिणीं आलिखन् मन्दं मन्दं कण्डूयन्, आह्लादिभिः आनन्दसम्पादकैः पर्यायेण क्रमेण च्युतिकीर्णयोः परिचालितयोः कर्णयोः पवनैः मरुद्भिः वीजयन् वीजितां सम्पादयन्, तथा लब्धार्द्धैः स्वयमश्रितार्द्धांशैः नवैः नूतनैः शल्लकीनां गजप्रियवृक्षविशेषाणां किसलयैः पल्लवैः अस्याः करिण्याः स्थितिं वृत्तिं अभ्यवहारमिति यावत्, कल्पयन् सम्पादयन् परिचयस्य प्रणयस्य प्रागल्भ्यं उत्कर्षं अभ्यस्यति पुनः पुनर्विदधाति । तथाहि कान्तानुवृत्तिनिहितान्तःकरणस्यास्य सकाशे कथमपि मम प्रार्थनावसरो नास्तीति भावः ।

अत्र स्वभावोक्तिरलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ।

(६६) नान्तरिति । दानस्य मदस्य निम्नस्य या ज्यानिः हानिः अभावमिति यावत्, तया यो

---

বটবৃক্ষের প্রকাণ্ডদেশে অবস্থিত তাদৃশ এই হস্তী বর্ত্তমান (সুতরাং ইহাকেই আমা করি) এ কি এই হস্তীর নিকটেও আমার প্রার্থনার অবকাশ নাই ।

(৬৫) পরম সৌভাগ্যশালী এই বনহস্তী কণ্ডূয়ননিমীলিতনয়না সহচরীকে দন্তের অগ্রভাগ দ্বারা ঈষৎ কণ্ডূয়ন করিতে করিতে পর্য্যায়ক্রমে বিক্ষিপ্তকর্ণের আহ্লাদজনক বায়ুদ্বারা বীজিত করিতে করিতে ও অর্দ্ধভুক্ত শল্লকীপল্লব দ্বারা প্রিয়তমার আহার সম্পাদন করিতে করিতে প্রণয়ের উৎকর্ষ অভ্যাস করিতেছে ।

ग्लानज्यानिविषादमूकमधुपश्यासङ्गदीनाननो,
नूनं प्राणसमावियोगविधुरस्तम्बेरमस्ताम्यति ॥ (६६)

अलमनेनायासितेन अन्यतः सञ्चरामि। [ विलोक्य। ] एष सानन्दसहचरीसमाकर्ण्यमानमधुरगम्भीरकण्ठगर्जितध्वनिः अपरो मत्तमातङ्गयूथपालः, प्रत्यग्रविकसितकदम्बसङ्घातसुरभिशीतलामोद-

---

विषादः दुःखं तेन मूकानां शब्दरहितानां मधुपानां भ्रमराणां आसङ्गेन भाविसदोत्पाद-प्रत्याशया तमुक्तेन संसर्गेण दीनं मलिनं आननं यस्य तथाभूतः, अयम् स्तम्बेरमः करी, जलदेषु वारिदेषु ध्वनत्सु गर्जत्सु सत्सु अत्यन्तमध्ये आमन्द्रं निरतिशयगम्भीरं उद्गर्जितं उच्चैर्गर्जनं न बृंहति समयान्तर इव न करोति। तथा आसन्नात् निकटवर्त्तिनः सरसः सरोवरात् आवर्जितैः आहृतैः शैवलैः शैवालैः कवलान् ग्रासान् न करोति। अत एव नूनं मन्ये प्राणसमायाः प्राणप्रतिमायाः हस्तिन्याः वियोगेन विरहेण विधुरः खिन्नः सन् ताम्यति ताप-मनुभवति। प्रियतमावियोगेन विनोदनविषयवैमुख्यमस्यासम्भव इति भावः।

अत्र काव्यलिङ्गक्रियोत्प्रेक्षालङ्कारयोः सङ्करः। शार्दूलविक्रीडितं वृत्तम्।

(६७) अलमिति। आयासितेन मालतीवार्त्ताप्रश्नोद्वेजितेन कान्तापरिचिन्तना-क्रान्तमानसा विरहिणः विषयान्तरप्रश्नेनोद्वेजिता भवेयुरित्ययाह्वमेव प्रमाणमिति भावः। सानन्दया सुरतसम्भावनया सहर्षया सहचर्या स्वकान्तया करिण्या समाकर्ण्यमानः मधुरः गम्भीरस्तु कण्ठगर्जितं तस्य ध्वनिर्यस्य तथाभूतः, मत्तमातङ्गयूथपालः मत्तहस्तिसमूहस्य प्रभुः, प्रत्यग्रविकसितानां अचिरप्रस्फुटितानां कदम्बानां नीपपुष्पाणां सङ्घातस्य समूहस्य सुरभि शीतलामोदेन मनोज्ञ-शीतलगन्धेन बहुलं यथा स्यात्तथा सम्वलितं समन्वितः यो भासुरकपोलाभ्यां स्थूलगण्डाभ्यां निष्यन्दः मदजलचरणं निष्यन्दितमदजलमित्यर्थः, तेन कर्द्दमितौ सञ्जातपङ्कीकृतौ अत एव

---

(৬৬) (অন্য দিকে অবলোকন করিয়া) মদজলের অপ্রাপ্তি প্রযুক্ত দুঃখে নিঃশব্দ ভ্রমরগণের সংসর্গে মলিনবদন এই হস্তী মেঘে গর্জ্জন করিলে ও তন্মধ্যে গম্ভীর উদ্গর্জন করিতেছে না ও নিকটবর্ত্তী সরোবর হইতে আনীত শৈবালদ্বারা গ্রাস করিতেছে না, অতএব আমার মনে হয়, প্রাণপ্রতিম প্রিয়তমার বিরহে ক্ষীণ হইয়াই সন্তাপ ভোগ করিতেছে।

(৬৭) ইহাকে আয়াসিতকরা বৃথা। অন্যদিকে সঞ্চরণ করি। (অবলোকন করিয়া।) যাহার মধুর ও গম্ভীর কণ্ঠগর্জ্জিত ধ্বনি হর্ষযুক্তা সহচরী শ্রবণ করিতেছে, এবং যাহার গণ্ডদেশ অচির-প্রস্ফুটিত কদম্বপুষ্পসমূহের

बहुलसंवलितमांसलकपोलनिष्यन्द-कर्दमितकषायकरटः, समुद्दलित-कमलिनीखण्डविप्रकीर्णपर्णकमलकेसरमृणालकन्दकोमलाङ्कुरमाहरन्, अनवरतप्रवृत्तकमनीयकर्णतालताण्डव-प्रबल-जर्जरितजलतरङ्गवितत-नीहारं समुत्त्रस्तकुररसारसं सरोऽवगाह्य, विहरति। भवतु एवं माभाषे। महाभाग! नागपते! श्लाघ्ययौवनः खल्वसि, कान्तानु-वृत्तिचातुर्य्यमपि अस्ति भवतः। [ सापवादम्। ] ( ६७ )

---

कषायो सुरभो ( सुरभौ च कषायः स्यादिति माधवः ) करटौ गण्डदेशौ यस्य तथाभूतः, समुद्दलितायाः समुन्मूलितायाः कमलिन्याः पद्मलतायाः, खण्डे छेदकाले विप्रकीर्णानि विश्लेषाद्विशकलितानि पर्णानि दलानि यस्य तथाभूतस्य कमलस्य पद्मस्य केसरञ्च मृणालञ्च कन्दोमूलञ्च कमलाङ्कुरञ्च तत्तयोक्तं ( समाहारद्वन्द्वादेकवचनम् ) आहरन् भक्षणार्थ-माददानः। अनवरतं अविश्रान्तं यथा स्यात्तथा प्रवृत्तं उत्पन्नं कमनीयं मनोहरं यत् कर्णयोः तालताण्डवं तालसङ्गतनृत्यं ( ताली शौलक्रियामाने मध्यमाङ्गुष्ठसंहिते इत्यमरमाला ) तेन प्रबलाः सवलिताः जर्जरिताः चूर्णीकृताश्च ये जलतरङ्गास्तेभ्यः विततः विस्तृतः विस्तृत-रूपेण निपतिताः इति यावत्, नीहाराः नीहारवज्जलबिन्दवो यत्र तथाभूतं, तथा समुत्त्रस्ताः सद्-भयादिव भीताः कुरराः सारसाश्च पक्षिविशेषाः यत्र तत्तथाभूतं सरः सरोवरं विहरति सक्रीडं विलसति। स्वल्पाविशेषोऽयमात्रापयोग्य इत्यभिप्रेत्याह—भवत्विति। एवं वक्ष्यमाणप्रकारं आभाषे आलपामि। श्लाघ्यं प्रियाविरहविरहात् प्रशस्तं यौवनं यस्य तादृशः। एतेन आत्मनो-विरहादात्मनो यौवनस्य श्लाघ्यत्वं ध्वनितम्। कान्तायाः भार्य्यायाः अनुवृत्तिचातुर्य्यमपि अनुसरण-नैपुण्यमपि। सापवादमिति। अपवादेन अनुवृत्तिहीनैकस्वरूपदोषप्रदर्शनेन सहितं यथा स्यात्तथेत्यर्थः।

---

মনোজ্ঞ শীতলগন্ধ যাহা বহুলরূপে সংশ্লিষ্ট স্থূল গণ্ডদেশ ক্ষরিত মদ জল দ্বারা কর্দ্দমাক্ত হইতেছে, তাদৃশ এই মত্তহস্তিযূথপতি, সমুন্মূলিত পদ্মিনীর খণ্ডন কালে যাহার দলসমূহ ইতস্ততঃ বিশ্লেষবশে ব্যবহিত হইয়াছে, তাদৃশ পদ্মের কেশর মৃণাল কন্দমূল ও কমলাঙ্কুর ভক্ষণার্থ আহরণ করিতে করিতে যাহাতে অবিশ্রান্তরূপে মনোহর তালসঙ্গত কর্ণের উদ্ধত নৃত্য দ্বারা সঞ্চলিত ও চূর্ণীকৃত জলতরঙ্গ হইতে বিস্তৃতরূপে নীহারের ন্যায় জলবিন্দু পড়িতেছে এবং যাহাতে কুরর ও সারস পক্ষিগণ এই হস্তি ভয়ে সন্ত্রস্ত, তাদৃশ সরোবরে বিহার

लीलोत्खातमृणालकाण्डकवलच्छेदेषु सम्पादिताः,
पुष्यत्पुष्करवासितस्य पयसो गण्डूषसंक्रान्तयः ।
सेकः शीकरिणा करेण विहितः कामं विरामे पुन-
र्न स्नेहादनरालनालनलिनीपत्रातपत्रं धृतम् ॥ (६८)

---

(६८) अङ्गवैकल्यं दर्शयितुमाह—लीलेति । लीलया यदृच्छया उत्खाताः उद्धृता ये मृणालकाण्डाः बिसस्तम्बास्तेषां कवलाय ग्रासाय (छलेषु) छेदेषु खण्डेषु करिणीवदनविवरावस्थितेष्वित्यर्थः, पुष्यद्भिः विकसद्भिः पुष्करैः पद्मैः वासितस्य सुरभितस्य पयसः जलस्य गण्डूषाणां संक्रान्तयः निक्षेपाः सम्पादिताः अनुष्ठिताः । करिणीकवलितमृणालखण्डेषु निजवदनपूरितं जलं प्रदत्तमित्यर्थः । तथा शीकरिणा जलबिन्दुमता करेण शुण्डादण्डेन सेकः करिणीशरीरोपरि सेचनं कामं पर्याप्तं यथा स्यात्तथा विहितः सम्पादितः । पुनः किन्तु विरामे सेकविरामे स्नेहात् प्रणयात् अनरालं अकुटिलं सरलमिति यावत्, नालं यस्य तथाभूतं यत् नलिनीपत्रं पद्मपत्रं तदेव आतपत्रं छत्रं न धृतं, आतपनिवारणाय शुण्डादण्डेन करिणीशरीरोपरि नोत्तोलितमित्यर्थः । तथाचानेनैवातपत्रोत्तोलनाभावेन कान्तानुवृत्तेरङ्गवैकल्यं जातमिति भावः ।

अत्र स्वभावोक्तिरलङ्कारो नलिनीपत्रातपत्रमिति निरङ्गरूपकेण सङ्कीर्यते । छेकानुप्रास-वृत्त्यनुप्रासौ च शब्दालङ्काराविति समुदाये संसृष्टिः । शार्दूलविक्रीडितं वृत्तम् ।

चतुर्थचरणे नैव यदि स्नेनावस्थानेय ज्ञानवैयग्र्योऽप्यसि शीघ्र तमरोलनरितहलीशाङ्कोऽपि इत्यत्र हत्यनुसन्धेयम् ।

---

করিতেছে। হউক এইরূপ আলাপ বলি, হে ভাগ্যশালি নাগপতে। তুমি প্রাপ্তযৌবন হইয়াছ। তোমার কান্তানুবৃত্তি চাতুর্য্যও আছে। (দোষ প্রদর্শনের সহিত)

(৬৮) যদৃচ্ছাক্রমে উৎপাটিত মৃণালকাণ্ডের কবলিত খণ্ডে বিকসিত পদ্ম সুবাসিত জলের গণ্ডূষ নিক্ষেপ সম্পাদিত হইয়াছে। জলকণাযুক্ত শুণ্ডাদণ্ড-দ্বারা করিণীর গাত্রোপরি সেচনও পর্য্যাপ্তরূপে বিহিত হইয়াছে। কিন্তু সেই সেকের বিরামকালে স্নেহবশতঃ আতপ নিবারণের জন্য অবক্রনালনলিনীপত্ররূপ ছত্র শুণ্ডাদ্বারা করিণীর গাত্রোপরি বিধৃত হয় নাই।

कथमवधीरणानीरसं व्रजति। हन्त मूढ़ एवास्मिन् वनेचरे वयस्यमकरन्दोचितं व्यवहरामि, हा वयस्य! (६८)

धिगुच्छ्वसितवैशसं मम यदित्थमेकाकिनी,
धिगेव रमणीयतां त्वदनुभावभावाहृते।
त्वया सह न यस्तया च दिवसः स विध्वंसताम्
प्रमोदमृगतृष्णिकां धिगपरत्र या जायते॥ (७०)

---

(६९) कथमिति। अवधीरणया अवहेलनं प्रत्येव अनानर्पणरूपावज्ञया नीरसं निष्प्रणयं यथा स्यात्तथा व्रजति गच्छति, स मत्तमातङ्गयूथपतिरिति शेषः। अयमानित इवाह हन्तेति—अत एवात्र छादनं नाम विमर्शसन्ध्यङ्गम्। तल्लक्षणं दर्पणोक्तं यथा—"...मदादुच्छादनं पुनः। कार्य्यार्थमपमानादेः सहनं खलु यद्भवे"दिति।

(७०) धिगिति। एकाकिनी मम इत्थमेवम्प्रकारं यत् उच्छ्वसितवैशसं जीवनरूपं दुःखं तत् धिक्। मालतीमकरन्दयोरुभयोर्विरहावस्थायामपि यज्जीवामि तदतीव दुरदृष्टफलमिति भावः। तथा एकाकिनो मम त्वदभाविनः सुखसाधनत्वाभावान्निष्प्रयोजनोत्पादिनः रमणीयवस्त्वनुभवात् पुष्पलतादिमनोहरपदार्थसाक्षात्करणानि च धिगेव। यो दिवसः त्वया मकरन्देन तया मालत्या च सह न युवयोर्विरहदशायां यो दिवस उत्पन्न इत्यर्थः, स विध्वंसतां विनश्यतु। तादृशदिवसस्य मम अतीव दुःखातिपातनीयत्वादिति भावः। प्रमोदः आनन्द एव मृगतृष्णिकां मतृषवे मिथ्यामूलत्वात् मरीचिकात्वमपि धिक्। या प्रमोदमृगतृष्णिका अपरत्र युवाभ्यामन्यत्र पदार्थे जायते उत्पद्यते। त्वां मालतीञ्चावलम्ब्य यो यः प्रमोद उत्पद्यते स एव यथार्थः, इतरस्तु प्रमोदाभास इति भावः।

---

(৬৯) একি কেন অবজ্ঞায় নিষ্প্রণয় ভাবে যাইতেছে? অহো!! মূঢ় এই বনেচর ও বয়স্য মকরন্দের উপযুক্ত ব্যবহার করিতেছি, হা প্রিয়বয়স্য মকরন্দ!!

(৭০) একাকি আমার এই প্রকারে জীবনরূপ দুঃখে ধিক্। এবং একাকি আমার নিষ্ফলোৎপাদি রমণীয় বস্তুর অনুভবেও ধিক্। যেই দিন তোমার ও মালতীর বিরহ অবস্থায় উৎপন্ন আমার সেই দিন বিধ্বস্ত হউক। আমার সেই প্রমোদমরীচিকায়ও ধিক্, যাহা তোমাদের অতিরিক্ত বিষয়-সম্বন্ধে জন্মিয়া থাকে।

मक। अये! उन्मादमोहान्तरितोऽपि सम्प्रति अयं मां प्रति अप्रतिकूलः, यतः कुतश्चिदाङ्ककात् प्रबुद्ध एवास्य सहजस्नेहसंस्कारः। तत् असन्निहितमेव मां मन्यते। [पुरः स्थित्वा] एष पार्श्वचर. एव ते मकरन्दो मन्दभाग्यः। (७१)

माध। प्रियवयस्य! सम्भावय, परिष्वजस्व मां, प्रियान्तु मालतीं प्रति निराशः परिश्रान्तोऽस्मि। [इति मूर्च्छति]। (७२)

मक। एवं सम्भावयामि जीवितेश्वरम्। [विलोक्य सकरुणम्।]

---

अत्र एकस्यैव धिक्शब्दस्य पुनःपुनरुपादानादनवीकृतत्वदोषः। एवं जीवनञ्च रमणीय-पदार्थानुभवाभाव धिक्कारं प्रति एकाकित्वदपदार्थस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गद्वयम्, प्रमोदभगवद्यद्वितेति निरर्थकैश्चद्वयपदरूपालङ्कार इत्येषां परस्परनैरपेक्ष्यात् संसृष्टिः। पृथ्वी वृत्तम्। नचात्र द्वितीयचरणस्याष्टमाक्षरे यत्यभावेऽपि यतिभङ्गदोषः शङ्कनीयः स्वरसन्धि-कृतत्वे तद्दोषस्यानङ्गीकारादिति छन्दोमञ्जर्यामनुसन्धेयम्।

(७१) मकेति। उन्मादात् कामोन्मादात् यो मोहः तेन अन्तरितोऽपि अभिभूतोऽपि, अयं माधवः, अप्रतिकूलः अविपरीतबुद्धिः। सहजस्नेहसंस्कारः आजन्मसिद्धस्नेहविषयिणी भावना, कुतश्चित् अनिर्वचनीयात् व्यञ्जकात् उद्बोधकात् प्रबुद्ध एव उन्मेषित एव तादृशस्नेह-विषयकस्मृतिजनक एवेति यावत्। तस्मात् उन्मादजनितमोहाद्धेतोः। मन्दभाग्यः हतभागधेयः, त्वदीयेदृशावस्थाप्रत्यक्षीकरणादिति भावः।

(७२) माधेति। सम्भावय दर्शनप्रदानादिना रक्ष।

(७३) मकेति। सम्भावयामि आलिङ्गनप्रदानादिना रक्षे, जीवितेश्वरम् अमतीव

---

(৭১) মক। অহো মাধব কামোন্মাদজনিত মোহে অভিভূত হইয়াও প্রতি অপ্রতিকূল। সহজ স্নেহ সংস্কার অনির্বচনীয় উদ্বোধক বশতঃ উন্মেষিতই থাকে। অতএব আমাকে অসন্নিহিত মনে করিতেছে। (সম্মুখে থাকিয়া) মন্দভাগ্য এই মকরন্দ তোমার পার্শ্বেই বিচরণ করিতেছে।

(৭২) মাধ। প্রিয় বয়স্য! দর্শনপ্রদানাদিদ্বারা আমাকে রক্ষা কর। প্রিয়া মালতীর প্রতি নিরাশ হইয়া আমি নিতান্ত পরিশ্রান্ত হইয়াছি। (মূর্চ্ছা)

(৭৩) মক। এইরূপে আলিঙ্গন প্রদানাদি দ্বারা জীবননিয়ন্তা মাধবকে

हा कष्ट ! आविर्भूतमत्परिष्वङ्गोत्कण्ठ एव निश्चेतनः संवृत्तः, तत्-किमिदानीमाशाव्यसनेन। सर्वथैव मे नास्ति वयस्य इति परिच्छेदो युक्तः (७३)। हा वयस्य!!

यत्स्नेहसंज्वरवता हृदयेन नित्य-
मावद्धवेपथु विनापि निमित्तयोगात्।
त्वद्व्यापदो गणयतो भयमन्वभावि
तत्सर्वमेकपद एव मम प्रशान्तम्॥ (७४)

स्नेहास्पदत्वाज्जीवनरक्षितारम्। आविर्भूता सञ्जाता मत्परिष्वङ्गस्य ममालिङ्गनस्य उत्कण्ठा औत्सुक्यं यस्य तथाभूत एव सन् निश्चेतनः चैतन्यरहितः मूर्च्छां प्राप्त इति यावत्, तत्तस्मात् इदानीं जीवितामायां "अस्य जीवनं न नश्यती"ति प्रत्याशाया व्यसनेन आसक्त्या कृतं अलं। कुत इत्याकाङ्क्षायामाह—सर्वथेति। परिच्छेदः निर्णयः। पुनःपुनरेवं मूर्च्छालाभात् तन्निवारणोपायभूतस्य मालतीलाभस्य चासम्भवादिति भावः।

"कार्य्यात्ययोपगमनं विरोधनमितिस्मृत"मिति लक्षणादत्र विरोधनं नाम विमर्षसन्धेरङ्गम्। एवं जीवितेश्वरशब्दस्य स्नेहास्पदत्वेन जीवनरक्षितृत्वावाचकत्वादवाचकत्वदोषः।

(७४) यदिति। स्नेहसंज्वरवता—मत्सम्बन्धनिबन्धनसन्तापशालिना हृदयेन मदीयचित्तेन निमित्तयोगाद्विनापि विपत्तिकारणसम्पर्काभावेऽपि नित्यं सर्व्वदा त्वयि आपदो गणयता "स्नेहः पापमाशङ्कत" इति न्यायात् तद्विषयिणीर्व्विपदो भावयता सता आबद्धवेपथु विधृतकम्पनं यथा स्यात्तथा यत् भयं अन्वभावि अनुभूतं शङ्कितमिति यावत्, मम तत्सर्व्वं भयं एकपद एव तत्क्षण एव तवाभावक्षण एवेति यावत् (तत्क्षणैकपदे तुल्ये इति हलायुधः) प्रशान्तं विनष्टम्। तवाभावे पुनस्त्वद्विषयकभयासम्भवादिति भावः।

अत्र भयनिमित्ताभावेऽपि भयोत्पादाद्विभावनालङ्कारः। वसन्ततिलकावृत्तम्।

দুঃখ করি। (নিরীক্ষণ করিয়া করুণার সহিত) হা!! আমার আলিঙ্গনোৎকণ্ঠা আবির্ভূত হওয়ার পরেই প্রিয়বয়স্য অচৈতন্য হইয়াছে, তবে আর এখন ইহার জীবনাশা ব্যসনে ফল কি? আমার বয়স্য নাই এইরূপ নির্ণয়ই সর্ব্বপ্রকারে যুক্ত। হা বয়স্য!!

(৭৪) বাৎসল্য নিবন্ধন সন্তাপশালি আমার চিত্ত বিপত্তি কারণ সম্পর্ক ব্যতিরেকেও সর্ব্বদা তোমার বিপদ চিন্তা করিতে করিতে সকম্পে যে ভয়

सखे! वरं तावन्त एवातिक्रान्ता मुहूर्त्ताः, तथाविधमपि भवन्तं येषु चेतयमानमनुभूतवानस्मि, इदानीं तु—( ७५ )

भारः, कायो, जीवितं वज्रकीलं
काष्ठाः शून्या निष्फलानीन्द्रियाणि।
कष्टः कालो मां प्रति त्वत्प्रयाणे,
शान्तालोकः सर्वतो जीवलोकः॥ ( ७६ )

---

(७५) सखे इति। अतिक्रान्ताः अतीताः तावन्तः मुहूर्त्ताः दिवापञ्चदशभागैकभागात्मकाः कालाः वरं वर्त्तमानकालापेक्षया मनाक्प्रियाः अभूवन्निति शेषः। (मनागिष्टे वरं यत्तु कश्चिदाह मदव्ययमिति शाश्वतः) येषु मुहूर्त्तेषु भवन्तं तथाविधमपि मालतीविरहेणोन्मत्ततुल्यमपि चेतयमानं चेतन्यवन्तं ("चित सञ्चेतने" इति चौरादिकात्मनेपदि चितधातोः कर्त्तर्य्यानश्) अनुभूतवान् साक्षात्कृतवानस्मि।

(७६) भार इति। त्वत्प्रयाणे भूलोकात्तव प्रस्थाने तव परलोकगमन इति यावत्, मां प्रति कायः शरीरं भारः वोढुमशक्य इव सर्व्वत्र प्रतीयमानोऽभूदिति शेषः। तथाच देहत्याग एव सम्प्रति मया कर्त्तव्य इति भावः। जीवितं जीवनं वज्रकीलं वज्रो वज्रमयः कील. शङ्कुः यस्मिन् तथाभूतं वज्रमयशङ्कुं कायेन सह सङ्घटितमिवेति यावत्। कथमन्यथा ईदृग्बन्धुवियोगदर्शनेऽपि जीवनं न वहिर्गच्छतीति भावः। काष्ठाः दिशः शून्याः पदार्थविरहिता इव। त्वद्विरहादिति भावः। इन्द्रियाणि नयनादीनि निष्फलानि प्रयोजनरहितानीव। त्वच्छोकाभिभवेन स्वस्वविषयग्रहणासामर्थ्यादिति भावः। कालः वर्त्तमानसमयः कष्टः कष्टप्रदः। बन्धुनात्वदभावेन केवलदुःखस्यैवानुभवादिति भावः। तथा जीवलोकः मर्त्त्यभुवनं शान्तालोकः शान्तः निर्व्वाणं लब्धः आलोकः प्रकाशः यस्मिन् तादृश इव, अन्धकारमय इवेति यावत्। आलोकभूतस्य तवाभावादिति भावः।

---

अनुभব করিতেছিল, আমার সেই সমস্ত ভয় পরক্ষণেই (তোমার অভাব ক্ষণেই) বিনষ্ট হইয়াছে।

(৭৫) সখে! আমার সেই সকল অতিক্রান্ত মুহূর্ত্ত ও বর্ত্তমান সময় অপেক্ষা শ্রেয় ছিল, যেই সকল মুহূর্ত্তে মালতীর বিরহে উন্মত্ত তুল্য হইলেও তোমাকে সচৈতন্য দেখিয়াছি। সম্প্রতি—

(৭৬) তোমার পরলোকে গমনে আমার যেন শরীর দুর্ব্বহ, জীবন

[ विचिन्त्य ] तत्किं नु खलु माधवास्तमयसाक्षिणा मया भवितव्यमिति जीवामि ? भवतु अमुष्मादेव गिरिशिखरात् पाटलावत्यां निपत्य, माधवस्य मरणाग्रेसरो भवामि। [ सकरुणं निवृत्य आलोक्य च। ] कष्टं ! भोः कष्टम् ! (७७)

तदेतदसितोत्पलद्युतिशरीरमाक्षिप्तभू-
न्यसमातिदृढपीड़नैरपि न व्रसिरालिङ्गनैः।

अत्र शयो प्रतीयमानोत्प्रेक्षालङ्काराणां परस्परनैरपेक्ष्यात् संसृष्टिः। मालिनीवृत्तम्।

(७७) विचिन्त्येति। मया माधवस्य अस्तमयः अस्तमितिः तस्य साक्षिणा द्रष्ट्रा भवितव्यम्, इतःपरमपि जीवनधारणेऽवश्यमेव माधवमरणं मया द्रष्टव्यमित्यर्थः, इति हेतोः किन्नु खलु किमर्थं भोः जीवामि प्राणान् धारयामि ? नातःपरं कथमपि जीवनधारणं मया कर्त्तव्यमित्यर्थः। कर्त्तव्यमवधारयति—भवत्वित्यादिना। पाटलावत्यां एतद्गिरिनिम्नप्रवाहिन्यां पाटलावतीनामकनद्यां मरणाग्रेसरः मरणविषये अग्रवर्त्ती भवामि। माधवमरणदर्शनात् प्रागेवाहं जीवनं त्यजामीत्यर्थः। सकरुणं सशोकं निवृत्य शेषदर्शनार्थं मरणाय गमनात् किञ्चिद्विरम्य आलोक्य माधवस्य शरीरं दृष्ट्वा।

(७८) तदेतदिति। असितोत्पलस्य नीलपद्मस्य द्युतिरिव द्युतिर्यस्य तादृशं एतद्दृश्यमानं तत्प्रसिद्धं शरीरं माधवस्य देहः। धराविलुण्ठितं वर्त्तत इति शेषः। अस्मिन् शरीरे अतिदृढपीडनैरपि समतिगाढ़ैरपि आलिङ्गनैः 'मम तृप्तिः आलिङ्गनवासनानिवृत्तिर्न अभूत्। पुरा मालतीवियोगात् पूर्व्वं उल्लसितः सौन्दर्य्यातिशयदर्शनेनोच्छ्वसितः विस्मयः आश्चर्य्यं यत्र

वज्रमय शङ্কুদ্বারা দেহ সঙ্ঘটিত, দিক্ সকল শূন্য, ইন্দ্রিয় সকল নিষ্ফল, বর্ত্তমান সময় কষ্টপ্রদ ও জীবলোক অন্ধকারময় প্রতীয়মান হইতেছে।

(৭৭) (চিন্তা করিয়া) (অতঃপর জীবনধারণ করিলে) আমাকে মাধবাস্তমিতির সাক্ষী হইতে হইবে। অতএব আর কি জন্য জীবনধারণ করিব? হউক্, তবে এই পর্ব্বতশিখর হইতে পাটলাবতী নামক নদীতে নিপতিত হইয়া মরণ বিষয়ে মাধবের অগ্রবর্ত্তী হই। (শোকের সহিত নিবৃত্ত হইয়া ও মাধবের শরীর অবলোকন করিয়া) অহো কি কষ্ট !!

(৭৮) নীলোৎপলসমানদ্যুতি এই সেই মাধবের শরীর ধরাবিলুণ্ঠিত। এই শরীরে অতি গাঢ় আলিঙ্গন দ্বারাও আমার আলিঙ্গন বাসনার নিবৃত্তি

यदुल्लसितविस्मया वत निपीतवत्यः पुरा,
नवप्रणयविभ्रमाकुलितमालतीदृष्टयः ॥ (७८)

आश्चर्य्यम् एतस्यां तनौ अचरमे वयसि तावतो गुणसमाहारस्य सन्निवेशः, कथमिवाभूत्। सखे माधव! । (७९)

आपूर्णेश्च कलाभिरिन्दुरमलो यातश्च राहोर्मुखम्,
सञ्जातश्च घनाघनो जलधरः शीर्णश्च वायोर्जवात्।

---

तथाभूताः नवप्रणयविभ्रमाकुलितमालतीदृष्टयः नवीनप्रेमजनितविलासव्याप्ताः मालत्या दृष्टि-पाताः वत खेदे यत्शरीरं निपीतवत्यः पपुः, मालती यत्शरीरं निर्निमेषं दृष्टवतीत्यर्थः।

अत्र स्वकीयगाढालिङ्गनरूपस्य सानुरागमालतीदृष्टिपातरूपस्य च कार्य्यस्य संघट्टेन "कार्य्यसंग्रहमादानमितिलक्षणादादानं नाम विमर्षसन्धेरङ्गम्।

तथाचात्र मालत्यासङ्गानुरागयोः माधवविषयकत्वपरमत्वाङ्गीभूतत्वात् रूपकालङ्कारः, स च अविलोतपलवतीति लुप्तोपमालङ्कारेण सङ्कीर्णः। पृथ्वी छन्दः।

(७९) आश्चर्य्यमिति। एतस्या माधवीयाया तनौ शरीरे, अचरमे अवार्द्धक्ये, तावतः अपरिसंख्येयस्य गुणसमाहारस्य दयादिगुणसमूहस्य।

(८०) आपूर्ण इति। अमलः निर्म्मलः इन्दुः चन्द्रः कलाभिः षोडशभागैः आपूर्णः सम्पूर्णश्च राहोर्विधुन्तुदस्य मुखं यातः प्राप्तश्च। अत्र चकारद्वयं कालैक्यद्योतकं। तथाच कला-परिपूर्णता काल एव राहुमुखं प्राप्त इत्यर्थः। एवमुत्तरत्रापि बोध्यम्। जलधरो मेघः घनाघनः वर्षुकः (वर्षुकाब्दो घनाघनः इत्यमरः) सञ्जातश्च वायोः पवनस्य जवात् वेगात् शीर्णः इतस्ततो विच्छिन्नत्वात् क्षयं प्राप्तश्च। द्रुमवरः सहकारादिश्रेष्ठतरुः फलैर्पाढ्यः फलयुक्तः ("फलेग्रहिरात्मम्भरि-श्चे"ति इप्रत्ययः, मुमनिपातनादित्वम्) निष्पन्नः सम्पन्नश्च, दावाग्निना वनवह्निना ("दव-

---

হইত না। এবং পূর্ব্বে আশ্চর্য্যান্বিত ও নূতন প্রণয়জনিত বিলাসব্যাপ্ত মালতীর দৃষ্টিপাত যেই শরীর পান করিয়াছে। (অর্থাৎ নূতন প্রণয়বশে আশ্চর্য্যে নির্নিমেষনেত্রে মালতী যে শরীর অবলোকন করিয়াছে।

(৭৯) আশ্চর্য্য এই যে এই মাধবশরীরে অপরিণত বয়সেই দয়াদি তাবদ্-গুণসমূহের সন্নিবেশ কি প্রকারে হইল? সখে! মাধব!

(৮০) নির্ম্মল চন্দ্র কলা পূর্ণ হইয়া তৎকালেই রাহুর বদন প্রাপ্ত হয় (রাহুগ্রাসে নিপতিত হয়) মেঘ বর্ষণশীল হইয়া তৎকালেই বায়ুবেগে বিশীর্ণ

निर्वृत्तस्य फलेग्रहिर्दुमवरो दग्धस्य दावाग्निना,

त्वं चूडामणितां गतस्य जगतः प्राप्तस्य मृत्योर्वशम् ॥ (८०)

* [ विचिन्त्य । ] तत्परिष्वजे अहं तावदेवंगतमपि वयस्यं, अर्थितस्यानेन सम्प्रत्येवायमर्थः । [ परिष्वज्य । ] हा वयस्य ! विमलविद्यानिधे गुणगुरो ! मालतीस्वयंग्रहजीवितेश्वर ! हा सौन्दर्यविनिर्जितरतिरमणच्छाय ! हा कामिनीहृदयमन्मथ ! हा बान्धव-

---

दावौ वनारण्यवह्नी"त्यमरः ) दग्ध. भस्मीभूतश्च । तथा त्वं जगतः चूडामणितां गुणगौरवेण शिरोरत्नत्वं सर्वप्राधान्यमिति यावत्, गतः प्राप्तः, मृत्योर्यमस्य वशं अधीनतां प्राप्तः अधिगतश्च ।

यथा इन्दुः षोडशकलाभिः सम्पूर्णः सन्नेव अवसराभावेन जनानामानन्दमपूरयन् राहुणा ग्रस्यते, यथा वा जलधरो वर्षणप्रवृत्त एवानुकार्याभावेन धरातापमनिवारयन् वायुवेगेनेतस्ततो विच्छिन्नत्वात् क्षीयते, यथाच वा सहकारादिश्रेष्ठतरुः फलयुक्तः सन्नेव फलदानेन जनप्रीतिमनुत्पादयन् दावानलेन दह्यते, तथा त्वमपि दयादिगुणगौरवेण जगतः प्राधान्यं लभमान एव दैववशाद्धाकुलाशामपूरयन् यमवशंप्राप्त इत्यतः किमहो दुःखहेतुर्भवितुमर्हतीति सरलार्थमवधार्यम् ।

अत्र दृष्टान्तक्रियासमुच्चयालङ्कारयोरङ्गाङ्गिभावेन सङ्करः । शार्दूलविक्रीडितं वृत्तम् ।

- (८१) तदिति । एवं गतमपि ईदृशदशापन्नमपि प्रायो मृत्योर्वशं प्राप्तमपीति यावत्, प्रियवयस्यं माधवं परिष्वजे आलिङ्गामि । कथमेवंगतमप्यालिङ्गसीत्याकाङ्क्षायामाह—अर्थितेति, अनेन माधवेन, अयमेव ममालिङ्गनरूप एव अर्थः अर्थितः "प्रियवयस्य ! सम्भावय परिष्वजस्व मा"मिति वाक्येन प्रार्थितः । तस्मादीदृशदशापन्नेऽप्यस्मिन्नालिङ्गनप्रदानं मयाऽवश्यं कर्त्तव्यमिति भावः । विमलविद्यानिधे ! विमलानां विद्यानामाश्रय ! गुणगुरो ! गुणैर्दयादाक्षिण्यादिभिः श्रेष्ठस्वरूप ! मालत्याः स्वयंग्राहेण विवाहानपेक्षया आत्मनैव वरणेन

---

হয় । আম্র প্রভৃতি উৎকৃষ্ট ফলাদি সম্পন্ন হইয়া তৎকালেই দাবাগ্নি দ্বারা দগ্ধ হয় । এবং তুমিও গুণগৌরবে জগতের চূড়ামণিতা প্রাপ্ত হইয়া তৎকালেই যমের অধীনতা প্রাপ্ত হইলে ।

(৮১) ( চিন্তা করিয়া ) তবে ঈদৃশদশাপন্ন প্রিয়বয়স্যকেও আমি আলিঙ্গন করি । যে হেতু সম্প্রতিই প্রিয় বয়স্য আমার আলিঙ্গনরূপ অর্থ প্রার্থনা করিয়াছিল । ( আলিঙ্গন করিয়া ) হে বয়স্য বিমলবিদ্যার

पयोनिधिशरच्चन्द्र! हा कामन्दकीमकरन्दानन्दनमुखचन्द्र! माधव! अयमत्र ते जन्मनि अपश्चिमः पश्चिमावस्थां प्रापितो मकरन्दबाहुपरिष्वङ्गः। स एष मकरन्दो मुहूर्त्तमपि जीवतीति मैवं संस्थाः। (८१)

आजन्मनः सहनिवासतया मयैव
मातुः पयोधरपयोऽपि समं निपीय।
त्वं पुण्डरीकमुख! बन्धुतया निरस्त-
मेको निवापसलिलं पिबसीत्ययुक्तम्॥ (८२)

---

जीवितेश्वरः प्राणनाथः तत्सम्बोधनम्। सौन्दर्येण विनिर्जिता पराभूता रतिरमणस्य कामदेवस्य छाया कान्तिर्येन तथाभूत। कामिनीहृदयानां मन्मथ! कन्दर्पस्वरूप! तदुन्मादकेति यावत्। बान्धवाः मित्रादयः एव पयोनिधयः सागरास्तेषां शरच्चन्द्र! तदाह्लादजनकत्वात् शरच्चन्द्रस्वरूप! कामन्दकीमकरन्दयोः आनन्दन आनन्दजनकः मुखचन्द्रः वदनेन्दुर्यस्य तथाभूत, अत्र जन्मनि अयं मया दीयमानः अपश्चिमः इतःपरमपि दातुमशक्यत्वादचरमोऽपि मकरन्दस्य मम बाहुपरिष्वङ्गः आलिङ्गनं पश्चिमतां चरमतां प्रापितः नीतः दैवहतकेनेति शेषः। जीवतीति त्वा विनेत्यादिः। मैवं संस्थाः एवं मनसि न कुर्याः। त्वद्विरहितं ममापि जीवनं न क्षणमपि स्थास्यतीति भावः।

(८२) आजन्मन इति। हे पुण्डरीकमुख! श्वेतोत्पलवन्मनोरमास्य। आजन्मनः जन्मन आरभ्य सहनिवासितया एकत्रावस्थानेन हेतुना मयैव समं सार्द्धं मातुः पयोधरपयोऽपि जननीस्तनदुग्धमपि निपीय पीत्वा त्वं एकः एकाकी बन्धुतया पित्रादिबान्धवसमूहेन निरस्तं निषिद्धं मद्दत्तमिति यावत्, निवापसलिलं तर्पणजलं (पितृदानं निवापः स्यादित्यमरः) पिबसि

---

আশ্রয়! হে (মন্ত্রাদিশিক্ষাদি গুণ দ্বারা) লোকের শিক্ষক! হে স্বয়ংগ্রহণে মালতীর জীবিতেশ্বর! হে (সৌন্দর্য্যে) কামদেব-সৌন্দর্য্যবিজয়কারিন্! হে কামিনীহৃদয়কন্দর্প! হা বান্ধবসমুদ্রশরচ্চন্দ্র! হা কামন্দকীনয়নানন্দ-ন মুখচন্দ্র! মাধব! (চিরস্মরণীয় বলিয়া) তোমার এজন্মে যাহার শেষ হইত না, তাদৃশ মকরন্দের (আমার) এই ভুজালিঙ্গন দৈব কর্ত্তৃক চরমতা প্রাপিত হইল। সে এই মকরন্দ মুহূর্ত্তকালও জীবিত থাকিবে, এরূপ মনে করিও না।

(৮২) হে পুণ্ডরীকমুখ! জন্মাবধি আমারই সহিত একত্রাবস্থান বশতঃ

[ सकरुणं विमुच्य परिक्रम्य च। ] इयमधस्तात् पाटलावती, भगवति आपगे ? (८३)

प्रियस्य सुहृदो यत्र मम तत्र न सम्भवः। भूयादमुत्र भूयोऽपि भूयासमनुसञ्चरः। (८४)

इति पतितुमिच्छति।

प्रविश्य सहसा सौदामिनी। [ वारयित्वा। ] वत्स! अलं साहसेन। (८५)

---

पास्यसि ( भविष्यत्सामीप्ये वर्त्तमाना ) इति एतत् अयुक्तं अनुचितम्। तत्पानस्यापि मया सहैव कर्त्तव्यत्वादिति भावः। तथाच मयापि येन केनापि प्रकारेण मरणमङ्गीकृत्य चिरात्तत्-सहचरेण भवितव्यमिति ध्वनिः। वसन्ततिलकावृत्तम्।

(८३) सकरुणमिति। विमुच्य आलिङ्गितं माधवदेहं त्यक्त्वा, परिक्रम्य मरणार्थीजनक-पर्व्वतारोहणाय पादविक्षेपं कृत्वा। प्रार्थनीयज्ञापनार्थं पाटलावतीं सम्बोधयति—भगवतीति। आपगा नदी, तीर्थत्वेनास्या ऐश्वर्य्यशालित्वं बोध्यम्।

(८४) प्रियस्येति। यत्र स्थाने प्रियस्य सुहृदः प्रियतमबन्धोर्माधवस्य सम्भवः जन्म भवेदिति शेषः, तत्रैव स्थाने ममापि सम्भवः जन्म भूयात्। यथा भूयोऽपि पुनरपि अमुत्र परजन्मनि अनुसञ्चरः अस्य माधवस्य अनुचरः भूयासम् ( प्रार्थनायामाशीर्लिङ् ) तथा चैतद्द्वयं तवानिके मम प्रार्थनीयमिति भावः।

अपूर्णाङ्गान्वितस्य "भूया" दित्येकस्यात्पदस्य परार्द्धे पाठादर्द्धान्तरैकपदत्वदोषः, एवं ममेत्यन्तरमवश्यं वक्तव्यस्यापि शब्दस्यानभिधानात्वाच्यानभिधानदोषश्च। पथ्यावक्त्रमात्रोऽलङ्कारः।

---

মাতৃস্তনদুগ্ধও একত্রে পান করিয়া তুমি একাকী বন্ধুসমূহপ্রদত্ত তর্পণজল পান করিবে ইহা অনুচিত।

(৮৩) (সশোকে মাধবের শরীর পরিত্যাগ করিয়া ও পর্ব্বতাগ্রে আরোহণার্থ পাদবিক্ষেপ করিয়া) এই অধোদেশে পাটলাবতী নদী। ভগবতি আপগে!

(৮৪) যে স্থানে প্রিয়সুহৃদ্ মাধবের জন্ম হইবে, আমারও যেন সেই স্থানেই জন্ম হয়। এবং পুনর্ব্বারও যেন পরলোকে ইহার অনুচর হইতে পারি। (এই কথা বলিয়া পতনে উদ্যুক্ত হইল)।

मक। [विलोक्य।] अम्ब! कासि? किमहं त्वया प्रतिषिद्धः? (८६)

सौदा। आयुष्मन्! किं त्वं मकरन्दः? (८७)

मक। मुञ्च, स एवास्मि मन्दभाग्यः। (८८)

सौदा। वत्स! योगिन्यस्मि, मालत्या अभिज्ञानञ्च धारयामीति। बकुलमालां दर्शयति। (८९)

मक। [सोच्छ्वासं सकरुणम्।] आर्य्ये! अपि जीवति मालती? (९०)

---

(८५) प्रविश्येति। सौदामिनी सहसा द्रुतं प्रविश्य मकरन्दान्तिके समुपस्थाय, वारयित्वा पतनादिरूपं साहसम्। साहसेन आत्महत्यात्मकेन मरणप्रयासादौनतत्सम्पादक-कर्त्तव्य, फलं व्यर्थं।

(८६) मकेति। किं किमर्थं? प्रतिषिद्धः मरणाध्यवसायान्निवारितः।

(८७) मालतीसकाशात् श्रुतं मकरन्दं सम्भाव्य पृच्छति—आयुष्मन्निति।

(८८) मन्दभाग्यः अभिलषितमरणप्रतिबन्धादिरूपा वदति—मुञ्चेति। स एव मकरन्द एव।

(८९) योगिनीति कापिदिन्यादि। अभिज्ञानं निदर्शनचिह्नम्।

(९०) सोच्छ्वासमिति, उच्छ्वासेन जीवनसुखेन सहितं यथा स्यात्तथेदमर्थः। अपि प्रश्ने।

---

(৮৫) সৌদামিনী (সহসা প্রবেশ করিয়া ও নিপতন হইতে মকরন্দকে নিবৃত্ত করিয়া) বৎস! এই মরণসাধক সাহসিক কার্য্যে কোনও ফল নাই।

(৮৬) মক। মাতঃ! তুমি কে? আমাকেই বা নিবারিত করিতেছ কেন?

(৮৭) সৌদা। আয়ুষ্মন্! তুমি কি মকরন্দ?

(৮৮) মক। পরিত্যাগ কর, আমি সেই মন্দভাগ্যই বটে।

(৮৯) সৌদা। বৎস! আমি যোগিনী, মালতীর চিহ্ন ধারণ করিতেছি। (বকুলমালা দেখাইল)

(৯০) মক (ঔৎসুক্য ও শোকের সহিত) আর্য্যে! মালতী কি জীবিত আছে।

सौदा। अथ किम्। वत्स! किमत्याहितं माधवस्य यदनिष्टे व्यवसितोऽसि इति आकम्पितास्मि। अथ माधवः क्व? (८१)

मक। आर्य्ये! तमहं प्रमुग्धमेव वैराग्यात् परित्यज्य आगतः, तदेहि, तूर्णं सम्भावयावः। [ त्वरितं परिक्रामतः। ] (८२)

माध। [ आश्वस्य। ] अये! प्रतिबोधितः एवास्मि केनापि नूनमस्य अभिनवजीमूतजलवाहिनः प्रभञ्जनस्य अनपेक्षितासदवस्थोऽयं व्यापारः। (८३)

---

(८१) अथ किमित्यभ्युपगमवादः मालतीजीवत्येवेत्यर्थः। अत्याहितं निरतिशयानिष्टं। कुत एवं पृच्छस्याकाङ्क्षायामाह—यदिति, यद्यस्मात् अनिष्टे पर्य्यन्तात् पतनरूपे आत्महत्या-साधककर्म्मणि, प्रवृत्तः उद्यतः।

(८२) मकेति। प्रमुग्धं अचेतनं। वैराग्यात् तज्जीवनप्रत्याशाविरहेण सञ्जीवनं मध्यपि वैरस्यात्। सम्भावयावः अनेन मारुतमिलनेन रक्षितुं यतिष्यावहे। त्वरितं सत्वरं यथा स्यात्तथा परिक्रामतः सौदामिनीमकरन्दौ माधवसमीपगमनाय पादविक्षेपं कुरुतः।

(८३) आश्वस्येति चैतन्यं लब्ध्वेत्यर्थः। केनापि अपरिज्ञातजनेन। विविच्याव-धारयति—नूनमित्यादिना। नूनं निश्चितं अभिनवजीमूतजलवाहिनः नूतनजलधरसलिल-कणाकर्षिणः प्रभञ्जनस्य पवनस्य। अनपेक्षिता अनभिमता असदवस्था मालतीविरहजनित-मदीयदुर्दशा यस्मिन् तादृशः अयं मत्प्रतिबोधनरूपः व्यापारः कार्य्यं। तथाचैवं मदीय-दुरवस्थाविगमे सति पवनो नैवाक्तिदुःसह-दुःखानुभवकरं मदीयमूर्च्छाभङ्गमकारोदिति भावः। एतेन मालतीविरहजनितदुःखानुभवादचैतन्यमेव वरमिति ध्वनिः।

---

(৮১) সৌদা। মালতী জীবিতা আছে। বৎস! মাধবের কি কোন অত্যাহিত হইয়াছে? যে হেতু তুমি অনিষ্ট কার্য্যে (মরণে) অধ্যবসায় করিতেছ। অতএব আমি অত্যন্ত কম্পিত হইতেছি। সম্প্রতি মাধব কোথায়?

(৮২) মক। আর্য্যে! বৈরাগ্যবশতঃ তাঁহাকে আমি অচৈতন্যাবস্থাতেই পরিত্যাগ করিয়া আসিয়াছি। অতএব এস, সত্বর যাইয়া তাঁহাকে রক্ষা করি। (উভয়ে সত্বর পরিক্রমণ করিতে লাগিল)

(৮৩) মাধ। অহো নিশ্চয় কাহারও দ্বারা আমি প্রতিবোধিত হইয়াছি।

मक। दिष्ट्या पुनः प्रत्यापन्नचेतनो वयस्यः। (९४)

सौदा। [विलोक्य।] संवदति उभयोर्मालतीनिवेदितः शरीराकारः। (९५)

माध। भगवन् पौरस्त्यपवन! (९६)

भ्रमय जलदानम्भोगर्भान् प्रमोदय चातकान्
कलय शिखिनः केकोत्कण्ठान् कठोरय केतकान्।
विरहिणि जने मूर्च्छां लब्ध्वा विनोदयति व्यथाम्
अकरुण! पुनः संज्ञाव्याधिं विधाय किमीहसे?॥ (९७)

---

(९४) दिष्ट्या भाग्येन, प्रत्यापन्ना लब्धा चेतना चैतन्यं येन तादृशः।

(९५) विलोक्येति माधवमकरन्दयोः शरीरं विशेषतो निरीक्ष्येत्यर्थः। उभयोः माधवमकरन्दयोः मालतीनिवेदितं परिज्ञानार्थं मालत्या कथितः शरीराकारः देहाकृतिः संवदति दृश्यमानतद्देहयोः संघटते। तथाचेमावेव माधवमकरन्दाविति नास्ति सन्देह इति भावः। स्वगतोक्तिरियं।

(९६) पौरस्त्यपवन। पूर्व्वदिग्भवप्रभञ्जन!

(९७) भ्रमयेति। अम्भोगर्भान् सलिलाभ्यन्तरान् जलदान् मेघान् भ्रमय जगतामुपकाराय वर्षणार्थं चतुर्दिक्षु परिचालय। चातकान् चातकाख्यपक्षिणः प्रमोदय सलिलप्रदानेन सन्तोषय। शिखिनः मयूरान् केकाया स्वकीयशब्दे उत्कण्ठा उत्सुकता येषां तथाभूतान् कलय गर्जनेन विधेहि। तथा केतकान् केतकीवृक्षान् कठोरय जलसेकेन प्रौढान् कुरु। एभिस्तव व्यापारैः कस्यापि क्षतिर्विरहादापत्तिर्नास्तीति भावः। पुनः किन्तु हे अकरुण! दयाविमुख!

---

আমার এই বিরহাবস্থার অবগতি না থাকায় নূতন মেঘের জলবহনকারী পবনেরই (আমার চৈতন্য সম্পাদনরূপ) এই কার্য্য।

(৯৪) মক। ভাগ্যবশতঃই বয়স্য পুনর্ব্বার চৈতন্যলাভ করিয়াছে।

(৯৫) সৌদা। (অবলোকন করিয়া) মাধব ও মকরন্দের শরীরাকৃতি মালতী যেরূপ বলিয়াছিল, সেরূপ অবিকলই দেখা যাইতেছে।

(৯৬) মাধ। ভগবন্ পূর্ব্বদিক্প্রভব বায়ো!

(৯৭) সলিলগর্ভ মেঘসমূহকে চতুর্দিকে পরিচালিত কর। চাতক পক্ষিদিগকে (জলদান করিয়া) সন্তুষ্ট কর। ময়ূরগণকে (গর্জ্জন দ্বারা)

— मक। सुविहितमनेनाखिलजन्तुजीवनेन मातरिश्वना । (९८)

मूर्च्छां चेतनाभावं लब्धा यथा विरहदुःखं विनोदयति निराकुर्व्वाणे विरहिणि जने (मादृशी) संज्ञायै तन्यमेव व्याधिः रोगः तं विधाय सम्पाद्य किं ईहसे प्राप्तुं चेष्टसे ? तथा चैतेन परदुःखदानमात्रस्यैव साधना दैवतवास्तीत्यनुचितमिति भावः ।

अत्र भगवन्निति सम्बोधनेन पवनस्य गौरवमुररीकृत्य शीघ्रमेव पुनरदयेति सम्बोधन-प्रभृतिभिस्तस्य व्यतिक्रमप्रदर्शनादस्यौ नाम विमर्शसन्धेरङ्गम् । यथोक्तं दर्पणे "द्रवो गुरुव्यति-क्रान्तिः शोकावेगादिसम्भवे"ति ।

एवमप्रस्तुतादिरहिजनप्राणाव्याहृतिमयस्य माधवस्य प्रतीतेरप्रस्तुतप्रशंसालङ्कारः, स च संज्ञा-व्याधिरिति वैलक्षनिरूपकवशेन सङ्कीर्य्यते । तथा "बर्हान् विहाय बहुगुणा विशेषोक्तिर्विशेषण"-मिति विशेषणं नाम नाट्यालङ्कारश्च । हरिणीवृत्तम् ।

(९८) मकेति । अखिलानां सर्व्वेषां जन्तूनां प्राणिनां जीवनेन प्राणभूतेन अनेन मातरिश्वना पवनेन सुविहितं माधवचैतन्यसम्पादनरूपं सुष्ठु कर्म्म कृतम् । अन्यथा मृगदम्भ-कारमयं स्यादिति भावः ।

कश्चित् पुस्तके मातरिश्वनेत्यनन्तरं
"अपिच—

पते केतकमूलसौरभयुवः पौढप्रगल्भाङ्गना
व्यालोलालकवल्लरीविलुठनव्याजोपभुक्ताननाः
किञ्चोन्मिद्रकदम्बकुड्मलपुटीघूर्णीलुठत्षट्पद-
व्यूहव्याहतिहारिणो विरहिणः कर्षन्ति वर्षानिलाः ॥

इत्यधिकपाठः दृश्यते । तदर्थश्च—केतकमूलसौरभयुवः केतककुसुमपरिमलसेविनः, तथा पौराः पुरवासिन्यः याः प्रगल्भाङ्गनाः प्रागल्भ्यशालिन्यो रमण्यः तासां या व्यालोला चञ्चलैः अलककुन्तलवल्लरीः तासां विलुठनव्याजेन परिचालनच्छलेन उपभुक्तानि उपभोगविषयीकृतानि आननानि प्रगल्भाङ्गनानां मुखानि यैस्तथाभूता, किञ्च उन्मिद्रकदम्बपुटीघूर्णीषु विकचनीप-कुसुमकोषरजःसु लुठतः अपरस्य षट्पदसमूहस्य भङ्गुणामर्थस्य व्याहतिं झङ्कारं हर्तुं शीलं येषां तथाभूताः वर्षानिलाः वर्षमारुताः विरहिणः विरहदुःखकातरान् जनान् कर्षन्ति ।

কেকাস্বনে বিবশে উৎকণ্ঠিত কর এবং কেতকীতরুদিগকে অণগের ধারা পোষ্ট কর। কিন্তু হে নির্দ্দয়! মূর্চ্ছাপগত কাবিয়া বিরহব্যথায় ব্যথিত মদন-কাতর বিরহিজনের চৈতন্যরূপ ব্যাধি বিধান করিয়া কি লাভ করিতে চেষ্টা করিতেছ ?

माध। देव वायो! तथापि भवन्तमिदं प्रार्थये। (९९)

विकसत्कदम्बनिकुरम्बपांशुना
सह जीवितं वह मम प्रिया यतः।
अथवा तदङ्गपरिवासशीतलं
मयि किञ्चिदर्पय भवान् हि मे गतिः॥ (१००)

कृताञ्जलि, प्रणमति। (१)

---

अत्र प्रथमार्द्धे सम्मुते वर्षानिले अप्रस्तुतकामुकव्यवहारसमारोपात् समासोक्तिरलङ्कारः। शार्दूलविक्रीडितं वृत्तम्।

(९९) माधेति। तथापि संज्ञाव्याधिविधायित्वेन ममानिष्टकारित्वेऽपि। एवं वक्ष्यमाणम्।

(१००) विकसदिति। प्रिया मालती यतः यस्मिन् प्रदेशे विद्यते तं देशमित्यर्थः, विकसतां प्रस्फुटतां कदम्बानां नीपकुसुमानां निकुरम्बस्य समूहस्य पांशुना परागेण सह मम जीवितं जीवनं सह प्रापय। तत्काले कदम्बकुसुमानामाधिक्येन विकाशात्तद्वहनस्य च वायोः सम्भवपरत्वादाराधकमतात्र्वनाय सहोक्तिरिति मन्तव्यम्। पक्षान्तरमाह—अथवेति। अथवा तदङ्गेषु तस्या मालत्या शरीरेषु परिवासेन समन्तादवस्थानेन शीतलं किञ्चित् यत् किमपि वस्तु मयि अर्पय। तेनापि मम कथञ्चित्प्राणसम्भवेन महानुपकारः साधितो भवेदिति भावः। अथ तदपि कथं करोमीत्यत आह—भवानित्यादि। हि यस्मात् भवान् मे मम गतिः सम्प्रति आश्रयः। तथाचाश्रितोपकारसाधनं महतस्तवावश्यमेव कर्त्तव्यमित्याशयः। मञ्जुभाषिणीवृत्तम्।

(१) प्रणमतीति वायुमित्यादि।

---

(৯৮) মক। নিখিল প্রাণীর প্রাণভূত এই বায়ু মাধবের চৈতন্য সম্পাদনরূপ উচিত কার্য্যই করিয়াছে।

(৯৯) মাধ। দেব পবন! তথাপি আপনাকে এই প্রার্থনা করিতেছি।

(১০০) যেই দেশে প্রিয়া মালতী অবস্থান করিতেছে, কদম্বকুসুমসমূহের পরাগ সহিত আমার জীবনকেও সেই দেশে পাওয়াও। অথবা সেই মালতীর শরীরাবস্থানে শীতল যে কোন বস্তু আমাকে অর্পণ কর। যে হেতু তুমিই সম্প্রতি আমার আশ্রয়।

(১) (কৃতাঞ্জলিপুটে বায়ুকে নমস্কার করিতে লাগিল)

दुर्न्यस्तपुष्परचितोऽपि लवङ्गिकाया-
स्तोमं ततान विसमग्रथितोऽपि भागः ॥ (४)

[ सहर्षोन्मादमुत्थाय । ] प्रिये मालति ! नन्वियं वीथ्यासे ।

[ सकोपमिव । ] अयि मदयस्थानभिज्ञे ! (५)

प्रयान्तीव प्राणाः सुतनु ! हृदयं ध्वंसत इव,
ज्वलन्तीवाङ्गानि प्रसरति समन्तादिव तमः ।

---

विकारविशेष — यदा विस्मयं प्रकटयति अनियतभावेनोद्भूतमिति यावत्, तत् कुतूहलं कौतुकं पुनः पुनः कटाक्षनिक्षेपाद्योद्भूतमिति यावत्, — तयोर्निगूहनाय गोपनाय "मालतीमुखमेवायं निषिद्धो माधवेति ज्ञापनार्थे" इत्यर्थः, दुर्न्यस्तैः माधवेनोत्सुकत्वेनाकुलत्वेन दुष्परिनिवेशितैः मनःसन्निवेशाभावाद्विपरीतक्रमेण स्थापितैः पुष्पैः रचितोऽपि सम्पादितोऽपि तथा विसमग्रथितोऽपि असमाने भुजाया हस्ताय पुष्पाणां सन्निवेशादसमभावेन गुम्फितोऽपि सन् स एवायं भागः अंशः लवङ्गिकायाः सद्यःसम्पादितौधजाः स्तोमं ततान मालतीदर्शनस्य दर्शनेनैव वैषम्येनैवं जातमिति बोधयन् सन्तुष्टिं विस्तारयामास । तथा च इदम् वकुलमालेष्वपि गाधिकमस्तीति भावः ।

अथ मदनमदाशायोर्भी कुतोरम्भाद्वेदनाप्रकाशात्मौ तदर्थः । वसन्ततिलका वृत्तम् ।

(५) सहर्षोन्मादमिति, हर्षेण वकुलमालाद्वारा माधुनिवसतसाद्विषप्रियानन्दनिदानन्देन, उन्मादेन दर्शनविभ्रमजनितमत्तया च सह यथा स्यात्तथेत्यर्थः । उत्थितेव माधवीयपरिहासार्थं क्वचित् प्रच्छन्ना मदयन्ती मालतीमिमां निश्चिन्वतीति मन्यमान आह — नन्वियं वीथ्यासे इति, निश्चितमधुनैवान्विष्य मया त्वमवलोकसे इत्यर्थः । सकोपमिव "त्वया परिहासावसरोऽपि न बुध्यते" इति कोपेन सहितमिव । परिहासावसराभावं दर्शयितुमेव सम्बोधयति — मदयस्थानभिज्ञे इति । मदयस्थापरिज्ञाने कथमपीयतावन् कालं परिहासेन प्रच्छन्ना स्थातुं नार्हसीति भावः ।

---

বশাবেশ-সমুদ্ভূত বিকারবিশেষের ও বিশৃঙ্খলরূপে সমুৎপন্ন মালতীদর্শন কৌতূহলের গোপনার্থ মালতীমুখাবলোকনাকৃষ্টচিত্ততাবশতঃ পুষ্পসন্নিবেশে মনঃসংযোগ না থাকায় বিপরীতভাবে বিন্যস্ত পুষ্প দ্বারা নির্মিত এবং অসমানভাবে গ্রথিত হইলেও ইহার সেই এই অংশ লবঙ্গিকার সন্তোষ বিস্তার করিয়াছিল।

(৫) (হর্ষ ও উন্মাদের সহিত উঠিয়া) প্রিয়ে ! মালতি ! এই তুমি নিশ্চয় অবলোকিত হইলে । (যেন কোপের সহিত) অয়ি মদবস্থানভিজ্ঞে !

त्वयाऽऽस्तावोऽयं न खलु परिहासस्य विषय
स्वदक्णोरानन्दं वितर मयि माभूरकरुणः॥ (६)

[ सर्वतो दृष्ट्वा सनिर्वेदम्। ] कुतोऽत्र मालती ? [ वकुलमालां दृष्ट्वा। ] अयि प्रियाप्रणयिनि वकुलमाले ! उपकारिण्यसि अतः स्वागतं भवत्याः। (७)

---

(६) अवस्थां वर्णयन्नाह—प्रयान्तीति। हे सुतनु ! श्रीमतमरीरे मालति ! मामकाः दीर्घासवः प्रयान्तीव त्वद्विरहदुःखेन देहान्निःसरन्तीव। हृदयं वक्षःस्थलं खण्डित इव स्फुटतीव। अङ्गानि हस्तपदाद्यवयवाः ज्वलन्तीव विरहाग्निना दग्धानि भवन्तीव। तथा तमः अन्धकारः समन्तात् चतुर्दिक्षु प्रसरतीव पुनः पुनर्मोहवशात्प्रतीतेन। अतएव अयं त्वरा प्रस्तावः अति शीघ्रं दर्शनदानेन मां रक्षस्वेत्यावेदनं न खलु नैव परिहासस्य विषयः, अधुनाऽऽत्मगोपनात्मकपरिहासोऽनौचित्यबोधः, तस्मात् अक्ष्णोः नेत्रयोः आनन्दं सुखं वितर दर्शनदानेनार्दय। अकरुणा आत्मशरीरप्रच्छादनेन दयाविरहिता मा भूः, न स्याः। तथात्वे मदीयप्राणवियोगस्य वध्याभावादिति भावः।

अत्र प्रथमार्द्धे चत्वारः क्रियोत्प्रेक्षालङ्काराः। एवं प्रथमार्द्धगतवाक्यार्थानां तृतीयपद-वाक्यार्थं प्रति हेतुत्वेन वाक्यार्थहेतुककाव्यलिङ्गालङ्कारश्चेति तेषामङ्गाङ्गिभावेन सङ्करः। शिखरिणीवृत्तम्।

(७) सनिर्वेदमिति मालत्याऽऽत्मानिबन्धनविषादेन दुःखितं यथा स्यात्तथेत्यर्थः। तस्माद-पदात् कुसुमार्ता वैकल्यमिव मध्यमालः सम्बोधयति—अयीति। उपकारिणी त्वमधुनापि मम कथञ्चिदाश्वासोत्पादनपल्लविनीमाविनी। अतः उपकारसाधनादेतोः भवत्याः स्वागतं सुखेना-गमनं पृच्छामीति शेषः। उपकारकजनानां स्वागतप्रश्नस्यावश्यकर्त्तव्यत्वादिति भावः।

---

(৬) হে সুতনু ! আমার প্রাণ যেন দেহ হইতে নিঃসৃত হইতেছে। আমার বক্ষঃস্থল যেন বিদীর্ণ হইতেছে। আমার অঙ্গ যেন বিরহানলে দগ্ধ হইতেছে। অন্ধকার যেন চতুর্দ্দিকে ব্যাপ্ত হইতেছে। অতএব এই ত্বরাপ্রস্তাব (অর্থাৎ শীঘ্র আসিয়া দর্শনদানে আমাকে রক্ষা কর এই প্রস্তাব) কখন তোমার পরিহাসের যোগ্য নহে। সুতরাং দর্শনদানে চক্ষুর আনন্দ বিতর কর, আমার প্রতি নির্দ্দয় হইও না।

(৭) (সকল দিকে নিরীক্ষণ করিয়া বিষাদের সহিত) মালতী এখা…
…দেখিয়া) অয়ি প্রিয়াপ্রণয়িনি ! বকুলমালে

निष्प्रत्यूहाः प्रियसखि ! यदा दुःसहाः सम्बभूवु-
र्देहोद्दाहव्यसनगुरवो मन्मथोन्माथवेगाः ।
तस्मिन् काले कुवलयदृशस्त्वत्समाश्लेष एव
प्राणत्राणं मगुणनसम्भून्मत्परिष्वङ्गकल्पः ॥ (८)

सकरुणं निर्वर्ण्य । (९)

आनन्दमिश्रमदनज्वरदीपनानि
गाढ़ानुरागरसवन्ति तदा तदा च ।

---

(८) हृतज्ञतया पूर्वकृतमुपकारमाह—निष्प्रत्यूहा इति । हे प्रियसखि ! बकुल-मालि ! (सखीवदुपकारसाधनात् सखीत्वेन बकुलमालायाः सम्बोधनमिति मन्तव्यम्) यदा यस्मिन् काले कुवलयदृशः नीलोत्पलनेत्रायाः मालत्याः निष्प्रत्यूहाः निरन्तरायाः अप्रतिहता इति यावत्, देहोद्दाहव्यसनेन शरीरदाहनरूपविपत्त्या गुरवः महत्तमाः अत एव दुःसहाः सहना-योग्याः मन्मथोन्माथवेगाः कामव्यथावेगाः सम्बभूवुः तदवलोकनेन समुत्पन्नाः, तस्मिन् काले मत्परिष्वङ्गकल्पः मदालिङ्गनादीषन्न्यून. त्वत्समाश्लेष एव त्वदालिङ्गनमेव प्राणानां परिरक्षणं यथात्रयाभूत प्रगुणम् मालत्या अनुकूलं अभूत् । सम्प्रति कामव्यथाभिभूता मालती यदि तदानीं मदालिङ्गनसमतुल्यं त्वदालिङ्गनं नाप्राप्स्यत्तदा कथमपि प्राणान् धारयितुं नाशक्ष्यदिति त्वदुपकारत्रयं नैव शोधयितुमर्हामीति भावः ।

अत्रार्थी—"मत्परिष्वङ्गकल्प" इत्युपमालङ्कारः, द्वितीयपादस्थितेन च्छेकानुप्रासेन संसृज्यते । मन्दाक्रान्ता वृत्तम् ।

(९) निर्वर्ण्य निध्याय ।

(१०) आनन्देति । हे बकुलमालि ! आनन्देन "सापि मय्यनुरक्ते"ति चिन्तया जनितेन

---

তুমি আমার পরম উপকারিণী, অতএব জিজ্ঞাসা করি, তোমার আগমন সুখে হইয়াছে ত ?

(৮) হে প্রিয়সখি ! বকুলমালে ! যে কালে নীলোৎপলনেত্রা মালতীর অপ্রতিহত শরীরদাহনরূপ বিপত্তি দ্বারা গুরুতর ও অতি দুঃসহ কামব্যথাবেগ সমুৎপন্ন হইয়াছিল, সেই কালে আমার আলিঙ্গনকল্প তোমার আলিঙ্গনই প্রাণ-ত্রাণকারী অনুকূল হইয়াছিল।

(৯) (করুণার সহিত চিন্তা করিয়া)

खेदाकराणि मम मुग्धदृशश्च कण्ठे,
कष्टं स्मरामि तव तानि गतागतानि ॥ (१०)
( हृदये निधाय मूर्च्छति ) (११)

मक । [ उपसृत्य वीजयन् । ] समाश्वसिहि सखे ! समाश्वसिहि । (१२)

माध । [ आश्वस्य । ] मकरन्द ! किं न पश्यसि कुतोऽपि

---

इति च निरस्य मिश्रितस्य मदनज्वरस्य कामजसन्तापस्य दीपनानि उद्दीपकानि, गाढानुरागो दृढतरासक्तिरेव रसस्तदस्ति अनङ्कतया तद्विशिष्टानि, तथा खेदाकराणि परस्परप्रणयजनकानि तानि निष्पन्नानि तदा तदा तस्मिन् तस्मिन् काले मम मुग्धदृशः मनोहरनेत्रायाः मालत्याश्च कण्ठे गलदेशे तव गतागतानि यातायातानि कष्टं यथा स्यात्तथा स्मरामि ॥

इयञ्च माला प्रथमं माधवकण्ठाल्लवङ्गिकाहस्तेन मालतीकण्ठे गतेत्येकं गतम्, ततो दैवैरायतने मालत्या लवङ्गिकाद्वारा माधवकण्ठे स्थापितेत्येकमागतम्, ततश्च प्रथमपक्षान्मालतीकण्ठे माधवेन विन्यस्तेति द्वितीयं गतं ( षष्ठाङ्के अनुसन्धेयम् ) पुनश्च सौदामिनीसम्प्रत्यागतेति द्वितीयमागतम् । एवञ्च द्वयोर्गतयोश्च बहुत्वमपेक्ष्य गतागतानीति बहुवचनमुपात्तमिति विभावनीयम् ।

अत्र च स्मृतेः सादृश्यानुभवं विनोत्थापितत्वान्न दर्पणकारमते स्मरणालङ्कारः । राघवानन्दमहापात्रास्तु वैसादृश्यात्—स्मृतिमपि स्मरणालङ्कारमिच्छन्तीति तन्मते स्मरणालङ्कारः । वसन्ततिलकावृत्तम् ।

(११) ( हृदये निधायेति बकुलमालामित्यादि. ) ।

(१२) वीजयन्निति, मूर्च्छाभङ्गाय पत्रादिना माधवमस्तके वायुं प्रवाहयन्नित्यर्थः ।

(१३) माधेति । कुतोऽपि अपरिज्ञातस्थानात् । नु भोः तत्स्थात् कथं केन प्रकारेण

---

( ১০ ) হে বকুলমালে ! আনন্দবিমিশ্রিত কামজ্বরের উদ্দীপক গাঢ় অনুরাগরূপরস বিশিষ্ট ও পরস্পরের প্রণয়জনক সেই সেই কালে আমারও মনোহরনেত্রা মালতীর গলদেশে তোমার সেই যাতায়াতসকল অতিকষ্টেই আমি স্মরণ করিতেছি।

( ১১ ) ( বকুমালা হৃদয়ে নিহিত করিয়া মূর্চ্ছিত হইল )।

( ১২ ) মক। ( সমীপে আসিয়া বাতাস দিতে দিতে ) সখে! তুমি আশ্বস্ত হও, আশ্বস্ত হও।

सहसैव मालतीस्नेहं वहतो वकुलदाम्नो लाभः। तत्कथं न मन्यसे किमेतदिति। (१३)

मक। वयस्य! इयमार्य्या योगेश्वरी अत्र मालत्यभिज्ञानस्य नेत्री। (१४)

माध। [विलोक्य सकरुणं कृताञ्जलिः।] आर्य्ये! प्रसीद, कथय, जीवति मे प्रिया? (१५)

सौदा। वत्स! समाश्वसिहि, समाश्वसिहि! जीवति सा कल्याणी। (१६)

माधवमकरन्दौ। [उच्छ्वस्य।] आर्य्ये! यद्येवं तत् कथय कथमेष वृत्तान्त इति। (१७)

---

एतत् वकुलमालाया आगमनं इति इत्यत्र किं मन्यसे त्वं किमवधारयसि? जीवन्त्या तस्या कथमपि तत्कण्ठादविश्लेषो न सम्भवतीति कुतो मे समाश्वास इति भावः।

(१४) मकेति। मालत्यभिज्ञानस्य वकुलदामरूपमालतीचिह्नस्य, उपनेत्री उपस्थानकर्त्री।

(१५) जीवतीति जीवति किमित्यर्थः।

(१६) सौदेति। सा तव प्रिया मालती कल्याणी कुशलवती सती जीवति प्राणान् धारयति।

(१७) यद्येवं सा कल्याणी जीवति चेत्, तस्या एष वृत्तान्तः मालत्या निरुद्देशजीवन-

---

(১৩) মাধ। (আশ্বস্ত হইয়া) মকরন্দ! দেখিতেছ নাকি সহসা কোথা হইতে মালতীস্নেহবাহি বকুলমালার লাভ হইল। অতএব এই বকুলমালার আগমন বিষয়ে তুমি কি মনে করিতেছ?

(১৪) মক। বয়স্য! এই মাননীয়া যোগেশ্বরী এই বকুলমালারূপ মালতীচিহ্নের উপস্থাপয়িত্রী।

(১৫) মাধ। (অবলোকন করিয়া সকরুণে কৃতাঞ্জলি হইয়া) আর্য্যে! প্রসন্না হও, বল আমার প্রিয়া মালতী কি জীবিতা আছে?

(১৬) সৌদা। আশ্বস্ত হও, আশ্বস্ত হও, সে কুশলশালিনী হইয়াই জীবিতা আছে

कथमिव तदाभवस्त्वं कमलमुखि! कपालकुण्डलाग्रस्ता?।
उत्पातधूमलेखाक्रान्तेव कला शशधरस्य॥ (२६)

भगवति कपालकुण्डले!

निर्माणमेव हि तदादरलालनीयं,
सा पूतनात्वमुपगाः शिवतातिरेधि।

---

मालत्याः अवस्थां भावयन्नाह—हा प्रिये इत्यादि। कष्टं अस्माकमयमतीव क्लेशः, यत्त्वं अति-दौर्लभ्यं अमतीव गर्हितं यथा आपदा आपन्नासि आपन्नाप्तासि। (आपन्न आपत्प्राप्तः स्यादित्यमरः) कपालकुण्डलया समस्तिदुर्द्धर्षापरवर्त्तीव सम्भवादिति भावः।

(२६) कथमिति। हे कमलमुखि! पुण्डरीकवदने! मालति! तदा तस्मिन् काले कपालकुण्डलादत्ता विनाशार्थं कपालकुण्डलया गृहीता त्वं अनुतापधूमलेखया उत्पातदर्शि-धूमकेतुरेखया आक्रान्ता परिव्याप्ता शशधरस्य सुधांशोः कला इव कथमिव कीदृशी अभवः आसीः? त्वदीयां तादृशीमवस्थां कल्पयितुमपि कम्पते मम हृदयमिति भावः।

अत्रोपमालङ्कारः। किन्तु शशधरकलादाहाङ्गभावस्य वर्त्तमानभविष्यत्कालयोरपि सत्त्वेन कालभेदात् तथा त्वं अभवः शशधरकला आभवदिति पुरुषभेदाच्च "काष्ठमिवा तयोरासीत्तयोः धवलयोः। हिमनिर्मुक्तयोर्योगे सूर्याचन्द्रमसाविव" इत्यादिवत् "त्वमेव राजसे तन्वि!" इत्यादिवच्च भग्नप्रक्रमतादोषः। आर्य्या जातिः।

(२७) अत्र दुश्चरिताया अपि कपालकुण्डलायाः "भगवती"ति सम्बोधनं प्रार्थनाभि-प्रायेणेति मन्तव्यम्।

(२८) निर्माणमिति। तत् निर्माणमेव सा मालतीशरीररचनैव आदरेण यत्नातिशयेन लालनीयं सर्वैरेव परिरक्षणीयम्। अतिमात्रसुन्दरत्वादस्याः अव्याहतशरीरत्वमिति भावः। पूतना त्वं प्राणापहरणेन राक्षसी त्वं (पूतना राक्षसीभेदे हरीतक्याञ्च पूतना इति विश्वः) मा उपगाः नैव सम्भव, किन्तु शिवतातिः मङ्गलप्रापयित्री एधि भव। तथाहि—सुरभिः सद्गन्ध-

---

(२५) माधव। हा प्रিয়ে! মালতি! ইহাই আমাদের কষ্ট যে, অতি গর্হিতরূপ আপৎপ্রাপ্তা হইলে।

(২৬) হে পদ্মমুখি! মালতি! উৎপাতধূমকেতুরেখাক্রান্ত চন্দ্রকলার ন্যায় বিনাশার্থ কপালকুণ্ডলাপরিগৃহীতা হইয়া সেই কালে তুমি কিরূপ হইয়াছিলে?

(২৭.২৮) ভগবতি কপালকুণ্ডলে! সেই মালতীশরীরনির্মাণই সকলের

नैसर्गिकी सुरभिणः कुसुमस्य सिद्धा
मूर्ध्नि स्थितिर्न चरणैरवताडनानि ॥ (२८)

सीता। वत्स! अलमावेगेन।

अकरिष्यदसौ पापमतिनिष्करुणैव सा।
नाभविष्यमहं तत्र यदि तत्परिपन्थिनी ॥ (२९)

उभौ [ प्रणम्य। ] अतिप्रसन्नमार्य्यापादैः तत्कथय. का पुन
स्त्वमस्माकमेवं विधो बन्धुः। (३०)

---

शालिनः कुसुमस्य पुष्पस्य नैसर्गिकी स्वाभाविकी स्थितिः अवस्थानं मूर्ध्नि मस्तक एव सिद्धा प्रसिद्धा। किन्तु चरणैः पादैः अवताडनानि अवपीडनानि न सिद्धानीत्यर्थः। अस्य श्लोकस्य द्वितीयार्द्धमविकलमुत्तररामचरितप्रथमाङ्केऽपि वर्त्तत इत्यनुसन्धेयम्।

अत्र प्रथमचरणे छन्दसः पादपूरणमात्रजनकत्वान्निरर्थकत्वदोषः। दृष्टान्तोऽलङ्कारः वसन्ततिलकावृत्तम्।

(२९) अकरिष्यदिति। असौ कपालकुण्डला पापं मालतीहत्यारूपं पातकं कर्म अकरिष्यत्, यतः सा कपालकुण्डला अतिनिष्करुणैव अतिनिर्द्दयैव। तत्र हत्याविषये यदि अहं तत्परिपन्थिनी तस्याः कपालकुण्डलायाः विरोधिनी न अभविष्यम्। तदीय मत्परिपन्थित्वादेव कपालकुण्डला स्वामिच्छित मालतीवधं सम्पादयितुं नाशकदिति त्वया मालत्यर्थं भावना न कर्त्तव्येति भावः।

अत्र द्वितीयार्द्धवाक्यार्थस्य प्रथमार्द्धवाक्यार्थहेतुत्वात् वाक्यार्थहेतुककाव्यलिङ्गालङ्कारः एवं "पुरा किल करालायतन" इत्यादितदन्तसन्दर्भे तिरनिश्चयमालतीविषयीनुकीर्त्तने "प्रसङ्गो गुरुकीर्त्तन"मिति लक्षणात् प्रसङ्गो नाम विमर्षसन्धेरङ्गम्।

(३०) उभाविति माधवमकरन्दावित्यर्थः। आर्य्यापादैः आर्य्यायाः तव चरणैः ( गौरवा

---

অতি যত্নে রক্ষণীয়। উহাদিগকে পদাঘাতে নাশ করিও না। পরন্তু তাহার মঙ্গলকারিণী হও। দেখ, সদ্‌গন্ধশালী পুষ্পের স্বাভাবিক অবস্থান মস্তকেই প্রসিদ্ধ, চরণাবপীড়ন প্রসিদ্ধ নহে।

(২৯) সীতা। বৎস! শোকাবেগ নিষ্প্রয়োজন। আমি যদি বিরোধিনী না হইতাম, তবে এই কপালকুণ্ডলা মালতীবধরূপ পাপকর্ম্ম নিশ্চয়ই করিত যে হেতু সে অত্যন্ত নির্দ্দয়া।

सौदा । आख्यथ: खलु एतत् । [ उत्थाय । ] इयमिदानी-
महम्—(३१)

गुरुचर्यातपस्तन्त्रमन्त्रयोगाभियोगजाम् ।
इमामाकर्षिणीं सिद्धिमातनोमि शिवाय वः ॥ (३२)

इति समाधवा निष्क्रान्ता । (३३)

---

ङ्गुवचनम् ) अतिप्रसन्नं निरतिशयप्रसादयुक्तं भवतम् (भावे क्तप्रत्ययः) तस्मात् कथय एवम्विधः
अयाचितगुरूपकारकारकः अस्माकं बन्धुः परमित्रं त्वं का ? तव परिचयं श्रोतुं परमोत्-
कण्ठावयोर्वर्त्तत इति भावः ।

(३१) सौदेति । एतत् काहमित्यादिकं खलु निश्चितं आख्यथ: पुनर्दर्शनकाले युवाभ्य-
मतिज्ञथः । अधुना मम तत्कथनावसरो नास्तीति भाव. । इयमिदानीमहमिति श्लोकस्थेनातनो-
मीत्यनेनान्वेति ।

. (३२) गुर्व्विति । गुरुचर्या गुरुशुश्रूषणं गुरुजनानुष्ठानविशेषो वा तपश्चान्द्रायणादि-
वैधक्लेशः, तन्त्रं पवनसाधनं पूरकादिलक्षणः प्राणायाम इति यावत् ( तन्त्रं पवनसाधन-
मित्यनेकार्थध्वनिमञ्जरी ) मन्त्रः कालीतारादिबीजमन्त्रः, अथवा तन्त्रमन्त्रः, तन्त्रशास्त्रोक्तः नाना-
विधः दैवतामन्त्रः, योगः चित्तवृत्तिनिरोधरूपश्च:, समाधिः तेषां अभियोगात् अभ्यासाज्जायत इति
तथोक्तां इमां आकर्षिणीं तदभिधानां सिद्धिं वो युष्माकं शिवाय मङ्गलाय इयमहमिदानीं
आतनोमि विस्तारयामि ।

-(३३) समाधवा माधवेन सह वर्तमाना उपोल्लितमाधवेति यावत्, सौदामिनीति-शेष: ।
माधवेन सह सौदामिन्या इदं निष्क्रमणन्तु तत्रेत्याभिभूतमदयन्तिकांधवी न दृष्टं,कथयो तत्-
श्लोकविरोधादिति कल्प्यम् ।

---

(३० ) माधव ও মকরন্দ । ( প্রণাম করিয়া ) আপনার চরণযুগল অত্যন্ত
প্রসন্ন, অত এব বলুন আমাদের এবংবিধ বন্ধু আপনি কে ?

(৩১) সৌদা । আমি তোমাদের কে ? ইহা পরে জানিতে পারিবে
( উঠিয়া ) এই এখন আমি—

(৩২) গুরুশুশ্রূষা চান্দ্রায়ণব্রতাদিরূপ বৈধ ক্লেশ প্রাণায়াম কালীতারাদি
বীজমন্ত্র ও সমাধি হইতে সমুৎপন্ন এই আকর্ষিণী সিদ্ধিকে তোমাদের মঙ্গল
জন্য বিস্তার করিতেছি ।

(৩৩) মাধবের সহিত সৌদামিনীর অন্তর্ধান )

मक। आश्चर्यमाश्चर्यम्!

व्यतिकर इव भीमस्तामसो वैद्युतश्च

क्षणमुपहतचक्षुर्वृत्तिरुद्भूय शान्तः।

विलोक्य सभयम्।

कथमिह न वधस्यस्तत्किमेतत्, [विचिन्त्य] किमन्यत्।

प्रभवति हि महिम्ना स्वेन योगीश्वरीयम्॥ (३४)

[सवितर्कम्।] किमयमनर्थ इति सम्प्रति मूढोऽस्मि। (३५)

(३४) व्यतिकर इति। भीमो भयङ्करः तथा उपहता निरुद्धा चक्षुर्वृत्तिर्दर्शनशक्तिर्येन तादृशः कश्चित्तेजःसमूह इति शेषः, तामसः तमःसम्बन्धी वैद्युतः विद्युत्सम्बन्धी च व्यतिकरः सम्पर्क इव तन्मिश्रीभाव इवेति यावत्, क्षणं क्षणकालमात्रं उद्भूय उत्पद्य शान्तः प्रशमितः विरत इति यावत्। (विलोक्य सभ्रं समन्तात् दृष्ट्वा समीपे माधवो नास्तीति समीक्ष्य, सभयं भयेन सह यथा स्यात्तथा "कथमिह" त्याद्याहेत्यर्थः। माधवानिष्टशङ्कयात्र भयहेतुः।) इह अस्मिन् स्थाने वधस्यः माधवः कथं न दृश्यत इति शेषः। तत्तस्मात् एतद्दर्शनं किं? किन्निमित्तकं? (विचिन्त्य विभाव्य) अन्यत् किं निमित्तं भवेदिति शेषः। हि यतो हि इयं पूर्वविलोकिता योगीश्वरी श्रेष्ठा योगिनी स्वेन महिम्ना स्वकीययोगमाहात्म्येन प्रभवति सर्व्वोत्कर्षेण वर्त्तते। तथाच सा योगिन्येव योगप्रभावान्माधवमपहृत्यान्तर्हितेति भावः। अस्य च श्लोकस्य प्रथमचरणमविकलमुत्तररामचरितपञ्चमाङ्के वर्त्तत इत्यनुसन्धेयम्।

अत्र प्रथमार्द्धे उपमालङ्कारः। विशिष्टीभूततेजःसमूहरूपोपमेयवाचकपदानुपन्यासात् न्यूनपदतादोषः। मालिनीवृत्तम्।

(३५) सवितर्कमिति। इयं दृष्टपूर्व्वा योगिनी सत्यमेव मालतीपरित्राणेनास्मदुपकारिणी गुरुवधप्रतिशोधार्थं माधवापहरणाय कपालकुण्डलयानुप्रेषिताऽस्मदपकारिणी वेति वितर्केण सह यथा स्यात्तथेत्यर्थः। अयं माधवापहरणरूपव्यापारः अनर्थः माधववधसाधनरूपानिष्टकरः

(৩৪) মক। কি আশ্চর্য্য! কি আশ্চর্য্য!! দর্শনশক্তির নিরোধকারী ভয়ঙ্কর তেজঃসমূহ অন্ধকার ও বিদ্যুৎসম্পর্কের ন্যায় ক্ষণমাত্র উৎপন্ন হইয়াই প্রশমিত হইল। (অবলোকন করিয়া সভয়ে) বয়স্য মাধবকে এস্থানে দেখিতেছি না কেন? এই অদর্শনের কারণ কি? (চিন্তা করিয়া) আর কি কারণ হইবে? দৃষ্টপূর্ব্বা সেই যোগীশ্বরীই স্বীয় মহিমাবলে উৎকর্ষশালিনী হইয়াছে। (অর্থাৎ সেই যোগিনীই যোগবলপ্রভাবে মাধবকে লইয়া অন্তর্হিতা হইয়াছে।

तदवै व कान्तारगहने सह मकरन्देन प्रविष्टां भगवतीमन्विष्य तस्या वृत्तान्तमेनं कथयिष्यामि । [ इति निष्क्रान्तः । ] (३७)

इति मालतीमाधवे सौदामिनीदर्शनो नाम नवमोऽङ्कः । (३८)

---

(३७) तदिति । तस्मात्, कान्तारगहने दुर्गमकानने मकरन्देन सुबुद्धिकादिना सह प्रविष्टां मालत्यनुसन्धानार्थमेवेतस्ततो भ्रमन्तीं भगवतीं कामन्दकीं अन्विष्य अनुसन्धाय तस्याः भगवत्याः समीपे इदमेवं एवं माधवावस्थारूपं वृत्तान्तं कथयिष्यामि निवेदयिष्यामि । सा खलु सम्यक्शोभना यदि मे संशयं निराकर्तुं समर्थेति तदाश्रयस्य वह्नेरेवेदानीं मया कर्त्तव्य- मिति भावः । अत एव "अहमपि गुणवत्कार्यहेतोरास्य उच्यत" इति वचनादेव कार्यो नाम नाट्यालङ्कारः ।

(३८) इतीति । सौदामिन्याः तदभिधानाया योगिन्याः दर्शनं यत्र तथाभूतः । सौदामिनी- दर्शनसंवादाङ्के अस्मिन्नेव चमत्कारकारित्वात्तन्नामाग्रहो निर्दिष्टः, क्वचित् पुस्तके पुनरयमंश एव नास्तीत्यनुसन्धेयम् ।

इति काव्यतर्कतीर्थोपनामक-श्रीकृष्णविहारिविद्यासिद्धान्तमहाभागैः कृतायां तत्त्वबोधिनी- समाख्यायां मालतीमाधवव्याख्यायां नवमाङ्कविवृतिः समाप्ता ॥

---

(৩৭) অতএব মকরন্দাদির সহিত এই নিবিড় অরণ্যে ( মালতীর অনুসন্ধানার্থ ) প্রবিষ্ট ভগবতী কামন্দকীকে অন্বেষণ করিয়া তাহার নিকট এই বৃত্তান্ত নিবেদন করি । ( মকরন্দ নিষ্ক্রান্ত হইল )

(৩৮) মালতীমাধবের "সৌদামিনীদর্শন নামক" নবম অঙ্ক সমাপ্ত ।

[ आकाशे । ] अयि च पुत्रि !

अनियतरुदितस्मितं विराजत्-
कतिपयकोमलदन्तकुड्मलाग्रम् ।
वदनकमलकं शिशोः स्मरामि
स्खलदसमञ्जसमुग्धजल्पितं ते ॥ (४)

---

(४) अनियतेति । अनियते कारणानिर्धारिते रुदितस्मिते रोदनहसिते यत्र तथाभूतं । विराजन्ति—दीप्यमानानि कतिपयाः सर्व्वासामनुत्पादादल्पसंख्यकाः कोमलाः मृदुलाः दन्ताः दशना: कुड्मलाग्राणि मुकुलाग्रदेशा इव यस्मिन् तथाभूतं । तथा स्खलन्ति सम्यगुच्चारण-शक्तेरभावादस्फुटानि असमञ्जसानि विवेकशक्तेरभावात् पूर्व्वापरसामञ्जस्यरहितानि तथापि मुग्धानि शिशुभाषितत्वेन मनोहराणि जल्पितानि भाषितानि यस्मिन् तथाभूतं, शिशोर्बालि-कावस्थे तव वदनकमलकं कमलकं पद्ममिव वदनं ( कमलशब्दादल्पार्थे कप्रत्ययः ) स्मरामि सर्व्वदा चिन्तयामि समतिप्रियत्वेन सर्व्वदैव तदुद्दीपकत्वभावादिति भावः ।

अत्र जल्पितस्य मुग्ध एव सम्भवात् रूपकत्वेन द्वितीयतृतीयचरणयोर्लुप्तोपमालङ्कारद्वयम्, यथावद्वस्तुवर्णनेन स्वभावोक्तिरलङ्कार इति तेषामङ्गाङ्गिभावेन सङ्करः । एवं ललितपदार्थेन-पदानामपि सौकुमार्य्यातिशयेन "सद्वोऽर्थतुल्यो यः पदानां स परीवर्त्त" इति-लक्षणात् परीवर्त्तो नाम नाट्यालङ्कारः । पुष्पिताग्रावृत्तम् ।

अयमपि श्लोकः उत्तररामचरितचतुर्थाङ्कादिविकृतो वर्त्तते । अस्यानुरूपः श्लोकस्तु कुन्दमालायां—

"आलक्ष्यदन्तमुकुलाननिमित्तहासैरव्यक्तवर्णरमणीयवचःप्रवृत्तीन् ।
अङ्काश्रयप्रणयिनस्तनयान् वहन्तो धन्यास्तदङ्गरजसा मलिनीभवन्ति ॥" इति

---

মনোহর তোমার সেই সেই নানাবিধ অঙ্গভঙ্গী প্রদর্শনাদি আচরণ ও মনোজ্ঞ মধুর চাটুবাক্যসকল সংস্মৃত হইয়া আমার দেহকে দগ্ধ ও বক্ষঃস্থল বিদারিত করিতেছে।

(৪) (আকাশে) অয়ি পুত্রি! যাহাতে রোদন ও হাস্যের কোন নিয়ম ছিল না, এবং মুকুলাগ্রের ন্যায় কতিপয় কোমল দন্ত বিরাজিত ছিল, পরন্তু যাহাতে বাক্যসকল, স্খলিত, অসমঞ্জস এবং মনোহর ছিল, তোমার শিশুকালের তাদৃশ মুখপদ্ম স্মরণ করিতেছি।

मदयन्तिकालवङ्गिके। [साश्रमाकाशे] हा पियसहि! सुप्पसण्णमुहचन्दसुन्दरि! कहिं गदासि, को वा सिरीसकुसुमसुउमारस्स दे सरीरस्सावं देव्वदुव्विलसअपरिणामो एक्किआए उवगदो। महाभाअ माहव! उपत्थिदय्यमिदमहूसवो दे जीअलोओ संवुत्तो। (क)

काम। [सविशेषखेदम्।] हा वत्सौ! (५)

अभिनवरागरसोऽयं भवतोः कृतकौतुकः परिष्वङ्गः।
लवलीलवङ्गयोरिव नियतिसहावान्यया निहतः॥ (६)

---

(क) हा प्रियसखि! सुप्रसन्नमुखचन्द्रसुन्दरि! क्व गतासि, को वा शिरीषकुसुमसुकुमारस्य ते शरीरस्य अयं दैवदुर्विलसपरिणाम एकाकिन्या उपगतः महाभागमाधव! उपस्थिताप्तमिलनमहोत्सवस्ते जीवलोकः संवृत्तः।

---

(क) सुप्रसन्नेन समतीव प्रसन्नतायुक्तेन मुखचन्द्रेण चन्द्रसदृशेन सुन्दरि सौन्दर्यशालिनि! को वा अपरिज्ञातः, शिरीषकुसुमवत् तन्नामकपुष्पवत् सुकुमारस्य कोमलस्य (शिरीषपदस्य कोमलत्वातिशयद्योतनार्थं) दैवस्य विधेः दुर्विलसेन अन्यतमव्यवहारेण, परिणतिः, एकाकिन्याः न तु भावाभ्यां सहितायाः इत्यर्थः। उपस्थितः कालकौलालादुल्सव एव अत्यमित-मालतीवियोगेन तिरोहितः उत्सवः आनन्दः यत्र तथाभूतः, जीवलोकः संसारः।

(५) सविशेषखेदमिति, विशेषखेदेन सह यथा स्यात्तथेत्यर्थः। वत्सौ! मालती माधवौ!।

(६) अभिनवेति। लवलीलवङ्गयोरिव लवलीसमाख्यलताविशेषलवङ्गलतयोरिव भवतोः युवयोः अभिनवो नवीनः रागः अनुराग एव रसः यत्र तथाभूतः, अथवा अभिनवो रागवती लौहित्याद्रै यत्र तथाभूतः, (रागोऽनुरागे लौहित्ये इति विश्वः) (शृङ्गारोऽपि द्रवे चामोक्षाया-

---

(ক) মদয়ন্তিকা ও লবঙ্গিকা। (অশ্রু বিসর্জ্জন করিতে করিতে আকাশের দিকে চাহিয়া) হা প্রিয়সখি! সুপ্রসন্নমুখচন্দ্র সুন্দরি! তুমি কোথায় গেলে? জানি না দৈবের অসদ্ব্যবহারে একাকিনী তোমার শিরীষকুসুমবৎ সুকোমল শরীরের কিরূপ পরিণাম উপনত হইল? মহাভাগ মাধব। তোমার সংসারের আনন্দ উপস্থিত হইয়াই অন্তমিত হইল।

(৫) কম। (বিষাদ ও খেদের সহিত) হা বৎসে মালতী মাধব।

लव। [ सोद्वेगम्। ] हदास! वज्जमअ हिअअ! सव्वधा णिसंसोसि। [ इति हृदयमाहत्य पतति। ] (ख)

मद। सहि लवङ्गिके! णं भणामि खणमेत्तअम्पि दाव समस्सस। (ग)

---

(ख) हा हताश! वज्रमय! हृदय सर्वथा नृशंसमसि।

(ग) सखि लवङ्गिके! ननु भणामि क्षणमात्रमपि तावत् समाश्वसिहि।

---

यामध्य' रस इति ध्वनिः) तथाकृत' सम्पादित' कौतुक' हर्षः नर्म्मोत्सवो वा यत्र तथाभूतः, अन्यत्र कृत' कौतुक' दृष्ट्वा कौतूहल' येन तथाभूत'। ( कौतुकञ्चाभिलाषः स्यादुत्सवे नर्म्महर्षयोः। कुतूहलेऽपि तत्प्रोक्तमिति मेदिनीकारः ) परिष्वङ्गः सम्मेलन' नियतिरेव' महावात्या प्रचण्डपवन इव तया निहत' विनाशितः।

अत्र लवलीलवङ्गयोरिव भवतोरित्युपमालङ्कारः। एव' तदनुसारात् नियतिमहावात्येवासावपि लुप्तोपमालङ्कार एव, न तु रूपकमित्यनयोरङ्गाङ्गिभावेन सङ्करः। आर्य्याजातिः।

एव' पूर्व्वोपदर्शितानुरागरूपबीजोपस्थितेः "बीजोपगमन' सन्धि"रिति लक्षणादस्य सन्धिर्नाम निर्व्वहणसन्ध्यङ्गमित्यवधेयम्।

(ख) हतेति। हता विनष्टा आशा मालतीलाभप्रत्याशा यस्य तथाभूत! वज्रमय! वज्रनिर्म्मित!' अत्यर्थहृक्काठिन्यशालित्वादिति भावः। नृशंस' सर्वतोव क्रूरस्वभाव' असि भवसि!' कथमन्यथेदृशदु'सहदशायामपि न द्विधा भवसीति भावः।

(ग) ननेति। नन्वित्यनुनयद्योतकमव्ययम्। क्षणमात्रमपीत्यनेन विशामविलापमूर्च्छादिकं प्रतीयते। यथाच "अर्थापत्तिर्यदन्योऽर्थोऽर्थान्तरोक्तेः प्रतीयते" इति लक्षणादर्थापत्तिर्नाम नाट्यलक्षणम्।

---

(ङ) নবলীলতা ও লবঙ্গতরুর ন্যায় তোমাদের নবীনানুরাগরূপ রসযুক্ত ও সম্পাদিত নর্ম্মোৎসবসম্মেলন নিয়তিরূপ মহাবায়ু কর্ত্তৃক নিহত হইল।

(খ) লব। ( উদ্বেগের সহিত ) হা হতাশ! বজ্রময়হৃদয়! তুমি সর্ব্বপ্রকারেই নৃশংস হইয়াছ। ( হৃদয়ে আঘাত করিয়া নিপতিত হইল )

(গ) মদ। সখি লবঙ্গিকে! আমি বলিতেছি যে ক্ষণমাত্রও আশ্বস্তা হও।

लव। सहि! किं करेमि, दिढवज्जलेवपडिबद्धणिच्चलं मम जीविदं ण मं परिच्चअदि। (६)

काम। वत्से मालति! जन्मनः प्रभृति वत्सला ते लवङ्गिका, तत्किमेनामुज्झितजीवितां वराकीं न अनुकम्पसे। इयं हि—(७)

उज्ज्वलालोकया स्निग्धा त्वया त्यक्ता न राजते।
मलीमसमुखी वर्त्तिः प्रदीपशिखया यथा ॥ (८)

---

(६) सखि! किं करोमि, दृढवज्रलेपप्रतिबद्धनिश्चलं मम जीवितं न मां परित्यजति।

---

(६) सखीति। दृढेन घनतरेण वाज्रिकसम्पादकेन वज्रलेपेन संश्लेषकद्रव्यविशेषेण प्रतिबद्धं सम्बद्धं अत एव निश्चलं चलितुमशक्तम्। अत्यधिकदृढतया मम प्राणा मां न परित्यजन्ति, सर्वथैवा-ध्यवसायादिति भावः।

(७) वत्सेति। उज्झितानं (मूर्च्छावस्थाप्राप्तत्वेनैव निर्दिश्यमानत्वेऽपि यथार्थम्) त्वद्विरहशोकात् उज्झितं जीवितं जीवनं यया तादृशीम्। वराकीं दीनतराम्। नानुकम्पसे न दयसे। कथमस्या जीवनत्यागकालेऽपि नानुकम्पसे इति भावः। इयं इति लवङ्गिकेति।

(८) उज्ज्वलेति। उज्ज्वलः अतिप्रकाशः आलोकः द्युतिर्यस्यास्तादृश्या प्रदीपशिखया त्यक्ता अतएव दग्धीभूतत्वात् मलीमसमुखी मलिनाग्रभागा स्निग्धा तैलार्द्रा वर्त्तिः दशा यथा न राजते तथा उज्ज्वलालोकया प्रदीप्तकान्त्या त्वया त्यक्ता अतएव शोकाभिभावात् मलीमसमुखी मलिनास्या स्निग्धा त्वयि स्नेहवती इयं लवङ्गिका नहि राजते नहि दीप्यते।

अत्र श्लोकः पूर्णोपमालङ्कारः स्फुट एव।

---

(৬) লব। সখি! কি করিব? দৃঢ় বজ্রলেপ সংযোজিত বলিয়া চলিতে অসমর্থ আমার জীবন আমাকে পরিত্যাগ করিতেছে না।

(৭) কাম। বৎসে মালতি। জন্মাবধিই লবঙ্গিকা তোমার প্রিয়তমা, তবে জীবন পরিত্যাগে উদ্যতা এই দীনার প্রতি অনুকম্পা করিতেছ না কেন?

(৮) যেরূপ উজ্জ্বলালোকপ্রদীপশিখা পরিত্যক্ত মলিনমুখী বর্ত্তি শোভা পায়না, সেইরূপ এই লবঙ্গিকাও উজ্জ্বলকান্তিযুক্ত তোমা কর্তৃক পরিত্যক্তা হইয়া শোভা পায় না।

कथं कल्याणि! कामन्दकीं जहासि, ननु अकरुणे! मदीय-चीवरोष्मणैव ते प्रगुणीकृतानि अङ्गानि। (९)

स्तन्यत्यागात् प्रभृति सुमुखी दन्तपाञ्चालिकेव,
क्रीडायोगं तदनु विनयं प्रापिता वर्द्धिता च।
लोकश्रेष्ठे गुणवति वरे स्थापिता त्वं मयैव,
स्नेहो मातुर्मयि समधिकस्तेन युक्तस्तवापि (१०)

---

(९) कथमिति। जहासि परित्यजसि। मदीयचीवरोष्मणैव मामककौपीनवसनोष्मणैव ते तव अङ्गानि प्रगुणीकृतानि, सततं मदुत्सङ्गलग्नतया लालितानि।

"दूषणोद्घोषणायान्तु भर्त्सनं गर्हणन्तु त"दिति लक्षणात् गर्हणं नाम नाट्यलक्षणम्।

(१०) स्तन्येति। हे मालति। मयैव न तु तव जनन्यादिनेत्यर्थः, स्तन्यत्यागात् प्रभृति जननीस्तनदुग्धपानपरित्यागादारभ्य सुमुखी सुन्दरवदना त्वं दन्तपाञ्चालिकेव गजदन्तविनिर्मित-शालभञ्जिकेव तथाभूतक्रीडापुत्तलिकेवेति यावत्, (पाञ्चालीशालभञ्जिकेति हेमः) क्रीडायोगं बाल्यकालोपयोगिखेलासम्पर्कं प्रापिता आसादिता, तदनु तत्पश्चात् वयसां किञ्चिदाधिक्ये सतीति, विनयं तत्कालोचितं नम्रतादिगुणं शिल्पकलादिशिक्षणञ्च प्रापिता वर्द्धिता यथोचित-पालनादिना वृद्धिं गमिता च। (ततश्च यौवने प्राप्ते) लोकश्रेष्ठे कौलिन्यादिना सर्व्वजनप्रशस्ते गुणवति विद्याविनयादिसद्गुणसम्पन्ने वरे जामातरि स्थापिता प्रतिपादिता। तेन हेतुना तवापि मातुः स्वकीयजनन्याः सकाशात् मयि समधिकः अत्यन्तातिरिक्तः स्नेहः अनुरागः युक्तः समुचितः। तथाचाधुनापि निःस्नेहयेव दर्शनप्रदानं न कर्त्तव्यं त्वयेति भावः।

"अवाचिरदर्शनप्रदानरूपार्थसिद्ध्यर्थं तद्धेतुभूतसमधिकस्नेहौचित्योपन्यासेन "उपपत्तिर्मता-हेतोरुपन्यासोऽर्थसिद्धये" इति लक्षणादुपपत्तिर्नाम नाट्यालङ्कारः। तथा दन्तपाञ्चालिकेवेति श्रौत उपमालङ्कारः। मन्दाक्रान्ता वृत्तम्।

---

(৯) অয়ি কল্যাণি! কামন্দকীকেই (আমাকেই) বা তুমি পরিত্যাগ কর কেন? অয়ি অকরুণে! আমার কৌপীনবসনের উষ্ণতা দ্বারাই তোমার অঙ্গসকল লালিত হইয়াছে।

(১০) অয়ি মালতি! জননীর স্তনদুগ্ধ পরিত্যাগ হইতে আরম্ভ করিয়া

[ सवैक्लव्यम् । ] चन्द्रमुखि ! सम्प्रति निराशास्मि । (११)

अकारणस्मेरमनोहराननः, शिखाललाटार्पितगौरसर्षपः ।
तवाङ्कशायी परिवृत्तभाग्यया, मया न दृष्टस्तनयः स्तनन्धयः ॥(१२)

---

(११) सवैक्लव्यमिति वैक्लव्येन स्नेहजन्यखेदविक्लवतया सह यथा स्यात्तथेत्यर्थः। निराशा विगतमनोवासना।

(१२) का मनोवासना विगतेत्याकाङ्क्षायामाह—अकारणेति। परिवृत्तभाग्यया विपरीतादृष्टया मया अकारणं निर्निमित्तं स्मेरं किञ्चिद्धास्ययुक्तम् अत एव मनोहरं चित्ताह्लादकम् आननं वदनं यस्य तथाभूतः, शिखाललाटयोः अर्पितः भूतादिभयनिवारणाय दत्तः गौरसर्षपः श्वेतसर्षपः यस्य तथाभूतः। (सर्षपस्तन्तुभो गौरः सिद्धार्थो भूतनाशन इति राजनिर्घण्टुः) अङ्कशायी क्रोडे शयनकारी स्तनं धयति पिबतीति स्तनन्धयः स्तन्यपानकारी तव तनयः पुत्रः न दृष्टः न विलोकितः। बहुकालत एव मे त्वदीयतादृशतनयदर्शनप्रत्याशा मनसि परिपोषितासीत् सा सम्प्रति त्वद्दर्शनप्रत्याशाविरहेण निरस्तेति भावः।

अत्र परिवृत्तभाग्ययेति पदार्थस्य तादृशतनयादर्शनं प्रति हेतुत्वेनोपन्यासात् पदार्थहेतुककाव्यलिङ्गं, तथा हेतुं विनापि स्मेरत्वाख्यकार्योदयाद्विभावना चालङ्कारः इत्यनयोरङ्गाङ्गिभावेन सङ्करः। वंशस्थविलं वृत्तम्।

---

গজদন্তাদিবিনির্মিত ক্রীড়াপুত্তলিকার ন্যায় সুমুখী তোমাকে আমিই তৎকালোচিত খেলাশিক্ষা ও তৎপরে শিল্পকলাদি শিক্ষা পাওয়াইয়াছি এবং যথোচিত পালনাদি দ্বারা বৰ্দ্ধিত করিয়াছি। পরন্তু কৌলীন্যাদি দ্বারা সর্বশ্রেষ্ঠ ও বিদ্যাবিনয়াদি সদ্গুণসম্পন্ন বরেও আমিই সমর্পিত করিয়াছি। অতএব তোমারও আমাকেই মা হইতে সমধিক স্নেহ করা উচিত।

(১১) (সকরুণ স্নেহজনিত বিক্লবতার সহিত) সম্প্রতি (একেবারে) নিরাশ হইয়াছি।

(১২) যাহার বদন অকারণে ঈষৎ হাস্যযুক্ত সুতরাং মনোহর, এবং (ভূতাদিভয়নিবারণের জন্য) যাহার শিখায় ও ললাটে শ্বেতসর্ষপ সমর্পিত, ক্রোড়শায়ী ও স্তন্যপায়ী তোমার তাদৃশ পুত্র ভাগ্যবিপর্যয়বশতঃ আমি দেখিলাম না।

लव। भअवदि ! पसीद, णीसहह्मि सम्पदं जीवणुव्वहणे, ता इमादो गिरिसिहरादो अत्ताणअं अवधुणिअ णिव्वुदा भविस्सं, तथा मे भअवदी आसिप्पसादं करेदु, जेण जम्मन्तरेवि पिअसही पेक्खिस्सम् ! (ङ)

काम। नतु लवङ्गिके ! कामन्दक्यापि नातः परं वत्सा-वियोगेन जीवितव्यं, समस्तायमुत्कण्ठावेग आवयोः। किञ्च—(१३)

सङ्गमः कर्मणां भेदाद्यदि न स्यात्र नाम सः।
प्राणानान्तु परित्यागे, सन्तापोपरमः फलम् ॥ (१४)

---

(ङ) भगवति ! प्रसीद, निःसहास्मि साम्प्रतं जीवनोद्वहने, तदस्माद्‌गिरिशिखरादात्मानं पातयित्वा निर्वृता भवेयं, तथा मे भगवती आशीःप्रसादं करोतु, येन जन्मान्तरेऽपि प्रियसखीं में द्रक्ष्ये।

---

(ङ) लवेति। प्रसीद मत्प्रार्थनीयमरणाशीर्व्वादयोः अनुमोदनप्रदानाभ्यां प्रसन्ना भव। निःसहा असमर्था। आत्मानं स्वकीयशरीरं। निर्वृता मरणे सति सखीवियोगदुःखानुभवात् मुक्ता।

(१३) कामेति। आवयोः तव मम च अयं उत्कण्ठावेगः जन्मान्तरे मालतीदर्शनोत्सुकावेगः समः तुल्यः। यथा च परलोके मालतीदर्शनार्थं तवैव ममापि मरणं सर्व्वथा समुचितमिति भावः। मरणौचित्ये युक्त्यन्तरमभिधातुमाह—किञ्चेति।

(१४) सङ्गम इति। यदि कर्म्मणां पूर्व्वानुष्ठितक्रियाणां भेदात् सुकृतदुष्कृतरूप-वैषम्यात् परलोके मालतीसम्मेलनादृकूलसमाहादाभावादिति यावत्, सङ्गमः, परलोके अस्माकं मध्ये कस्याश्चित् सर्व्वासां वाऽस्माकं मालत्या सह सम्मेलनं न स्यात् न भवेत्, तदा स सङ्गमः न

---

(ঙ) লব। ভগবতি ! তুমি প্রসন্না হও। সম্প্রতি আমি জীবনধারণে অসমর্থা হইয়াছি, অতএব এই পর্ব্বতশিখর হইতে শরীর বিনিপাতিত করিয়া আমি সুস্থা হইব, এবং ভগবতী আমাকে সেইরূপ আশীঃপ্রসাদ করুন যেন জন্মান্তরে ও আমি প্রিয়সখীকে দেখিতে পাই।

(১৩) কাম। অয়ি লবঙ্গিকে ! কামন্দকীরও অতঃপর মালতীর বিয়োগে জীবিত থাকা উচিত নহে। কারণ মালতীদর্শনোৎকণ্ঠার আবেগ তোমার ও আমার উভয়েরই তুল্য। আরও দেখ—

লব। জহা তুম্হে আণবেধ (ঙ)। [উত্তিষ্ঠতি।]

কাম। [সদয়ং বীক্ষ্য।] বৎসে মদয়ন্তিকে! (১৫)

মদ। কিং আণবেধ অগ্গেসরীহোদুত্তি, তা জাব অব-হিদহ্মি। (চ)

---

(ঙ) যথা যূয়মাজ্ঞাপয়থ।

(চ) কিমাজ্ঞাপয়থ অগ্রেসরীভবেতি তদ্যাবদবহিতাস্মি।

---

নাম অস্তীতি শেষঃ। অথাপি মালত্যাবনিবিরিতি ভাবঃ। এবঞ্চেৎ কথং মর্তুমিচ্ছতীত্যত আহ— প্রাণানামিতি। তু কিন্তু প্রাণানাং পরিত্যাগে বিসর্জনে সতি সন্তাপস্য মালতীশোকানলজনিত-দাহস্য উপরমঃ উপশমঃ বিরাম ইতি যাবৎ, অতো মরণমস্মাকং স্যাদিতি শেষঃ। তথাপি অদ্যাপি মরণং যুক্তমস্মাকম্।

কামন্দক্যাঃ সমক্ষমেব বিষাদনমপেক্ষ্যাভ্যাং মতৌ পরলোকে হত্যাদীনামনবগমকত্বান্, পদানামনুপন্যাসেঽপি ন ন্যূনপদত্বদোষ ইতি মন্তব্যম্।

(ঙ) উত্তিষ্ঠতীতি আত্মানং পাতয়িতুং গিরিতটারোহণায়েতি শেষঃ।

(১৫) যোগবলেন সর্বমবগন্তুমপারয়ন্তীব লৌকিকব্যবহারমনুসরন্তী কামন্দকী অনুরাগপরাকাষ্ঠাপ্রদর্শনায় মরণার্থমুদ্গচ্ছতোরপি লবঙ্গিকামালিকার্থে ঘৃতাম্বরপ্রবোধ-ধারণমপি মকরন্দস্য মরণাধ্যবসায়ানুমোদিনীং নিবারয়িতুমিব সম্বোধয়তি—বৎসে মদয়ন্তিকে ইতি। “মর্তুং মরীষ্যে পুনর্বিধাস্যে” ইতি বাক্যশেষঃ।

(চ) ভগবতী মাং কিমর্থং সম্বোধয়তীত্যাশয়াৎ মালতীলবঙ্গিকাবিরহক্লেশাসহনাত্ মরণাধ্যবসায়িনী কামন্দকীবাক্যাভিপ্রায়মনবগচ্ছন্ত্যাহ—কিমিতি। অগ্রেসরী মরণায়-গামিনী। অবহিতা মরণাধ্যবসায়ে সাবধানা।

---

(১৪) পূর্বাশ্রিত কর্মের শুভাশুভফলরূপ বৈষম্য বশতঃ যদি আমাদের পরলোকে ও মালতীর সহিত সম্মেলন না হয়, তবে তাহা না হউক, কিন্তু প্রাণের পরিত্যাগে মালতী শোকানল সন্তাপের উপশমরূপ ফল হইবেই।

(ঙ) লব। আপনি যেরূপ আজ্ঞা করিলেন, তাহাই হউক। (উঠিল)

(১৫) কাম। (দয়ার সহিত দেখিয়া) বৎসে মদয়ন্তিকে!

(চ) মদ। মরণ বিষয়ে তুমিই অগ্রগামিনী হও এই আজ্ঞা করিতেছেন কি? তবে আমি সে বিষয়ে সাবধানা হইয়াছি।

लव। भअवदि! अअं ज्जेव मधुमदीसोत्तसन्दाणिदपविच्त-मेहलो महीहरविड्ङ्को। (ट)

काम। कृतमिदानीं प्रस्तुतान्तरायेण। (१७) [पर्वतात् पतितुमिच्छति।]

[नेपथ्ये] आश्चर्यमाश्चर्यम्!!

व्यतिकर इव भीमस्तामसो वैद्युतश्च,
क्षणमुपहतचक्षुर्वृत्तिरुद्भूय शान्तः। (१८)

काम। [विलोक्य। साद्भुतहर्षम्।]

कथमिह मम वत्सस्तत्किमेतत्—

---

(ट) भगवति! अयमेव मधुमतीस्रोतःसन्दानितपवित्रमेखलो महीधरविटङ्कः।

---

(ट) लवेति। मधुमती तदभिधाना काचिन्नदी, तस्याः स्रोतसा सन्दानिता सम्बद्धा मेखला नितम्बप्रदेशः यः तथाभूतः, महीधरस्य पर्वतस्य विटङ्कः कपोतपालिका (कपोतपालिकायां विटङ्कं पुंनपुंसकमित्यमरः) तदुच्चप्रदेश इत्यर्थः। तथा चास्मादेवास्मान् पातयित्वा वयं म्रियामहे इति भावः।

(१७) कामेति। प्रस्तुतस्य प्रस्तावितमरणस्य अन्तरायेण कालातिपातरूपविघ्नेन इत्यर्थः। इदानीमेवास्मात् पतित्वा वयं मरणं सम्पादयाम इति भावः। "विमर्शो व्यसनारम्भ-कर्मादिरूपवृत्तद"मिति लक्षणादत्र विमर्शो नाम नाट्यालङ्कारः।

(१८) नेपथ्ये इति। आनन्दकौमशिखाप्रयोगम् मकरन्द एव पूर्व्ववदस्मादुपस्थितं तेजःपुञ्जं तद्गगनस्थावलोकनाय व्याप्रियमाणः पूर्व्वपठितमेव श्लोकार्द्धं पुनः पठति व्यतिकर—इति। अस्य व्याख्या पूर्व्वमेव कृता।

---

(ট) লব। ভগবতি! যাহার নিতম্বদেশ মধুমতী নদীর স্রোতঃসম্বদ্ধ এই সেই পর্ব্বতের কপোতপালিকা। (কপোতপালিকার ন্যায় উচ্চ প্রদেশ)

(১৭) কাম। তবে এখন প্রস্তাবিত মরণের কালবিলম্বরূপ বিঘ্নে প্রয়োজন নাই। (সকলে পতিত হইবার ইচ্ছা করিল)

(১৮) (নেপথ্যে) আশ্চর্য্য আশ্চর্য্য!! ক্ষণকাল দর্শনশক্তির নিরোধ-কারী ভয়ঙ্কর কোনও তেজঃপুঞ্জ অন্ধকার ও বিদ্যুৎসম্পর্কের ন্যায় উৎপন্ন হইয়াই শান্ত হইল।

[ प्रविश्य मकरन्दः । ]—किमन्यत्,
प्रभवति हि महिम्ना स्वेन योगीश्वरीयम् (१८)
[ नेपथ्ये । ] कथमतिदारुणो जनसंमर्द्दो वर्त्तते ? (२०)
मालत्यपायमधिगम्य विरक्तचेताः,
सांसारिकेषु विषयेषु च जीवितेषु ।

---

(१८) विलोक्येति, द्रुतमायान्तं मकरन्दं सहसोपस्थितान्तर्हितं तेजोजातञ्च निरीक्ष्येत्यर्थः। साद्भुतहर्षं आश्चर्य्यानन्दाभ्यां सह यथा स्यात्तथा आहेति शेषः।

कथमिति। इह अस्मिन् स्थाने मम वत्सः मकरन्दः कथं केन प्रयोजनेन सहसा उपस्थित इति शेषः। तस्य माधवसहचारित्वस्यैव स्वाभाविकत्वादिति भावः। तदेतत् परिलोकितं तेजोजातं किं ? किन्निमित्तकम् ?

मकरन्दः सहसा प्रविश्य परिश्रुतस्याश्चेव "तत् किमेत"दिति कामन्दकीप्रश्नस्योत्तरं ददाति—किमन्यदिति। अन्यत् किं न किमपि, इयं हि मदवलोकिता काचित् योगेश्वरी प्रकृष्टयोगसम्पत्शालिनी योगिनी स्वेन महिम्ना स्वकीययोगमाहात्म्येन प्रभवति। तथाच तस्या एवेदं तेजोजातं पूर्व्वमप्येतादृशा तदीयतेजसा मया परिलक्षितत्वादिति भावः। अतएव "निर्णयः पुनः अनुभूतार्थकथन"मिति लक्षणादत्र निर्णयो नाम निर्व्वहणसन्धेरङ्गम्।

सहसा तादृशालौकिकतेजःपुञ्जदर्शनेन चकिता एव प्रथमं पतनात् किञ्चिदपेक्षा मकरन्दसन्दर्शनेन च सञ्जातवृत्तान्तावगतिवासनातः सौदामिनीवृत्तान्तमवगत्य सद्य एव च मालतीमाधवावागच्छन्तौ निरीक्ष्य सर्व्वाः पतनाद्विरता इति विभावनीयम्।

(२०) नेपथ्य इति। अज्ञातवृत्तान्तः कश्चिदागन्तुकः जनबाहुल्यमालोक्य पृच्छति—कथमिति। अति दारुणः अति महान् जनसम्मर्द्दः लोकसङ्घर्षः।

(२१) विदितवृत्तान्तः कश्चिद्दुःखाभिभूतवनेचरः पूर्व्वोक्तप्रश्नस्योत्तरमाह—मालत्येति। "कथयवनेचरवचनादन्तरिता"मिति वक्ष्यमाणमाधवोक्तिरेवास्य वनेचरोक्तत्वं समर्थयतीति

---

(১৯) কাম। ( অবলোকন করিয়া আশ্চর্য্য ও হর্ষের সহিত ) আমার বৎস মকরন্দ এস্থানে হঠাৎ আসিল কি প্রয়োজনে ? এই তেজঃপুঞ্জেরই বা হেতু কি ? ( মকরন্দ প্রবেশ করিয়া ) অন্য আর কি হেতু হইবে ? এই যোগীশ্বরীই স্বীয় যোগপ্রভাবে এই তেজঃপুঞ্জ বিস্তার করিয়াছেন।

(২০) ( নেপথ্যে ) অতি দারুণ জনসম্মর্দ বর্ত্তমান কেন ?

(২১) অমাত্য ভূরিবসু মালতীর বিনাশ অবগত হওয়ার পরে সাংসারিক-

निधिग्य वह्निपतनाय सुवर्णविन्दु-
मभ्येति भूरिवसुरित्यधुना हताः स्मः ॥ (२१)

मदयन्तिका । लवङ्गिके ! झत्ति मालदीमाहवाणं संदंसणमहूसवो
झत्ति अच्चाहिदं अ (ठ)।

कामन्दकीमकरन्दौ । [ सहर्षम् । ] हा धिक् कष्टम् । आश्चर्य-
माश्चर्यम् ! ! (२२)

(ञ) झटिति मालतीमाधवयोः सन्दर्शनमहोत्सवो झटिति अत्याहितञ्च ।

विभावनीयम् ।  भूरिवसुः अमात्यो मालतीपिता मालत्या अपायं पूर्व्वदयहरणानुमितविनाशं अधिगम्य लोकपरम्परया परिज्ञाय सांसारिकेषु विषये धनसम्पदादिषु जीवितेषु प्राणधारणेषु च ( धारणक्रियाया बहुत्वाद्बहुवचनम् ) विरक्तचेताः उपरतमानसः सन् वह्निपतनाय मरणार्थं कानलप्रवेशाय निधिग्य स्थिरीकृत्य सुवर्णविन्दुं तन्नामकशिवं अभि लक्षीकृत्य एति आगच्छति । पुष्पभूमिलाभादिमय एकान्तिनिवेश कर्त्तुं स्थिरीकृत्यागच्छतीत्यर्थः । इति हेतोः अधुना वयं हताः स्मः मृतकल्पाः भवामः । परमकारुणिकस्यामात्यस्य अभावे नानाविधापायादि-सम्भवादिति भावः । तथाच तद्दर्शनार्थमागतानामेव लोकानामस्य समर्हं दर्शयताम् । वसन्ततिलकावृत्तम् ।

(ठ) दूरादागच्छन्तौ मालतीमाधवौ समीक्ष्य "मालत्यपाय"मित्यादि श्लोकञ्च निशम्य युगपदानन्दविषादमयं मदयन्तिकालवङ्गिके आहतुर्झटितीति । झटिति अकस्मात्, अत्याहितं महद्भीतिः ।

(२२) सहर्षमिति । मालतीमाधवसन्दर्शनेनैवात्र हर्षहेतुः । भूरिवसुवह्निप्रवेशोद्योगश्रवणादाह—धिक् कष्टमिति । द्वयोरचिन्तनीयहर्षविषादनिमित्तयोर्युगपदुपस्थितिदर्शनादाह—आश्चर्यमाश्चर्यमिति ।

বিষয়ে ও জীবনধারণে বিরক্ত চিত্ত হইয়া অনলপ্রবেশ নিশ্চয় করিয়া সুবর্ণবিন্দু-নামক মহাদেব্ লক্ষ্য করিয়া আসিতেছেন। অতএব সম্প্রতি আমরাও হত হইলাম।

(ঠ) মদয়ন্তিকা ও লবঙ্গিকা। অকস্মাৎ মালতী ও মাধবের দর্শন-মহোৎসব ও অকস্মাৎ মহাভীতি উপস্থিত হইল।

(২২) কামন্দকী ও মকরন্দ (হর্ষের সহিত) কষ্টে ধিক্। কি আশ্চর্য্য!!

[ नेपथ्ये। ] हा ताद! विरम, दंसणूसुअह्मि दे वअणकमलस्स, पसीद, सम्भावेहि मं। कहं मम कारणादो समत्थलोआलोआन्तरालविक्खादणिम्मलकुलेक्कमङ्गलपदीवभूदं अत्ताणअं परिच्चअसि, अह पुण अणज्जाए णिरणुक्कोसा तुह्मे त्ति सम्भाविदं आसि (ड)।

काम। हा वत्से!

---

(ड) हा तात! विरम, दर्शनोत्सुकास्मि ते वदनकमलस्य प्रसीद सम्भावय माम्। कथं मम कारणात् समस्तलोकालोकान्तरालविख्यातनिर्मलकुलैकमङ्गलप्रदीपभूतमात्मानं परित्यजसि, अथ पुनः अनार्यया निरनुक्रोशा यूयमिति सम्भावितमासीत्।

---

"अभिप्रायस्तु सादृश्यादभूतार्थस्य कल्पने"ति लक्षणादत्र अभिप्रायो नाम नाट्यलक्षणम्। एवंविधादिशब्दाभावात् वस्तुतस्य विषयस्य सादृश्यानुकरणाकरणाच्च प्रतीयमानोत्प्रेक्षेयं वा सङ्गच्छते। अर्थापत्तिः।

(ड) माधवेन सह समागमोत्सुकी मालत्येव "मातःपितः"इत्यादि श्लोकपर्यवसानवर्त्तीति प्रतीति— हा तातेति। विरम अग्निप्रवेशोद्यमात् विरतो भव। प्रसीद जीवनदानेन प्रसन्नो भव। सम्भावय दर्शनदानेनोज्जीवय। सकलं समस्तं यत् लोकालोकस्य पृथिवीवेष्टनीभूतस्य लोकालोकाचलस्य अन्तरालं मध्यवर्त्तिप्रदेशः तत्र विख्यातस्य प्रसिद्धस्य अतएव निर्मलस्य निर्दोषस्य एकं अद्वितीयं निर्दोषतया कीर्त्तिमतः कुलस्य वंशस्य मङ्गलप्रदीपभूतं मङ्गलप्रकाशकं तात्पर्यं शोभाप्रकाशकमित्यर्थः। आत्मानं स्वकीयकलेवरम्। अनार्यया निकृष्टया यूयं (गौरवाद्बहुवचनम्) निरनुक्रोशाः निर्दया इति सम्भावितं तर्कागोचरीकृतानिति यूयमिति आसीत्। तदाच मदीयमोक्षेण जीवनपरित्यागेन प्रकृतिः भयं तातानुमानं मालत्या निकृष्टतया प्रतिपादितमिति भावः। अत एव "प्रतिपालकस्य वाक्यं यदपि परिभाषण"मिति लक्षणादत्र परिभाषणं नाम निर्व्वहणसन्ध्यङ्गम्।

---

(ড) (নেপথ্যে) হা পিতঃ! তুমি বহ্নিপ্রবেশোদ্যম হইতে বিরত হও। আমি তোমার মুখপদ্ম সন্দর্শনে উৎসুকা হইয়াছি। (জীবনরক্ষণে) প্রসন্ন হও। দর্শনপ্রদানে আমাকে উজ্জীবিত কর। কেন তুমি আমার জন্য সমস্ত লোকালোক নামক পর্ব্বতের অভ্যন্তর প্রদেশে (সমস্ত পৃথিবীমণ্ডলে) প্রসিদ্ধ ও নির্দ্দোষ বংশের অদ্বিতীয় মঙ্গলপ্রদীপস্বরূপ স্বকীয় শরীর পরিত্যাগ করিতেছ? অতি নিকৃষ্ট আমি আবার তোমাকেই নির্দ্দয় বলিয়া অনুমান করিয়াছিলাম।

जन्मान्तरादिव पुन: कथमपि लब्धासि यावदयमपर: ।
उपराग इव शशिकलां कवलयितुमुपस्थितोऽनर्थ: ॥ (२५)

लव । हा प्रियसखि ! (ट)

ततः प्रविशति प्रमुग्धां मालतीं धारयन् माधव: । (२६)

माध । कष्टं भो: कष्टम् !
एषा प्रवासं कथमप्यतीत्य, याता पुन: संशयमन्यथैव ।
को नाम पाकाभिमुखस्य जन्तुर्द्वाराणि दैवस्य पिधातुमीष्टे ॥ (२७)

---

(ट) हा प्रियसखि !

---

(२५) जन्मेति । हा वत्से ! मालति ! त्वं जन्मान्तरादिव पुनर्लाभसम्भावनाविगमात् परलोकादिव कथमपि अतिकृच्छ्रेण यावत् पुनर्लब्धासि प्राप्तासि तावदेव अयमपर: त्वत्पितुरनलप्रवेशोद्यमरूप: अनर्थ: विपत्ति: उपरागो राहुग्रह: ( उपरागो राहुग्रस्तार्कचन्द्रयो: । विरागे दुर्नये राहाविति हेम: ) शशिकला चन्द्रकलामिव त्वां कवलयितुं ग्रसितुं उपस्थित: उपगत: ; तथाचास्माकं भाग्यमेवातिमन्दमिति भाव ।

अत्रोत्प्रेक्षोपमालङ्कारयोरङ्गाङ्गिभावेन सङ्कर: । आर्य्याजाति: ।

(२६) तत इति । प्रमुग्धां पितुरनलप्रवेशोद्यमाकर्णनजनितशोकेन प्राप्तमोहाम् ।

(२७) एषेति । एषा मालती प्रवासं कपालकुण्डलाकलिततया जीवितसंशयकारिणीं विदेशवसतिं कथमपि अतिकृच्छ्रेण अतीत्य सौदामिनीकरुणया अतिवाह्य पुन: अन्यथैव अन्यप्रकारेण पितृमरणाश्रयणदु:खेन संशयं जीवितसन्देहं याता प्राप्ता । तथाहि को नाम जन्तु: प्राणी पाकाभिमुखस्य परिणामफलदानोद्यतस्य दैवस्य नियते: द्वाराणि बहिर्गमणपथान्

---

( ২৫ ) কাম। হা বৎসে ! মালতি ! জন্মান্তর হইতেই যেন অতি কষ্টে যেই তুমি পুনরায় পরিপ্রাপ্ত হইলে অমনিই তোমার পিতার অগ্নিপ্রবেশোদ্যম শ্রবণরূপ অপর এই অনর্থরাহু যেমন শশিকলাকে গ্রাস করিতে উপস্থিত হয়, সেইরূপ তোমাকে গ্রাস করিতে উপস্থিত হইল ।

( ট ) লব । হা প্রিয়সখি ।

( ২৬ ) ( মূর্চ্ছিতা মালতীকে ধারণ করিতে করিতে মাধবের প্রবেশ )

( ২৭ ) মাধ । আহা কি কষ্ট কি কষ্ট ! ! এই মালতী অতি কষ্টে কোনরূপ বিদেশবসতি অতিক্রম করিয়া পুনরায় অন্যপ্রকারে জীবনসংশয় প্রাপ্ত হইল ।

मक। [सहसोपसृत्य माधवं प्रति।] सखे! अथ सा योगिनी क? (२८)

माध। श्रीपर्वतादिहाहं सत्वरमपतं तयैव सह सद्यः।

करुणघनेचरवचनादनन्तरं तां न पश्यामि॥ (२९)

कामन्दकीमकरन्दौ। [सप्रणयमाकाशे।] महाभागे! पुनस्तावत् किमर्थमन्तर्हितासि। (३०)

---

पिधातुं आच्छादयितुं इष्टे: प्रभवति न कोऽपीत्यर्थः। तथाचापतितशाखा मे दुःखदर्शनेति भावः।

स्वार्थान्तरे सामान्येन विशेषसमर्थनरूपार्थान्तरन्यासालङ्कारेण सङ्करः। इन्द्र-वज्रावृत्तम्।

(२८) सहसोपसृत्य माधवमागमनसम्बन्धेनैव तत्सन्निकृष्टमभ्य सा यथान्यकृतनिर्देशेऽर्थः। क कुत्र इदानीं वर्त्तते इति शेषः।

(२९) श्रीपर्वतादिति। अहं तया योगिन्यैव सह श्रीपर्वतात् तस्मात्स्थानात् इह अस्मिन् प्रदेशे सत्वरं अतिद्रुतं अपतितमार्गेणेति यावत्, अपतम् आगतः, तस्य करुणं कारुण्ययुक्तं यत् वनेचरस्य कस्यचित् वनचारिजनस्य वचनं "मालत्याय"मित्यादिवाक्यं तस्मात् तदाकर्णना-दित्यर्थः, अतः तदनन्तरं अन्तर्हितां तां योगिनीं न पश्यामि। "मालत्याय" इत्यादि वाक्यश्रवणमात्रेणैव सा कुत्र गतेति नावलोकयामीति महदाश्चर्यमिति भावः।

अत्र पताकास्थितस्य अस्य इष्टैकमात्रमदस्य पूर्वार्द्धे पदजातदार्ढ्यैकपदतादोषः। अन्तर्हितामिति पदार्थस्य न पश्यामीत्यर्थं प्रति हेतुत्वात् पदार्थहेतुककाव्यलिङ्गालङ्कारः। आर्य्याजातिः।

---

কোন প্রাণী পরিণামকরালোত্থিত নিয়তির দ্বার আচ্ছাদন করিতে সমর্থ হয়? (কোন প্রাণীই নহে)।

(২৮) মক। (সহসা মাধবের নিকটে উপস্থিত হইয়া মাধবের প্রতি) সখে! সেই যোগিনী কোথায়?

(২৯) মাধ। সেই যোগিনীর সহিতই অতি সত্বর শ্রীপর্ব্বত হইতে এই প্রদেশে আসিয়াছিলাম। কিন্তু বনেচরের করুণ বাক্য শ্রবণের পর তৎক্ষণাৎ আর তাঁহাকে দেখিলাম না।

मदयन्तिकालवङ्गिके। सहि मालदि! णं भणामि मालदित्ति, [सोत्कण्ठम्।] भअवदि परित्ताहि, चिरणिरुद्धणीसासणिच्चलं से हिअअं! हा अणाह! हा पिअसहि! दुवेवि तुह्मे परप्परावसाणस्स कारणं जादा (ण)।

काम। हा वत्से मालति! (३१)

माध। हा प्रिये! (३२)

मक। हा प्रियसखि! [सर्वे मोहमुपगम्य संज्ञां लभन्ते।] (३३)

---

(ण) सखि मालति! ननु भणामि सखि मालतीति। भगवति। परित्रायस्व, चिरनिरुद्धनिश्वासनिश्चलमस्या हृदयम्। हा अनाथ! हा प्रियसखि! द्वावपि युवां परस्परावसानस्य कारणजातौ।

---

(२०) पुनस्त्रायस्वेति कपालकुण्डलाहस्तात् परित्रातां मालतीं पुनः विरहशोकात् रक्षेत्यर्थः।

(ण) सखि मालति! इति सम्बोधनेनोत्तरमलाभाय अश्वासरहितं चेतसः सन्ताप्य किञ्चिदुच्चैराह—मालतीति। चिरनिरुद्धेन लोकभयात् बहुकालावरुद्धेन निश्वासेन स्पन्दनरहितम्। परस्परावसानस्य अन्योऽन्यविनाशस्य कारणं हेतुर्जातौ। (उद्देश्यविधेयभावस्थले क्रियाया उद्देश्यगतलिङ्गसंख्याभागित्वनियमात् विधेयवाचककारणशब्दगतलिङ्गसंख्याभागित्वमिति लक्ष्यम्) मालत्याः शोकेन मूर्च्छितैर्माधवमकरन्दयोर्मरणाशङ्कयाभ्यवसायेन च मालत्या मूर्च्छाजातेति भावः।

---

(৩০) কামন্দকী ও মকরন্দ। (প্রণয়ের সহিত আকাশে) মহাভাগে! পুনরায় রক্ষা কর। অন্তর্হিতা হইলে কেন?

(ণ) মদয়ন্তিকা ও লবঙ্গিকা। সখি মালতি! মালতি বলিয়া আমি ডাকিতেছি, তথাপি উত্তর দিতেছ না? (উৎকণ্ঠার সহিত) ভগবতি! রক্ষা কর। বহুকাল নিশ্বাস নিরুদ্ধ হওয়ায় এই মালতীর হৃদয় নিস্পন্দ হইয়াছে। হা অনাথ! হা প্রিয়সখি! তোমরা উভয়েই পরস্পরের মরণের কারণ হইলে।

(৩১) কাম। হা বৎসে! মালতি!

काम। [ऊर्द्धमवलोक्य।] तत्किमेव झटिति पाट्यमानादिव अम्बुदात् अम्बुनिवहः परिस्रवन् अस्मान् पोषयति। (३४)

माध। [सोच्छ्वासम्।] अये! प्रत्यापन्नचेतना मालती। तथाहि अस्याः—(३५)

भवति विततश्वासा नासा, प्रणुन्नपयोधरं
हृदयमपि च स्निग्धं चक्षुर्निजप्रकृतौ स्थितम्।

---

(३१) सर्व्वे कामन्दक्यादयः मोहमुपगम्य मालतीशोकेन मूर्च्छां लब्धा संज्ञां चेतना लभन्ते। एतच्चैतन्यलाभेऽपि सौदामिनीकृपावारिवर्षणमेव हेतुरिति वक्ष्यमाणकामन्दकी-वाक्यादवगन्तव्यम्।

(३२) कामेति। पाट्यमानादिव विदार्य्यमाणादिव (पतनोन्मुखजलकत्वादभिनादिवान-मिति मन्तव्यम्) अम्बुदात् मेघात्, परिस्रवन् परिपतन्।

(३३) सोच्छ्वासमिति, उच्छ्वासेन मालतीचैतन्यावगतिनिमित्तकौतुकेन सह यथा स्यात्तथेत्यर्थः। प्रत्यापन्नचेतना लब्धचेतना। अस्याः मालत्याः।

(३४) भवतीति। नासा नासिका विततः बहुकालानन्तरोत्पन्नत्वाद्विस्तृतिमापन्नः श्वासः निश्वासवायुर्य्यस्यां तादृशी भवति। हृदयं वक्षोऽपि प्रणुन्नौ श्वासप्रश्वासवशादाकम्पितौ पयोधरौ स्तनौ यत्र तादृशं भवति। चक्षुः नेत्रञ्च स्निग्धं सरसं सत् निजप्रकृतौ स्वीयस्वभावे स्थितं भवति। मूर्च्छाकाले तु नैतादृशमासीदिति भावः। तदनु तत्पश्चात् वदनं मुखं मूर्च्छा-च्छेदात् मीलायमानाद्दीतोः यत्र प्रारब्धे दिवाप्रकाशिकाले प्रातःकाल इति यावत् श्रिया नैसर्गिक-

---

(৩৩) মক। হা প্রিয়সখি! (সকলে মূর্চ্ছা প্রাপ্ত হইয়া পুনর্ব্বার চৈতন্যলাভ করিল)

(৩৪) কাম। (ঊর্দ্ধে অবলোকন করিয়া) তবে এ কি? কাহারও দ্বারা যেন অকস্মাৎ বিদার্য্যমাণ জলধর হইতে জলসমূহ নিপতিত হইয়া আমাদিগকে প্রীত করিতেছে।

(৩৫) মাধ। (ঔৎসুক্যের সহিত) অয়ি! মালতী চৈতন্য লাভ করিয়াছে, কেন না ইহার—

(৩৬) নাসিকা বিস্তৃত শ্বাসযুক্ত হইতেছে। হৃদয় ও পয়োধর (শ্বাস-প্রশ্বাসবশে) আকম্পিত হইতেছে, চক্ষুও স্নিগ্ধ হইয়া প্রকৃতিস্থ হইয়াছে।

तदनुवदनं मूर्च्छाच्छेदात् प्रसादि विराजते
परिगतमिव प्रारम्भेऽह्नः श्रिया सरसीरुहम् ॥ (२६)

[नेपथ्ये । ] अविगणय्य नृपं सहनन्दनं चरणयोर्नतमग्निमुखे पतन् ।
सपदि भूरिवसुर्विनिवर्त्तितो मम गिरा गुरुसम्मदविस्मयः ॥ (२९

[ माधवमकरन्दौ । ऊर्द्धमवलोक्य सविस्मयम् । ]

भगवति ! दिष्ट्या वर्द्धसे ।

---

श्रीभया परिगतः सम्बद्धं सरसीरुहं पङ्कजमिव प्रसादि प्रसन्नतायुक्तं सत् विराजते दीप्यते ।
तथाचैतैर्द्दिह्नैः मालत्याः प्रत्यापन्नचेतनत्वमनुमीयत इति भावः ।

अत्र प्रकृतिशब्देनैव सामान्याभिधानसम्भवाद्विजपदमधिकमित्यधिकपदत्वदोषः । प्रत्युतानां
नासादीनां भरतौल्यिकक्रियायां कर्त्तृत्वेनान्वयानुपयोगिता, तथा प्रत्यापन्नचेतनत्वानुमितिरूप-
कार्य्ये प्रति बहूनां हेतूनामुपन्यासात् समुच्चयः, तदुभयकृतविच्छित्त्या विततश्वासगमनादिविकृ क-
प्रत्यापन्नचेतनत्वस्यानादनुमानत्वालङ्कारः । हरिणीवृत्तम् ।

(२९) पुनस्तावद्वे ति कामन्दकीमकरन्दमाध्यादाश्वासनार्थं गगनस्थितैव सौदामिन्याह—
अविगणय्ये ति । भूरिवसुः मालतीपिता चरणयोर्नतं अनलप्रवेशनिवारणार्थं पादयोर्निपतितं,
नन्दनेन तन्नामकसुहृदा सहेति सहनन्दनं नृपं नरपतिं अविगणय्य मालतीशोकाभिभवादनादृत्य
तयोर्निवारणवचनमस्वीकृत्येति यावत्, अग्निमुखे लोलजिह्वानलवदने पतनप्रवेशं कुर्वन् सन्
सपदि तत्क्षणात् मम गिरा "जीवति कन्यासौ मालतीति वह्नौ न प्रविश" इति मम वचनेन गुरु
अतिशयितौ सम्मदविस्मयौ हर्षाश्चर्ये यस्य तादृशः सन् विनिवर्त्तितः अनलप्रवेशान्निवारितः ।
तथाच नास्ति मालत्याः शोककारणमिति युष्माभिस्तु भवतेति भावः ।

"गर्व्वोऽपलेपत्र वाक्य"मिति तत्त्वथादव मम गिरेति साहङ्कारवचनेन गर्व्वोनाम नाट्या-
लङ्कारः । द्रुतविलम्बितं वृत्तम् ।

---

তৎপরে মূর্চ্ছাভঙ্গবশতঃ মুখও প্রাতঃকালে স্বাভাবিক শ্রীসংযুক্ত পদ্মের ন্যায়
প্রসন্ন হইয়া শোভা পাইতেছে।

(৩৭) (নেপথ্যে) ভূরিবসু অনল প্রবেশ নিবারণের জন্য চরণে নিপতিত
নন্দনের সহিত রাজাকেও গণনা করিয়া অগ্নিমুখে পতিত হইতে "মালতী
বাঁচিয়া আছে সুতরাং বহ্নিতে প্রবেশ করিও না" এইরূপ আমার বাক্য দ্বারা
অত্যন্ত হর্ষ ও আশ্চর্যযুক্ত হইয়া তৎক্ষণাৎ বহ্নিপ্রবেশ হইতে নিবারিত হইয়াছে।

सा योगिन्यम्बरतो विघटितजलदा भुवमेत्ययं यस्याः ।

वागमृतजलासारो जलदजलासारमतिशेते ॥ (३८)

माल । प्रियं नः प्रियम् ।

माल । दिट्ठिआ चिरस्स पच्चुज्जीविदह्मि (त) ।

काम । [सहर्षं सवाष्पञ्च । ] एह्येहि पुत्रि ! (४०)

---

(त) दिष्ट्या चिरस्य प्रत्युज्जीवितास्मि ।

---

(३८) सेति । सा मालत्युद्धारकर्त्री योगिनी विघटित. अपसारितः जलदो मेघो यया तादृशी सती अम्बरात् आकाशात् अभ्युदेति आगता । ... सतीजनानिमानान्नतिनिकान्नादिति आगमयति । यस्या योगिन्या अयं किञ्चित् प्राप्तेनाकर्णितः वागमृतजलासारः "अविगणय्य" त्यादिवचनपीयूषधारावृष्टिः जलदजलासारं वारिदवारिधारासम्पातं अतिशेते अस्माकमभ्युदयसम्पादने अतिक्रम्य वर्त्तते । अनेनैवास्माकं विमिमाप्यामभ्यामादिति भावः ।

"धारासम्पात आसार" इत्यमरोक्त्या आसारशब्देनैवाभिप्रेतार्थसिद्धौ जलजलदजलशब्दयोरा-धिक्येनाधिकपदत्वदोषः । वागमृतेति निरङ्गरूपकालङ्कारः, एवं अतिशेते इत्यनेनोपमेयस्योपमानादाधिक्यवर्णनाद्व्यतिरेकालङ्कारश्च, इत्यनयोरङ्गाङ्गिभावेन सङ्करः । आर्याजातिः !

(३९) प्रियं नः प्रियमिति भूरिवसोर्वह्निप्रवेशाद्विवर्त्तनमस्माकमतीव प्रियमित्यर्थः । प्रियत्वातिशयद्योतनाय द्विरुक्तिः ।

(त) मालतीति । चिरस्य बहुकालात् परतः प्रत्युज्जीवितास्मि—जीवनमवाप्तास्मि । प्रथमतः कपालकुण्डलाकर्षिततया मायविरहेण ततः पितुरनलप्रवेशव्यवसायेन च बहुकालं मृतकल्पैवासं, अधुना समस्ततद्दुःखावसानात् पुनर्लब्धजीवनास्मीति भावः । अतएव "समयो दुःखनिर्वाण"मिति सुचयादव समयोनाम निर्वहणसन्धेरङ्गम् ।

---

(৩৮) মাধব ও মকরন্দ। (ঊর্দ্ধে অবলোকন করিয়া) ভগবতি ! ভাগ্যবশতঃ বৃদ্ধিলাভ করিয়াছ। সেই যোগিনী মেঘ অপসারিত করিয়া আকাশ হইতে আমাদিগকে লক্ষ্য করিয়া আসিতেছে। যাহার এই বাক্যরূপ অমৃতের জলধারাসম্পাতে বারির বারিধারা সম্পাতকেও অতিক্রম করিয়া বর্ত্তমান।

(৩৯) কাম। ভূরিবসুর বহ্নিপ্রবেশ নিবর্ত্তন আমাদের অত্যন্ত প্রিয়।

(ত) মাল। ভাগ্যক্রমে বহুদিন পরে আমি প্রত্যুজ্জীবিত হইলাম !

माल। कथं भअवदी ?। [ इति पादयोः पतति। ] (च)

काम। [ उत्थाप्यालिङ्ग्य मूर्धाघ्राय। ]

जीव जीवितसमाय जीवितं देहि, जीवतु सुहृज्जनश्च ते।
अङ्कैस्तुहिनसङ्गशीतलैः पुत्रि! मां प्रियसखीञ्च जीवय॥ (४१)

माध। वयस्य मकरन्द! सम्प्रति उपादेयो जीवलोकः संवृत्तः।(४२

मक। [ सहर्षम्। ] एवमेतत्। (४३)

---

(च) कथं भगवती ?।

---

(४१) जीवेति। हे पुत्रि! वत्से मालति! त्वं जीव चिरकालं प्राणान् धारय। जीवितसमाय जीवनतुल्याय प्रियमाधवायेत्यर्थः जीवितं जीवनं देहि स्वजीवनप्रदानेन समर्थय। तथा ते तव सुहृज्जनः निखिलसज्जनः जीवतु। तथा हिमसङ्गशीतलैः हिम-संसर्गवत् शैत्ययुक्तैः तव अङ्कैः शरीरावयवैः मां प्रियसखीं लवङ्गिकाञ्च जीवय। आलिङ्गन-दानेनोज्जीवितां कुरु। तव जीवनाभ्युदयेन जीवनानि स्वहृदयस्था एते वयं सर्वे मृता इव तव जीवनात् पुनर्जीविता इव संवृत्ता इति भावः। एतेन त्वयि सर्वेषामेवाजीवनमेको विषय इति वस्तुना वस्तुध्वनिः।

अत्र जीवितसमायेत्यादौ उपमालङ्कारः। रथोद्धता वृत्तम्।

(४२) माधेति। उपादेयः निरतिशयानन्दजनकः। प्रियतमया मालत्या लाभात् नितुरां नरकनिवृत्तेरिति भावः। अत एव "प्रहर्षः प्रमदाधिक्य"मिति लक्षणात् प्रहर्षोनाम नाट्यालङ्कारः।

(४३) एवमेतदिति। एतत् त्वदुक्तिमर्थजातं एवं, यथार्थमेवेत्यर्थः। इतोऽधिकानन्दजनक-व्यापारासम्भवादिति भावः।

---

(৪০) কাম। (হর্ষ ও আনন্দাশ্রুবিসর্জনের সহিত) পুত্রি! এস এস।

(চ) মাল। একি ভগবতী? (চরণে নিপতিতা হইল)।

(৪১) কাম। (উঠাইয়া আলিঙ্গন ও মস্তক আঘ্রাণ করিয়া) হে পুত্রি! মালতি! তুমি জীবিতা থাক। প্রাণতুল্য মাধবের জীবন দান কর। তোমার মিত্রাদি স্বজনবর্গও জীবিত হউক, এবং হিমসংসর্গবৎ শীতল অঙ্গ দ্বারা আমাকে এবং প্রিয়সখী লবঙ্গিকাকেও বাঁচাও।

(৪২) মাধ। বয়স্য মকরন্দ! সম্প্রতি আমার জীবলোক পরম উপাদেয় হইয়াছে।

मदयन्तिकालवङ्गिके। पियसहि। मणोरहादिक्कन्तदंसणे! सम्भावेहि अम्हे परिस्सङ्गेण (द)।

माल। हा पियसहिओ! [उभे आलिङ्गति।] (घ)

काम। वत्सौ! किमेतत्। (४४)

माधवमकरन्दौ। भगवति!

कपालकुण्डलाकोपदुर्जातजनितापदः।

वयमप्युद्धृताः कृच्छ्रात् निर्बन्धेनार्थितानया॥ (४५)

---

(द) मनोरथातिक्रान्तदर्शने! सम्भावयावाम् परिष्वङ्गेन।

(घ) हा प्रियसख्यौ!

---

(द) मदेति। मनोरथमपि अतिक्रान्तं दर्शनं ययोस्तत्सम्बुद्धौ। तथेदृशी विपत्तिरस्मा-न्निर्विमिमित्ता यत्र पुनर्दर्शनमत्यन्ताप्यात् मायाकमसीदिति भावः। परिष्वङ्गेन आलिङ्गनेन, अस्मान् सम्भावय।

(घ) उभे मदयन्तिकालवङ्गिके।

(४४) कामेति। वत्सौ। माधवमकरन्दौ! एतत् मालत्या अन्यत्र गमनं पुनरा-गमनञ्च किं किंनिमित्तकं? कथं निष्पन्नमिति यावत्। माधवेन सहैव मालत्या आगमनात् मकरन्देन च यौगिनीक्वाल्पकाडगानुभवं प्रति प्रश्नोऽयमिति मन्तव्यम्।

(४५) कपालेति। अनया अस्माकमनिष्टप्रदायिन्यादाभक्त्या आर्थितया सेवया यौगिन्या कपालकुण्डलायाः कोपात् गुरुवधजनितक्रोधात् यद्दुर्जातं मालत्यपहरणादिरूपं व्यसनं (दुर्जातं व्यसने क्लीवं असम्यक्‌जातवस्तुनीति मेदिनी) तेन जनिता आपदः मृत्युपर्यन्तिकदा विपदः येषां तथाभूताः वयं मालतीमाधवमकरन्दाः निर्बन्धेन आग्रहातिशयेनैव कृच्छ्रात् क्लेशात् तत्तद्विपत्तिभ्य उद्धृताः उद्धृताः परित्राताः। अस्मान्माधवमालतीमकरन्दानामेवं मूर्च्छितान् सुमध्ये भवतीति नेदं विस्तृतमिति मन्तव्यम्।

---

( ৪৩ ) মদ। ( হাঁ প্রিয়সখি ) তাহা প্রিয়।

( ৪৪ ) কাম। বৎস! মালতীর অন্যত্র গমন এবং পুনরায় আগমনের কারণ কি?

( ৪৫ ) মাধব এবং মকরন্দ। ভগবতি! কপালকুণ্ডলার কোপপ্রযুক্ত মালতীহরণ রূপ আমাদের মৃত্যুপর্যন্তিকদা বিপদ। কিন্তু এই মালতী আগ্রহ সহকারে আমাদিগকে সেই সেই বিপদ হইতে উদ্ধার করিয়াছেন।

काम। कथमघोरघण्टवधविजृम्भितमेतत्। (४६)

मद। लवङ्गिके! अच्चरीअं! पुनरुत्तदारुणस्स परिणामरमणीअं विहिणो विलसिदं। (न)

प्रविश्य सौदामिनी। [उपसृत्य।]

भगवति! स एष चिरन्तनोऽन्तेवासिजनः प्रणमति। (४७)

काम। अये! भद्रा सौदामिनी? (४८)

माधवमकरन्दौ। [सविस्मयम्।] कथमियं भगवत्याः पक्षपातस्थानम् आद्या शिष्या सौदामिनी। तत्सर्वमधुना सङ्गच्छते। (४९)

---

(न) आश्चर्यम्! पुनरुक्तदारुणस्य परिणामरमणीयं विधेर्विलसितम्।

---

(४६) कामेति। अत्र कथंशब्दो विस्मये। एतत् मालत्यपहरणं अघोरघण्टस्य कपालकुण्डलागुरोः कापालिकस्य यो वधः माधवेन व्यापादनं तस्य विजृम्भितं फलं। कपालकुण्डलयैव वधप्रतिशोधनार्थं माधवजीवनभूता मालत्यपहृतेति महदाश्चर्यमिति भावः।

(न) मदेति। पुनरुक्तदारुणस्य द्विगुणितनिर्दयस्य निरतिशयदयारहितस्येति यावत्, विधेः दैवस्य विलसितं आचरणं परिणामरमणीयं मालत्याः पुनर्लाभसम्पादनेन चरमे मनोहरं जातं। तथाच मालतीवियोगसम्पादकत्वेन दारुणोऽपि विधिः पुनःसम्मिलनसम्पादक इति नोपालम्भ्य इति भावः।

(४७) प्रविश्येति। उपसृत्य कामन्दकीसमीपे समेत्य। चिरन्तनः पुराणः अन्तेवासिजनः शिष्यजनः वो युष्मान् प्रणमति नमस्करोति। तथाच "नीतिः शास्त्रेषु वर्त्तन"मिति लक्षणाद् गुरुनमस्कारस्य शास्त्रीयत्वेनात्र नीतिर्नाम नाट्यालङ्कारः।

(४८) कामेति। अये इति विस्मये। भद्रा मङ्गलास्पदा।

---

(४६) কাম। কি আশ্চর্য্য!! এই মালতীর অপহরণ অঘোরঘণ্টবধেরই প্রতিফল।

(ন) মদ। লবঙ্গিকে। আশ্চর্য্য (এই যে) নিরতিশয় নির্দ্দয় বিধাতার ব্যবহার পরিণামে রমণীয় হইল।

(৪৭) সৌদামিনী (প্রবিষ্ট হইয়া কামন্দকীর সমীপে যাইয়া) ভগবতি! এই সেই তোমার পুরাতন শিষ্য প্রণাম করিতেছে।

(৪৮) কাম। একি মঙ্গলাস্পদা সৌদামিনী?

कामं। एह्येहि भूरिजनजीवितदानपुण्य-
सम्भारधारिणि ! चिरादसि हन्त दृष्टा ।
दत्तप्रमोदमपि नन्दय मे शरीर-
मालिङ्ग्य सौहृदनिधे ! विरम प्रणामात् ॥ (५०)

अपि च—वन्द्या त्वमेव जगतः सह पुण्यकृद्भि-
रेवंविधैर्विलसितैरतिबोधिसत्त्वैः ।

---

(४९) साध्विति। आश्चर्येऽयं शब्दः। भगवत्याः कामन्दक्याः पदपातस्य परम-शिष्यत्वादिविद्याश्रयत्वस्य स्थानं पात्रं सर्वथा। तस्मात् सर्वं माधवत्राणादिकं सङ्गच्छते अस्याः युक्तं भवति। कामन्दकीशिष्यत्वेनास्य तच्छिष्यायाः अपि तस्याः सर्वं युक्तत्वादिति भावः।

(५०) एह्येहीति। भूरिजनानां माधवादीनामस्माकं बहुलोकानां जीवितदानेन कपाल-कुण्डलाकरालहस्तात् आततायिनां विषमस्थायां जीवनानां मालतीमुद्धारात् समर्पणेन यः पुण्यसम्भारः धर्मसन्ततिः तं धारयति या तथाभूते ! हे सौदामिनि ! एहि एहि, (हर्षेऽत्र हन्तशब्दः) चिरात् बहुदिनात् परतः दृष्टा मया अवलोकिता असि। दत्तः दर्शन-मात्रादेव समर्पितः प्रमोदः हर्षः रोमाञ्चादिविकारः इति यावत्, यस्मिन् तादृशमपि शरीरं देहं आलिङ्ग्य नन्दय आलिङ्गनप्रदानेन पुनः समधिकानन्दितं कुरु। हे सौहृदनिधे ! निरतिशयसौहार्दास्पदे ! प्रणामात् नमस्कारात् विरम विरता भव। पूर्वोक्तकार्यकरणात् परमश्लाघ्यतामापन्नायास्तव सम्यगालिङ्गनमेव युज्यते, न तु नमस्कारकरणमित्याशयः। वसन्ततिलकावृत्तम्।

(५१) नमस्कारविरामे कारणान्तरमभिधातुमाह—अपि चेति। पुण्यकृद्भिः देहभृद्भिः

---

(৪৯) মাধব ও মকরন্দ। (বিস্ময়ের সহিত) আহা এই সৌদামিনী ভগবতী কামন্দকীর পদপ্রান্তের পাত্রী প্রথম শিষ্যা। অতএব মালতীর উদ্ধার প্রভৃতি সবগুলিই সম্প্রতি ইহার পক্ষে সঙ্গত হইয়াছে।

(৫০) কাম। অয়ি! বহু লোকের জীবনদানরূপ পুণ্যসম্ভারধারিণী! সৌদামিনি! এস এস, আহা বহুদিন পরে তোমায় দেখিলাম। আমার শরীরকে দর্শন দ্বারা আনন্দিত করিলেও আলিঙ্গন করিয়া পুনরায় আনন্দিত কর। হে সৌহার্দনিধে! তুমি প্রণাম করা হইতে বিরত হও।

यस्याः पुरा परिचयप्रतिबद्धबीज-
मुद्भूतभूरिफलशालि विजृम्भितं ते ॥ (५१)

मदयन्तिकालवङ्गिके। इयं सा आर्या सौदामिनी। (प)

माल। बाढ़ं इमाए क्खु भअवदोसंबन्धपक्खवादिणीए णिब्-

---

(प) इयं सा आर्य्या सौदामिनी।

---

निःस्वार्थं मालत्युद्धारादिरूपैः बोधिसत्त्वं प्राणव्ययेनापि परोपकारं कर्त्तुं कृतसङ्कल्पं बुद्ध-विशेषं अतिक्रान्तैः वर्त्तमानैः विलसितैः, आचरणैः स्पृहणीया माहृशामप्याकाङ्क्षणीया सिद्धिः मन्त्रार्थसिद्धिर्यस्यास्तादृशी त्वमेव जगतः सर्व्वलोकानां वन्द्या वन्दनीया नमस्कारयोग्या। तथाच सर्व्वनमस्कारयोग्यायास्तव मन्नमस्कारमप्यनुचितमिव मन्ये इति भावः। यस्यास्ते तव पुरा विद्याग्रहणकाले परिचयः निरतिशयश्रद्धाबाहुल्येनावगतिः स एव प्रतिबद्धं उत्पन्नं बीजं यस्य तथाभूतं इदं विजृम्भितं चेष्टितं मालत्युद्धाराद्याचरणमिति यावत्। उद्भूतैः सञ्जातैः भूरिभिः बहुभिः फलैः माधवलवङ्गिकादीनां जीवनपालनरूपैः शालते शोभते इति तथोक्तं अभूदिति शेषः। विद्याग्रहणकालसम्बद्धा मयि तवापरिमितश्रद्धैव मालत्युद्धाररूपकार्य्यस्य बीजं तेन च मालत्युद्धाररूपकार्य्येण मालतीशोकेन जीवनविसर्ज्जनोद्यतानां माधवादीनां जीवन-रक्षणरूपं प्रचुरतरफलं सम्पादितमिति त्वदीयनिःस्वार्थपरोपकारिता सर्व्वथैवागण्यधन्यवाद-योग्येति सरलार्थभावार्थौ।

अत्र विजृम्भिते श्लिष्टविशेषणसाम्येन प्रथमोत्पन्नबीजाङ्कुरादिक्रमिकफलशालिवृक्षादि-व्यवहारसमारोपात् समासोक्तिरलङ्कारः। "प्रश्रयादनुवर्त्तनं अनुवृत्ति"रिति लक्षणादनुवृत्ति-र्नाम नाट्यालङ्कारश्च। वसन्ततिलकावृत्तम्।

(प) मदेति। इयं परिदृश्यमाना, आर्य्या सौदामिनी सा? या बकुलमालामादाय माधवान्तिकमागता सा किमित्यर्थः।

---

(৫১) আরও দেখ। বোধিসত্ত্ব নামক বুদ্ধবিশেষেরও অতিক্রমণকারী এবম্বিধ (নিঃস্বার্থভাবে মালতীর উদ্ধারাদিরূপ) ব্যবহার দ্বারা যাহার মন্ত্রার্থসিদ্ধি আমাদের ও স্পৃহণীয়, তাদৃশ তুমিই জগতের বন্দনীয়া। যেই তোমার পূর্ব্ব পরিচয়রূপ সমুৎপন্ন বীজজন্য মালতীর উদ্ধাররূপ আচরণ মাধবাদির জীবনরক্ষারূপ সমুৎপন্ন বহুফলশালী হইয়াছে।

(প) মদয়ন্তিকা ও লবঙ্গিকা। এই আর্য্যা সৌদামিনীই কি তিনি?

भञ्जिअ कवालकुण्डलां अत्तणो आवसधं उवणोअ मं भअवदो-णिव्विसेसं समासासिदम्हि, किञ्च केसरावलीसाहिण्णाणहत्थाए इह आगन्तूण, सव्वे तुम्हे सन्धारिदा मरणादो, सा एसा जीविदप्पदाइणी सौदामिणी (फ)।

मदयन्तिआलवङ्गिके। सुप्पसण्णा णो कणिट्ठा भअवदी। (ब)

---

(फ) अनया खलु भगवतीसम्बन्धपक्षपातिन्या, निर्भर्त्स्य कपालकुण्डलामात्मन: आवसथमुपनीय मां भगवतीनिर्विशेषं समाश्वासितास्मि, किञ्च केसरावलीसाभिज्ञानहस्तया इहागत्य सर्वे यूयं सन्धारिता मरणात्, एषा जीवितप्रदायिनी सौदामिनी।

(ब) सुप्रसन्ना नः कनिष्ठा भगवती।

---

(फ) भञ्जिवि। बाढं अवश्यं (अवश्यं यथोक्तमिति हलायुधः) इयं इत्यर्थः। भगवत्याः कामन्दक्याः सम्बन्धेन स्नेहसम्पर्केण पक्षपातिन्या मत्पक्षाश्रयिण्या, निर्भर्त्स्य तिरस्कृत्य, आवसथं आश्रमं, भगवतीनिर्विशेषं कामन्दक्यनुरूपं यथा स्यात्तथा। न केवलं मामाश्वास्यैव कर्तव्यशेषमकरोदित्याह—किञ्चेति। केसरावल्या बकुलकुसुमस्रजा साभिज्ञानः 'अभिज्ञानेन' चिह्नेन सह वर्त्तमानः बकुलमालारूपाभिज्ञानयुक्त इति यावत्, हस्तो यस्यास्तथाभूतया अनया; सर्वे यूयं कामन्दकीमदयन्तिकालवङ्गिकामाधवमकरन्दात्मकाः यूयं मरणात् सन्धारिताः अवस्थापिताः परिरक्षिता इति यावत्। अत्र बकुलमालाप्रदर्शनेन साक्षात् कामन्दक्यादीनां जीवनारक्षणेऽपि माधवमकरन्दजीवनरक्षणद्वारेण तासामपि जीवनरक्षणं कृतं, अन्यथा माधवमकरन्दशोकेनापि तासां मरणसम्भवादिति मन्तव्यम्।

(ब) मदेति। कनिष्ठा भगवती सौदामिनी, कनिष्ठत्वञ्चास्या कामन्दक्यपेक्षयेति बोध्यम्। नः अस्मान् प्रति सुप्रसन्ना अनुग्रहयुक्ता। अन्यथेदृशमहोपकारासम्भवादिति भावः।

---

(ফ) মাল। অবশ্য, ইনিই ভগবতীর সম্বন্ধ বশতঃ আমার পক্ষপাতিনী হইয়া কপালকুণ্ডলাকে তিরস্কার করতঃ আমাকে নিজের আশ্রমে নিয়া ভগবতীর ন্যায় আশ্বাসিত করিয়াছেন। পরন্তু বকুলমালারূপ অভিজ্ঞান হস্তে এইস্থানে আসিয়া তোমাদের সকলকে মরণ হইতে রক্ষা করিয়াছেন। এই সেই জীবনদায়িনী সৌদামিনী।

(ব) মদয়ন্তিকা ও লবঙ্গিকা। কনিষ্ঠা ভগবতী (এই সৌদামিনী) আমাদের প্রতি অত্যন্ত আগ্রহযুক্ত।

माधवमकरन्दौ । अहो नु खलु भोः ! । (५२)

अपि चिन्तामणिश्चिन्तापरिश्रममपेक्षते ।

इदं त्वचिन्तितं मन्ये कृतमार्य्ययार्य्यया ॥ (५३)

सौदा । [ स्वगतम् । ] हन्त ! लज्जयति मामेषं सौजन्यमेषाम् । [ प्रकाशम् । ] भगवति ! एतत्प्रहृष्टनन्दनाभिनन्दितेन राज्ञा पद्मावतीश्वरेण भूरिवसोः प्रत्यक्षमभिलिख्य पत्रम् आयुष्मतो माधवस्य प्रेषितम् । [ इति पत्रमर्पयति । ] (५४)

---

( ५२ ) अहो नु खलु भोरिति हर्षाश्चर्य्यद्योतकमेकमेवाव्ययम् ।

( ५३ ) अपीति । चिन्तामणिरपि प्रार्थकस्य चिन्तानुसारेण फलप्रदो मणिविशेषोऽपि चिन्ता परिश्रमं प्रार्थकस्य चिन्तारूपं परिश्रम अपेक्षते फलदानविषये प्रतीक्षते । तु किन्तु आर्य्यया श्रेष्ठया अनया सौदामिन्या अचिन्तितं अस्माभिरभावित मालत्यादीनामस्माकं परिरक्षणरूपमचिन्तितकार्य्यमित्यर्थः, कृत सम्पादित, इदं आश्चर्य्यं मन्ये ।

अत्रोपमेयभूताया सौदामिन्या उपमानाच्चिन्तामणेराधिक्यवर्णनेन व्यतिरेकालङ्कारः, स च श्लेषानुप्राणेन संसृज्यते । तेन च सौदामिन्याः समतीव दयावतीत्वरूपं वस्तु व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः ।

( ५४ ) सौदेति । एतेषां कामन्दक्यादीनां सौजन्य प्रशंसावाद. मां अत्यन्तं निरतिशयं लज्जयति लज्जायुक्तां करोति । आत्मप्रशंसाश्रवणे सज्जनानां लज्जायाः स्वाभाविकत्वादिति भावः । प्रहृष्टेन भूरिवसोरनल्पप्रवेशनिवारणात् सन्तुष्टेन नन्दनेन अभिनन्दितः परमभाग्यशालितया प्रशंसितः तेन । माधवस्येति समीपे इति शेषः ।

---

( ৫২।৫৩ ) মাধব ও মকরন্দ । অহো কি আশ্চর্য্য ! ! চিন্তামণিও ফলদান করিতে যাচকের চিন্তারূপ পরিশ্রম অপেক্ষা করিয়া থাকে । কিন্তু এই মাননীয়া যোগিনী আমাদের অচিন্তিত বিষয় সম্পন্ন করিয়াছেন, অতএব ইহা আশ্চর্য্য মনে করিতেছি ।

( ৫৪ ) সৌদা । ( স্বগত ) অহো ! ইহাদিগের সৌজন্য আমাকে অত্যন্ত লজ্জিত করিতেছে । ( প্রকাশ্যে ) ভগবতি ! হর্ষযুক্ত নন্দন কর্ত্তৃক প্রশংসিত রাজা পদ্মাবতীশ্বর ভূরিবসুর সমক্ষে এই পত্র লিখিয়া দীর্ঘজীবী মাধবের সমীপে পাঠাইয়াছেন । ( পত্র অর্পণ করিল )

काम। [ गृहीत्वा वाचयति। ] स्वस्त्यस्तु वः परमेश्वरः समाज्ञापयति। यथा—(५५)

श्लाघ्यानां गुणिनां धुरि स्थितवति श्रेष्ठान्वये च त्वयि
प्रत्यस्तव्यसने महीयसि परं प्रीतोऽस्मि जामातरि।
तेनेयं मदयन्तिकाद्य भवतः प्रीत्यै तव प्रेयसे
मित्राय प्रथमानुरागघटिताप्यस्माभिरुत्सृज्यते॥ (५६)

---

(५५) कामेति। गृहीत्वा सौदामिनीहस्तात् पत्रमादाय वाचयति (वाचमाचष्टे इतीनन्तनामधातोरूपम्) पठति। वो युष्माकं स्वस्ति शुभं अस्तु भवतु। परमेश्वरः नरेश्वरः पद्मावतीश्वर इति यावत्, समाज्ञापयति सम्यगवबोधयति।

(५६) श्लाघ्यानां प्रशंसनीयानां गुणिनां सौन्दर्य्यशास्त्रज्ञानादिसद्गुणसम्पन्नानां धुरि अग्रे स्थितवति वर्त्तमाने, श्रेष्ठान्वये उच्चवंशसमुद्भूते, प्रत्यस्त परमसौभाग्येनास्तमितं व्यसनं विपत् यस्य तथाभूते (एतेनातीव शुभादृष्टशालित्वं सूचितम्) महीयसि महाजनाडम्बराडम्बरादिशालित्वेनापि महति त्वयि जामातरि कन्यार्द्धभागिन्याः मालत्याः स्वामिनि सति परं अत्यन्तं प्रीतः आह्लादितः अस्मि भवामि। जामातरि प्रार्थनीयानां सर्व्वेषामेव त्वयि सद्भावादिति भावः। ततः किमित्याकाङ्क्षायामाह—तेनेति। तेन हेतुना भवतः प्रीत्यै तव सन्तुष्टये तव प्रेयसे प्रियतमाय मित्राय सुहृदे मकरन्दाय प्रथमं पूर्व्वं अनुरागेण आसक्तिविशेषेण घटितापि समारोपितापि इयं मदयन्तिका अस्माभिः अद्य उत्सृज्यते समर्प्यते।

अत्र प्रीतिरूपकार्य्ये प्रति गुणिनां धुरि स्थितवत्त्वादीनामनेककारणानामुपन्यासात् समुच्चयोऽलङ्कारः। तथाकृतस्य नन्दनाय मालतीदानापवादरूपस्यानुचितस्यानेन मार्जनात् "परिहार इति प्रोक्तः कृतानुचितमार्जन"मिति लक्षणेन परिहारो नाम नाट्यालङ्कारश्च। तथा "सामदानादिभाषण"मिति लक्षणात् भाषणं नाम निर्व्वहणसन्ध्यङ्गम्। शार्दूलविक्रीडितं वृत्तम्।

---

(৫৫) কাম। (পত্র গ্রহণ করিয়া পড়িতে লাগিল) তোমাদের মঙ্গল হউক, পদ্মাবতীশ্বর জানাইতেছেন যে,

(৫৬) প্রশংসনীয় গুণিদিগের অগ্রবর্ত্তী শ্রেষ্ঠ বংশজাত অন্তমিতব্যসন ও মহান্ তুমি জামাতা হওয়ায় অত্যন্ত সন্তুষ্ট হইয়াছি। অতএব তোমার প্রীতির জন্য তোমার প্রিয় সুহৃৎ মকরন্দে এই মদয়ন্তিকা প্রথমে অনুরাগ কর্ত্তৃক সংযোজিতা হইলেও অদ্য আমা কর্ত্তৃক সমর্পিতা হইতেছে।

[ माधवमुद्दिश्य । ] वत्स ! श्रूयताम् । (५७)

माध । श्रुतमिदानीं सर्वथा कृतार्थोऽस्मि । (५८)

माल । दिट्ठिआ दाणिं अपहदं णो हिअअस्स आसङ्कासल्लं । (भ)

लव । सम्पदं निरवसेसं माहवसिरिणो मालदीए अ समं फलिदा मणोरहा । (म)

मक । [ पुरोऽवलोक्य । ] कथमवलोकितावुद्धरक्षिते कलहंसकेन सह सुप्रमोदं नृत्यन्त्याविव एवागच्छतः । (५९)

---

( भ ) दिष्ट्या इदानीमपहतं नो हृदयस्याशङ्काशल्यम् ।

( म ) साम्प्रतं निरवशेषं श्रीमाधवस्य मालत्याश्च समं फलिता मनोरथाः ।

---

( ५७ ) श्रूयतामिति मदेव निलिखितं वाक्यजातमाकर्णनामित्यर्थः । एतेन सर्वविषय-काशङ्काविगमात् कृतकृत्यतायां कामन्दक्याः सुमहान् हर्षः सूच्यते ।

( ५८ ) माधेति । सर्वथा सर्वप्रकारेण कृतार्थः सम्पादितप्रयोजनः अस्मि । राज्ञाम-प्यनुमोदनेन सर्वाशङ्कानिवृत्तेरिति भावः ।

( भ ) मालेति । शङ्काशल्यं राजक्रोधाशङ्कात्मकं शेलं ।

( म ) लवेति । निरवशेषं शेषरहितं यथा स्यात्तथा, समं युगपत्, मनोरथाः चित्ताभिलाषाः फलिताः सञ्जातफला । मकरन्दीयमदयन्तिकालाभस्यापि राज्ञा अनुमोदनेन सर्वाशङ्का-निवृत्तेरिति भाव । प्राकृते श्रीशब्दस्य पूर्वनिपातनियमाभावात् "माहवसिरिणो" इति वाक्यं नासङ्गतं । संस्कृते पूर्वनिपातनियमाच्च "श्रीमाधवस्ये"ति तदनुवादः कृत इति मन्तव्यम् ।

"आनन्दो वाञ्छितागम" इति लक्षणात् "वत्स ! श्रूयता"मित्याद्यं तदन्तसन्दर्भे आनन्दो नाम निर्वहणसन्ध्यङ्गम् ।

( ५९ ) मालेति । पुर अग्रत । कथंशब्दोऽत्र हर्षद्योतकः । सु अत्यन्तः प्रमोदः

---

( ৫৭ ) ( মাধবকে উদ্দেশ করিয়া ) বৎস । শ্রবণ কর ।

( ৫৮ ) মাধ । শুনিয়াছি, এখন সর্ব্বপ্রকারেই কৃতার্থ হইলাম ।

( ভ ) মাল । সৌভাগ্যবশতঃ সম্প্রতি আমাদের হৃদয়ের আশঙ্কারূপ শল্য বিনষ্ট হইল ।

( ম ) লব । সম্প্রতি মালতীর সহিত শ্রীযুক্ত মাধবের মনোরথ নিঃশেষরূপে সফল হইল

ततः प्रविशतोऽवलोकिताबुद्धरक्षिते, कलहंसश्च। विविधं नृत्यं कृत्वा सर्वे उपसृत्य सप्रणामं कामन्दकीं प्रति—जअ भअवदि कज्जणिहाणि! [माधवं प्रति।] जअ मअरन्दणन्दण! माहव पुण्णचन्द! दिट्ठिया वड्ढसि। (य)

सहर्षं सर्वे सस्मितं पश्यन्ति। (१०)

लव। को वा एअस्सिं परिपुरिदसव्वप्पआरमहूसवे ण णच्चदि! (र)

---

(य) जय भगवति कार्य्यनिधाने! जय मकरन्दनन्दन! माधवपूर्णचन्द्र! दिष्ट्या वर्द्धसे।

(र) को वा अस्मिन् परिपूरितसर्वप्रकारमहोत्सवे न नृत्यति।

---

आनन्दो यस्मिन् तद्यथा स्यात्तथा नृत्यन्तौ नानाविधनृत्यं कुर्व्वन्तौ, इत एव अस्मिन् स्थान एव।

(य) जय इति। सर्वे अवलोकिताबुद्धरक्षिताकलहंसाः। कार्य्याणां निधानं न्यासः यस्यां तथाभूते! अमात्यभूरिवसुनापि माधवेन सह मालत्या विवाहसम्पादनरूपकार्य्यस्य कामन्दकीं प्रति भारार्पणात् कामन्दक्या च सुनिपुणं तत्सम्पादनात् कामन्दक्याः सार्थकमिदं सम्बोधनं कृतमिति मन्तव्यम्। मकरन्दनन्दन। मकरन्दस्यानन्दसम्पादक! अनतीव सौहार्द्दादिति भावः। पूर्णचन्द्र! पूर्णचन्द्रवदाह्लादजनक।

(१०) सहर्षमिति। सर्वे कामन्दकादयः। सस्मितं सहासं यथा स्यात्तथा पश्यन्ति अवलोकिताबुद्धरक्षिताकलहंसानां नृत्यमवलोकयन्ति।

(र) कोवेति। परिपूरितः सम्पादितः सर्व्वप्रकारः सर्व्वविधः महोत्सवः आनन्दः

---

(ম) মক। (অগ্রে অবলোকন করিয়া) এই কি অবলোকিতা ও বুদ্ধরক্ষিতা কলহংসের সহিত অত্যন্ত আমোদ সহকারে নৃত্য করিতে করিতে এই স্থানেই আসিতেছে।

(য) (তৎপরে অবলোকিতা বুদ্ধরক্ষিতা ও কলহংসের প্রবেশ) (বিবিধ নৃত্য করিয়া) সকলে। (সমীপে গমন করতঃ প্রণাম সহকারে কামন্দকীর প্রতি) ভগবতি! কার্য্যভারার্পণপাত্রি! তোমার জয় হউক। (মাধবের প্রতি) হে মকরন্দানন্দজনক মাধবপূর্ণচন্দ্র! তুমিও সৌভাগ্যবশতঃ বৃদ্ধি লাভ করিতেছ।

(১০) (কামন্দকী প্রভৃতি সকলে হাস্যের সহিত অবলোকিতা বুদ্ধরক্ষিতা ও কলহংসের নৃত্য দেখিতে লাগিল)।

काम। एवमेतत्, अस्ति वा कुतश्चिदेवम्भूतं विचित्ररमणीयोज्ज्वलं प्रकरणम् (६१)

सौदा। इदमत्र रमणीयान्तरं। यदमात्ययोर्भूरिवसुदेवरातयोश्चिरात्पूर्णोऽयमितरेतरापत्यसम्बन्धात्मनोरथः। (६२)

माल। [ स्वगतम्। ] कहंविअ। ( ल )

---

( ल ) कथमिव ?

---

यस्मिन् तथाभूते काले इत्यर्थ। को वा न नृत्यति ? अपि तु सर्व्व एवेत्यर्थः। एतेनास्माकमपि नृत्येच्छा भवतीति ध्वनिता।

( ६१ ) कामेति। एवमेतदिति यथा त्वं वदसि तथैवेत्यर्थः। सर्व्वेषामेवात्र नृत्येच्छा जायत एवेति भावः। कुतश्चित् कुत्रचित् एवम्भूतं एवम्प्रकारं विचित्रं अद्भुतं रमणीयं मनोरमं उज्ज्वलं दीप्तिमत् दोषलेशरहितमित्यर्थ.। ( अत्र तृतीयस्य विशेष्यत्वविवक्षया तेन सह द्वितीयस्य कर्म्मधारय कृत्वा पुनस्तेन समस्तेन सह प्रथमस्य कर्म्मधारय. कर्त्तव्यः ) प्रकरणं वृत्तान्तसन्ततिः अस्ति वा ? वाकारोऽत्र प्रश्ने, अस्ति किमित्यर्थः, नास्त्येवेति भावः। अथच एवम्भूतं भवभूतिविरचितैतन्मालतीमाधवतुल्यं विचित्रं अद्भुतघटनावलीसन्निवेशेनाश्चर्य्यं अतएव रमणीयं मनोहरं उज्ज्वलं रसालङ्कारादिभिर्दीप्तिमत् प्रकरणं यथोक्तलक्षणो रूपकविशेषः कुतश्चित भवभूतिरन्यस्मात् कवित. ( समुद्भूतं ) अस्ति किं ? अपितु नास्त्येवेत्यर्थो ध्वन्यते।

( ६२ ) सौदेति। रमणीयान्तरं मनोरमापरवृत्तान्त.। किमित्याकाङ्क्षायामाह— यदिति। इतरेतरापत्ययोः अन्योऽन्यसन्तानयोः सम्बन्धात् विवाहरूपसम्पर्कात् मनोरथः मनोभिलाष. चिरात् बहुकालानन्तरं पूर्णः दैवीप्रसादान्निष्पन्न.। अनेन च सौदामिनीवचनसन्निवेशेन "तदैव चास्मात् सौदामिनीसमक्षमनयोर्भूरिवसुदेवरातयोर्वृत्तेयं प्रतिज्ञा अवश्यमावयोरपत्यसम्बन्धः कर्त्तव्य इति" सूत्रसम्भी सूचितमिदानीं निर्व्वहणसन्धौ प्रतिसंहृतमिति मन्तव्यं।

( ল ) নর্তা এই পরিপূরিত সর্ব্বপ্রকার মহোৎসবসময়ে কে বা নৃত্য না করে।

( ৬১ ) কাম। ইহা ঠিক। এবংবিধ আশ্চর্য্য মনোহর ও নির্দ্দোষ বৃত্তান্তাবলী কোথায় আছে কি ?

( ৬২ ) সৌদা। এ বিষয়ে অপর রমণীয় বৃত্তান্ত এই যে, অমাত্য ভূরিবসু ও দেবরাতের পরস্পরের সন্তান মালতীমাধবের বিবাহরূপ সম্পর্ক হওয়ায় বহুদিনের পরে মনোরথ পূর্ণ হইল।

वृत्तेऽयं प्रतिज्ञा "अवश्यमावाभ्यामपत्यसम्बन्धः कर्त्तव्य" इति, प्रधान-प्रकृतिकोपस्त्वेवं परिहृतः। (६४)

---

सुचीनूतनाल काक ममतीवापकारान्न्दामोत्, अधुना पुनरिच्छन्नपि नन्दनः मदग्रन्थिकानुरोधा-द्वाकमपकारं कर्त्तुं न शक्नुयादिति तादृशशङ्कानिरस्तेति सम्प्रति रहस्यमेदोऽपि नातिचतिकर इति भाव। "अन्यदा वस्तुवृत्त"मित्यादि माधवमकरन्दयोः मन्त्रीमतरमभिधाय माधव-मकरन्दौ सम्बोधयति—हन्तेति। वस्तु मालतामाधवयोरेतद्विवाहसम्बन्धः, न खलु नैव, अन्यथा अन्यप्रकारेण भूरिवसोरनभिमतेनेति यावत्, वृत्तं निष्पन्नं। इममर्थं समर्थयितुमाह—यत इति। यो गुरुमुखात् शास्त्रार्थं शृणोति स श्रावक, तदनयोर्यो पठद्दशायामिति यावत्, अस्मत्सौदामिनीप्रत्यक्षं अस्माकं सौदामिन्याश्च समक्षं अनयोः अमात्ययोरेतयोः इयं सन्धा। तथाच सौदामिन्या यथावगतिं यथार्थभूतस्य "यदमात्ययोरित्याद्यभिहितमिति भावः।

नन्वेवं कथममात्यो नन्दनाय मालतीं दातुमङ्गीकृत्य तद्विवाहोद्योगं कृतवानित्याकाङ्क्षायामाह—प्रधानेति। "स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि चे"ति सप्तविधासु प्रकृतिषु मध्ये, प्रधान-प्रकृतेः स्वामिनः राज्ञ इति यावत् (राज्ञः प्राधान्यञ्च सर्व्वनियन्तृत्वादिति मन्तव्यम्) कोपः क्रोधोत्पादावसर एव अनेन प्रकारेण राजानुरोधान्नन्दनाय मालतीप्रदानाङ्गीकरणेनेति यावत्, परिहृत निवारितः। तथाच राज्ञा कृताभ्यर्थनस्य नन्दनाय मालतीप्रदानानुरोधस्य साक्षादुपेक्षायां राज्ञः क्रोधो दुष्परिहर इति मन्यमानेनामात्येन प्रकाश्यमानेन तदनुरोधपालनमङ्गीकृत्य विवाहोद्-योगः कृतः, गुप्तभावेन च माधवेन सह मालत्या विवाहसम्पादने भवत्यो नियुक्ता, एवञ्च परस्परानु-रागवशादेव मालतीमाधवयोर्विवाह सहजः, विवाहितायाश्चान्यस्मै प्रदानं लोकशास्त्रविरुद्ध"मिति मन्यमानस्य राज्ञः क्रोधो न जायेत, अभिप्रेतसिद्धिश्च भवेदित्यमात्ययोराशयः। अहमपि तदनुसारेण यथानियोगं सर्व्वं सम्पादितवतीति वृत्तान्तमवगतमेवेति सरलार्थावार्थौ।

"पूर्व्ववाक्यन्तु विज्ञेय यथोक्तार्थोपदर्शन"मिति। लक्षणादेव पूर्व्ववाक्यं नाम निर्व्वहणसन्ध्यङ्गम्।

---

অপগত হইয়াছে। (প্রকাশ্যে) বৎসমাধব ও মকরন্দ! এই বিবাহসম্বন্ধ অন্যপ্রকারে নিষ্পন্ন হয় নাই, যেহেতু পাঠ্যাবস্থাতেই আমার ও সৌদামিনীর সমক্ষে ভূরিবসু ও দেবরাতের প্রতিজ্ঞা হইয়াছিল যে,"অবশ্যই আমরা পরস্পরের অপত্যের বিবাহ সম্বন্ধ করিব"। ভূরিবসু যে রাজানুরোধে নন্দনের সহিত মালতীর বিবাহ দিতে সম্মত হইয়াছিলেন, তদ্দ্বারা রাজার ক্রোধোৎপাদের অবসর নিবারিত হইয়াছে।

